श्री दत्तोपाध्याय-प्रणीत :

# आचारादर्शः

( [illegible]कनामिकया संस्कृतटीकया 'मालती' नामिकया-हिन्दी विवृत्या च विभूषितः )

## प्रथमो भागः

टीकाकारः

पण्डित दिगम्बर झा




सम्पादक :

डॉ वाचस्पतिशर्मा त्रिपाठी

कामेश्वरसिंह दरभङ्गा संस्कृतविश्वविद्यालयः
दरभङ्गा ( बिहार )

## ।। ग्रन्थ-परिचय ।।

"आचारादर्श" महान् मैथिल
धर्मशास्त्रीय निबन्धकार महामहोपाध्याय
श्रीदत्त उपाध्याय (13वीं सदी) की सर्वश्रेष्ठ
कृति है। इस ग्रन्थ में न केवल मिथिला क्षेत्र
अपितु समस्त भारतवर्ष में प्रातःकाल
शय्यात्याग से लेकर रात्रि में शयनपर्यन्त
अनुष्ठेय दैनन्दिन क्रिया-कलापों एवं
धार्मिक कृत्यों का विशद एवं प्रामाणिक
विवेचन विभिन्न वेदों, स्मृतियों, पुराणों एवं
निबन्धग्रन्थों के आधार पर किया गया है।
मुख्य रूप से निद्रात्याग, मलमूत्रत्याग, शौच,
आचमन, दन्तधावन, स्नान, सन्ध्या, जप,
ब्रह्मयज्ञ, तर्पण, देवपूजा, बलिवैश्वदेव,
नित्यश्राद्ध, भिक्षादान, गोग्रास,
अतिथिसत्कार, भोजन, दारोपगमन एवं
शयन-प्रभृति दैनन्दिन अनुष्ठेय कृत्यों का
वर्णन बड़ी ही सरल एवं रोचक पद्धति से
किया गया है। ये विवेचनीय कृत्य केवल
वैयक्तिक जीवन की स्वस्थता के लिए ही
नहीं, अपितु समग्र सामाजिक जीवन की
स्वस्थता के लिए भी नितान्त उपयोगी हैं।

विद्वान् टीकाकार ने इन दैनिक धार्मिक
कृत्यों की मीमांसा आधुनिक, वैज्ञानिक
दृष्टि से तर्क के आधार पर किया है।
संस्कृत भाषा से अपरिचित पाठक भी
पर्याप्त लाभान्वित हो सकें इस उद्देश्य से
लिखित विस्तृत हिन्दी-टीका ग्रन्थ की
उपादेयता में चार-चाँद लगा देती है।
पाश्चात्य चकाचौंध से दिग्भ्रमित होकर
भारतीय आचार-विचार से दूर जा रही
हमारी वर्तमान युवा पीढ़ी को सदाचार के
मार्ग पर लानेवाला यह "आचारादर्श" ग्रन्थ
आज के युग के लिए विशेष महत्व रखता
है।

संस्कृत-हिन्दी टीका के साथ
"आचारादर्श" का प्रकाशन पहली बार दो
भागों में किया जा रहा है। मर्मज्ञ मनीषी द्वारा
रचित विस्तृत संस्कृत-हिन्दी टीका से
समन्वित तथा विषय के आधिकारिक
विद्वान् द्वारा सम्पादित इस ग्रन्थरत्न में
श्रद्धालु धार्मिक जनों, छात्रों, अध्यापकों,
शोधकों एवं सामान्य जिज्ञासुओं को दैनिक
आचार एवं धार्मिक कृत्यों से सम्बद्ध प्रचुर
सामग्री प्राप्त होगी।

# श्रीदत्तोपाध्याय-प्रणीतः

# आचारादर्शः

('आलोक' नामिकया संस्कृतटीकया 'मालती' नामिकया हिन्दीविवृत्या च विभूषितः)

(प्रथमो भागः)

टीकाकारः

**पण्डित दिगम्बरझा**




सम्पादकः

**डॉ० वाचस्पतिशर्मा त्रिपाठी**

आचार्यः विभागाध्यक्षश्च

स्नातकोत्तर-धर्मशास्त्रविभागः

का.सिं.द.सं. विश्वविद्यालयः, दरभङ्गा



**कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालयः**

**दरभङ्गा ( बिहार )**

Acārādarśa of Shridatta Upādhyāya with the commentary by Pt. Digambar Jha.

---


◆ प्रकाशक

कामेश्वर सिंह दरभङ्गा संस्कृत विश्वविद्यालय,

कामेश्वर नगर, दरभङ्गा ( बिहार ) ८४६००८

◆ *Published by*

K.S.D. Sanskrit University

Darbhanga. Bihar





◆ प्रकाशन-वर्ष-२००३ ई०

◆ प्रथम संस्करण- ५०० प्रतियाँ

◆ मूल्य - ४६० ( सजिल्द )

◆ मुद्रक :

शोभा प्रिंटिंग प्रेस

नयाटोला, पटना-८००००४

# पुरोवाक्

इह खलु मानवानाम् अभ्युदयनिःश्रेयसाधिगमैकसाधन-स्वरूपं धर्माचरणमधिकृत्य मतभेद-समुद्भवस्य संशयध्वान्तस्य व्युदासार्थं मिथिलायां शिष्टानुसृतं व्यवहारं प्रामाण्यकोटिनिविष्टत्वेन स्वीकुर्वाणस्य महर्षिप्रवरस्य याज्ञवल्क्यस्य 'धर्मस्य निर्णयो ज्ञेयो मिथिलाव्यवहारत' इति वचनं समादृत्य सुसंस्कृत-लोकजीवन-व्यवस्था-संरक्षणोद्युक्तस्य निर्भ्रान्तस्वरूपस्य धर्मस्य मिथिलादेशाचारप्राणत्वात् मीमांसाम्बुधिपारदृश्वना सुगृहीतनामधेयेन **श्रीदत्तोपाध्यायेन** शिष्यानुग्रहकाम्यया मिथिलादेशप्रसृत्वरम् आचारस्वरूपं विवरीतुम् **आचारदर्श**व्यपदेशःसिद्धो निबन्ध-ग्रन्थः खीष्टाब्दस्य त्रयोदशे शतके सन्दृब्धो यत्र प्रतिपादितो दुरधिगमोऽतिविततोऽपि धर्माचरणविधिः नीरजस्के मुकुरोदरे सम्मुखीनस्य पदार्थसार्थस्य सुविशदं प्रतिबिम्बमिव समेषामेव श्रौतस्मार्त्तधर्माध्वनीनानाम् आस्तिक्यसम्भृतचेतसाम् अधिमानसम् आञ्जस्येनैव प्रवेशसौभाग्यमासाद्य विराजतेतरामित्यत्र नैव जागर्त्ति संशीतिलेशावसरः ।

स चायं मिथिलादेशप्रचलिताचारव्यवहारं तदानान्तनम् अधिकृत्य प्रणीतेषु धर्मशास्त्रनिबन्धेषु चिरन्तनतया, विशदतया, प्रामाणिकतया च महिमामतिशयमवगाहमानो ग्रन्थो जिज्ञासूनामुपकाराय न्याय-व्याकरणादिविविधशास्त्रनिष्णातेन झोपाह्वेन **पण्डितदिगम्बरशर्म्मणा** संस्कृतटीकया सममेव हिन्दीभाषानिबद्धेन विवरणेन सनाथीकृत्य विश्वविद्यालयेऽस्मिन् प्रकाशनार्थं समुपन्यस्तोऽनुमोदितश्चाप्यधिकारिभिः नैरन्तर्येण संसरत्-संवत्सर-प्रवाहावर्त्तेषु चिररात्राय घूर्णमानः साम्प्रतं परमेश्वरानुग्रहेण संस्कृत-संस्कृति-संरक्षण-गृहीतव्रतस्य सदाचारपरायणस्य प्रशासन-प्रवीणस्य धर्मैकशरणस्य सम्मान्यं कुलपतिपदमलङ्कुर्वाणस्य **आचार्य किशोर कुणालमहाभागस्य** अनुरोधमासाद्य धर्मशास्त्रविभागाध्यक्षपदमध्यासीनेन पितृ-पितामह-परम्परोपनीत- विद्यावैभवसमृद्धधिषणेन विद्वद्वरेण्येन त्रिपाठि-विरुदभाजा श्रीमता **वाचस्पतिशर्म्मणा** महत्या सूक्ष्मेक्षिकया प्रभूतपरिश्रमेण च टिप्पणी-श्लोक-सूत्रादिसूचीभिरलङ्कृत्य सम्पादितः सन् समेषां सुरगवी-समुपास्ति-प्रवणानां विशेषतो दैनन्दिनाचार-परिपालन-प्रकारं विविदिषूणां संविदुल्लासाय प्राकाश्यमुपैतीति प्रमोदभरतुन्दिलम् अनुभवामि आत्मानम् ।

आशासे, संस्कृत-गोष्ठी-गरिष्ठानां ग्रन्थागारेषु ग्रन्थरत्नमिदं सर्वत्र समादरभाजनं भवेदिति ।

अधिपाटलिपुत्रम्
मार्गशीर्षैकादश्याम्, गुरौ
विक्रमसंवत्-२०६०

प्रो. काशीनाथमिश्रः
प्राक्तनः कुलपतिः
कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालस्य

# प्रकाशकीयम्

मर्यादापुरुषोत्तमस्य भगवतः जानकीवल्लभस्य परमानुग्रहेण त्रयोदशतमे शतके मिथिलायामवतीर्णस्य श्रीदत्तोपाध्यायस्य आचारादर्शाभिधेयं ग्रन्थरत्नमिदं पण्डितप्रवर-दिगम्बर झा- विरचित-संस्कृत-हिन्दी-टीकोपेतं विश्वविद्यालय-स्यास्य धर्मशास्त्र-विभागाध्यक्षैः डॉ० वाचस्पतिशर्म-त्रिपाठिभिः सम्यक् सम्पाद्य प्राकाश्यं नीयत इति नूनमेव परम-प्रमोदावहोऽयं विषयः। 'आचारप्रभवो धर्मः, धर्मस्य प्रभुरच्युतः'-इति व्यासवचनानुसारं सनातनधर्मस्य प्राणभूतः किल आचार इति नास्त्यविदितं विदुषाम् । विशेषतः दुराचारमयेऽस्मिन् कलियुगे सदाचारप्रतिपादकस्यास्य आचारादर्शस्य महत्त्वमुपयोगित्वञ्च नितरां वर्धयतितराम् ।

प्रायः विंशतिवर्षेभ्यः प्रागेव समारब्धं ग्रन्थस्यास्य मुद्रणं विविधा-न्तरायानपाकृत्य गुरुवर्य्याणां डॉ० काशीनाथमिश्राणां कुलपतिचराणां सत्प्रयासेनाद्य परिपूर्णतामेति । अनेक-विश्वविद्यालयेषु पाठ्यग्रन्थरूपेण निर्धारितस्यास्य आचारादर्शस्य कापि सरला संस्कृतटीकाद्य नास्ति सुलभा, न वा केनापि विदुषा इतः पूर्वं ग्रन्थस्यास्य राष्ट्रभाषानुवादो विहितः । महता श्रमेण संस्कृतटीकां राष्ट्रभाषानुवादञ्च विधाय विद्या-वयोवृद्धाः पण्डित-दिगम्बरझामहोदयाः अस्माननुगृहीतवन्त इति प्रथमं प्रणामाञ्जलिभि-रभिनन्दनीया इमे ।

पितृ-पितामह-परम्परया धर्मशास्त्राध्ययनाध्यापनरतैः विश्वविद्यालयस्यास्य धर्मशास्त्रविभागाध्यक्षैः डॉ० वाचस्पतिशर्मत्रिपाठिभिः भागद्वयात्मकस्यास्य सुदीर्घकलेवरस्य ग्रन्थरत्नस्य गुरुतरं सम्पादनकार्यं प्रभूतपरिश्रमेण विहितमिति वितरामि तेभ्यः शतशः साधुवादान् ।

ग्रन्थस्यास्य प्रकाशनेन धर्मपरायणाः जनाः, धर्मशास्त्रच्छात्राः, अध्यापकाः, गवेषकाः, समालोचकाश्च उपकृताः भविष्यन्तीति दृढं विश्वसिमि ।

*का०सिं०द०संस्कृतविश्वविद्यालयः* — आचार्यकिशोरकुणालः

*दरभङ्गा* — कुलपतिः

स्वतन्त्रतादिवसः

१५.८.२००३

## सम्पादकीयम्

सुविदितचरमिदमत्रभवतां समेषामपि सुधियां यद् भारतीयवाङ्मये चतुर्दशविद्यासु अतिमहत्त्वपूर्णं स्थानं भजते धर्मशास्त्रम् । मनु-गौतम-वसिष्ठ-याज्ञवल्क्यादि-रागद्वेष-स्पर्शशून्य-मुनि-प्रणीतत्वात्, तदध्ययन-शीलानाम् ऐहिकामुष्मिकफल-प्रापकत्वात्, प्रथम-पुरुषार्थस्य धर्मस्य प्रतिपादकत्वात्, अतिप्राचीनत्वात्, साक्षाद् वेदानुमापकत्वाच्च सकलशास्त्रसमभ्यर्हितमिदं शास्त्रमित्यङ्गीकुर्वन्ति समेऽपि सुधियः । यच्छास्त्रं धर्मं शास्ति तद् धर्मशास्त्रमित्युच्यते । अथवा धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रमिति । अत्र मध्यमपदलोपिकर्मधारयसमासेन धर्म-शास्त्रयोर्मध्ये प्रतिपाद्यप्रतिपादक- भावोऽङ्गीक्रियते ।

धर्मशास्त्रस्यैव स्मृतिरित्यपरा संज्ञा सुप्रसिद्धा । यद्यपि वेदार्थ-स्मारकत्वाद् वेदोद्भवानां समेषामपि व्याकरण-पुराणसांख्यादिशास्त्रान्तराणां स्मृतिरिति यौगिकी संज्ञा, तथापि वेदानां साक्षादनुमापकत्वेन, वेदार्थोपनिबद्धत्वेन, तदर्थस्मारकतया च धर्मशास्त्रस्य स्मृतिरिति संज्ञा योगरूढ़ा सकलशास्त्र-समादृता चेति मन्तव्यम् । अतएवाभिहितं भगवता मनुना–

**'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।'**

निखिलेऽपि भारतीयवाङ्मये श्रुत्यनन्तरं स्मृतीनामेव स्थानं प्रामाण्यञ्च स्वीकृतम् यतः स्मृतयः साक्षाद् वेदानुमापिकाः, तदनुगामिन्य-स्तदर्थप्रतिपादिकाश्च । यथोक्तम्

**'वेदार्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम् ।'**

पूर्वमीमांसासूत्रकारः भगवान् जैमिनिः स्मृतिप्रामाण्याधिकरणे स्मृतीनां प्रामाण्यं मुक्तकण्ठं प्रतिपादयति । वेदप्रतिपादिताः एव धर्माः मन्वादि-धर्मशास्त्रकारैः स्मृत्वा स्मृतिषूपनिबद्धा इति स्वयं स्वीकरोति मनुः–

"यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥"—मनु० १।१०८

वस्तुतस्तु अनेकशाखा-प्रशाखाविभक्ते विशाले वैदिकवाङ्मये कालक्रमात् मन्दमतीनां सामान्यजनानां प्रवेशोऽतिदुर्गम इत्यवधार्य सामान्यजनसौविध्याय, सनातनधर्म-संरक्षायै च परमकारुणिकैः वेदतत्त्वज्ञैः मन्वादिस्मृतिकारैः वेदार्थसारः सरलसुरगिरा स्मृतिषु सङ्गृहीतः । यथोक्तम्—

"स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकाशिताः ॥"

अतएव वेदानन्तरं धर्मशास्त्रं भजते द्वितीयं स्थानं संस्कृतवाङ्मय इत्यत्र नास्ति काचन विप्रतिपत्तिः । अतएव निरुक्त-पूर्वमीमांसा-न्याय-वैशेषिक-व्याकरण-प्रभृतीनि शास्त्रान्तराणि मनोः तत्प्रतिपादितधर्मशास्त्रस्य च महत्त्वं सादरं सप्रश्रयञ्चाङ्गीकुर्वन्ति ।

धर्मशास्त्रवाङ्मयस्य क्षेत्रमतीव व्यापकं विस्तृतञ्च विद्यते । अतएव कतिपयाधुनिकैर्मनीषिभिः शास्त्रमिदं विधिशास्त्रं, कर्त्तव्यशास्त्रं, व्यवस्थाशास्त्रं, समाजशास्त्रमित्यादिनामान्तरैरप्यभिधीयते । वस्तुतस्तु अद्यत्वे नीतिशास्त्र-(Ethics)-अर्थशास्त्र (Economics)-राजनीतिविज्ञान (Political Science)-समाजशास्त्र (Sociology)- अपराधशास्त्र (criminology) - विधिशास्त्र-(Jurisprudence) - हिन्दूविधि (Hinu Law)—प्रभृतिशास्त्राणां ये प्रतिपाद्य-विषयाः सन्ति ते सर्वेऽपि सम्भूय एकस्मिन् धर्मशास्त्रवाङ्मये उपनिबद्धाः इति धर्मशास्त्रस्य व्यापकत्वं सुस्पष्टमेव । मानवस्य जन्मकालात् पूर्वतः गर्भाधानादारभ्य मरणानन्तरं श्राद्धसंस्कारपर्यन्तं प्रातःशय्यात्यागमारभ्य रात्रौ शयनकालपर्यन्तं प्रतिक्षणं धर्मशास्त्रीयनियमानामुपयोगित्वमनुभूयते व्यावहारिक-जीवने ।

धर्मशास्त्र-निरूपिताः निखिला अपि विषयाः सामान्यतः त्रिधा विभज्यन्ते—(i) आचारः, (ii) व्यवहारः, (iii) प्रायश्चित्तञ्च । महर्षियोगियाज्ञवल्क्येन इमे एव त्रयो विषयाः निजस्मृतौ अध्यायत्रये विस्तरेण विवेचिताः । तत्र

प्रथमे **आचारकाण्डे** इमे विषयाः निपुणं निरूपिताः—यथा–धर्मस्वरूपं, धर्मलक्षणं, धर्मस्य कारक–ज्ञापक–हेतवः, गर्भाधानाद्युपनयनान्ताः संस्काराः, ब्रह्मचारिधर्माः, पञ्चमहायज्ञाः, विवाह्य–वर–कन्यागुणाः, विवाहभेदाः, स्त्रीधर्माः, गृहस्थधर्माः, स्नातकधर्माः, अनुलोमजाः, प्रतिलोमजाः, भक्ष्याभक्ष्ये, सुवर्णादिद्रव्यशुद्धिः, दाननियमाः, श्राद्धम्, विघ्नशान्तिः, ग्रहशान्तिः, राजधर्माः, दण्डविधानम्, आह्निककृत्यानि च ।

द्वितीये **व्यवहारप्रकरणे** व्यवहारस्य (विवादस्य) लक्षणं, धनसम्बन्धि–विवादाः (Civil offences), हिंसासम्बन्धिविवादाः (Criminal offences), न्यायाधीशानां कर्त्तव्यानि, न्यायालयभेदाः, विवादनिर्णये विविधप्रमाणानि, साक्ष्यनियमाः, ऋणादानाद्यष्टादशविवादपदानि, विविधापराधानां दण्ड–विधानमित्यादयो विषयाः स्मृतिषूपनिबद्धाः ।

तृतीये **प्रायश्चित्तखण्डे** तु प्रथमन्तावत् जननाशौचं, मरणाशौचम्, अन्त्येष्टिसंस्कारः, कर्मविपाकः, आपद्धर्माः, वानप्रस्थधर्माः, यतिधर्माश्च विमृष्टाः। तदनु विहिताकरण–निन्दितसेवन–इन्द्रियानिग्रहजन्यानि विविधपापानि, ब्रह्महत्यादि–पञ्चमहापातकानि, गोवधाद्युपपातकानि, अतिपातकानि, तेषां प्रायश्चित्तानि, कृच्छ्रचान्द्रायणादिव्रतानि च निपुणं निरूपितानि धर्मशास्त्रे । इमे एव विषयाः विविधस्मृति–धर्मसूत्र–भाष्य–निबन्धग्रन्थेषु क्वचित् समासेन क्वचिच्च विस्तरेणोपवर्णिताः सन्ति ।

रचनाकालदृष्ट्या विषय–प्रतिपादनदृशा च निखिलमपि धर्मशास्त्रसाहित्यं विभागत्रये विभज्यते–(क) धर्मसूत्रसाहित्यम्, (ख) स्मृतिसाहित्यम्, (ग) भाष्य–निबन्धसाहित्यञ्च । तेषु धर्मसूत्रसाहित्यं वेदाङ्गभूतकल्पसूत्रेभ्यः समुद्भूतम् । सूत्रं नाम संक्षिप्तकथनम्, अर्थात् विविधविषयाणां संक्षेपेण प्रतिपादनम् । तथा च–

**"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥"**

धर्मसूत्राणि यद्यपि प्रायः गद्यमयानि सन्ति किन्तु यत्र-तत्र श्लोकाः अपि तेषु आयान्ति दृष्टिपथम् । यद्यपि कालदृष्ट्या सूत्रापेक्षया स्मृतयः अर्वाचीना इति आमनन्ति इतिहासकाराः किन्तु मनुस्मृतिः सूत्रग्रन्थापेक्षया प्राचीनतरेति विदुषां मतम् । धर्मसूत्रेषु गौतमधर्मसूत्रं प्राचीनतममिति तस्य रचनाकालः ४००-६०० ई० पू० मध्ये निर्धारितः पी० वी० काणे-महोदयेन । तदनन्तरं बौधायन-धर्मसूत्रम्, आपस्तम्ब-धर्मसूम्, हिरण्यकेशि-धर्मसूत्रम्, वसिष्ठ-धर्मसूत्रम्, विष्णु-धर्मसूत्रम्, हारीत-धर्मसूत्रम्, शङ्खलिखित-धर्मसूत्रञ्च इत्येतानि प्रमुख-धर्मसूत्राणि विराजन्ते ।

**स्मृतिसाहित्ये** मनु-याज्ञवल्क्य-नारद-पराशरादिविरचिताः अष्टादश स्मृतयः प्रधानभूताः । स्मृतीनां संख्याविषये नास्ति ऐकमत्यं शास्त्रकाराणाम् । याज्ञवल्क्येन विंशतिधर्मशास्त्रप्रयोजकानां नामानि परिगणितानि तथा च-

**मन्वत्रि-विष्णु-हारीत-याज्ञवल्क्योशनोऽङ्गिराः ।**
**यमापस्तम्बसंवर्ताः कात्यायन-बृहस्पती ॥**
**पराशर-व्यास-शङ्ख-लिखिताः दक्ष-गौतमौ ।**
**शातातपो वसिष्ठश्च धर्मशास्त्र-प्रयोजकाः** ॥ याज्ञ०१। ४५

पराशरः एकोनविंशतिस्मृतिकाराणामुल्लेखं विदधाति । चतुर्विंशति-मतसङ्ग्रहे तु चतुर्विंशतिधर्मशास्त्रकाराणां नामानि दृग्गोचरीभवन्ति । अपरार्कः पैठीनसिश्च षट्त्रिंशत्स्मृतीनां परिगणनं कुरुतः । वीरमित्रोदये प्रयोगपारिजातवचनमुद्धरता मित्रमिश्रेण अष्टादश स्मृतिकाराः, अष्टादश उपस्मृतिकाराः, अन्ये च एकविंशतिस्मृतिकाराः उपन्यस्ताः । सरस्वतीविलासेऽपि उपस्मृतिकाराः निर्दिष्टाः । कमलाकर-नीलकण्ठभट्टौ तु एकशत-स्मृतीनामस्तित्वमङ्गीकुरुतः । इत्थञ्च यद्यपि शताधिक-स्मृतीनामुल्लेखः विविधग्रथेषूपलभ्यते किन्तु तासु अष्टादश स्मृतयः मुख्याः, तत्रापि मनुस्मृतिः श्रेष्ठा सर्वजनसमादृता चेति विज्ञेयम् ।

धर्मसूत्रस्मृति-कालानन्तरं तृतीयकाले **भाष्यग्रन्थानां** स्वतन्त्र-**निबन्ध-ग्रन्थानाञ्च** कालः आपतति । कालेऽस्मिन् प्रथमं विद्वद्भिः परश्शताः टीकाग्रन्थाः भाष्यग्रन्थाश्च प्रणीताः यन्माध्यमेन अतिगहनानां दुरूहविषयाणाम् अवबोधः सामान्यबुद्धीनामपि सम्यक् सञ्जातः । एषु ग्रन्थेषु प्रसङ्गतोऽनेके नूतनविषयाः अपि दृष्टिपथमायाताः येन धर्मशास्त्रवाङ्मयस्य समधिकः प्रचारः प्रसारश्च समजनि । एतेषु भाष्यकारेषु मनु-गौतम-याज्ञवल्क्य-पराशर-बौधायनापस्तम्बादिविरचितानां सूत्र-स्मृति-ग्रन्थानां भाष्यकाराः प्रामुख्यं भजन्ते । तत्र मनुस्मृतेः दश, याज्ञवल्क्यस्मृतेः सप्त, पराशरस्मृतेः द्वे, गौतम-धर्मसूत्रस्य च चतस्रः टीकाः दृष्टिपथमुपयान्ति । एवमेव विविध-सूत्रस्मृतिग्रन्थानाधृत्य विद्वद्भिः समये-समये विरचिताः टीकाः, शताधिक-संख्याकानि भाष्याणि च धर्मशास्त्रवाङ्मयस्य कलेवरं नितरां संवर्धयन्ति समलङ्कुर्वन्ति च ।

अनेकेषु स्थलेषु विविधस्मृतयः धर्मसूत्राणि च आपाततः परस्परं विप्रतिपद्यमानानि दृश्यन्ते । तेषां विरोधं परिहृत्य समन्वयस्थापनार्थं स्वतन्त्र-**निबन्धग्रन्थानां** प्रणयनं विहितं धर्मशास्त्रमर्मज्ञैः विज्ञैः । तैः मीमांसाधिकरणानि समाश्रित्य देशाचार-कुलाचार-सामयिकाचाराद्यनुरोधेन स्मृतिमतानां वैषम्यमपहाय युक्तिप्रमाणपुरस्सरं व्यवस्था प्रदत्ता । अस्मिन्नेव निबन्धयुगे भारतस्य विविधप्रदेशेषु राज्येषु च समुत्पन्नाः निबन्धकाराः निजप्रदेशाचारं समर्थयन्तः परमतखण्डनपूर्वकं स्वमतं विविधयुक्तिप्रमाणैः उपस्थाप्य सिद्धान्तपक्षं स्थापितवन्तः । विलक्षणप्रतिभासमन्वितैरेभिर्नि-बन्धकारैः श्रुति-स्मृति-पुराणेभ्यः प्रमाणवचनानि संगृह्य निबद्धाः शताधि-काः निबन्धग्रन्थाः धर्मशास्त्रसाहित्येऽतिविशिष्टं स्थानं भजन्ते ।

धर्मशास्त्रीयनिबन्धकारेषु केचन दाक्षिणात्याः, कतिपयाः महाराष्ट्रीयाः, इतरे वङ्गीयाः, अन्य उत्कलीयाः, अपरे च मैथिलाः येषां निबन्धग्रन्थाः

अद्यत्वेऽपि धर्मनिर्णये प्रमाणत्वेन सर्वत्र समाद्रियन्ते । तत्र **दाक्षिणात्य**-निबन्धकारेषु हेमाद्रि-देवण्णभट्ट-माधवाचार्य-श्रीधर-विश्वेश्वरभट्ट-नन्दपण्डित- प्रभृतयः प्रमुखाः । किञ्च **महाराष्ट्रीय** निबन्धकारेषु कमलाकरभट्ट- नीलकण्ठभट्ट-नागोजिभट्ट-अनन्तदेव-काशीनाथोपाध्याय-प्रभृतयः समुल्लेख्याः सन्ति । **वङ्गीय** निबन्धकारेषु जीमूतवाहन-शूलपाणि-रघुनन्दन-गोपालन्यायपञ्चानन-जगन्नाथतर्कपञ्चानन-प्रभृतयः विशिष्टाः विद्यन्ते । एवम् **उत्कलीय**निबन्धकारेषु शतानन्द-शम्भुकर-विद्याकर-नरसिंह-विश्वनाथ-दिव्यसिंह-रघुनाथ-गदाधर-प्रभृतयः प्रधानभूताः परिगण्यन्ते ।

एवमेव मैथिलनिबन्धकाराणामपि सुदीर्घा परम्परा नयनपथमुपयाति । द्वादशशतकादारभ्य मिथिलाप्रदेशेऽस्मिन् अनेके स्मृतिकाराः प्रादुर्बभूवुः । तेषु ग्रहेश्वरमिश्र-गणेश्वरमिश्र-श्रीदत्तोपाध्याय-गणेश्वरठक्कुर-चण्डेश्वर-ठक्कुर- रामदत्तठक्कुर-हरिनाथोपाध्याय-पद्मनाभदत्त-श्रीदत्तमिश्र-विद्यापत्युपाध्याय-इन्द्रपतिठक्कुर-प्रेमनिधिठक्कुर-लक्ष्मीपत्युपाध्याय-शङ्करमिश्र-वाचस्पतिमिश्र-वर्धमानोपाध्याय-मिसरूमिश्र-रुद्रधरोपाध्याय-इत्येवमादयो मनीषिणो विशेषेण विश्रुतकीर्तयो विद्यन्ते । इमे निबन्धकाराः तत्कालीनमद्यतनीयं च धर्मनिर्णयं प्रभावान्वितमकुर्वन्, कुर्वन्ति चेत्यत्र नास्ति संशीतिलेशोऽपि । तेषु अनेकेषां विदुषां ग्रन्थाः नाद्यापि आविष्कृताः, आविष्कृता अपि नाद्यावधि मुद्रापिता इति मर्मन्तुदोऽयं विषयः ।

मैथिलनिबन्धकारेषु आचारादर्शकारः **श्रीदत्तोपाध्यायः** भजतेऽतिमहत्त्वपूर्णं स्थानम् । अनेन आचारादर्श-छन्दोगाह्निक-पितृभक्ति-श्राद्धकल्प-समयप्रदीप-व्रतसार-शुद्धिनिर्णय-प्रभृतयः प्रौढनिबन्धग्रन्थाः प्रणीताः । सौभाग्यवशात् श्रीदत्तोपाध्यायस्य देशकालविषये नायाति दृष्टिपथं कापि विदुषां विप्रतिपत्तिः। बिहारराज्यान्तर्गत मिथिलाक्षेत्रे 'पण्डौल' नगरं निकषा 'दहिभत' ग्रामे एषः

जनुरधत्त । शण्डिल्यगोत्रोद्भवः छन्दोगः (सामवेदी) खलु श्रीदत्तोपाध्यायः। अस्य पिता श्रीबील्हणः, पितामहः हरिः, प्रपितामहः आदिदेवः, वृद्धप्रपितामहश्च धर्माध्यक्षः भास्करः इति डॉ० रमानाथ झा-द्वारा दरभङ्गाराज-पुस्तकालये संगृहीत-पञ्जीपुस्तकात् स्पष्टीभवति ।

**श्रीदत्तस्य कालः**

चण्डेश्वर-शूलपाणि-रुद्रधर-वाचस्पतिमिश्र-रघुनन्दनभट्टाचार्य-प्रभृतिभिः स्मार्तप्रवरैः निजनिबन्धग्रन्थेषु श्रीदत्तोपाध्यायस्य तत्र-तत्र प्राचुर्येण स्पष्टमुल्लेखो विहितः इति तद्ग्रन्थावलोकनेन सुस्पष्टम् । चण्डेश्वरस्य कालः चतुर्दशशतकस्य प्रथमचरणमिति अङ्गीकुर्वन्ति पी.वी. काणेप्रभृतयः इतिहासकाराः ।[१] अतः श्रीदत्तोपाध्यायस्य कालः चतुर्दशशतकात् पूर्वमेव इति निस्सन्दिग्धम् । श्रीदत्तेन हरिहर-गणेशमिश्रप्रभृतिविदुषां नामोल्लेखो विहितो निजग्रन्थेषु । हरिहस्य स्थितिकालः १२००-१२५० ई०, गणेशमिश्रस्य च स्थितिकालः त्रयोदशशतकस्य पूर्वार्धभागः निर्णीतः काणेमहोदयेन । तस्मात् द्वादशशतकानन्तरं चतुर्दशशतकस्य प्रथमचरणात् च पूर्वमेव श्रीदत्तोपाध्यायस्य स्थितिकाल इति काणेमहोदयानां निष्कर्षः ।[२]

'जर्नल ऑफ़ द एशियाटिक सोसायटी ऑफ बङ्गाल' नामके शोधपत्रे प्रकाशिते लेखे श्रीदत्तः हेमाद्रेः समकालीनः त्रयोदशशतकान्त-भागोत्पन्नश्चेति मतं समुपस्थापितम् ।[३] छन्दोगाह्निक-भूमिकायां महामहोपाध्याय-मुकुन्दझाबक्शी-महोदयोऽपि समर्थयति मतमिदम्-"समयश्च खिस्ताब्दीयत्रयोदशतमशताब्द्या अन्तिमः प्रतिभाति । यतोऽमीषां मतं म. म. रुद्रधरादयः स्व-स्वनिबन्धेषु समुल्लिखन्ति स्म ।" 'पितृभक्ति'-ग्रन्थस्य सम्पादकः डॉ० अशोकचटर्जी शास्त्री अस्य कालविषये इत्थं

---

१. धर्मशास्त्र का इतिहास-काणे, पृ. 84.

२. धर्मशास्त्र का इतिहास. काणे, पृ.84

३. सन् 1915 ई.

निरूपयति-"इत्थं च श्रीदत्तोपाध्यायस्य जीवितव्यकालः सप्तत्युत्तरद्वादशशतकात् प्रभृति त्रयोदशशतकपर्यन्त इति वक्तुं शक्यते ।"[१]

**श्रीदत्तस्य कृतयः**

श्रीदत्तविरचितानां षण्णां ग्रन्थानामुल्लेखो विहितः विविधग्रन्थेषु यथा (i) आचारादर्शः (ii) छन्दोगाह्निकम् (iii) पितृभक्तिः (iv) श्राद्धकल्पः (v) समयप्रदीपः (व्रतसारः) (vi) शुद्धिनिर्णयश्चेति ।

**( १ ) आचारादर्शः**

श्रीदत्तविरचितः सर्वोत्कृष्टग्रन्थः आचारादर्शः यस्य 'आचारदर्पण' इति अपरं नामधेयम् । ग्रन्थेऽस्मिन् शुक्लयजुर्वेदीयानां वाजसनेयिनां प्रातरारभ्य रात्रिपर्यन्तमनुष्ठेयाः आह्निकाचाराः विशदं विवेचिताः। यथोक्तमस्यैव ग्रन्थस्य द्वितीयश्लोके श्रीदत्तेन-

**"अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् ।**
**निबध्यते निबद्धो यो धर्मशास्त्र-निबन्धिभिः ॥"**

आचारादर्शे निरूपितविषयाः इमे सन्ति-शय्यात्यागः, मूत्रपुरीषोत्सर्गविधिः, अचामनविधिः, आचमननिमित्तानि, आचमनानुकल्पविधिः, दंन्तधावनं, प्रातःस्नानादिविधिः, स्नानानुकल्पः, सन्ध्योपासनं, गायत्रीजपविधिः, ब्रह्मयज्ञः, तर्पणं, तर्पणोत्तरकर्म, देवपूजा, बलिवैश्वदेवप्रयोगः, नित्यश्राद्धं, भिक्षादानम्, अतिथिपूजनं, भोजनविधिः, शयनविधिः, दारोपगमः, स्त्रीसंसर्गोत्तरकर्म च ।

श्रीदत्तेन आचारादर्शे कल्पतरु-कामधेनु-राजा (भोजदेव)- स्मृतिमहार्णव-हरिहर-हलायुधनिबन्ध-शिष्टाकोप-गणेश्वरमिश्र-प्रभृति-निबन्धानां निबन्धकाराणाञ्च समुल्लेखो विहितः । एवमेव न केवलं परवर्तिमैथिलनिबन्धकारैः अपितु बहुभिः वङ्गीय-गौड-निबन्धिभिश्च श्रीदत्तमतं ससम्मानं समुद्धृतम् । विशेषतः चण्डेश्वरस्य कृत्यरत्नाकरे, रुद्रधरस्य वर्षकृत्ये,

---

१. 'पितृभक्ति' समीक्षण, पृष्ठसं-६६

वाचस्पतिमिश्रस्य पितृभक्तितरङ्गिण्यां, शूलपाणिमहोदयस्य दुर्गोत्सवविवेके, रघुनन्दनभट्टाचार्यस्य अष्टाविंशतितत्त्वेषु, कमलाकरभट्टस्य निर्णय-सिन्धुग्रन्थे च अनेकशः सबहुमानं समुद्धृतः श्रीदत्तः, येन तस्य परवर्तिग्रन्थकारेषु प्रभूतप्रभावः परिलक्ष्यते ।

**आचारादर्शस्य टीकाः**

आचारादर्शग्रन्थस्य **पञ्च** टीकाः दृग्गोचरीभवन्ति । तत्र

**(i) आचारादर्शबोधिनी** टीका दामोदरतनयेन गौरीपतिना (गौरीशेन) १६४० तमे ई० वर्षे वाराणस्यां कृता । टीकेयम् वेङ्कटेश्वरप्रेस, बम्बई द्वारा मुद्रिता ।

**(ii)** आचारदीपिकानाम्नी द्वितीया टीका, हरिलालविरचिता यस्याः प्रशंसा धनुर्धराचार्येण एवं विहिता–

**"हरिलाल-कृताचारादर्श-व्याख्या विलक्षणा ।**
**सारस्वतीया विज्ञेया विस्तीर्णाऽऽचारदीपिका ॥"**[१]

**(iii)** फक्किकाव्याख्यानामिका म०म० रघुनाथविरचिता तृतीया टीका १९८४ तमे ई० वर्षे का. सिं. द. सं. विश्वविद्यालयात् प्रकाशितस्य छन्दोगाह्निकग्रन्थस्य अन्ते नवपृष्ठेषु भ्रमवशात् छन्दोगाह्निकटीकारूपेण मुद्रिता । वस्तुतस्तु इयं आचारादर्शस्य टीका । टीकेयमेतद्ग्रन्थान्ते परिशिष्टरुपेण संयोजिताऽस्माभिः ।

(iv) प्राचीन-तालपत्रे मिथिलाक्षरलिखिता, अंशतः खण्डिता, अज्ञातकर्तृका चतुर्थी टीका का० सिं० द० सं० विश्वविद्यालय पुस्तकालये सुरक्षितास्ति ।

(v) म. म. मुकुन्दझाबख्शीमहोदयेन छन्दोगाह्निकभूमिकायां वाचस्पतिमिश्रप्रणीतादर्शटीकाया उल्लेखः कृतः–"एतत्(श्रीदत्त) कृताचारादर्शस्य व्याख्यैका वाचस्पतिमिश्रनाम्ना कृतोपलभ्यते ।" किन्तु टीकेयं नागता अस्मद्-दृष्टिपथम् ।

---

1. नित्यकृत्यार्णव (सन् १९०२ ई०) 1/32

## २. छन्दोगाह्निकम्

ग्रन्थेऽस्मिन् सामवेदिनां दैनिककृत्यानां वर्णनं समवाप्यते । 'मिथिलाक्षर-निबद्धः द्विचत्वारिंशत्पत्रात्मकः ग्रन्थोऽयं का० सिं० द० सं० विश्वविद्यालये सुरक्षितोऽस्ति । ग्रन्थोऽयं १९३० तमे वर्षे टिप्पणीसहितः निर्णयसागर प्रेस, बम्बईतः प्रकाशितः । एतद्ग्रन्थोपरि म० म० रघुनाथकृता टीकैका का०सिं०द०सं० विश्वविद्यालये प्राप्यते । म० म० मुकुन्दझाबख्शी-कृत-टिप्पणी विभूषितः ग्रन्थोऽयं प्रकाशितः ।

## ३. पितृभक्तिः

यजुर्वेदीय-श्राद्धपद्धतिप्रतिपादकेऽस्मिन् ग्रन्थे पार्वणैकोद्दिष्ट-मासिक-सपिण्डीकरण-आभ्युदयिकश्राद्धानां वर्णनमवाप्यते । एतद्ग्रन्थोपरि मुरारिप्रणीतटीकायाः उल्लेखः काणेमहोदयेन विहितः । महादेवविरचिता पितृभक्तिचर्चानाम्नी द्वितीया टीका मिथिलाक्षरैः चतुर्विंशतिपत्रेषु लिखिता का०सिं०द०सं० विश्वविद्यालयपुस्तकालये सुरक्षितास्ति । ग्रन्थोऽयं १९७२ तमे ई० वर्षे डॉ० अशोकचटर्जीशास्त्रिणा सम्पादितः चौखम्बा संस्कृत सीरिज, वाराणसीतः प्रकाशितश्च ।

## ४. श्राद्धकल्पः

ग्रन्थेऽस्मिन् सामवेदीयानां श्राद्ध-विधानं विवेचितम् । १९७१ तमे वर्षे ग्रन्थोऽयं वाराणसेयसंस्कृतविश्वविद्यालयतः सम्पाद्य प्रकाशितः ।

## ५. समयप्रदीपः

ज्यौतिषेन धर्मशास्त्रेण च सम्बद्धेऽस्मिन् ग्रन्थे विविधव्रतानां स्वरूपं तेषां कालश्च निपुणं निरूपितः । परिच्छेदत्रये विभक्तोऽयं ग्रन्थः । ग्रन्थोऽयं डॉ० अशोकचटर्जीशास्त्रिणा सम्पादितः बिब्लिओथेका इण्डिका, कलिकातातः १९७१तमेऽब्दे, का०सिं०द०सं० विश्वविद्यालयद्वारा च १९८५ तमे ई० वर्षे प्रकाशितः । अस्यैव ग्रन्थस्य नामान्तरं 'व्रतसार' इति प्रतिपादयन्ति अशोकचटर्जीशास्त्रिमहोदयाः ।

## ६. शुद्धिनिर्णयः

एतस्मिन् ग्रन्थे तिथिनिर्णयः, जननमरणाशौचे शुद्धिव्यवस्थादिविषयाश्च विस्तरेण विमृष्टाः सन्ति ।

**आचारादर्शस्य संस्करणानि**

आचारादर्शः सर्वप्रथमं काशीस्थ-दिवाकरप्रेसतः १९२० तमे वैक्रमाब्दे लेथोयन्त्रेण मुद्रापितः । तदनु पुनः १९३९ तमे वैक्रमाब्दे काशीतः एव प्रकाशितोऽयं ग्रन्थः । बम्बईस्थ-व्येङ्कटेश्वर-प्रेसद्वारा १९६१ तमे, २०१२ तमे, २०१५ तमे च वैक्रमाब्दे वारत्रयमस्य प्रकाशनं सञ्जातम् ।

**टीकाकारपरिचयः**

आचारादर्शस्य संस्कृत-हिन्दी-टीकाकारः पण्डितप्रवरः श्रीदिगम्बर झा-महोदयः व्याकरण-साहित्य-नव्यन्याय-धर्मशास्त्रादि-विविधशास्त्रविशारदः बिहारराज्यस्य मिथिला-क्षेत्रान्तर्गत-मधुबनीमण्डले जनकपुरान्तिके महीनाथपुरग्रामे जनिं लेभे । एतेषां पितृचरणाः पण्डित-रुद्रमणि झा, प्रख्यातज्योतिर्विदः, पितामहाश्च विद्वन्मूर्धन्याः भैये झा विश्रुताः सिद्ध-पुरुषाः आसन् । प्रारम्भिक- शिक्षा एभिः जनकपुरस्थ-संस्कृत-महाविद्यालये पूज्यपितृचरणानां चरणयोः उपविश्य अधिगता । ज्यौतिषशास्त्र-बलेन निजनिधनकालं मासद्वय-पूर्वमेव विज्ञाय एतेषां पितृपादैः नवानीग्रामस्थिते संस्कृतविद्यालये विश्रुतविदुषां पण्डित जगदीश झा महोदयानामन्तिके समर्पिता इमे तत्रैव नव्यन्याय-व्याकरण-साहित्य-शास्त्राणां गहनमध्ययनं कृतवन्तः । तेषामेव प्रकाण्डनैयायिकानां म. म. बच्चा झा महोदयानां धर्मपत्नी एतेषां पितृष्वसा आसीत् ।

नवानीग्रामे विविधशास्त्राण्यधीत्य काशीनगरीमापन्नाः इमे पं. उग्रानन्द-झा-प्रभृति-गुरुवर्याणामाशिषा नव्य-न्याय-व्याकरणादिशास्त्रेषु प्रौढ-पाण्डित्यमवापुः । निजग्रामे संस्कृतोच्चविद्यालये प्रधानाध्यापकपदेन अध्यापनकार्यमारभ्य नेपालदेशस्य दाङमण्डलान्तर्गत-बिजौरी नगरस्थिते

परमप्रसिद्धे जनता--महाविद्यालये प्रायः दशवर्षाणि यावत् प्राचार्यपदमलङ्कृतं पण्डितप्रवरैः । एष एव महाविद्यालयः सम्प्रति महेन्द्रसंस्कृत-विश्वविद्यालयरूपेण परिणतो विराजते । तदनु राजस्थान-प्रदेशस्य जयपुरनगरान्तिके तलावगाँव स्थिते संस्कृतमहाविद्यालये विंशतिवर्षाणि यावत् प्राचार्यपदं विभूष्य ततः प्राप्तावसराः इमे कामेश्वर-सिंह-संस्कृत-विश्वविद्यालये सम्मानितप्राध्यापकपदं स्नात्तकोत्तर-धर्मशास्त्र-साहित्य-विभागयोः समलङ्कृत्य सम्प्रति निजग्रामं निकषा छतौनीस्थ-संस्कृत- महाविद्यालये अभ्यागतप्राध्यापकपदे विराजन्ते । १९९९ तमे वर्षे इन्टरनेशनल पब्लिशिंग हाऊस (दिल्ली) द्वारा 'द बेस्ट सिटिजन ऑफ इण्डिया अवार्ड'-सम्मानेन, का. सिं. द. संस्कृत-विश्वविद्यालयद्वारा च विविध- सम्मानैः एतेषां सम्मानो विहितः । भारतवर्षस्य विविधशोध-पत्रिकासु प्रकाशिताः केचन अप्रकाशिताश्च एतेषां वैदुष्यपूर्णशोधलेखाः अन्वेषणीयाः संग्रहणीयाश्च सुधीभिः । प्रकृत-ग्रन्थ-टीकातिरिक्तं 'कालिदास और मिथिला' तथा पं. मधुसूदन ओझा- प्रणीतस्य 'इन्द्रविजय'-ग्रन्थस्य हिन्दी व्याख्या च अद्यापि अप्रकाशिता । शताधिक-शिष्यगणैः, पीताम्बर-श्वेताम्बर-विश्वम्भर-संज्ञकैः पुत्ररत्नैः सत्पौत्रैश्च सेवितचरणयुगलः विद्वद्वरेण्योऽयं सरस्वती-समाराधन-निरतः सम्प्रति निजग्रामे एव विराजते ।

मिथिलादेशीयाचारविषयकग्रन्थेषु प्राथम्यमुपगतस्य धर्मशास्त्रीयग्रन्थस्यास्य पण्डितप्रवर-दिगम्बर झा-विरचित-संस्कृत-हिन्दीटीकोपेतस्य सम्पादनाय पितृकल्पैः विद्या-वयोवृद्धैः झामहोदयैः समादिष्टोऽहं विविध-विभागीय-विश्वविद्यालयीयोत्तरदायित्वेष्वतिव्यस्तोऽपि नाशक्नुवं तेषां निदेशमस्वीकर्तुम् । आत्मनि तेषामहैतुकीं कृपां, स्नेहमात्मीयताञ्च विलोक्य 'मम जीवने कदाचिन्न संभवति ग्रन्थस्यास्य प्रकाशनम्' इति चिन्तया सततमभिभूतचेतसा-मशीतिवर्षकल्पानामाचार्यवराणां चिन्तामपाकर्तुं कर्त्तव्यभावनया नियोगोऽय-मङ्गीकृतो मया ।

राजस्थानप्रदेशे बिहारप्रदेशे च विविधपरीक्षासु पाठ्यग्रन्थरूपेण निर्धारितस्य किल आचारादर्शस्य संस्कृत-हिन्दी-टीकायाः लेखनं राजस्थान-प्रदेशे एव आरब्धम् । दरभङ्गास्थ-का. सिं. द. संस्कृत-विश्वविद्यालये स्नातकोत्तर-धर्मशास्त्र-विभागे सम्मानितप्राध्यापकपदे विराजमानैष्टीकाकारैः ग्रन्थटीकाप्रणयन-प्रसङ्गे समुपस्थितानां दुरूहशङ्कानां समाधानं विद्वद्धौरेयैः पण्डित अर्जुनझा पं. रामचन्द्रमिश्र-पं. भवानीदत्तशर्म-पं. रामकरणशर्म-पं.कुलानन्दमिश्र-महोदयैः, मदीयपितृचरणैः पण्डित-गङ्गाधरशर्मभिश्च साकं समये-समये विशदं विमृश्य स्वप्रतिभया प्रभूतपरिश्रमेण विहितम् । अतःविनिवेदयामि सर्वादौ निजप्रणामाञ्जलिं तेषां विश्रुतविदुषां चरणारविन्देषु ।

ग्रन्थस्यास्य प्रकाशनं डॉ० जयमन्त मिश्र-डॉ० काशीनाथमिश्र-डॉ० परशुरामोपाध्यायानां कुलपतिचराणाम्, आचार्य किशोरकुणालमहोदयानां कुलपतीनां, डॉ० चन्द्रकान्तशुक्लानां प्रतिकुलपतीनाञ्च मार्गदर्शनमन्तरा नासीत् संभवमतस्तेभ्यः कार्तज्ञ्यं व्याहरामि । ग्रन्थस्य प्रूफ-संशोधने सूचीनिर्माणे च ये सहयोगं कृतवन्तः तेषु पण्डितगोविन्द झा- डॉ० लक्ष्मीनाथ झा (साहित्य-विभागाध्यक्षः), डॉ० श्रीपतित्रिपाठी (मद्विभागे आचार्यः मदीयानुजश्च), डॉ० विनयकुमार मिश्रः, (वेदविभागे उपाचार्यः), डॉ० विश्रामतिवारी (उपाचार्यः) श्रीश्वेताम्बर झा (टीकाकारस्य मध्यमपुत्रः), मम जामाता डॉ० उदयशङ्कर पाण्डेयः (श्री च्छत्रधारिसंस्कृत-महाविद्यालयोपाचार्यः), प्रकाशनप्रभारी डॉ० शशिनाथ झा च साधुवादैः सभाजनीयाः सन्ति ।

शोभाप्रेसस्य सञ्चालकाः पण्डित सत्यनारायणझा महोदयाः महतोत्साहेन धैर्येण च ग्रन्थमुद्रणं विहितवन्तोऽतस्ते सर्वथा धन्यवादार्हाः । ग्रन्थस्यास्य प्रूफसंशोधने, पाण्डुलिपिलेखने, प्रकाशने च पण्डितवर्य्याणां मध्यमात्मजेन पण्डितश्वेताम्बरझा शुभोदयेन मनोवाक्कायकर्मभिरहर्निशं यः श्रमः उद्योगश्च

विहितः स सर्वथाऽविस्मरणीयोऽ वर्णनीयोऽभिनन्दनीयश्चास्ति । 'आत्मा वैजायते पुत्रः'-इति शास्त्रानुसारं तेषां वास्तविक-प्रतिनिधि-भूतोऽयमभिनन्द्यतेऽस्माभिः निजाशीर्वचोभिः साधुवादैश्च ।

पण्डितप्रवर- दिगम्बरझा -प्रणीत- संस्कृत-हिन्दी-टीकोपेतां टिप्पणी-पाठभेद-श्लोकसूच्यादि-समवेतां श्रीदत्तोपाध्यायस्य कृतिमिमां भागद्व-योपनिबद्धां सुधियां समक्षं प्रस्तुवन्नहमनुभवामि कमप्यनिर्वचनीय-मानन्दसन्दोहम् । गुणैकपक्षपातिनः सहृदयाः मनीषिणो विनिवेद्यन्ते यद् बुद्धिमान्द्यात् व्यस्ततावशान्मानवसुलभप्रमादवशाद् वा यदि काश्चन न्यूनताः त्रुटयो वा नयनपथमुपयान्ति विदुषां तदा कृपया ताः संशोध्य संसूचनीयोऽयञ्जन इति । अवसरेऽस्मिन् सहसा स्मृतिपथमायाति प्रसिद्धधर्मशास्त्रीय-निबन्ध-कारस्य कमलाकरभट्टस्य सूक्तिरियम्-

"जगति सकलविद्या-सिन्धु-मुष्टिन्धयानाम्
पर-भणिति-परीक्षा युज्यते सज्जनानाम् ।
तदिह मम निबन्धे दूषणं भूषणं वा
यदि भवति विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥"

*स्नातकोत्तर-धर्मशास्त्र-विभागः* सुधियामाश्रवः-
*का.सिं.द. संस्कृत विश्वविद्यालयः* वाचस्पतिशर्मा त्रिपाठी
*दरभङ्गा* विभागाध्यक्षः सङ्कायाध्यक्षश्च
*श्रावणी पूर्णिमा*
*(१२.८.२००३)*

# आचार तथा आचारादर्श

प्राचीन मैथिल विद्वान् श्रीदत्तोपाध्याय का 'आचारादर्श' सचमुच अपने नाम के अनुरूप आचार के लिये आदर्श ही है । आदर्श तबतक आदर्श कहलाने का अधिकारी ही नहीं, जब तक वह निर्मल न हो । किसी भी धार्मिक ग्रन्थात्मक आदर्श की निर्मलता तभी सम्भव है, जबकि इसके अन्दर उपस्थापित विचार कर्म-- मीमांसा दर्शन द्वारा निर्णीत पद्धति का अनुसरण करता हुआ दिखाई दे । प्रकृत ग्रन्थरत्न के लेखक उपाध्याय श्रीदत्त ने ग्रन्थोपसंहार के अवसर पर लिखित--

**समूलवचनाभोगो मीमांसान्यायनिर्मलः ।**
**श्रीदत्तेन सतामेष आचारे दर्पणः कृतः ॥**

इस हृदयोद्‌गार वाक्य के अन्दर अपने आचारदर्पण को ''मीमांसान्याय-निर्मल'' कह कर स्पष्ट रूप से यह बतलाया है कि मैंने इस आचारदर्पण की रचना में धर्मविचारात्मक कर्ममीमांसाशास्त्र से पूर्ण साहाय्य लिया है । प्रत्येक संदिग्ध स्थल पर किये जाने वाले निर्णय का आधार मीमांसाशास्त्रगत निर्णय को ही बनाया है। फलतः यहाँ किया गया विचार मीमांसानुसारी है । अतः सर्वथा निर्मल है । दर्पण के निर्मल होने पर ही सन्निहित मुखादि का सही प्रतिबिम्बन होता है, जिसके माध्यम से द्रष्टव्य मुखादि सही रूप में देखा जाता है । धार्मिक विचार की निर्मलता यही हो सकती है कि वह विचार धर्ममीमांसात्मक कर्ममीमांसा का अनुसरण करनेवाला हो । यहाँ किये गये विचार यतः सर्वथा मीमांसानुगत हैं अतः विचारात्मक इस ग्रन्थ को निर्मल निर्दोष अर्थात् ग्राह्य आचरण का यथार्थ प्रतिपादक मानना ही होगा ।

''समूलवचनाभोग'' इस विशेषण के द्वारा प्रकृत ग्रन्थकर्ता उपाध्याय ने यह कहा कि सही रूप में दृश्य को देखने के लिये दर्शक को दर्पण में निर्मलता के समान दृश्यानुरूप वितति भी अपेक्षित होती है, विस्तार भी अपेक्षित होता है, यह अनुभवसिद्ध है । जिन कुछ मात्र दैनिक कृत्यों का इस ग्रन्थ के अन्दर विचार किया गया है, उन्हें देखते हुए इस आचारग्रन्थ का कलेवर अल्प नहीं कहा जा सकता । ऐसा होने का कारण यह हुआ है कि इसके अन्दर मूल वचनों का अर्थात् प्रमाणभूत स्मार्त वचनों का ही उल्लेख किया गया है । अतः अपेक्षित दर्पण-धर्म विस्तारात्मक आभोग भी इसके अन्दर विद्यमान है । ''सतामेष आचारे दर्पणः कृतः'' इस वाक्य के अन्दर 'सताम्' इसका अन्वय द्विधा विवक्षित है ।

एक आचार के साथ और दूसरा दर्पण के साथ । इससे उपाध्याय का अभिप्रेत अर्थ यह प्राप्त होता है कि यों तो 'आचार' शब्द अच्छे आचार अर्थ में ही अधिकतर "आचार-हीनं न पुनन्ति वेदाः", "आचारः परमो धर्मः", "आचाराद् विच्युतो विप्रो न वेद-फलमश्नुते" इत्यादि वाक्य-प्रयोग-स्थलों में प्रयुक्त होता हुआ पाया जाता है । परन्तु यदि "आचरणम् आचारः" इस व्याख्या के अनुसार आचार को सदाचार और कदाचार दो प्रभेदों में विभक्त माना जाय तो उन दोनों के अन्दर सज्जनों के आचरण होंगे सदाचार और असज्जनों के आचरण कदाचार, क्योंकि सज्जन वेदशास्त्रानुमोदित आचरणों को ही अपनाते हैं । अतः इस ग्रन्थ को वह आदर्श समझना चाहिये जिसमें सज्जनों के ही आचार प्रतिबिम्बित हैं, असज्जनों के आचरणात्मक कदाचार नहीं । 'सताम्' का दर्पण के साथ अन्वय की विवक्षा-पक्ष में अभिप्रेत अर्थ यह प्राप्त होता है कि यह ग्रन्थात्मक दर्पण सज्जनों के लिये ही रचित हुआ है, असज्जनों के लिये नहीं ।

दर्पण कितना भी निर्मल एवं बड़ा क्यों न हो उसमें प्रतिबिम्बित वस्तु को वही देख सकता है जो उसके सम्मुख विद्यमान हो । इस वस्तुस्थिति को देखते हुए दर्पण से अन्वित रूप में विवक्षित "सताम्" के प्रयोग से यह भी व्यक्त होता है कि जो लोग इस ग्रन्थात्मक दर्पण के निकट विद्यमान होंगे अर्थात् एकाग्रतापूर्वक अपने मन को इसमें लगायेंगे वे ही इसके अन्दर प्रतिबिम्बित होने वाले अर्थात् ग्राह्य रूप में प्रतिपादित होनेवाले आचारों को पहचान पायेंगे और पहचान कर उन्हें अपनायेंगे । इस प्रकार गम्भीरतापूर्वक दृष्टिपात करने पर प्रकृत ग्रन्थकर्त्ता उपाध्याय के द्वारा उपसंहार-वाक्य रूपमें उपस्थापित उक्त "समूलवचनाभोगो" इत्यादि एक वाक्य से ही इस विषय पर विस्तृत रूप से प्रकाश पड़ता हुआ दीख पड़ता है कि इस आचारादर्श की उपादेयता उन लोगों के लिये कैसी है जो कि अपने को सज्जन समझते हैं और अपने जीवन को सन्मार्ग पर ही गतिशील बनाने की इच्छा रखते हैं ।

प्राचीन काल में अधिकतर लोग वैदिक कर्मों के अनुष्ठाता होते थे । अनुष्ठान अनुष्ठेय क्रिया के सम्पादन की प्रक्रिया के ज्ञान की अपेक्षा रखता है अतः लोग मीमांसा-शास्त्र का अध्ययन प्रचुर संख्या में किया करते थे । जो लोग स्वयं वैदिक कार्यों का प्रचुर रूप में अनुष्ठान नहीं भी करते थे वे भी आज की तरह अनुष्ठान की प्रक्रिया से अपरिचित इसलिये नहीं रहते कि अनुष्ठाता लोगों के सम्पर्क में तो वे भी रहते ही थे । चारों ओर वैदिक कर्मों का अनुष्ठान चलता ही रहता था । अतः मीमांसाशास्त्रगत विचारों से लोग अपरिचित नहीं रहते थे । यहाँ तक कि किसी भी वस्तु को समझाते समय समझानेवाले मीमांसा में किये

गये पूर्वपक्ष या उत्तरपक्ष को ही दृष्टान्त रूप में समझनेवालों के समक्ष उपस्थित किया करते थे । इसीलिये वेदान्त के मान्य ग्रन्थ भामती आदि के अधिकतर उपस्थापित दृष्टान्त कार्ममीमांसा से सम्बद्ध ही पाये जाते हैं । परन्तु आज जिस प्रकार लोग वैदिक याग-यज्ञ आदि तथा उनके प्रतिपादक कर्ममीमांसा शास्त्र से दूर हो उठे हैं, एवं दिनानुदिन अधिकाधिक दूर होते जा रहे हैं उसके अनुसार यह आवश्यक हो पड़ा है कि मीमांसा से सम्बन्ध रखनेवाले जिन ऐसे ग्रन्थों की व्याख्या उपलब्ध नहीं है उनकी व्याख्या की रचना यथासम्भव शीघ्र हो जाय जिससे ऐसे ग्रन्थों को लोग सही रूप में समझ सकें ।

व्याख्या के बिना आज इन ग्रन्थों को समझने में संस्कृतज्ञों को भी प्राप्त होने वाली कठिनता का एक उदाहरण यहाँ उपस्थित कर दिया जाय तो असंगत नहीं होगा ।

आचमन-क्रिया के विचार के अवसर पर "उच्छिष्ट-रेतो-विण्मूत्रं संस्पृश्योन्मृज्याचम्य प्रयतो भवति, त्रिःप्रक्षाल्य च तं देशम्" पैठीनसि के इस वचन का उल्लेख करके आचारादर्शकार उपाध्याय ने यह कहा है कि "आचमनप्रक्षालन-योरर्थक्रमेण पाठक्रमबाध:" ।

मीमांसाशास्त्र से अपरिचित संस्कृतज्ञ व्यक्ति उपाध्याय के इस वाक्य का अर्थ अधिक से अधिक इतना ही समझेगा कि आचमन और प्रक्षालन क्रियाओं के बीच अर्थक्रम से पाठक्रम का बाध है । परन्तु इसका अभिप्राय क्या है, इस छोटे से वाक्य से प्रकृत स्थल में क्या संगत अर्थ बतलाया गया है, यह समझना तबतक कठिन है जबतक व्याख्या द्वारा विस्तार से समझाया न जाय । व्याख्या के द्वारा यहाँ इस प्रकार समझना तथा समझाना होगा कि "अग्निहोत्रं जुहोति, यवागूं पचति" इस वैदिक वाक्य की मीमांसा के अवसर मीमांसादर्शन में यह मीमांसा की गयी है कि यहाँ अग्निहोत्र होम और यवागूपाक के विधान सुने जाते हैं । दो क्रियाओं के सम्पादनात्मक विधान कोई एक कर्त्ता क्रम से ही कर सकता है । जिस प्रकार वाक्य सुने जा रहे हैं तदनुसार पाठक्रम का आदर करते हुए यदि पहले अग्निहोत्र कर लिया जायेगा, तदनन्तर यवागू पकाया जायेगा तो भला वह भी पकाया जानेवाला यवागू किस काम में आयेगा ? क्योंकि अग्निहोत्र तो तथाश्रुत पाठक्रम के अनुसार पहले ही घृत आदि जिस किसी से कर लिया गया होगा । अतः पीछे किया जानेवाला यावगूपाक निष्प्रयोजन हो उठेगा । वहाँ यदि यवागू पाक को सप्रयोजन बनाना हो तो तदर्थ एकमात्र उपाय यह होगा कि यथाश्रुत पाठ के पूर्वापरीभावात्मक क्रम को वहाँ न मानकर उसके विपरीत यवागूपाक के

प्रयोजन को ही उक्त प्रकार का निर्णायक माना जाय, पहले यवागू पाक करके उस यवागू से अग्निहोत्र किया जाय। प्रकृत ग्रन्थकार उपाध्याय ने इसी मीमांसाशास्त्रगत निर्णय को दृष्टान्तरूप में उपस्थित करते हुए उक्त ''आचमन प्रक्षालनयोः'' इत्यादि अति संक्षिप्त वाक्य द्वारा यह बतलाया है कि यद्यपि पैठीनसि के उक्त विधिवाक्य में आचमन की चर्चा पहले और प्रक्षालन की चर्चा पीछे है परतु शुद्धि के इच्छुक व्यक्ति को पहले प्रक्षालन कर लेना चहिये तदनन्तर आचमन करना चाहिये। क्या कोई भी साधारण संस्कृतज्ञ व्यक्ति अभिप्रायख्यापक व्याख्या के विना इस अर्थ को उक्त संक्षिप्त वाक्य से समझ सकता है ? कभी नहीं। यह यहाँ एकमात्र उदाहरण मैंने उपस्थित किया है। ऐसी परिस्थिति बहुत स्थानों में हैं। अतः ऐसे ग्रन्थों की व्याख्या अपेक्षित मानी जायेगी।

सम्भव है आज के कुछ लोग यहाँ इस प्रकार का प्रश्न उपस्थित करें कि जिन मलमूत्रत्याग, दतुअन, स्नान आदि दैनन्दिन क्रियाओं का विवेचन इस आचारादर्श के अन्दर किया गया है उन्हें तो विना पढ़े लिखे साधारण जन भी यों ही किया करते हैं। अतः उनके सम्बन्ध में दिया जानेवाला स्मृतिवचनात्मक उपदेश और उन पर आधारित होनेवाला विवेचन व्यर्थ है। जिन कामों को लोग यों ही किया करते हैं उनके सम्बन्ध में भला उपदेश देने का क्या प्रयोजन हो सकता है ? किसी भी उपदेश का प्रयोजन उपदेश्य क्रियाओं की ओर लोगों को प्रवृंत्त अथवा निवृत्त कराने के अतिरिक्त और कुछ नहीं हो सकता।

इसका उत्तर यह समझना चाहिये कि कर्त्तव्य क्रियायें तीन प्रकार की पायी जाती हैं– (1) दृष्टार्थक, (2) अदृष्टार्थक, (3) और दृष्टादृष्टार्थक। क्रियाओं के ये प्रभेद लौकिक क्रिया तथा वैदिक क्रिया दोनों के अन्दर होते हैं। उदाहरण द्वारा लौकिक क्रियाओं के अन्दर इन्हें यों भली भाँति समझा जा सकता है कि लकड़ी आदि के छेदों पर किया जाने वाला कुल्हाड़ी आदि का उद्यमन और निपातन होता है दृष्टार्थक। क्योंकि उसके अनन्तर होनेवाला उस एक लकड़ी का दो टुकड़ों में बंट जाना स्वरूप फल प्रत्यक्षतः तुरन्त देखा जाता है। किसी परोपकारी व्यक्ति के द्वारा निःस्वार्थभाव से की जानेवाली दूसरों की सहायता, पीड़ितों की सेवा आदि क्रियायें होती हैं अदृष्टार्थक। क्योंकि उक्त प्रकार से सहायक के फल को प्रत्यक्षतः देखते नहीं। जल के विना सूखते हुए किन्ही ऐसे पेड़-पौधों पर जो कि शीघ्र फूलने-फलने वाले हों, किया जानेवाला जल-सिंचन होता है दृष्टादृष्टार्थक क्योंकि जल के सींचने से होने वाली उन पेड़-पौधों की हरियाली तथा उनमें लगनेवाले फलफूलों को वह जल सींचनेवाला देखता है,

किन्तु पेड़ पौधों में होनेवाली वह भौगर्भिक रासायनिक प्रक्रिया जो जल सींचने के अनन्तर और उक्त प्रकार की हरियाली तथा फूलफल आदि लग आने के अव्यवहित पूर्व तक होती रहती है, वह उस जल-संचक व्यक्ति द्वारा देखी जा पाती नहीं। सारांश यह है कि उक्त प्रकार की रासायनिक प्रक्रिया, जिसके न होने के कारण ही सूखे पेड़-पौधों में जलसंचन से हरियाली आती नहीं; फलफूल लगते नहीं, उक्त जलसंचन का होता है अदृष्टफल। और उसके प्रभाव से होने वाले फलफूल आदि होते हैं उक्त जलसंचन के दृष्टफल। अतः उक्त जलसंचन को भलीभाँति कहा जा सकता है दृष्टादृष्टार्थक।

क्रिया और दृष्टफल के बीच मान्य होनेवाले अदृष्ट फल का काल सर्वत्र एक-सा नहीं होता। अन्य पेड़-पोधों में जितने समय में फलफूल लगते पाये जाते हैं, नारियल के पेड़ में उससे कहीं अधिक समय पर फल लगते हैं। अतः क्रियाओं और अनुभूयमान फल के बीच होने वाले अदृष्टफल के काल की कहीं लघुता तो कहीं दीर्घता होती है–यह भी मानना अनिवार्य है। और दीर्घता जब मान्य हो गयी तो सुदीर्घता भी अमान्य नहीं ठहरायी जा सकती। अतः जहाँ मध्यवर्ती अदृष्टफल का काल सुदीर्घ होता है वहाँ कर्त्ता व्यक्ति के जन्मान्तर तक को अपने में समेट लेता है। क्रिया के उसी अदृष्ट माध्यमिक फल को पाप और पुण्य नाम से पुकारा जाता है जिसकी सिद्धि आचार्य उदयन ने अपने परमात्म-तत्त्व-विवेक में जिसे कुसुमाञ्जलि नाम से भी पुकारा जाता है, "चिरध्वस्तं फलायालं न कर्मातिशयं बिना" इस उक्ति के द्वारा यह कह कर की है कि यदि शास्त्रीय विधि एवं निषेध पर आधारित सुकर्म और कुकर्म की व्यवस्था न मानी जाय तो सामाजिक व्यवस्था अस्तव्यस्त हो उठेगी। सामाजिक जीवन दूभर हो उठेगा। और उसे मानने पर सुकर्मता और कुकर्मता का निर्णायक उनके शोभन और अशोभन फलों को ही मानना होगा। वे शोभन और अशोभन फल कारण के बिना उत्पन्न नहीं हो सकते जिन्हें प्रत्येक प्राणी समय-समय पर सुख-दुख रूप में अनुभव किया करते रहते हैं। अतः किये हुए कर्मो को ही उन शोभन या अशोभन फलों के प्रति कारण मानना होगा। परन्तु ऐसा मानने में कठिनाई यह दीख पड़ती है कि परोपकार अपराध आदि क्रिया के करते ही तो कर्त्ता व्यक्ति को सुख या दुःख होता नहीं। अतः यह मानना ही होगा कि वे परोपकार या अपराध आदि क्रियायें स्वयं फलप्रसव में समर्थ न होने के कारण मध्यवर्ती धर्म अधर्म को, जो कि सुख-दुःखात्मक फल के अव्यवहित पूर्व काल तक स्थिर रहता है, उत्पन्न करके उसके द्वारा सुखदुःखात्मक फल को उत्पन्न करती है।

जो लोग जन्मान्तरवाद पर विश्वास नहीं रखते हैं वे इस प्रश्न का उत्तर नहीं दे सकते कि जन्म लेने वाले बच्चों में यह विभिन्नता क्यों पायी जाती है कि कोई शिशु अधिक सुखी दीख पड़ता है तो कोई ठीक उसके विपरीत अत्यन्त दुःखी। कोई भी शिशु वर्तमान जन्म में तो कोई ऐसा कर्म किया होता है नहीं कि जिसकी विषमता के आधार पर सुख और दुःख स्वरूप फल की विषमता मानी जा सके। जन्मान्तरवादी के लिए इस प्रश्न का उत्तर देना इसलिये सरल हो उठता है कि उक्त प्रकार से पुण्यपापात्मक मध्यवर्ती फल के द्वारा पूर्वजन्मकृत कर्म शिशुगत सुखदःख को उत्पन्न करते हैं अतः पुण्यपापगत विलक्षणता के आधार पर सुख दुःखगत विषमता होती है ऐसा वे भली भाँति कह सकते हैं।

इस प्रकार कर्मों की दृष्टार्थकता, अदृष्टार्थकता, दृष्टादृष्टार्थकता पुण्यपाप और जन्मान्तरवाद की मान्यता पर प्रकाश डालनेवाले इस आध्यात्मिक विचार के अनन्तर उक्त प्रश्न का यह उत्तर सरल रूप से प्राप्त हो जाता है कि इस आचारादर्श के अन्दर जिन दन्तशोधन-स्नानादि दैनन्दिन ऐसे कृत्यों का विवेचन किया गया है जिन्हें साधारण जन भी यों ही प्रतिदिन शारीरिक मलशोधन करने के लिए किया करते हैं वे शास्त्रानुवर्णित पद्धति से यदि किये जायँ तो वे केवल दृष्टार्थक न होकर अदृष्टार्थक भी हो सकते हैं। तदनुसार दृष्टादृष्टार्थक हो उठने के कारण उनसे शारीरिक शुद्धि के अतिरिकत पारलौकिक फल का भी अर्जन किया जा सकता है। अतः आचारादर्श आदि ग्रन्थों के द्वारा किये जानेवाले उनके विवेचन को व्यर्थ नहीं ठहराया जा सकता। प्रकृत ग्रन्थ में विवेचित जिस सन्ध्यावन्दन, तर्पण, नित्यश्राद्ध आदि कृत्यों का कोई दृष्टफल नहीं, उनके विवेचन को भी व्यर्थ या अनुचित इसलिये नहीं ठहराया जा सकता कि वे दृष्टार्थक न होने पर भी अदृष्टार्थक हो सकते हैं। अदृष्ट और परलोक आदि की मान्यता अभी-अभी बतलायी जा चुकी है, युक्ति के आधार पर। क्रिया लौकिक हो या वैदिक, उसकी सफलता के लिए यह अत्यन्त आवश्यक हो जाता है कि वे यथावत् सम्पादित हों। सम्पादन में थोड़ा भी विघटन होने पर कोई भी क्रिया सफल होती नहीं। उदाहरण के लिए किसी भी क्रिया को लिया जा सकता है। किसी फल को काटने के लिये चाकू चलाते हैं। चाकू चलने में यदि थोड़ा भी व्यक्तिक्रम हो जाता है, चाकू फल के अगल-बगल हो जाती है तो फल कटता नहीं। तदनुसार अदृष्टार्थक क्रियायें तभी अदृष्ट को उत्पन्न करती हैं और उसके द्वारा दूरवर्त्ती फल का निष्पादन करती हैं जबकि वे सही रूप में सम्पादित होती हैं। क्रियाओं का सही रूप में सम्पादन तबतक सम्भव नहीं जबतक

लिपिवद्ध रूप में उसकी पद्धति सुलभ नहीं हो, उसका विवेचन नहीं किया गया हो। अतः आचारादर्श जैसे ग्रन्थों के द्वारा उनका विवेचन अपेक्षित होता है। और यह विवेचन यदि गम्भीरता को धारण कर लेता है तो उसकी उचित व्याख्या भी आवश्यक होती है। इसीलिये मेरे अन्यतम प्रिय शिष्य सुयोग्य विहान् पं. श्री दिगम्बर झा ने आचारादर्श की विस्तृत संस्कृत और हिन्दी व्याख्या लिखी है।

जहाँ तक मैंने व्याख्या को देखा है अच्छी प्रतीत हुई है। व्याख्याता ने जगह-जगह पर मुझसे विचारविमर्श भी किया है। 'वीरमित्रोदय', 'नित्यकृत्यार्णव', 'अष्टाविंशतितत्त्व' आदि मान्य परवर्ती धर्मशास्त्र ग्रन्थों के यशस्वी प्रणेता आचार्यो ने अपनी महनीय कृतियों के अन्दर जगह-जगह पर आचारादर्श के प्रणेता उपाध्याय श्रीदत्त को किस प्रकार आदर के साथ स्मरण किया है, श्रीदत्तोपाध्याय कौन और कहाँ के थे, अंग्रजी में धर्मशास्त्र के महान् इतिहास के यशस्वी लेखक महामहोपाध्याय काणे ने अपने विस्तृत इतिहास ग्रन्थ में श्रीदत्त और आचारादर्श को कैसा ऊँचा स्थान दिया है, इत्यादि विषयों पर विद्वान् व्याख्याता अपने प्राथमिक वक्तव्य में स्वयं पूर्ण रूप से प्रकाश डालेंगे। अतः यहाँ उनकी चर्चा अनावश्यक है।

यह सम्भव है कि सनातन संस्कृति से प्रेम न रखनेवाले आज के कुछ लोग इसके प्रकाशन को यह कह कर महत्त्व न देना चाहें कि जनता जिन कृत्यों व विचारों को दिनानुदिन अधिकाधिक भाव से छोड़ती जा रही है उनसे सम्बद्ध साहित्य की सृष्टि एवं उसका प्रकाशन क्यों ? परन्तु मेरे जैसे अनेक लोग उनका प्रतिवाद अवश्य यह कहकर करेंगे कि ह्रास और वृद्धि परिवर्तनशील है। अतः यह मान बैठना गलत है कि देखा जानेवाला सनातन संस्कृतिगत ह्रास अनन्त है और आज भी भारत में इस संस्कृति को महत्व देनेवालों की संख्या नगण्य नहीं है। साथ ही यह भी ध्यान देने योग्य है कि वेद, वैदिक संस्कृति एवं संस्कृत से सम्बन्ध रखनेवाले विदेशी साहित्य के स्रष्टा विदेशी विद्वान् आचरणतः वैदिक संस्कृति को अपनानेवाले नहीं थे, फिर भी उन्होंने वैदिक संस्कृति पर प्रकाश डाला। उसके सम्बन्ध में साहित्य की सृष्टि की और उसका प्रकाशन करवाया। भारत में भी विभिन्न विश्वविद्यालयों के पाश्चात्य शिक्षा-धारा से प्रभावित संस्कृत विभागों में पढ़ने तथा पढ़ानेवाले सभी जन वैदिक क्रियाकलाप के आचरण करनेवाले नहीं होते। परन्तु एम.ए. कक्षा में वेदग्रूप में वेदग्रन्थ चलता है, वैदिक विषयों की पढ़ाई चलती है, वैदिक क्रिया-कलापों का विवेचन किया कराया जाता है। अतः इस आचारादर्श एवं इसकी व्याख्या की उपादेयता कम से कम शिक्षाक्षेत्र में बनी ही है और बनी रहेगी।

आचारादर्श के अन्दर (१) मलमूत्रत्याग, (२) आचमन, (३) दन्तधावन, (४) स्नान, (५) सन्ध्योपासन, (६) गायत्रीजप, (७) ब्रह्मयज्ञ, (८) तर्पण, (९) देवपूजन, (१०) नित्यश्राद्ध, (११) भिक्षादान, (१२) अतिथिसत्कार, (१३) भोजन, (१४) शयन और (१५) दारोपगमन इन पन्द्रह विषयों का विवेचन किया गया है। अतः आचारादर्श की प्रकृत संस्कृत तथा हिन्दी व्याख्या में भी मुख्य रूप से इन्हीं विषयों का विवेचन हुआ है। ये विवेचनीय कृत्य केवल वैयक्तिक जीवन की स्वस्थता के लिए ही नहीं, समग्र सामाजिक जीवन की स्वस्थता के लिये भी नितान्त अपेक्षित हैं। उदाहरण के लिये इस तर्पण और नित्यश्राद्ध को ही लिया जाय जिसे आज के अधिकतर लोग व्यर्थ कहेंगे। यदि आज भी प्राचीन काल की तरह घर-घर में वयस्क लोग तर्पण और नित्यश्राद्ध करें तो घर-घर में विद्यमान सभी बच्चे यह देखकर कि मरे हुए बन्धुबान्धवों तक को आदर और श्रद्धापूर्वक प्रतिदिन स्मरण किया जाता है, तो जीवित गुरुजनों तथा अन्य बन्धुबान्धवों का आदर करना, उनके प्रति अच्छी धारणा रखना अनायास सीख जायें, जिसका सुपरिणाम यह हो कि बालकों और युवकों, फलतः सभी छात्र-छात्राओं में फैलती नजर आनेवाली वह अनुशासनहीनता जिससे आज सारा जनजीवन व्यस्तता का अनुभव कर रहा है, दूर हो जाय। समाज स्वस्थ हो उठे। अब मैं यहाँ और अधिक कुछ न कहकर आचारादर्श एवं इसकी इस व्याख्या की, जिसकी रचना के फलस्वरूप पूर्वमुद्रित आचारादर्शगत अशुद्ध पाठों का भी संशोधन हो पाया है, अधिकाधिक प्रचार की शुभकामना व्यक्त करता हूँ।

□

टीकाकारः



पण्डित श्रीदिगम्बर झा

न्याय-साहित्य-व्याकरणाचार्यः

सम्मानितप्राध्यापकचरः

का० सिं० द० संस्कृतविश्वविद्यालयः, दरभङ्गा

# समर्पणम्

मातुर्धनेश्वरीदेव्याः स्मृतौ तत्पादपद्मयोः ।
आचारादर्शटीकेयमर्प्यते विविधा नवा ॥

पण्डित दिगम्बर झा

# प्राक्कथन की विषयसूची

## विषय-सूची

# प्राक्कथन

## १. आचार तथा आचारादर्श

धर्म-कर्मप्रधान इस भारतवर्ष में श्रुति-स्मृति एवं निबन्ध सिद्ध आचार ही धर्मों का व्यवस्थापक है । जैसा कि आचारचिन्तामणि में उद्धृत विष्णु तथा मनु का क्रमशः वचन है- .

श्रुति एवं स्मृति ने जिस धर्म का प्रतिपादन किया है और सज्जनों ने जिस धर्म का आचरण किया है, उस आचार (धर्म) का धर्मकाम मानव सेवन करें ।[१]

जो मानव श्रुति एवं स्मृति में कहे गये धर्म का आचरण करता है, वह इस लोक में कीर्ति तथा परलोक में विलक्षण सुख पाता है ।[२]

आचार का दृष्ट और अदृष्ट दोनों प्रकार का फल मनु ने कहा है–मानव आचार से दीर्घायु, मनोवाञ्छित सन्तति तथा अतिप्रभूत धन प्राप्त करता है । साथ ही वह आचार (विकृत अंग चिह्न से सूचित) अशुभ फल का नाश कर देता है ।[३]

यहाँ विशेष जिज्ञासु जन हिन्दी अनूदित धर्मशास्त्र का इतिहास (पृष्ठ संख्या 1106-9) देखें, प्रथम संस्करण 1966 ।

इसी तरह हारीत ने कहा है–

वेदज्ञाता विद्वानों का कहना है कि धर्मों में मुख्य धर्म आचार (का आचरण) है । फलतः अनाचारी लोगों की कहीं कोई प्रतिष्ठा नहीं करते ।[४]

---

१. श्रुतिस्मृत्युदितो धर्मः साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥ विष्णुः

२. श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ मनु :
इति–आचारचिन्तामणिरिति *नित्यकृत्यार्णवः ।*

३. तत्र तावदाचारफलं दृष्टमदृष्टञ्च । तथा च मनुः –
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ ३ ॥

४. आचारः प्रथमो धर्मः इति वेदविदो विदुः ।

न ह्यनाचारिणो लोकान् प्रवदन्ति मनीषिणः ॥ ४ ॥

हिन्दू का खाना धार्मिक, उसका पीना धार्मिक, उसकी नींद धार्मिक, उसका चालढाल धार्मिक, उसके विवाहादि धार्मिक हैं.........इसका बस एक ही कारण है और वह है इस जाति की सजीवता । इस देश (भारत) की प्रेरणा धर्म है और क्योंकि धर्म पर अभी आघात नहीं हुआ, यह जाति जीवित है, यह देश निष्प्राण नहीं है ।[५]

हिन्दुओं की समाज व्यवस्था और उनके व्यक्तिगत एवं सामाजिक जीवन के जन्म-मरण, शिक्षा-व्यवसाय, न्याय-नीति, खान-पान, जात-पाँत, शौचाशौच, आदि प्रत्येक में धर्म का प्राधान्य है । धर्म का जितना व्यापक क्षेत्र एवं जितना विस्तृत अर्थ हिन्दुओं में पाया जाता है, उतना संसार के किसी अन्य समाज, जाति या अन्य धर्मानुयायियों में नहीं पाया जाता ।[५अ]

फिर भी, यहाँ का मुख्य लेख उतने विस्तृत क्षेत्र का व्यापन न कर केवल दैनिक आचार के बोधक *आचारादर्श* ग्रन्थ से सम्बद्ध विषयों का ही होगा ।

*आचारादर्श* नामकरण से ही झलक मिलती है कि जैसे स्वच्छ आदर्श (दर्पण) में सामने का कोई भी पदार्थ प्रतिबिम्बित हो दिखाई देता है, उसी तरह इस आचारग्रन्थ में आचरणीय आचार निस्सन्देह हो ज्ञात होगा जिसका संकेत स्वयं ग्रन्थकार के–''आचारे दर्पणःकृत :'' इस अन्तिम पद्यांश तथा विषय-प्रस्तावना पद्य कथन से ही मिलता है । यथा (शुक्ल) यजुर्वेदियों का दिन-रात में होने वाला धर्म इस आचारादर्श ग्रन्थ में मैं (श्रीश्रीदत्त उपाध्याय) संक्षेप एवं क्रमिक रूप से कह रहा हूँ जिसे धर्मशास्त्र की व्याख्या करने वाले आचार्यो ने अपने-अपने निबन्ध ग्रन्थों में कहा है ।[६]

५. स्वामी विवेकानन्द ने २७ जनवरी सन् १९०० ई० में पासाडेना केलिफोर्नियाँ के शेक्सपियर क्लब के समक्ष जो भाषण दिया था उसी की संग्रहपुस्तिका ''मेरा जीवन तथा ध्येय'' की पृष्ठ संख्या ५ से उद्धृत यह लेख है । यह पुस्तिका श्री रामकृष्ण आश्रम, नागपुर के द्वारा अष्टम संस्करण के रूप से २०.१.१९७८ में प्रकाशित है । इस पुस्तक में भारत के दुःखी मानवों की वेदना से विह्वल उस महात्मा के हृदय का बोलता हुआ चित्र चित्रित है, और इसका उपचार भी प्रस्तुत किया गया है ।

५अ· अनूदित धर्मशास्त्र का इतिहास (प्रकाशकीय वक्तव्य से) प्रथम संस्करण सन् 1966 ई०।

६. अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् ।
निबद्ध्यते निबद्धो यो धर्मशास्त्र-निबन्धिभिः ॥

(आचारादर्श, द्वितीय श्लोक)

ग्रन्थकार ने ग्रन्थ के अन्त में "मीमांसान्यायनिर्मल:" कहकर अपने इस ग्रन्थ को मीमांसा के विचारों से पूर्ण एवं बाहरी आक्षेपों के अयोग्य प्रमाणित करने हेतु "निर्मल:" भी कहा है। इससे ज्ञात होता है कि आचारादर्शप्रणेता पूर्वमीमांसा पद्धति के गूढ़ ज्ञाता थे, क्योंकि सम्पूर्ण पुस्तक में कहीं न कहीं पूर्वमीमांसान्याय का प्रयोग देखा जाता है। कहीं तो 'भाट्टनयेन' आदि शब्दों से गूढ विचार भी उपस्थित कर दिया जाता है। अन्य ग्रन्थों की अपेक्षा इस ग्रन्थ की विशेषता पर ग्रन्थकार को इतना ध्यान है कि वह इसे 'सूक्त' शब्द से सम्बोधित करता है। यथा "दुरुक्तमपि मे सूक्तम्"।[७]

इसी हेतु समीक्षकवर्ग श्रीदत्तोपाध्याय के ग्रन्थों में इस आचारादर्श को प्रमुख बताते हुए इसकी भूरि-भूरि प्रशंसा करता है। यथा–

(क) "उल्लिखितेषु श्रीदत्तोपाध्यायग्रन्थेष्वाचारादर्शग्रन्थमात्रं-मुद्रापितमास्ते। अयमेव ग्रन्थो भूयसीं जनबहुमानास्पदतां लेभे।" इति,

(ख) "छन्दोगाह्निकग्रन्थस्तत्त्वत आचारादर्शग्रन्थस्यैव न्यूनता- परिपूरक इति वक्तुं शक्यते" इति च श्रीदत्तोपाध्यायकृतश्राद्धकल्प- ग्रन्थसम्पादकस्य डा० अशोक चटर्जी शास्त्रिमहोदयस्य समीक्षणम्। (ग्रन्थ प्रकाशन सन् १९७१ ई० प्रथम संस्करण, पृ० सं १०८९)।

(ग) अस्यैव 'श्राद्धकल्प' ग्रन्थस्य सम्बन्धे स्वाभिप्रायव्यञ्जके 'वक्तव्य' मितिशीर्षकलेखे प्रसिद्धसमीक्षकस्य श्रीबलदेव उपाध्यायमहोदयस्य श्रीदत्तोपाध्यायकृताचारादर्शप्रसङ्गे हार्षिकोद्गारो यथा–

"मैथिल-धर्मशास्त्र-निबन्धकर्त्तृषु प्रख्यातस्य सदाचारबोधक- ग्रन्थस्य आचारादर्शनाम्ना प्रसिद्धतमस्य प्रणेतृरूपेण श्रीदत्तोपाध्यायस्याभिधानं नैव विस्मृति-पदवीमश्नुते धर्मशास्त्र- प्रवीणानां रमणीयाचरणानां विद्वद्-धौरेयाणां मानसपटलीषु।" इति

(घ) अस्यैव प्रकृतग्रन्थस्य'आमुख' लेखे डा० वी० राघवन् (मद्रास) महोदयस्यापि सम्मतिर्यथा–

"क्रि०त्रयोदशशतके मिथिलामलङ्कृतवद्भिः श्रीदत्तोपाध्यायैः

७. आचारादर्श का उत्पान्त्य पद्यांश।

[ मूलम् ]

ब्रह्मपुराणे[१]–

ब्राह्मे मुहूर्त्ते सुस्थे[२] च मानसे मतिमान्नृप !
विशुद्ध[३]श्चिन्तयेद् धर्ममर्थञ्चास्याविरोधिनम् ॥

अपीडया तयोः काममुभयोरपि चिन्तयेत् ।

[ संस्कृत टीका ]

ब्राह्मे मुहूर्त्ते इति । हे नृप ! = राजन् । ब्राह्मे मुहूर्त्ते = इदानीमेवोक्ते ब्राह्ममुहूर्त्ते । सुस्थे च मानसे = रात्रौ सुषुप्त्या सकलेन्द्रियाणां विश्रामेण च स्वस्थे (शान्ते) मनसि सति । विशुद्धः = सत्त्वभावमापन्नः । मतिमान्नरः । धर्मम् = यागादिकम् परोपकारादिकं वा । अस्याविरोधिनम् = धर्माप्रतिकूलम् अर्थम् = धनम् । चौर्योत्कोचादिनाऽर्थोपार्जनन्तु धर्म-प्रतिकूलमेव । उभयोरपि तयोः = धमार्थयोः । अपीडया = अविरोधेन । कामम् = स्रक्चन्दनाद्युपभोगम् । चिन्तयेत् = अवधारयेत् । मार्कण्डेयपुराणेऽपि यथा–

परस्परानुबद्धांश्च सर्वानेतान् विचिन्तयेत् ।
विपरीतानुबद्धांश्च धर्मादीन् तात ! वर्जयेत् ॥ इति,

एतान् = धर्मार्थकामान् । "अयमर्थः – ब्राह्मे मुहूर्त्ते विबुद्धः स्वस्थचित्तः सन् अद्यायं धर्मोऽयमर्थोऽयं कामश्चेत्थं मया साधनीय इति धर्माविरोधिनमर्थं धर्मार्थाविरोधिनं कामञ्च नितरां विभावयेत्" इति नित्यकृत्यार्णवः ।

एवमेतदविरोधेनाग्रिमकरणार्थं कृत-सुकृतादि-चिन्तनमपिकार्यम् । यथाऽऽह-विष्णुः–

उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं वाऽपि वाक् सत्या चाऽपि भाषिता ॥ इति

अत्र निष्ठा भविष्यदर्थिकेत्यपरे इति वीरमित्रोदयः ।

[ हिन्दी टीका ]

ब्राह्म मुहूर्त्त में जगकर रात की गाढ़ी निद्रा तथा सभी इन्द्रियों को विश्राम मिलने से स्वस्थचित्त हुए बुद्धिमान् मनुष्य को यह सोचना चाहिए कि आज मुझे

पाठ. (१) विष्णुपुराणे, ह. पु. । (२)स्वस्थे । (३) विबुद्धः ।

यह धर्म, धर्म के अविरोधी यह धन एवं धन-धर्म के अविरोधी यह काम (माला चन्दन आदि उपभोग्य वस्तुओं का उपभोग) साधनीय है । साथ ही इसका भी विचार करें कि धर्म-अविरोधी धन कौन-सा है, धन-धर्म अविरोधी काम कौन-सा होगा । यदि ये परस्पर सम्बद्ध न होकर विरोधी हों तो इस (त्रिवर्ग) को छोड़ देना चाहिए ।

इसी तरह संस्कृत-टीका में उल्लिखित विष्णु-वचनानुसार मनुष्य को अग्रिम कार्य सम्पादनार्थ स्मरण करना चाहिए कि आज मैंने कौन-सा धार्मिक कृत्य किया है कौन-सा दान किया है या किस को कौन-सी वस्तु दिलाई है और कौन-कौन-सा सत्यभाषण किया है । इसी विष्णु वचन के किसी व्याख्याता की व्याख्या है कि आगे के लिए कौन-सा धार्मिककृत्य, दान देना या दिलाना, या क्या-क्या सत्य भाषण करना हैं, यह सोचना चाहिए ।

[ टिप्पणी संस्कृत ]

उत्थाय पश्चिमे यामे रात्रिवासः परित्यजेत् ।
प्रक्षाल्य हस्तपादाऽस्यान्युपस्पृश्य हरिं स्मरेत् ।। इति ।
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः । इति च

क्रमशः महाभारत-कात्यायनस्मृतिवचने ।

अत्र वस्त्रान्तरे परिधाय पादहस्तनेत्रमुखानि प्रक्षाल्य द्विराचामेत् इत्याचार-चिन्तामणिः। प्रबोधनिमित्तकं वासोधारणनिमित्तकं च तन्त्रेण द्विराचामेदि'ति वीरमित्रोदयः। ततोऽनन्यदर्शनोऽहोरात्रकृतपा पविमुक्ति-कामस्तुलसीं पश्येत्' इत्याचार-विवेकः। तथाच वेगिना शौचाचमने विधायैव रात्रिवासस्त्यागो विष्णुस्मरण-प्रातः-सन्ध्ये च अस्नात्वाऽपि विधेयानीति नित्यकृत्यरत्नमाला। एवञ्च "शयनादुत्थितो भूत्वा चिन्तयेन्म धुसूदनमि" ति विष्णुवचनानुसारेण

"ब्राह्मे मुहूर्त्ते प्रथमं विबुध्येद्
अनुस्मरेद्देववरान् मुनींश्च ।
प्राभातिकं मङ्गलमेव वाच्यं
यदुक्तवान् देवपतिस्त्रिनेत्रः ।।

ततः समुत्थाय विचिन्तयेद् बुधो
धर्मं तथाऽर्थञ्च विहाय शय्याम् ।
उत्थाय पश्चाद्धरिरित्युदीर्य
गच्छेत्तदोत्सर्गविधिञ्च कर्त्तुम् ॥

इति कूर्मपुराणीयवचनेन

श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यःस प्रमुच्यते ॥

इति कात्यायनबचनेन च ज्ञायते--त्रैवर्णिकः रात्रेः पश्चिमे यामे विबुध्य रात्रिपरिहितं वसनं त्यक्त्वा अन्यवाससी परिधाय हस्तौ पादौ मुखं नेत्रे च प्रक्षाल्य आचम्य कर्तव्यकर्माविरोधेन वेदानभ्यस्य अवशिष्टायां च चतुर्दण्डात्मिकायां रात्रौ अर्थात् अरुणोदयकालोपक्रमेण देवतादिस्मरणं विधाय धर्माऽर्थादींश्च विचिन्त्य परमात्मानं ध्यात्वा (शय्यातः) उत्थाय हरिरित्युदीर्य अनन्यदर्शनः अहोरात्र- कृतपापविमुक्तिकामः तुलसीं विलोक्य श्रोत्रिय-सुभगादीनि मंगलानि च विलोक्य वक्ष्यमाणरीत्या मूत्रपुरीषोत्सर्गादि कुर्यात् । इतरस्तु रात्रेः पश्चिमयामस्य तृतीयमुहूर्त्तेऽरुणोदयवेलायां प्रवुध्य वेदाभ्यास-वर्जं प्रागुक्तं सर्वं कुर्यादिति ।

अत्र नित्यकृत्यरत्नमाला-टिप्पणी- ''एतेन वेगाभावे विष्णुस्मरणं विधायैव शौचादिकृते गन्तव्यमित्युक्तं भवति ।''

यद्यपि ''शयनादुत्थितो यस्तु कीर्तयेन्मधुसूदनमि'' त्यादि स्कान्दोक्तेः दाक्षिणात्य-गौड़निबन्धेषु मूत्रपुरीषोत्सर्गात्प्रागेव विष्णुस्मरणं लिखितमस्ति तथापि प्रामाणिक-मैथिल-निबन्धेषु मूत्रगुरीषानन्तरं कृतशौचः स्वस्थो विष्णुं स्मरेदिति क्रमोऽप्यस्ती ति तथा यदि वेगी स्यात्तदा विष्णुस्मरणादप्यर्वाक् तान्निर्वर्त्यमन्यथा विष्णुं स्मृत्वा शयनस्थानादुत्थायेति'' लिखितम् च ।

तत्र वेदाध्यायिनां वेदाध्ययनोत्तरं, तदितरेषां च सौविध्यार्थं सूर्योदया-च्चतुर्दण्डात्मके पूर्वसमये ब्राह्ममुहुर्त्ते सर्वैरेवानुस्मरणीयानि प्राभातिकमङ्गलपद्यानि कानिचिदुल्लिख्यन्ते ।

यथा– महाभारतादौ,

प्रातःस्मरामि भवतीतिमहार्त्तिशान्त्यै
नारायणं गरुडवाहनमञ्जनाऽभम् ।
ग्राहाऽभिभूतवरवारणमुक्तिहेतुं
चक्राऽयुधं तरुणवारिजपत्रनेत्रम् ॥१॥

प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्दयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य
पारायणप्रवणविप्रपरायणस्य ॥२॥

प्रातर्भजामि भजूतामभयङ्करन्तं
प्राक्सर्वजन्मकृतपापभयापनुत्यै ।
यो ग्राहवक्त्रपतिताऽङ्घ्रिगजेन्द्रघोर-
शोकप्रणाशनकरोद्यतचक्रपाणिः ॥ ३ ॥

श्लोकत्रयमिदं पुण्यं प्रातः काले पठेन्नरः ।
लोकत्रय-गुरुस्तस्मै दद्यादात्मपदं हरिः ॥ ४॥

भारते–

महर्षिर्भगवान् व्यासः कृत्वेमां संहितां पुरा ।
श्लोकैश्चतुर्मिर्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥१॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥२॥

हर्षस्थानसहस्राणि शोकस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ३ ॥

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ४ ॥

न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये,जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ५॥

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत्[१] ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ६ ॥

"अत्र प्रथमनित्यपदं स्वर्गादिफल-नियतत्वार्थकम् । हेतुरविद्या । तथा च सा त्याज्ये" ति नित्यकृत्यार्णवः ।

स्मृतौ–

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ १ ॥

सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद् वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ २ ॥

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ ३ ॥

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रधृक् ।
योऽस्य संकीर्तयेन्नाम कल्यमुत्थाय मानवः ।
न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः ॥ ४ ॥

यः पठेत् प्रातरुत्थाय दुर्गा दुर्गाऽक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्योदये यथा ॥ ५ ॥

"अत्र अक्षरेति पदपरम् । न क्षरति = न निष्फलं भवतीत्यर्थकं वे" ति नित्यकृत्यार्णवः ।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥ ६ ॥

वाराणस्याः दक्षिणे भागे कुक्कुटो नाम ब्राह्मणः ।
तस्य स्मरणमात्रेण दुःस्वप्नः सुस्वप्नो भवेत् ॥ ७ ॥

पा० ( १ ) प्रातः प्रातः पठेत्तु यः ।

अहं काशीं गमिष्यामि तत्रैव निवसाम्यहम् ।
इति ब्रुवाणः सततं काशीवासफलं लभेत् ॥ ८ ॥

पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ ९ ॥

अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुविजयः पार्थः सव्यसाची धनञ्जयः ॥ १ ॥

एतान्यर्जुननामानि प्रातरुत्थाय यः पठेत् ।
उद्यतेष्वपि शस्त्रेषु हन्ता तस्य न विद्यते ॥ २ ॥

अर्थकामः स्मरेन्नित्यं कुन्तीपुत्रं युधिष्ठिरम् ॥ ३ ॥

अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
पञ्चकन्याः[1] स्मरेन्नित्यं महापातक-नाशनम्[2] ॥ ४ ॥

हरं हरिं हनूमन्तं हरिश्चन्द्रं हुताशनम् ।
हकारादीन् स्मरेन्नित्यं हानिस्तस्य न जायते ॥ ५ ॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनि-राहु-केतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ १॥

गौडनिबन्धेषु ब्रह्मामुरारिरि त्युक्तपद्यं पठित्वा अन्यपद्यान्यपि निभाल्यन्ते । यथा–

भृगुर्वशिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ १ ॥

सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरि-पिङ्गलौ च ।
सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २ ॥

पृथ्वी सगन्धा सरसास्तथाऽऽपः स्पर्शी च वायुः ज्वलितञ्च तेजः।
नभः सशब्दं महता सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३ ॥

---

पा०– (१) पञ्चकन्ना । (२) सौभाग्यं तस्य वर्धते ।

सप्तार्णवाः सप्त कुलार्णवाश्च सप्तर्षयो द्वीपवनानि सप्त ।
भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ४ ॥

इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च भक्त्या ।
दुःस्वप्ननाशस्त्विह[१] सुप्रभातं भवेच्च नित्यं[२] भगवत्प्रसादात् ॥ ५॥

सूर्यादीनामपि स्मरणानि नित्यकृत्यार्णवस्य प्रबोधतरङ्गे लिखितानि सन्ति, तानि विशेषजिज्ञासुभिस्तत एव द्रष्टव्यानि ।

इदमत्र बोध्यम् । पूर्वोक्तप्रातःस्मरणीयश्लोकेषु उपात्तं प्रातःपदं प्रभातपरम्, "प्रगे प्रातः प्रभाते" इत्यमर कोशात् । अतएव "यथाऽहनि तथा प्रातः नित्यं स्नायादनातुरः" । वाक्ये अरुणोदयकाले प्रातःपदं कात्यायनः प्रयुक्तवान् । अयं प्रातःशब्दोऽपि अरुणोदयकालपरः "प्रातःस्नायी अरुणकिरण-ग्रस्तां प्राचीमवलोक्य स्नायादि" ति विष्णुवचनात् । अरुणोदयकालश्च स्कन्दपुराणे "उदयात्प्राक् चतस्रश्च नाड़िका अरुणोदयः" इति ।

अपरञ्च यत् प्रबोधोत्तर-काल-पाठ्यत्वेन विहितं, तद् धर्मादिचिन्तनात्पूर्वमेव पाठ्यम् । यत्तु प्रातर्मात्रपाठ्यत्वेन सन्ध्याकालमात्रपाठ्यत्वेन वा विहितम् तत्सर्वं कर्माङ्गस्नातोत्तरमेव पाठ्यमिति । पूर्वोक्त-प्राभातिक-पद्यानि पठित्वा—

समुद्रवसने देवि ! पर्वतस्तनमण्डले !
विष्णुपत्नि ' नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

इति प्रार्थयित्वा

कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।
करमूले स्थितो ब्रह्मा प्रभाते करदर्शनम् ॥

इति वचनात् करौ दृष्ट्वा तुलसी-गवादि-मङ्गलानि दृष्ट्वा भूमौ विचरेत् ।

भल्लातकं कर्षफलं काक-मार्जार-मूषकान् ।
क्लीबञ्च गदर्भञ्चैव न पश्येत्प्रातरेव हि ॥

---

पाठ० (१) नाशोऽनघ । (२) सर्वम् ।

इति नित्यकृत्यार्णवः । व्यासः–

**पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम् ।**
**प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥**

नग्नः = अवश्यावच्छाद्यशरीरावयवे आच्छादनरहितः । यदा वेदवाह्यः । कलेः = कलहस्य । उपलक्षणम् = सूचकमिति वीरमित्रोदयः ।

**[ टिप्पणी हिन्दी ]**

यहाँ यह ज्ञातव्य है कि उक्त प्रातःस्मरणीय पद्यों में 'प्रातः' पद प्रभातपरक है; जैसाकि अमरकोश भी कहता है । अतएव कात्यायन ने भी स्नान प्रकरण में "जैसे दिन में वैसे प्रातःकाल भी नीरुज व्यक्ति स्नान करे" यह कहकर प्रातः पद का प्रयोग अरुणोदय अर्थ में किया है । क्योंकि "प्रातःस्नायी जन अरुण (सूर्य के सारथी को अथवा लाल) किरण से व्याप्त पूर्व दिशा को देखकर स्नान करे" विष्णु के इस कथनानुसार अरुणोदय काल ही प्रातःस्नान का समय माना गया है । स्कन्दपुराण में अरुणोदय से चार घड़ी (दण्ड) पहले का कहा गया है ।

दूसरी बात–ब्राह्ममुहूर्त्त में जगने के बाद जो कुछ भी पढ़ने तथा स्मरण करने के लिए कहा गया है, वह धर्म, अर्थ तथा काम के चिन्तन से पहले ही कर लेना चाहिए । केवल प्रातःकाल या केवल सन्ध्याकाल में पढ़ने के लिए जो कहा गया है, वह कर्म करने के लिए किये जानेवाले स्नान के बाद ही पढ़ें ।

तीसरी बात–पूर्वोक्त प्राभातिक मङ्गलपद्य पढ़ने के बाद

**समुद्रवसने ! देवि ! पर्वतस्तनमण्डले !**
**विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥**

यह प्रार्थना पद्य पढ़कर–

**कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।**
**करमूले स्थितो ब्रह्मा प्रभाते कर-दर्शनम् ॥**

इस वचन को पढ़ते हुए दोनों हाथों के तलभाग को देखकर तुलसी-वृक्ष, गाय, वेदपाठी विप्र, पतिप्रिया सुहागिन, अग्नि तथा यज्ञस्थलों में से यथासम्भव उपलब्ध वस्तु को देखकर भूमि पर विचरण करें । साथ ही प्रातःकाल की अदर्शनीय वस्तुएँ ये हैं:– भिलावे का वृक्ष, कर्षफल, कौआ, बिल्ली, चूहा, नपुंसक व्यक्ति, गदहा, अतिपापी, पतिस्नेहवर्जिता नारी, मदिरा, नंगा व्यक्ति, अथवा वेदबहिर्भूत व्यक्ति, तथा जिसकी नाक कटी हो वह व्यक्ति । प्रातःकाल में इनका देखना कलह (झगड़ा) का सूचक है ।

इति धर्मादिचिन्तनम् ।

# मूत्रपुरीषोत्सर्गविधिः

## [ मूलम् ]

अथ मूत्रपुरीषोत्सर्गविधिः । तत्र विष्णुपुराणे –

**ततः कल्यं समुत्थाय कुर्यान्मैत्रं नरेश्वर !**
**नैर्ऋत्यामिषुविक्षेपमतीत्याऽभ्यधिकं भुवः ॥**

मैत्रम्=पुरीषोत्सर्गः । मित्रदेवताकपायुसम्बन्धात् । नैर्ऋत्याम्– शयनस्थानात् ।

## [ संस्कृत टीका ]

तत्रेति । तत्र = मूत्रपुरीषोत्सर्गविधौ । हे नरेश्वर = हे नृप । मैत्रम् = पुरीषोत्सर्गः । मित्रदेवताकपायुसम्बन्धात् । नैर्ऋत्याम् – शयनस्थानात् । एवमेवाचारविवेकोऽपि । इषुविक्षेपप्राप्यं देशमतीत्य भुवोऽधिक-देशमभिलक्ष्यीकृत्य मूत्रपुरीषे त्यजेदित्यर्थः । 'भुव' इत्यन्तेन क्रोशादिव्यवच्छेद इति स्मृतिदीपिका । भुवः = शयनस्थानात् ग्रामाद्वा इति स्मृतिसमुच्चय : । ततः = धर्मादिचिन्तनोत्तरम् । भुवः = शयनस्थानात् । नैर्ऋत्यामिषुविक्षेपम् = क्षिप्तेषोः पतनयोग्यं देशम् अभि = लक्ष्यीकृत्य । अधिकम् ततोऽधिकम् । अतीत्य– अतिक्रम्य । मैत्रं कुर्यादिति पूर्वेणान्वयः । तदसम्भवे रात्रौ वा स्वगृहात् किञ्चिद्दूरे मूत्राद्युत्सर्गं कुर्यादित्याह–'दूरादावसथान्मूत्रं पुरीषञ्च समाचरेत्' इति, (एतदग्रिमवचनमस्ति) । कल्यम्= उषसि । ''प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्यूषसी अपि'' इति कोशात् । मैत्रम् = मित्राधिष्ठित-पायु-सम्बन्धात्पुरीषोत्सर्गम् । पायोर्मित्राधिप्ठानत्वमुक्तं भागवते– यथा आस्पदमित्यनुवृत्तौ–'पायुर्यमस्य मित्रस्य परिमोक्षस्य च नारद' । इति । महाभारतेऽपि–'अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम्' इति । तत्र = पादौ । 'ग्रामात्क्रमशतं गच्छेन्नगराच्च चतुर्गुणम् ।' इति पराशरः । क्रमशतम् = क्रमु पादविक्षेपे इति धात्वनुसारात्पाद-विक्षेपशतमिति वीरमित्रोदयः । इषुविक्षेपम्= बाणविक्षेपयोग्यम् । भुवोऽभ्यधिकं भागमतीत्य = गत्वेत्यर्थ इति नित्यकृत्यरत्नमालाटिप्पणी ।

[ हिन्दी टीका ]

अब मूत्रपुरीषोत्सर्गविधि-प्रकरण का प्रारम्भ किया जाता है। धर्मादिचिन्तन के बाद अथवा वेगी हो तो धर्मादि चिन्तन के पूर्व भी सूर्योदय के पहले (प्रातःकाल में) ही अपने शयन स्थान या गाँव से नेर्ऋृत्यकोण में सामने फेंके गए बाण के गिरने योग्य देश से अर्थात् सौ डेग (पादप्रक्षेप) से अधिक दूरी पर जाकर मलमूत्र त्याग करे। यदि ऐसा सम्भव न हो या रात हो तो अपने घर से कुछ दूरी पर भी किया जा सकता है।

[ मूलम् ]

आपस्तम्बः–

**मूत्रपुरीषे कुर्याद्दक्षिणां दक्षिणापरां वा।**

गत्वेतिशेषः। दक्षिणापरा = नैर्ऋती। तथा –

**अस्तमिते च बहिर्ग्रामादाराच्चावसथान्मूत्रपुरीषयोः कर्म वर्जयेत्।**

आरात् = दूरे। आवसथात् = गृहात्।

[ संस्कृत टीका ]

मूत्रेति। "आवसथात् = गृहात्। आरात् = समीपे। मूत्रादि वर्जयेत्। अस्तमिते तु ग्रामाद् बहिर्वजयेदित्यर्थः। यद्वा आरात् = दूरे, ग्रामाद् गृहाच्च रात्रौ मूत्रादि वर्जयेदित्यर्थ" इत्याचारचिन्तामणिः।

"अस्तमिते आदित्ये आराद् = दूरे आवसथात् = गृहात्। अन्तर्ग्रामेऽपि गृहाद् दूरतो न कुर्यादित्यर्थः। दृष्टार्थोऽयं प्रतिषेधः। तेन चौरव्याघ्रादिरहिते देशे रात्रौ बहिर्गमनेऽपि न दोष" इति वीरमित्रोदयः।

[ हिन्दी टीका ]

अपने शयनस्थान से दक्षिण दिशा या नैर्ऋत्य कोण की ओर जाकर मल-मूत्र-त्याग करें। तथा, सूर्य के रहते घर के समीप मल-मूत्रादि न करें किन्तु सूर्य के अस्त हो जाने पर गाँव के बाहर एवं घर से दूर न करें अर्थात् गाँव के भीतर भी घर से दूर मल-मूत्र त्याग न करें। इस निषेध का प्रयोजन व्यावहारिक दृष्टि से प्रत्यक्ष हैं, अतः, चोर, व्याघ्र आदि के उपद्रव न होने पर रात में गाँव या घर से दूर जाने पर भी कोई दोष नहीं।

## [ मूलम् ]

[१]वायुपुराणे

**शुष्कैस्तृष्णैस्तथा काष्ठैः[२] पत्रैर्वेणुदलेन वा ।**

**मृण्मयैर्भाजनैर्वाऽपि अन्तर्धाय वसुन्धराम् ॥**

तृणैः = कुशादिव्यतिरिक्तैः । काष्ठैः = पलाशादिव्यतिरिक्तैः[३] । "तृणंसंज्ञिकं काष्ठमि" त्यापस्तम्बवचनात् ।

## [ संस्कृत टीका ]

शुष्कैरिति । विण्मूत्रोत्सर्गं कुर्यादित्यनुवृत्तौ–शुष्कैरित्यादि । शुष्कैः तृणैः = अनार्द्रैः कुशादिव्यतिरिक्त–घासैः । तथैव शुष्कैः काष्ठैः = यज्ञियपलाशादि-व्यतिरिक्तैः दारुभिः । अयाज्ञिकम् = यज्ञप्रयोजनक- कुशपलाशादिव्यतिरिक्तम् । इदञ्च अयाज्ञिकमिति तृणकाष्ठयोरुभयोरपि विशेषणम्, सान्निध्याविशेषात् । तथैव, शुष्कैः । पत्रैः = दलैः । वा= अथवा । वेणुदलेन = वेणुर्वंश, तस्य दलम् = पाटितभागविशेषः, तत्पत्राणां पत्रैरित्यनेनैव लब्धत्वादिति वीरमित्रोदयः । "यज्ञियभिन्नशुष्कपत्रत्वेनैव सिद्धे वेणुदलग्रहणमार्द्रग्रहणार्थमि"ति नित्यकृत्यार्णवः । वा= अथवा, मृण्मयैर्भाजनैः = मृत्तिकानिर्मितपात्रैः । वसुन्धराम् = पृथ्वीम् । अन्तर्धाय = आच्छाद्य । विण्मूत्रोत्सर्गं कुर्यादिति पूर्वतोऽनुवृत्तस्य सम्बन्धः । तथा च बौधायनोऽपि–

**"शुष्कं तृणमयज्ञियं काष्ठं लोष्ठं वा तिरस्कृत्याऽहोरा-त्रयोरुदग्दक्षिणामुखः प्रावृत्योच्चरेदवमेहेत वा"** इति ।

तिरस्कृत्य = भूम्यन्तर्धानाय तिर्यक् स्थापयित्वा । उदग्दक्षिणामुख इत्यहोरात्रयोः यथासंख्यमन्वेति । उच्चरेत् = पुरोषं कुर्यात् । अवमेहेत = मूत्रं कुर्यात् ।

## [ हिन्दी टीका ]

यज्ञ में काम आनेवाली कुशादि से भिन्न घासों, इसी तरह यज्ञ में काम आनेवाले पलाशादि से भिन्न काष्ठों, यज्ञिय से भिन्न सूखे पत्तों, बाँस के कच्चे या सूखे पत्तों या बाँस के बीच से फाड़े गए दोनों भाग, या मिट्टी के बर्तनों से पृथ्वी को ढककर वहाँ मल मूत्र-त्याग करना चाहिए ।

---

पाठा० (१) अथेत्यधिकः पाठः (२) र्वा काष्ठैर्वा, इति च पाठः हस्तलिखितपुस्तके ।

(३) यज्ञिय-पलाशादिव्यतिरिक्तैरित्यपि क्वचित्पाठः ।

[ मूलम् ]

मनुः –

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाऽभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥

एवञ्च मनुना सर्वकालव्यापि[1]-मुख-नियम-विधानात्–

प्रत्यङ्मुखस्तु पूर्वाह्णे सायाह्ने प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥

इति यमवचनम्,

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः ।
विण्मूत्रं[2] विसृजेन्नित्यं सन्ध्यासु परिवर्जयेत् ॥

इति देववचनञ्च नादर्तव्यम् "मन्वर्थविपरीता या स्मृतिः सा न शस्यते" इति बृहस्पतिवचनात् । अथवा मानवं दिवापदं प्रातर्मध्याह्नपरम् ।

[ संस्कृत टीका ]

मूत्रोच्चार इति । मूत्रपुरीषोत्सर्गमहनि सन्ध्ययोश्चोत्तरमुखो रात्रौ चेद्दक्षिणामुखः कुर्यात् । धरणीधरस्तु "स्वस्थोऽनाशाय चेतसः" इति चतुर्थपादं पठित्वा चेतसो = बुद्धेरनाशायेति व्याख्यातवान् ।

परम्परीयमाम्नायं हित्वा विद्वद्भिरादृतम् ।
पाठान्तरं व्यरचयन्मुधेह धरणीधरः ॥

इत्येतट्टीका मन्वर्थमुक्तावली । एवञ्च = दिशानियामकोक्तवचने सति । मनुना = उक्तमनुवचनेन । सर्वकालव्यापिमुखनियमविधानात् = अहोरात्रसन्ध्याकालव्यापकदिशामुखनियमानां प्रदर्शनात् । पूर्वाह्णे प्रत्यङ्मुखः = पश्चिमाभिमुखः । सायाह्ने प्राङ्मुखः = पूर्वमुखः । मध्याह्ने उदङ्मुखः = उत्तराभिमुखः । निशायाम् = रात्रौ । दक्षिणामुखः सन् मूत्रपुरीषोत्सर्गं कुर्यादित्यर्थकं

(१) व्यापक, (२) "विण्मूत्रं विसृजेन्नित्यं सन्ध्यासु परिवर्जयेत्" इति पाठः मुद्रितपुस्तके नोपलभ्यते परं नित्यकृत्यार्णवे उद्धृतोऽयमाचारादर्शपाठः मयाऽपि मूले सन्निवेशितः ।

यमस्मृतिवचनम् । सदैवेति । सदैव = सर्वर्तुषु । नित्यम् = प्रत्यहम् । प्रातःसायाह्नयोः दिशामुखनियामकं सन्ध्यायां प्रतिषेधकञ्च, देवलवचनम् = देवलस्मृति-वचनम् च नादर्तव्यम् = नादरणीयम्। बृहस्पतिवचनेन मनुस्मृतिप्रतिपादितार्थविपरीतायाः स्मृतेरप्राशस्त्य- बोधनात् । अथवा एषां वचनानां पारस्परिकविरोध-परिहाराय मनुवचनस्थितसामान्यदिवापदस्य यमदेवलवचनैकवाक्यतया प्रातर्मध्याह्नरूपविशेषपरत्वं कल्पनीयम् । सामान्यपदस्य सामान्यरूपेण विशेषपरत्वे लक्षणाया अप्यभावात् । तथाचात्र न कोऽपि विरोधावकाशः ।

[ टिप्पणी संस्कृत ]

प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्नस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्त्तः स्यात्.........."

इति मत्स्यपुराणवचनानुसारेण पञ्चधाविभक्तस्याह्नः पञ्चसु भागेषु यमदेवलाभ्यां तत्तद्दिङ्मुखत्वनियमेनाविरोधात् । तत्र यमवचने पूर्वाह्नपदं सङ्गवपरम्, "सायाह्नस्त्रिमुहूर्त्तः स्यादि" ति मत्स्यपुराणवचनानुसारेण 'अह्नः पूर्वो भाग' इति योगेन पूर्वाह्नपदस्यानवरुद्धसङ्गवपरत्वात् ।

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

इति ब्रह्मपुराणवचने सङ्गवे पूर्वाह्णपदप्रयोगाच्च । सम्मतोऽयमर्थः सर्वेषां गौडानां मैथिलानाञ्चेति वीरमित्रोदयः ।

नित्यकृत्यार्णवस्तु मनुयमदेवलवचनानि लिखित्वा अत्र व्यवस्थामाह–

"रात्रौ दक्षिणामुखः, त्रिमूहूर्त्तात्मके प्रातःकाले उदङ्मुखः, तदनन्तरं पूर्वाह्णे प्रत्यङ्मुखः, मध्याह्ने उदङ्मुखः, अपराह्णेप्राङ्मुखः, सायाह्ने दक्षिणामुखः, अयज्ञिय-शुष्क- तृणकाष्ठाद्युपरि मूत्रोच्चारौ कुर्यात् । सन्ध्ययोश्च नैव कुर्यात् । यदि वा पीड़ावशात्तदोदङ्मुख एव । एवमेव छन्दोगाह्निकादय इत्याचारचिन्तामणिः । देवलवाक्यबलात् प्रातर्मध्याह्नयोस्त्रि- मुहूर्त्तयोरु-

दङ्मुखत्वम् । एवञ्च तदतिरिक्तपूर्वाह्णे प्रत्यङ् मुखताप्रापकमिति रत्नाकरादय'' इत्याह ।

नन्वेवमपि ''सन्ध्ययोश्च यथा दिवा'' इति मनुवचनशेन सह 'सन्ध्यासु परिवर्जयेदि' ति देवलवचनांशस्य विधिनिषेधाभ्यां विरोधः स्पष्ट एवेतिचेन्न, न वेगं धारयेन्नोपरुद्धः क्रियां कुर्यात् इति माधवाचार्यादि-धृतवचनेन ''सन्ध्यासु परिवर्जयेदि'' ति देवलवचनस्य उपरुद्धेतरविषयतया कल्पनीयत्वात् । वेगम् = मूत्रपुरीषवेगम् । उपरुद्धः = स्थानच्युतमूत्रपुरीषरोधकर्त्ता । दृष्टार्थोऽपि चायं (न वेगंधारयेदिति) निषेधः, ''मूत्रसन्धारणादन्धो वधिरो मलधारणात् '' इति वैद्यकात् । एवम्,

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् ॥

इति मनुवचने मैत्रं पूर्वाह्ण एव कुर्वीतेति उपरुद्धेतरविषयं तेन न एवकारार्थानुपपत्तिः । एवञ्च सति उत्सर्गयोग्ये मले स्वस्थानादप्रच्युते मूत्रपुरीषोत्सर्गे पूर्वाह्णो नियम्यते । स्थानच्युतमूत्रपुरीषोत्सर्गस्य तु ''न वेगं धारयेदि'' त्यादिना सर्वकाल-कर्तव्यता बोधनात् । पूर्वाह्णपदं चाजहत्स्वार्थलक्षणया प्रत्यूषादिपूर्वाह्णपरं, मैत्रदन्तधावनादीनां प्रत्यूष एव विधानादिति वीरमित्रोदयः ।

[ हिन्दी टिप्पणी ]

पुनः शङ्का यह हो सकती है कि मनुवचन के साथ विरोध हट जाने पर भी यम और देवल वचनों में ही विरोध हो जाता है; क्योंकि यम ने पूर्वाह्ण और अपराह्ण में क्रम से पश्चिम और पूर्व दिशा की ओर मुँह करने का विधान किया है तो देवल ने उन पूर्वाह्ण और अपराह्ण के लिए प्रातः एवं सायं पदों से कहकर केवल उत्तर तथा दक्षिण की ओर मुँह करने को कहा है ।

इसका भी उत्तर यह है कि मत्स्यपुराण के अनुसार ''प्रातःकाल तीन मुहूर्त्त (छह दण्ड) का, उसके बाद सङ्गव तीन मुहूर्त्त का, उसके बाद मध्याह्न तीन मुहूर्त्त का, अनन्तर अपराह्ण तीन मुहूर्त्त का तथा बाद में सायाह्न तीन मुहूर्त्त का होता है।'' इस क्रम से विभाजित दिन के पाँचों भागों में (यम के तीन– पूर्वाह्ण, अपराह्ण तथा मध्याह्न, एवं देवल के दो– प्रातः और सायाह्न में ) यम और देवल ने

उन-उन दिशाओं की ओर मुँह करने का नियमन किया है । फलतः विरोध का कहीं अवसर नहीं ।

वहाँ यमवचन में उपात्त पूर्वाह्णपद "अह्नः पूर्वो भागः (दिन का पहला भाग) इस व्युत्पत्ति के अनुसार सङ्गव काल का बोधक है । "पूर्वाह्णे मातृकं श्राद्धम्" इस ब्रह्मपुराण के वचन में भी पूर्वाह्ण पद का अर्थ 'संगव' है ।

पूरे वचन का अर्थ है– पूर्वाह्ण (सूर्योदय से डेढ़ प्रहर के भीतर अन्वष्टका श्राद्ध, अपराह्ण में पार्वण-श्राद्ध, मध्याह्न में एकोद्दिष्ट (वार्षिक) श्राद्ध, तथा प्रातःकाल में आभ्युदयिक श्राद्ध करना चाहिए ।

यह अर्थ सभी गौड़ और मैथिलों का सम्मत है ।

यहीं नित्यकृत्यार्णव (निबन्ध) का कहना है कि "वाचस्पतिमिश्रकृत आचार चिन्तामणि (निबन्ध) के अनुसार मनु, यम एवं देवल वचनों को सन्दर्भित कर यह व्यवस्था मान्य की जाती है कि रात में दक्षिण की ओर, तीन मुहूर्त्त वाले प्रातःकाल में उत्तर की ओर, उसके बाद वैसे ही तीन मुहूर्त्त वाले पूर्वाह्ण में पश्चिम की ओर, अनन्तर वैसे ही मध्याह्न में उत्तर की ओर, अपराह्ण में पूरब की ओर और सायाह्न में दक्षिण की ओर मुँह करके, यज्ञ के काम में न आनेवाली सूखी घास काठ एवं पत्ते रखकर मलमूत्र त्याग करे । दोनों शामों में बन सके तो नहीं करें । आवश्यक हो तो उत्तर की ओर मुँह करके ही । यही विचार श्रीदत्त विरचित छन्दोगाह्निक प्रभृति निबन्धों का भी है ।

उक्त प्रसंग पर चण्डेश्वरकृतरत्नाकर का लेख है कि देवलवचनानुसार तीन-तीन मुहूर्त्त के होनेवाले प्रातःकाल एवं मध्याह्न काल में उत्तर की ओर मुँह करने का निर्णय हुआ तो यम के वचनानुसार उनसे अतिरिक्त और उतने ही समय के पूर्वाह्ण में पश्चिम की ओर मुँह करने का विधान स्वतः सिद्ध हो जाता है ।

इतने प्रयासों से सभी स्थानों पर विरोधों का परिहार हो जाने पर भी "सन्ध्ययोश्च यथा दिवा" (प्रातः एवं सायं को दिन के जैसे ही उत्तर दिशा की ओर मुँह करके मलमूत्र त्याग करे) इस मनुवचनांश के साथ "सन्ध्यासु परिवर्जयेत्" (दोनों सन्ध्यासमयों में मलमूत्र त्याग न करें) इस देवलवचनांश का विरोध (शीशम पेड़ पर बार-बार लटक जानेवाले असाध्य विक्रमादित्य के वेताल– तत्रैवावलम्बते वेतालः– के जैसे) विधि-निषेध के कारण स्पष्ट ही देखने में आ रहा है । किन्तु इसका भी समाधान यह है कि देवल ने सन्ध्यासमय में मल-मूत्र त्याग न करने के लिए जो कहा है; इसका तात्पर्य स्थानच्युत मलमूत्र के वेग को रोकनेवाले– अवरुद्ध जन से अन्य व्यक्ति के लिए है क्योंकि शास्त्र का

कहना है कि, "मलमूत्र का वेग न रोके और न रोक कर कोई क्रिया ही करें।" इसका प्रत्यक्ष प्रयोजन भी है। आयुर्वेदशास्त्र का कहना है कि "मूत्रवेग को रोकने से आदमी अन्धा और मल वेग को रोकने से बहरा हो जाता है।" इसी तरह मनु ने भी जो पूर्वाह्न में ही मलमूत्र त्याग का विधान किया है उसका भी तात्पर्य पूर्ववत् ही समझे ; क्योंकि इससे सभी समय में कर्तव्य (मलमूत्रत्याग) का बोध न हो जाता है। यहाँ मनुवचन पठित पूर्वाह्न पद का अर्थ अजहत्स्वार्था लक्षणा से उषःकाल से लेकर पूर्वाह्न तक का समय है क्योंकि मलमूत्रत्याग, दन्तधावन (दतवन) आदि का होना उषःकाल में ही शास्त्रविहित है।

## [ हिन्दी टीका ]

मलमूत्रत्याग दिन तथा दोनों शाम में उत्तर दिशा की तरफ मुँह कर एवं रात में दक्षिण की तरफ मुँह करके करना चाहिए।

उक्त मनु-वचन के चतुर्थ चरण के स्थान पर एक टीकाकार धरणीधर "स्वस्थोऽनाशाय' चेतसः (बुद्धि को स्थिर रखने हेतु) ऐसा पाठ मानते हैं। परन्तु विद्वानों से अनादृत होने का कारण दिखाकर नवीन टीकाकार कुल्लूक भट्ट ने तगड़ा खण्डन कर दिया है।

प्रकृत में शंका यह होती है कि यमवचन के अनुसार पूर्वाह्न के समय पश्चिम की ओर, अपराह्न में पूर्व की ओर, मध्याह्न में उत्तर की ओर एवं रात्रि में दक्षिण की ओर मुँह करके मलमूत्र-त्याग करे। इसी तरह देवलवचन के अनुसार प्रातःसमय में सैदव उत्तर की ओर और सायाह्न में दक्षिण की ओर मुँह कर मलमूत्र विसर्जन करें। ऐसी स्थिति में मनु-प्रदर्शित दिशानियम कैसे व्यवस्थित रहे ?

इसका उत्तर है कि मनु ने सभी समयों के लिए दिशा-निर्देश कर दिया है और बृहस्पति (स्मृति) का जो कथन है कि मनु (स्मृति) बोधित अर्थ के विरुद्ध जो स्मृति हो वह प्रशस्त (मान्य) नहीं है उसके अनुसार मनुवचन के समक्ष यमवचन तथा देवलवचन आदरणीय नहीं है।

अथवा मनुवचन में पठित 'दिवा' पद का अर्थ यमवचन और देवलवचन के साथ एकवाक्यता के बल से प्रातःकाल एवं मध्याह्नकाल कर देने पर कोई विरोध नहीं रहता।

[ मूलम् ]

पुनर्मनुः—

छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥

"रात्रावहनि वे" त्युक्तेः सन्ध्यायामुदङ्मुखत्व-नियम एव ।

[ संस्कृत टीका ]

छायायामिति । द्विजः= नरः । रात्रौ छायायामन्धकारे वा । अहनि छायायां नीहाराद्यन्धकारे वा । प्राणबाधाभयेषु = रोगादिकृतप्राण-पीडायाम्, भयेषु = चौरव्याघ्रादिभयेषु च ; अथवा चौरादिकृतप्राणविनाशभयेषु । यथासुखमुखः = यथेप्सितमुखः कुर्यात् । मूत्रोच्चारसमुत्सर्गमिति सम्बन्धः ।

अयञ्च प्रागुक्तोदङ्मुखत्वादिनियमापवादः । एवञ्च उदङ्मुखत्वादिनियमो दिवा प्रकाशे, रात्रौ च ज्योत्स्नायामवतिष्ठते । अयञ्चार्थः कल्पतरुसम्मतः । "रात्रावहनि वे" त्युक्तेः सन्ध्यायामुदङ्मुखत्वनियम एवेति श्रीदत्तादयः । 'पूर्वार्द्धं दिङ्मोहपरमिति स्मृतिचन्द्रिकाकार माधवाचार्य कुल्लूकभट्ट-प्रभृतयः । अत्र मते वा शब्दोऽनास्थायाम्, दिङ्मोहस्यान्यत्रापि सम्भवात् । इदञ्च दिङ्मोहपरत्वे प्रमाणादर्शनादुपेक्षितमिति वीरमित्रोदयः । "छायाऽन्धकारयोः प्राणपीडायां व्याघ्रादिभये च दिङ्मुखनियमो नादर्तव्य इति रत्नाकर" इति नित्यकृत्यार्णवः । प्राणबाधाभयेषु चेति पठित्वा "चौरादिकृतप्राणभयेष्वि" ति व्याख्यातवान् कुल्लूकभट्टः ।

[ हिन्दी टीका ]

रात को छाया या अन्धकार हो, या दिन में भी छाया अथवा कुहरे आदि के कारण अन्धकार हो गया हो, या रोग आदि के कारण प्राण की पीड़ा उपस्थित हो, या चोर, व्याघ्र आदि के द्वारा भय उपस्थित हो, या चोर-व्याघ्र आदि के द्वारा प्राण-हानि का भय हो तो दिशा का कोई प्रतिबन्ध न रखकर इच्छाधीन मुख हो मलमूत्र त्याग करे ।

यहाँ वीरमित्रोदय के लेखनानुसार ज्ञातव्य है कि पूर्व मनुवचन द्वारा कहे गए दिशानियम का यह मनुवचन अपवाद है । फलतः उत्तर आदि दिशावाला पूर्वनियम दिन में प्रकाश रहने तथा रात में चन्द्र आदि के प्रकाश रहने पर ही लागू होगा

। यह मत कल्पतरु (निबन्ध)-सम्मत है । यहीं श्रीदत्त आदि निबन्धकारों का मत है कि प्रकृत वचन में "रात्रावहनि वा"– रात या दिन में– ऐसा कहने के कारण सन्ध्या समय में तो उत्तर मुँह होना ही चाहिए । यहीं स्मृतिचन्द्रिकाकार, माधवाचार्य, कुल्लूक भट्ट प्रभृति का कहना है कि इस वचन का पूर्वार्द्ध– (छायायामन्धकारे वा रात्रावहनि वा द्विजः) तब के लिए है जब दिग्भ्रम (निश्चित दिशा का ज्ञान न पाना) हो । इस मत में दो बार पढ़े गए 'वा' शब्द अनास्था-सूचक है । इस वचन को दिग्भ्रमपरक मानने में कोई भी प्रमाण न देखे जाने के कारण यह मत उपेक्षित (उपेक्षणीय) है ।

यहीं नित्यकृत्यार्णव में उद्धृत रत्नाकर के अनुसार इस वचन का तात्पर्य है कि छाया, अन्धकार, प्राण-पीड़ा और व्याघ्र आदि के भय होने पर मलमूत्र त्याग विधि में दिशा एवं मुँह का कोई भी नियम आदरणीय (मान्य) नहीं है ।

मूल-वचन के टीकाकार कुल्लूक भट्ट ने 'प्राणबाधाभयेषु' को एक ही पद मानकर चोर आदि के द्वारा प्राणभय होने पर ऐसा अर्थ किया है ।

## [ मूलम् ]

अत्र साङ्ख्यायनगृह्यम्

**यद्येकवस्त्रो यज्ञोपवीतं कर्णे दत्वा ।[१]**

## [ संस्कृत टीका ]

अत्रेति । अत्र = मूत्रपुरीषोत्सर्गविधौ । यद्येकेति । अत्र मूत्रपुरीषोत्सर्गं कुर्यादिति प्रसङ्गाल्लभ्यते । कर्णश्चात्र दक्षिणो ग्राह्यः, "दक्षिणं प्रतीयानादेशे" इत्याश्वलायनसूत्रात् । तथाच एकवासाश्चेद् दक्षिणकर्णस्थयज्ञोपवीतः मूत्रपुरीषोत्सर्गं कुर्यादित्यर्थः । यथा चाह याज्ञवल्क्योऽपि–

**दिवा सन्ध्यासु कर्णस्थ-ब्रह्मसूत्र उदङ्मुखः ।**
**कुर्यान्मूत्रपुरीषे च रात्रौ चेद् दक्षिणामुखः ॥ इति**

"कर्णस्थं ब्रह्मसूत्रं यस्य स तथोक्तः । कर्णश्च दक्षिणः, 'पवित्रं दक्षिणे कर्णे विण्मूत्रमुत्सृजेत् ।' इतिलिङ्गात्[१]" इति तन्मिताक्षरा च । "यज्ञोपवीतं परमं पवित्रमि" ति मन्त्रलिङ्गाद् यज्ञोपवीतं पवित्रमिति बोध्यम् ।

---

पाठा० –(१) कृत्वा ।

[ हिन्दी ]

यदि एक वस्त्रधारी हो तो दाहिने कान पर यज्ञोपवीत (जनेऊ) रखकर मलमूत्रत्याग करे ।

[ मूलम् ]

द्विवस्त्रतापक्षे[१] तु मनुः –

नियम्य प्रयतो वाचं संवीताऽङ्गोऽवगुण्ठितः'' इति ।

संवीतम् = निवीतम् । अंसयोर्द्वयोर्मध्ये यस्य आच्छादितं शिरः नांसः, सोऽवगुण्ठितः। मनुवचनान्निवीतमेव कर्तव्यम् । तच्च पृष्ठलम्बितम्, ''निवीतमापृष्ठदेशावलम्बि ग्राम्यधर्मेष्व'' ति निगमपरिशिष्टे दर्शनात् । ग्राम्यधर्मो = मैथुनम् । 'कराडा' इतिवद् बहुवचनमाद्यर्थे [२] । तेन मूत्रपुरीषोत्सर्ग-संग्रहः ।

[ संस्कृत टीका ]

द्विवस्त्रेति । द्विवस्त्रतापक्षे तु = वस्त्रद्वयधारित्वपक्षे तु । नियमान्तरमाह मनुः– नियम्ये त्यादि । संवीताङ्ग इति । ''संवीतम् = निवीतम् । ''निवीतं मनुष्याणामि'' ति वाक्यान्तर- समानार्थिकायां ''संवीतं मानुषमि'' ति तैत्तिरीयश्रुतौ निवीते संवीतपदप्रयोगदर्शनात् । मानुषम् = मनुष्याः, सनकादयः तत्सम्बन्धि– तदुद्देश्यकतर्पणाङ्गमिति यावदिति वीरमित्रोदयः । वाचं नियम्येत्यन्वयः । संवीतम् = निवीतम् । ''संवीतं मानुषमि'' ति तैत्तिरीयश्रुतेः । तद् यस्याङ्गे स संवीताङ्ग'' इति नित्यकृत्यार्णवः ।

---

पाठा०–(१) ''द्विवस्त्रता पक्षेतु ''नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः'' इति मनुवचनान्निवीतमेव कर्तव्यम्'' इति मिथिला-संस्कृत-विद्यापीठ-दरभंगाऽन्तर्गत मातृकाविभाग-स्थिताचारादर्श-हस्तलेखपुस्तक- पाठोऽस्ति । तथाप्यत्रत्यपाठः स्खलित इवाभाति । अतो मूलभावमनुसृत्य यथामति मयैव तथापाठः सम्पादितोऽस्ति । मुद्रिताचारादर्शपुस्तके तु नितरामसम्बद्धं विद्यते पाठ-मुद्रणम् ।

(२) र्थम् (ह० पु० पा०) ।

तच्च निवीतञ्च । पृष्ठलम्बितम् = प्रकृते पृष्ठदेशावलम्बितमपि बोध्यम्, "निवीतमा पृष्ठदेशावलम्बि ग्राम्यधर्मेष्वि" ति वचनस्य निगमपरिशिष्टनामके ग्रन्थे दर्शनात् । ग्राम्येति । ग्राम्यधर्मः = मैथुनम् । "ग्राम्यधर्मेष्वि" त्यत्र उपात्तम् बहुवचनं "काराडा : कर्मधारये (२/२/३८) इति पाणिनीय-सूत्रोपात्त- "कराडाः" इति बहुवचनवत्आद्य = प्रभृत्यर्थकम्, ज्ञेयमिति शेषः । तेन = ग्राम्यधर्मेष्विति बहुवचनस्य आद्यर्थकत्व-करणेन । मूत्रपुरोषोत्सर्गसंग्रहः = मूत्रषुरीषत्यागसंग्रहः ।

यद्यपि "निवीती कण्ठसज्जने" इति (२/६३) मनूक्त्या कण्ठावलम्बितं यज्ञसूत्रमेव निवीतं बोध्यते, तथापि प्रकृते पृष्ठलम्बितमपि बोध्यम्, उक्त-निगमपरिशिष्ट-वचनात् ;

**कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।**
**विष्मूत्रन्तु गृही कुर्यात् ॥**

इति माधवीयादौ अङ्गिरसो वचनात् ; एवमेव रत्नाकरादौ यमस्य वचनाच्चे" ति वीरमित्रोदयः । एतेनेदं विवेचनं परवर्त्ति निबन्ध-समर्थितं सिध्यति ।

एवञ्च मूलमनुवचनोक्त 'संवीताङ्ग' इति पदस्य संवीतम् = निवीतम्-कण्ठावलम्बितं पृष्ठदेशलम्बितञ्च यज्ञसूत्रमङ्गंयस्य इति विग्रहः सम्पन्नः । किन्तु कुल्लूकभट्टस्तु आच्छादिताङ्गं इति व्याख्यामाह । एवमेव स्मृतिचन्द्रिकाकार प्रयोगपारिजातकारादयः वस्त्राऽच्छादितदेह इत्याहु" रिति वीरमित्रोदयः ।

अंसयोरिति । अवगुण्ठित इत्यस्य व्याख्या विद्यते- अंसयोरित्यादि । यस्य जनस्य शिरस्तु बस्त्रेण आच्छादितं भवेत्, परं द्वयोः अंसयोः = स्कन्धयोः, मध्ये, नांसः = एकोऽपि स्कन्धः आच्छादितो न भवेत् स अवगुण्ठित इत्युच्यते । अतएव कुल्लूकभट्टोऽपि 'अवगुण्ठितशिरा' इति व्याख्यामाह । अतएव च अवगुण्ठितः = पावृतशिराः इति वीरमित्रोदयोऽपि ।

मनुवचनादिति । उपर्युक्त "नियम्य प्रयतो वाचमि" त्यादि मनु (४/४९)-वचनादित्यर्थः । वाचं नियम्य = वाणीं संयम्य, मौनीति यावत् । तथा च हारीतोऽपि-

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥ इति

प्रस्रावः = मूत्रोत्सर्गः । मूले, प्रयतः = शुचिः अनुच्छिष्टमुख इति यावत् । अस्य मनुवचनस्य–

तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि वा ।

इति पूर्वार्धेनात्र सम्बन्धः । एवञ्च मौनी, अनुच्छिष्टः, निवीती, प्रच्छादितशिराः सन् जनः काष्ठलोष्ठ–पत्र–तृणादिना भूमिमन्तर्धाय मूत्र पुरीषोत्सर्गं कुर्यादिति सम्पूर्णमनुवचनार्थः ।

[ टिप्पणी ]

एकवस्त्रताद्विवस्त्रताविषये नित्यकृत्यरत्नमाला टिप्पणी तु–"अत्र एकवासाश्चेद् यज्ञसूत्रं दक्षिणकर्णे निधाय द्विवासास्तूत्तरीयेण शिरोनासिकामास्यञ्च प्रावृत्येत्यादिबहुरन्यत्र (नित्यकृत्यार्णवप्रयोगादौ) विधिः प्रदर्शितः । तेन द्विवासस्त्वे दक्षिणकर्णे उपवीताधारणेऽपि दोषाभावः प्रतीयते । किन्तु–

मलमूत्रं त्यजेद् विप्रो विस्मृत्यैवोपवीतकम् ।
उपवीतं तदुत्सृज्य दध्यादन्यन्नवं दृढम्"॥

तदुत्सृज्य इति चतु[र्वि]शतिमत-व्याख्यायां भट्टोजिधृतवचनेऽविशेषेण तद्धारणोक्तेस्तथाऽनुतिष्ठन्ति शिष्टाः" इत्याह ।

[ हिन्दी टिप्पणी ]

यहाँ नित्यकृत्यरत्नमाला टिप्पणी के अनुसार ज्ञातव्य है कि एकवस्त्रधारणकर मलमूत्र त्याग के समय दाहिने कान पर जनेऊ रखे । यदि दो वस्त्र धारण किये हुए हों तो उत्तरीय से शिर, नासिका तथा मुंह को ढक ले, आदि बहुत विधान अन्यत्र (नित्यकृत्याणवि आदि के प्रयोगप्रकरण में) दिखाया गया है ।

इससे प्रतीत होता है कि दो वस्त्र धारण करने के पक्ष में दाहिने कानपर यज्ञोपवीत धारण न करे तो भी कोई दोष नहीं, किन्तु "भूल से कान पर यज्ञोपवीत न रखकर यदि द्विज मल मूत्र त्याग करता है तो उस यज्ञोपवीत को बदलकर दृढ़ एवं नवीन यज्ञोपवीत धारण करे" इस चतुर्विंशतिमत-व्याख्या के अवसर पर भट्टोजिदीक्षित द्वारा उद्धृत वचन में बिना किसी विशेष नियम के कान पर

यज्ञोपवीत रखने का विधान कहा गया है । फलतः शिष्टजन इसी तरह व्यवहार भी करते रहे हैं ।

निष्कर्ष में एक या दो या इससे अधिक वस्त्र धारण किये हों तो भी उन्हें मलमूत्र-त्याग के समय दाहिने कान पर जनेऊ रखना ही चाहिए ।

[ हिन्दी टीका ]

यदि दो या दो से अधिक वस्त्र धारण किये हों तो यज्ञोपवीत को कण्ठ के सहारे पीठ पर लम्बित कर दोनों कंधों में एक को भी न ढकते हुए मौन होकर तथा जूठा मुंह न होकर मलमूत्र त्याग करे ।

ऊपर से ज्ञातव्य है कि यज्ञोपवीत का यह क्रम मैथुन के समय में भी रहना चाहिए। उक्त वचन के संवीताङ्ग शब्द में संवीत पद का अर्थ निवीत है, क्योंकि ''निवीतं मनुष्याणाम्'' इस वाक्य के अर्थ के समान ही अर्थवाली ''संवीतं मानुषम्'' इस तैत्तिरीय श्रुति में निदीत अर्थ में 'संवीत' पद का प्रयोग किया गया है । इस श्रुति में 'मानुषम्' पद का अर्थ सनक–सनन्दन (ब्रह्मा के मानसपुत्र) आदि मनुष्य सम्बन्धी अर्थात् इनके उद्देश्य से किये जानेवाले तर्पण का अङ्ग (निवीत) है ।

यहाँ निवीत पद का अर्थ पृष्ठावलम्बित यज्ञोपवीत है; क्योंकि निगमपरिशिष्ट नाम के ग्रन्थ में ग्राम्यधर्मो के समय निवीत अर्थात् पृष्ठदेश (पीठ) तक लम्बा-यमान (लटका हुआ) हो, ऐसा अर्थ देखा जाता है । जैसे ''कराड़ाः कर्मधारये'' इस पाणिनि सूत्र (२/२/३८) के कराड़ पद में कहे गये बहुवचन का अर्थ आदि (प्रभृति) है वैसे ही यहाँ ग्राम्यधर्म का अर्थ मैथुन है और यहाँ के बहुवचनार्थ आदि से मलमूत्रत्याग का भी बोध होता है ।

यद्यपि निवीत पद का अर्थ मनु (२/६३) वचनानुसार सामान्यतः कण्ठावलम्बित यज्ञोपवीत ही होता है फिर भी उक्त निगमपरिशिष्ट के वचनानुसार तथा ''यज्ञोपवीत को कण्ठ के सहारे पीठ की ओर लम्बायमान (लटका) कर मल मूत्रत्याग करे'' अंगिरा और यम के इस वचनानुसार प्रकृत में कण्ठ के सहारे पीठ की ओर अवलम्बित यज्ञोपवीत ही अर्थ करना उपयुक्त है ।

अब मनुवचन पठित 'संवीताङ्ग' पद का अर्थ हुआ– उक्त प्रकार से यज्ञोपवीत है अङ्ग में जिसके ऐसा द्विज । (यह अर्थ परवर्त्ती निबन्धकारों से भी समर्थित समझना चाहिए) ।

किन्तु कुल्लूकभट्ट ने इसका अर्थ वस्त्र से ढका हुआ शरीरवाला (व्यक्ति) किया है । वीरमित्रोदयानुसार यही अर्थ स्मृतिचन्द्रिकाकार तथा प्रयोग पारिजातकार आदि का भी है ।

'अवगुण्ठित' पद का अर्थ है दोनों कंधों में कोई भी ढका न हो, अपितु वस्त्र से शिर ढका हो ।

'वाचं नियम्य' का तात्पर्य मौनी से है । हारित ने भी मलमूत्रत्याग, मैथुन, दातुन, स्नान तथा भोजन- इन छह समयों के लिए मौन रहने का निर्देश किया है ।

शेष भावार्थ तो इस वचन की व्याख्या के प्रारम्भ में ही दे दिया गया है ।

## [मूलम्]

तत्र हारीतः

**घ्राणास्ये[1] वाससावेष्टयित्वा मृद्धात्रीं कण्ठे[2] समासज्य दक्षिणबाहु- पार्श्वे[3]कमण्डलुमाददाय[4] उत्सृजेत्'' ।**

**मृद्धात्रीम्= मृत्तिका पात्रीम् ।**

यमः–

**शिरः प्रच्छाद्य[5] कुर्वीत शकृन्मूत्रविसर्जनम् ।**

[संस्कृत टीका]

तत्रेति । तत्र = द्विवस्त्रत्वे । घ्रणास्ये इति । घ्राणास्ये = नासिकां मुखञ्च । वाससा = वस्त्रेण । वेष्टयित्वा = आच्छाद्य । मृद्धात्रीम् = मृत्तिका-पात्रीम् । कण्ठे = ग्रीवायाम् । समासज्य = संयोज्य, संलग्नं कृत्वेति भावः । तदसम्भवे वामभागे वा निधाय । ''दक्षिणबाहुपार्श्वे कमण्डलुं निधाय सव्ये मृदञ्चोत्सृजेदि'' ति वचनात् । मृदं निधायेरतिसम्बन्धः । दक्षिणबाहुपार्श्वे = दक्षिणभुजसमीपे । कमण्लुम् = शौचार्थं जलपूर्ण-पात्रम् । आदाय = सन्निहितभूमौ निधाय, हस्ते गृहीत्वा वा ।

---

पाठ–(१) घ्राणास्यम् । (२) ग्रीवायामासज्य । (३) दक्षिण पार्श्वे । (४) माधाय (५) प्रावृत्य ।

[टिप्पणी]

करस्थोदकपात्रस्तु कुर्यान्मूत्रपुरीषके ।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम् ॥
गृहीत्वा जलपात्रन्तु विण्मूत्रं कुरुते यदि ।
तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ॥

इति शिष्टपरिगृहीतवचनाभ्यां मूत्रपुरीषकर्त्तुर्गृहीतजलपात्रस्थजलस्य मूत्र-तुल्यत्वाभिधानात्पूर्वोदाहृतदक्षिणबाहुपार्श्वे कमण्डलुमादायोंत्सृजेदिति हारीतवाक्यस्थपार्श्वपदं समीपवर्त्ति भूभागपरम् । ..... यत्तु "मूत्रपुरीषे कुर्वन् दक्षिणहस्ते गृह्णाति सव्य आचमनमि"तिकमण्डल्वधिकारपठितं बौधायनवचनं तच्छौच-कालाभिप्रायम् । कुर्वन्निति शतृप्रत्ययस्तु स्थूलकालमादाय अथवा पात्रधारणयोग्यदेशासम्भवपरं बौधायनवचनम् । अत्राचमनं कुर्वन्नित्यनुषङ्गः। क्वाचिदाचमनीयमिति पाठः । तत्राचमनीयमाचमनविधिं कुर्वन्नित्यर्थः ।

मैथिलास्तु बौधायनवचनमनुरुन्धाना दक्षिणकरधृतकमण्डलुर्मूत्रपुरीषे कुर्यादिति निबन्धेषु लिखितवन्तः । तन्मते रत्नाकरादिधृतम् 'करे गृहीतपात्रस्तु कृत्वा मूत्रपुरीषके । तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ।।' इति वृद्धमनुवचनं तज्जलस्य मूत्रपुरीष निमित्तक शौचातिरिक्त- कर्मानर्हत्वपरमिति पर्यवस्यति बौधायनेन मूत्रपुरीषोत्सर्गेतस्यविधानात् । हारीतवचनमपि बौधायनवचनाविरोधेन व्याख्येयम् इति वीरमित्रोदयः ।

[टिप्पणी हिन्दी]

वीरमित्रोदय के लेखानुसार लिखित टिप्पणी का संक्षिप्त अर्थ निम्न प्रकार है–यदि हाथ में जल पात्र लेकर मल या मूत्र का त्याग करे तो वह जल मूत्र (पेशाव) के समान है और उसका पान मद्यपान के समान है । तथा हाथ में जलपात्र लेकर यदि कोई मल या मूत्र का त्याग करता है तो वह जल मूत्र के समान है और उसे पी लेने पर चान्द्रायणव्रत करने से शुद्ध होता है ।

शिष्ट जनों के द्वारा परिगृहीत उक्त इन दोनों वचनों के बल से सिद्ध हो जाता है कि मलमूत्रकर्त्ता के हाथ में स्थित जलपात्रस्थ जल मूत्रतुल्य है । फलतः पूर्वोदाहृत हारीतवचन-स्थित पार्श्वपद समीपवर्त्ती भू-भाग का बोधक हो जाता है।

यहीं मैथिल निबन्धकारों ने 'मूत्रपुरीषे कुर्वन्' इत्यादि बौधायन वचन (अर्थात् मल या मूत्र त्याग के समय जलपात्र दाहिने हाथ में तो आचमन के समय बायें हाथ में रखना चाहिए ) के अनुरोध करते हुए अपने निबन्धों में लिखा है कि दाहिने हाथ में जलपात्र लेकर मल या मूत्र का त्याग करे । इनके मत में, रत्नाकर आदि में उद्धृत ''हाथमे जलपात्र लेकर यदि कोई मल या मूत्र का त्याग करता है तो चान्द्रायणव्रत करना चाहिए'' इस वृद्धमनुवचन का तात्पर्य है कि वह मल मूत्र-निमित्तक शौच से अतिरिक्त कर्म के लिए अयोग्य है क्योंकि बौधायन ने मलमूत्र-त्यागनिमित्तक शौच के लिए इसका विधान किया है । अब हारीतवचन की व्याख्या भी बौधायन वचन के अविरोध से कर लेना चाहिए ।

[ संस्कृत टीका-क्रमशः ]

उत्सृजेत्, पुरीषमितिशेष इत्याचारचिन्तामणिः । मूत्रपुरीषशेषः (इति वीरमित्रोदयः) इति हारीतवचनार्थः ।

शिरः प्रच्छाद्य = प्रावृत्य = आच्छाद्येतिति यावत् । शकृन्मूत्रविसर्जनम् = पुरीषमूत्रोत्सर्गं कुर्वीत इति यमवचनार्थः । उभयवचनयोरेक वाक्यतायां नासिकां मुखं शिरश्च प्रच्छाद्येत्यर्थः निष्पन्नः । इदञ्च प्रच्छादनं द्विवस्त्रत्वे एव नत्वेकवस्त्रत्वे ।

अतएव ''अतएव श्रीदत्तादि-निबन्धेषु द्विर्वासास्तूत्तरीयेन शिरो (मुखं) नासिकाञ्च वेष्टयित्वेत्यादि मूत्रपुरीषोत्सर्गप्रकरणे सिद्धवदुक्तमिति वीरमित्रोदयः। अतएव च नोत्तरीयमधः कुर्यान्नोपर्यधस्त्यमम्बरम्'' इति व्यासवाक्येन अधरीयवस्त्रस्योपरिधारणनिषेधः ।

[ हिन्दी टीका ]

दो या दो से अधिक वस्त्र धारण करने पर उत्तरीय वस्त्र से नाक और मुँह को ढक कर शौचार्थ मिट्टीवाला वर्तन कण्ठ में लटका कर या मिट्टी को अपने बायें भाग में तथा दक्षिणबाहु के पास में कमण्डलु (शौचार्थ जलपूर्णपात्र) को रखकर मलमूत्रत्याग करें । यह अर्थ हारीतवचन का हुआ ।

यमवचनानुसार शिर ढक कर त्याग करें । इन दोनों वचनों के समन्वय से फलितार्थ में मूत्र एवं मल त्याग के समय नासिका, मुख तथा शिर तीनों को ढक लेना चाहिए । आचारचिन्तामणि के अनुसार नाक और मुँह को भी ढकने का नियम मल त्याग के समय के लिए ही है तो वीर मित्रोदय के अनुसार मल एवं मूत्र के त्याग समय के लिए भी है ।

[ मूलम् ]

मनुः–

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्वते ॥
न जीर्ण-देवायतने न बल्मीके कदाचन ।
न ससत्वेषु गर्तेषु........................ ॥

मूत्रमिति पुरीषस्याप्युपलक्षणम् ।[१] चितिरग्निचयस्थानं चिता वा । न जीर्णदेवायतन इति दृष्टार्थम्[२] काष्ठेष्टकादिपातसम्भवात् । यमस्मृतौ च[३] 'सर्व-देवायतने' इति निषेधो वक्ष्यते । ससत्वेषु = प्राणिमत्सु । तथा–

न नदीतीरमासाद्य न च[४] पर्वत-मस्तके ।

पर्वतनिषेधादेव पर्वत-मस्तक-निषेधे सिद्धे पुनस्तन्निषेधो यत्रापि पर्वतोऽशक्यपरिहारस्तत्रापि[५] मस्तक-वर्जनार्थः ।

[ संस्कृत टीका ]

न मूत्रमिति । मूत्रम् = मूत्रपुरीषे, पुरीषस्याप्युपलक्षणात् । पथि = वर्त्मनि, गोव्रजे = गोष्ठे । फालकृष्टे = हलकुद्दालोत्कृष्टे क्षेत्रादौ । जले । चित्याम् = चीयतेऽग्निरत्रेति चितिः = अग्निचयस्थानम्, तस्याम् अग्न्यर्थकृतेष्टकाचये इति कुल्लूकभट्टः । अथवा, चितिः = चिता (चिता चित्या चितिः स्त्रियामित्यमरः), तस्याम् । पर्वते जीर्ण-देवायतने = चिरन्तनदेवागारे । बल्मीके = कृमिविशेषकृत-मृत्तिका-समूहे । ससत्वेषु गर्तेषु = प्राणिमत्सु खातेषु । विलेषु च । कदाचन = कदाचिदपि न कुर्यात् । वक्ष्यमाण यमस्मृत्या देवायतनमात्रस्यैव निषेधात् 'न जीर्ण देवायतने' इत्यत्र जीर्णपदं दृष्टार्थम्, काष्ठेष्टकादीनामुपरितः परितो वा पतनसम्भवात् । यथाच वक्ष्यमाणयमस्मृतिः–

---

पाठा० (१) चितिरित्यग्नि । (२) न जीर्ण-देवायतन इत्यत्र जीर्णपदं दृष्टार्थम् (३) इष्टकादिपात । (४) कुत्रापि 'च' नास्ति । (५) तन्मस्तक

तुषाङ्गारकपालानि देवतायतनानि च । इति

तथा, न नदी तीरमासाद्य = नदनदी तट माश्रित्य । न नदीजलसमीपं गत्वेत्याचारविवेकः । नापि पर्वतमस्तके = पर्वतशृंङ्गे च मूत्रपुरीषे न कुर्यादित्यर्थः ।

पर्वतनिषेधादेवेति । पर्वतनिषेधादेव पर्वतशृङ्गस्यापि निषेधे सिद्धे पुनः पर्वतशृङ्गनिषेधः पर्वतस्याभ्यनुज्ञानार्थः । तेन यत्र पर्वतोऽशक्यपरीहारस्तत्र पर्वते न निषेध इति पारिजात-कुल्लूकभट्ट-श्रीदत्त-स्मृतिचन्द्रिका-काराद्यभिप्राय इति वीरमित्रोदयः । 'न च पर्वते' इत्यनेन पर्वतमस्तकनिषेधे सिद्धेऽपि पुनस्तन्निषेधो दोषभूयस्त्वार्थ इति कल्पतरुः ।

[ हिन्दी टीका ]

रास्ता, राख गोठ (जहाँ गायें इकट्ठी होकर टिकती हों), जुती हुई जमीन, जल, अग्निस्थापन स्थान (यज्ञशाला), पकाने के लिए कच्ची ईटों का भट्ठा या चितापर, पुराने देवालय, बल्मीक (दीमकों द्वारा लगया गया मिट्टी का टीला), तथा जीववाले गड्ढे में मलमूत्र न करे । इसी तरह नदी का तट भी वर्जनीय है ।

यद्यपि यमस्मृति में देवालयमात्र का निषेध कहा गया है, तब यहाँ जीर्ण देवालय के निषेध-वचन में जीर्णपद देने का प्रत्यक्ष प्रयोजन यह है कि वहाँ मल-मूत्र-त्याग के लिए बैठने पर हो सकता है कि ऊपर या किधर से भीं पुराने काठ ईटें आदि देह पर गिर पड़े ।

यद्यपि पर्वत के निषेध से ही पर्वत की चोटी का भी निषेध अपने आप हो जाता है तो फिर चोटी का निषेध क्यों ? इस शंका का उत्तर यह है कि यदि व्यक्ति पर्वत पर वेगी हो तो भी कम से कम चोटी को अवश्य छोड़ दे, वहाँ पर्वत का निषेध नहीं। इसी को समझाने के लिए मूल में 'नच पर्वतमस्तके' कहा गया है । यही मत पारिजातकार, कुल्लूकभट्ट, श्रीदत्त तथा स्मृतिचन्द्रिकाकार का भी है ।

किन्तु कल्पतरुकार का कहना है कि "नच पर्वते" कहकर पर्वत का निषेध कर देने पर भी पर्वत शृङ्ग का निषेध स्वतः हो ही जाता, तब यह निषेध अधिक दोष प्रदर्शनार्थ है । अर्थात् पर्वत की अपेक्षा पर्वत के शिखर पर मलमूत्र त्याग करने से अधिक दोष लगता है ।

[ मूलम् ]

देवलः

**वापीकूपनदीगोष्ठचित्यम्भः[1] पथि भस्मसु ।**
**अग्नौ काम्ये श्मशाने वा विण्मूत्रं न समाचरेत् ॥**

वाप्यादिपदं जलरहितभागनिषेधार्थमम्भसः पृथगुपादानात् । काम्ये = प्रकृष्टस्थाने ।

[ संस्कृत टीका ]

वापीति अत्र वाप्यादिपदत्रयं जलरहितवाप्यादिपरं, तेन वापीकूपनद्यः = जलरहितदीर्घिका-कूपसरित इत्यर्थः । गोष्ठम् = गोस्थानम् (गोष्ठं गोस्थानकमित्यमरः) । चितिः = पूर्वव्याख्यातैव । 'चैत्य' इति पाठे तु ग्रामादिप्रसिद्धिहेतुर्महावृक्षः = ग्रामप्रधानो वृक्ष इति यावत् । चैत्यमायतनं तुल्ये' इत्यमरकोशाच्चैत्यमावासगृहमिति केचित् । अम्भः = जलम् । पन्थाः = मार्गः । भस्म । एषु कुत्रापि । अग्नौ = शीताङ्गारे । काम्ये = प्रकृष्टे = कमनीयप्रदेशे- उद्यानादावितियावत् । श्मशाने च । विण्मूत्रं । न समाचरेत् = कुर्यात् । मूले वाप्यादि-पदत्रयस्य जलरहित वायाप्यादि-परत्वमम्भसः वचने पार्थक्योन कथनाद्बोध्यम् ।

[ हिन्दी टीका ]

जलरहित बाबड़ी, कुँआ, नदी (का भाग), गोठ (जहाँ गौयें इकट्ठी होकर टिकती हैं), चिति (अग्निचयस्थान = यज्ञशाला) । यहाँ यदि 'चैत्य' ऐसा पाठ हो तो गाँव के प्रसिद्ध महान वृक्ष के नीचे अथवा आवासगृह तथा जल में, रास्ता पर, राख के ऊपर, कोयलापर, शोभायमान उद्यान आदि एवं श्मशान में मलमूत्र न करें ।

यहाँ वापी, कूप तथा नदी पद क्रमशः जलरहित बाबडी, कुँआ और नदी भाग के बोधक हैं क्योंकि जलबोधक अम्भः पद अलग से इस वचन में दे दिया गया है ।

[मूलम्]

अत्र च[2] विष्णुः-

**नोषरे न शाद्वले न पराशुचौ नोद्यानोदकसमीपयोः नाकाशे ।**

---

पाठा० (१) चैत्यारम्भः । (२) क्वचिद् 'च' नास्ति ।

आकाशे = असंवृतदेशे । तदुक्तं वायुपुराणे–

**यदाऽऽकाशः स्मृतो भीमस्तस्मान्नासंवृते क्वचित् ।**
**कुर्यान्मूत्रं पुरीषं वा[1] न भुञ्जीत पिवेन्न वा[2] ॥ इति**

एवञ्चाकाशे = अट्टालिकादिस्थित[3] इति व्याख्यानमशुद्धम् ।

[ संस्कृत टीका ]

नोषरे इति । ऊषरे = ऊषवति स्थाने (ऊषवानूषर इत्यमरः) । शाद्वले = नवतृणै र्हरिद्वर्णे भूभागे (शाद्वलः शाद हरिते इत्यमरः) । पराशुचौ = परेण मूत्रपुरीषोत्सर्गादिनाऽशुचि देशे । उद्यानोकद-समीपयोः = वाटिका समीपे वा । आकाशे = असंवृतप्रदेशे, "यदाऽऽकाशः स्मृतो भीम" इत्यादि-वायुपुराण-वचन-स्वरसात् । मूत्रपुरीषे न कुर्यादिति सम्बन्धः । न पदस्य सर्वत्रैव संबन्धो बोध्यः । आकाशस्य भीमत्वञ्च श्रीविनाशकत्वेन भयानकत्वम् । यथाचोक्तं हारीतेन–

**आहारञ्च रह : कुर्यान्निर्हारञ्चैव सर्वदा ।**
**युज्यते हि श्रिया गुप्ते प्रकाशे हीयते श्रिया ॥ इति।**

निर्हारः = मूत्रपुरीषोत्सर्गः, स्त्रीसम्भोगश्च । एवमेव वसिष्ठेनाप्युक्तम्–

**आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदातु कार्याः । इति**

योगः समाधिः । एवञ्च आकाशे = अट्टालिकादिस्थिते (आकाशे) इति कल्पतरुव्याख्यानम्, अशुद्धम्= नोचितम् ।

[ हिन्दी टीका ]

ऊषर (कल्लर) भूमि, नई हरी घास वाली भूमि, दूसरे के मलमूत्र त्याग आदि के कारण अपवित्र भूमि, उद्यान के समीप, जल के समीप तथा असंवृत देश (विना आड़ घेरे की भूमि) में मलमूत्र त्याग नहीं करना चाहिए ।

मूल वचन में आये आकाश पद का अर्थ है असंकृत प्रदेश, क्योंकि वायुपुराण में कहा गया है कि –"जिस लिए आकाश भी (भयानक) समझा जाता है अतः कहीं भी असंवृत प्रदेश में मल-मूत्र त्याग तथा खाना-पीना न करें ।"

आकाश की भयानकता लक्ष्मी के विनाश के कारण है । जैसा कि हारीत ने कहा है कि खाना पीना, मलमूत्र त्याग तथा स्त्रीसम्भोग एकान्त में करना चाहिए

पाठा० (१) च । (२) च । (३) स्थाने ।

क्योंकि इन्हें गुप्त रखने पर व्यक्ति लक्ष्मी से युक्त होता है और प्रकाश में इनके आचरण से लक्ष्मीहीन होता है ।

अब स्पष्ट है कि कल्पतरुकारने उक्त आकाश पद का अर्थ जो अट्टालिका (ऊँचा भवन-आलीशान मकान) का ऊपरी आकाश किया था वह अशुद्ध है ।

[ मूलम् ]

अत्र यमः –

पल्वलानि तडागानि नदी प्रस्रवणानि च ।
नग-गोमय-भस्मानि फालकृष्टानि वर्जयेत् ॥

तुषाङ्गारकपालानि देवताऽऽयतनानि च ।
राजमार्गश्मशानानि क्षेत्राणि च खलानि च ॥
उपरुद्धो न सेवेत छायां दृश्यं चतुष्पथम् ।
उदकं चोदकान्तञ्च पन्थानञ्च विवर्जयेत् ॥
वर्जयेद् वृक्ष-मूलानि चैत्य-श्वभ्र-बिलानि च ।

उपरुद्धः = वेगी । पन्थानमित्यनेनैव निषेधे सिद्धे राजमार्गचतुष्पथयोरुपादानं दण्डवारणरूप-प्रयोजनकम् । हलायुध-निबन्धे तु[१] समीपलक्षणा उक्ता । चैत्यः = ग्रामप्रसिद्धिहेतुर्महावृक्षः । श्वभ्रम् = विदीर्ण-भूभागः ।

[संस्कृत टीका]

अत्रेति । अत्र = जलसम्बद्धनिषेधप्रकरणे । उपरुद्धः = वेगी = विष्मूत्र-वेगपीडितः = विण्मूत्रोत्सर्गकारीति यावत् । पल्वलानि = अल्पसरांसि । तडागानि = महासरांसि । नदीप्रस्रवाणि = सरिद्वारि-प्रवाहौ । पल्वलादि-पदचतुष्टयं निरुदकतत्प्रदेशग्रहणार्थमधिकदोषख्यापनार्थं वा । देवतायतनानि = देवमन्दिराणि । क्षेत्राणि = सस्यसम्पन्नानि केदाराणि । खलानि = शस्यमर्दन-स्थानानि (खलिहान इति भाषा) छायाम् = पथिकाद्युपजीव्यछायाम्। ''न शाद्वलोपजीव्यछायासु'' इति वसिष्ठ-वचनात् । दृश्यम् = शोभनस्थानम् । अनावृत स्थानं वा । चनुष्पथम् = श्रृङ्गाटकम् । उदकान्तम् = जलसमीपम् । न सवेते, विण्मूत्र-त्यागार्थमिति शेषः । 'पन्थानं वर्जयेदि' त्यनेनैव

पाठा० (१) च (२) ह० पु० ।

राजमार्गचतुष्पथयोर्निषेधे सिद्धे पुनस्तयोरुपादानं दोषाधिक्यज्ञापनार्थमि-तिकल्पतरुः । दण्डविशेषदृष्ट-दोषान्तरज्ञापनार्थमिति तु पारिजातश्रीदत्तादयः' इति वीरमित्रोदयः ।

'पन्थानं वर्जयेदित्युक्त्वाऽपि राजमार्गचतुष्पथ-ग्रहणं दोषातिशयार्थमिति रत्नाकरः। राजमार्गचतुष्पथयोरुपादानं राजदण्डसम्भावनया दृष्टार्थम्। दृश्यस्थानपथयोः स्वयमेव पृथगुपादानादित्याचारविवेक इति नित्यकृत्यार्णवः।

समीपलक्षणेति । लक्षणा नाम-शक्यार्थसम्बन्धः । सम्बन्धश्चात्र सामीप्यम् । तेन चतुष्पथ-राजमार्ग-समीप-देशेऽपि मलमूत्रोत्सर्गं न कुर्यादिति तदभिप्रायः । चैत्यैः = ग्रामप्रसिद्धिहेतुर्महावृक्षः । एवमेव आचारविवेकोऽपि । 'चैत्यमायतनं तुल्ये' इत्यमरकोशाच्चैत्यमावासगृहमिति केचित् । श्वभ्रम्-विदीर्णभूभागः । विलम् = विवरम् ।

[हिन्दी टीका]

छोटे तालाब, बड़े तालाब, नदी, झरने, पर्वत, गोवर, राख, हल से जुती हुई जमीन, बुस, कोयला, घड़े आदि का टुकड़ा या शिर की खोपड़ी (कपाल), देवमन्दिर, सड़क या सड़क के आसपास, फसलवाला क्षेत्र (खेत), खलिहान, राहियों के आरामदेह वृक्षों की छाया, शोभनस्थान या अनावृत (विना आड़ घेर का) स्थान, चौराहा या चौराहे के आसपास, जल तथा जल के समीप, रास्ता, वृक्षों की जड़, गाँव के प्रमुख वृक्ष ( के नीचे), स्वतः फटी हुई जमीन तथा बिल (ये स्थान) मलमूत्रत्याग के लिए वर्जनीय हैं ।

यहाँ शंका होती है कि मूल वचन में आये 'पन्थानम्' पद से साधारण रास्ते के जैसे ही राजमार्ग (सड़क) तथा चतुष्पथ (चौराहा) का भी निषेध हो ही जायगा तो फिर इन दोनों पदों को कहने की क्या आवश्यकता ? इसका उत्तर यह है कि साधारण मार्ग की अपेक्षा इन दोनों स्थानों पर राजकीय दण्ड भी भुगतना पड़ सकता है, इस प्रत्यक्ष दोष की ओर भी संकेत करने के लिए कहे गए हैं । ऐसा ही मत पारिजात तथा आचार विवेककार का भी है । कल्पतरु का कहना है कि वे दोनो पद दोष की अधिकता समझाने के लिए कहे गए हैं । रत्नाकर का भी यही कहना है ।

निबन्धकार हलायुध का मत है कि उक्त दोनों पदों का उपादान वाच्यार्थ समीप को समझाने के लिए कहे गए है । फलतः सड़क तथा चौराहे के आसपास भी मलमूत्र त्याग न करें यह अर्थ होता है । अत्र कोई अनुपपत्ति नहीं ।

[ मूलम् ]

हारीतः

**न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्यान्नतीर्थे न सस्यसम्पन्ने[१] न यज्ञियानां वृक्षाणामस्तात् ।**

चत्वरम् = नानाजनावस्थानदेशः । काकादि- बलिस्थानमिति केचित् । उपद्वारम्= द्वारसमीपम् । तीर्थे = पुण्यदेशे । जलावतरणमार्ग इत्येके ।

[ संस्कृत टीका ]

न चत्वर इति । चत्वरम् = नानाजनावस्थानदेशः । **"अङ्गणं चत्वराजिरे"** इत्यमरकोशादङ्गणंवेति वीरमित्रोदयः । काकादिवलिस्थानमित्यपरे । उपद्वारम् = द्वारसमीपम् = द्वारसमीपदेश इति यावत् । तीर्थे = पुण्यदेशे । जलावतरण-मार्ग इत्येके । एक इत्यनेन कल्पतरुकारः आक्षिप्तः । सस्य सम्पन्ने = धान्यादिसस्यव्याप्ते क्षेत्रे । 'सस्य सम्पन्ने' इति पदो पादानादेकदेशे शस्य-स्थितौ तदितरप्रदेशे दोषाभाव इति वृद्धा इति नित्यकृत्यार्णवः । यज्ञियानां वृक्षाणामधस्तात् = यज्ञोपकारकाणां वृक्षाणां छायातले । विण्मूत्रोत्सर्गं न कुर्यादिति सम्बन्धः–

**रथ्याचत्वरतीर्थेषु श्मशानायतनेषु च ।**
**अर्थक्षयमवाप्नोति आयुषा च वियुज्यते ॥**

इति वचनेन तेनैव दोषोद्भावनाच्च ।

[ हिन्दी टीका ]

जहाँ बहुत से लोग बैठते हों (या चबूतरा या काकादिबलिस्थान), द्वार के समीपवर्त्ती देश, पुण्य प्रदेश, जहाँ धान आदि शस्य के पौधे लगे हों (इससे सूचित होता है कि पौधों से खाली स्थान में कोई दोष नहीं) तथा यज्ञोपकारी वृक्षों के नीचे मल मूत्रोत्ससर्ग वर्जनीय है । अन्यथा ऐसा करने से कर्त्ता की अर्थक्षति (या धिक्कार) तथा आयु क्षीण होती है।

[ मूलम् ]

आपस्तम्बः[१]

**छायायां मूत्रपुरीषयोः कर्मवर्जयेत् । स्वान्तु[२] छायामवमेहेत**

---

पाठा० (१) अपध्वंस ।

तथा–

न सोपानत्को मूत्रपुरीषे कुर्यात् ।

छायायाम् = पथिकाद्युपजीव्यछायायाम्[१] 'नोपजीव्यच्छायायामिं'' ति स्मृत्यन्तरात् । स्वान्तु[२] अवमेहेत[३] इत्यनुज्ञाबलाच्च पुरुषान्तरच्छायाऽपि निषिद्धा ।

[ संस्कृत टीका ]

छायायामिति । छायायाम् = ''न शाद्वलोपजीव्यच्छायासु'' इति वसिष्ठ-स्मृतिबलात् पथिकाद्युपजीव्यच्छायायामित्यर्थः । मेघच्छाया तु उपजीव्याऽपि न निषिद्धा । अवर्जनीयत्वात् । स्वान्तु छायमित्यस्य प्रतीतिशेषः । तेन स्वां छायां लक्ष्यीकृत्यावमेहेत = मूत्रोत्सर्गं कुर्यादित्यर्थः । अनुज्ञाबलात् = आज्ञाबलात् । पुरुषान्तरच्छायाऽपि = अनुपजीव्याऽपि अन्यपुरुषच्छाया निषिद्धैव । उपजीव्य-च्छायाया एव निषेधान्नायं प्रतिप्रसवः । प्रातरादावुदङ्मुखत्वादिनियमा-त्तथाऽन्धकारादौ च यथासुखमुखत्वविधानेऽपि स्वच्छायायामवमेहनस्यासम्भ-वात्र स्वच्छायायाः नियमविधिः । सति सम्भवे स्वच्छायायामवमेहन-स्याभ्यनुज्ञामात्रम् । तेनानुपजीव्याऽपि परकीयच्छाया निषिध्यते इति वीरमित्रोदयः । तथा, सोपानत्कः = उपानत् = चर्ममयी पादुका तद्वान् । मूत्रपुरीषे न कुर्यात् । अत्र नित्यकृत्यरत्नमाला-टिप्पणी यथा– ''तथाच शिष्टाः उपानहौ बहिः (अनतिदूरे) परित्यज्य मूत्रपुरीषे कृत्वा कृतशौचाः पुनस्तद्धारयन्ति । शरीरत्राणकामो वै सोपानत्कः सदा व्रजेदिति शिष्टपरिगृहीततया वचनमुक्तेऽर्थे प्रमाणयन्तो नमस्या एव ।

[ हिन्दी टीका ]

राहगीर आदि को आराम देनेवाली छाया में तथा जूता पहनकर मलमूत्र त्याग न करें, किन्तु अपनी छाया में लघुशंका (पेशाब) कर सकते हैं । अपनी छाया की आज्ञा से सिद्ध होता है कि अनावश्यक भी दूसरे की छाया में पेशाब करना निषिद्ध ही है ।

[ मूलम् ]

अत्र मनुः–

न गच्छन्नाऽपि च स्थितः। इति ।

---

पाठा० (१) सस्यपूर्णे, ह. पु. । (२) अपध्वंस । अपध्वस्तस्तु धिक्कृत इति कोषात् अपध्वंसम् धिक्कारम् इत्यर्थः । (३) स्वास्ववमेहेत ।

स्थितः = ऊर्ध्वः । शङ्खलिखितौ—

**नानन्तर्वासाः कुर्यात्[१] ।**

मूत्रपुरीष इति शेषः ।

[ सस्कृत टीका ]

अत्रेति । अत्र = निषेधप्रकरणे । गच्छन् = चलन् । स्थितः = ऊर्ध्वः । अनन्तर्वासाः = अन्तर्वस्त्रशून्यः = अधोवस्त्ररहित इति यावत् ।

**नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी ।**
**अन्तरीयं प्रशस्तं तत् आच्छिन्नमुभयोस्तयोः ॥**

इति शब्दकल्पद्रुमप्रतिपादितमन्तर्वस्त्रलक्षणं ज्ञेयम् । न मूत्रपुरीषे कुर्यादिति भावः ।

[ हिन्दी टीका ]

चलता हुआ, खड़ा होकर तथा कमर से नीचे पहने जानेवाले-धोती पायजामा साड़ी आदि कपड़ों से रहित होकर मलमूत्र त्याग न करें ।

[ मूलम् ]

गौतमः—

**न वाय्वग्निविप्राऽदित्याऽपो देवता गाश्च प्रति पश्यन् मूत्रपुरीषाऽमेध्यान्युदस्येत् ।**

देवताः = विष्ण्वादिप्रतिमाः । अमेध्यानि = श्लेष्मादीनि ।

[संस्कृत टीका]

न वाय्वेति । अप्शब्दान्तो द्वन्द्वः । आर्षत्वात्, अनित्याः समासान्ता इति पक्षाश्रयणाद्वा समासान्तोऽप्प्रत्ययो न ।

देवताः = विष्ण्वादि प्रतिमाः = देवताऽधिष्ठानीभूताः प्रतिमाऽऽदय इति यावत् । वाय्वादीन् प्रति = लक्षणेनाभिप्रती आभिमुख्ये (पा० सू० २/१/१४) इति ज्ञापकादत्र प्रतिराभिमुख्ये । एवञ्च वाय्वादीनामभिमुखं मूत्रादीनि न उदस्येत् = त्यजेत्। पश्यन्वा न कुर्यादित्यर्थः । प्रति न कुर्यादित्याभिमुख्यवर्जनार्थम् । पश्यन् न कुर्यादिति नियमादाभिमुख्ये सत्यप्यनवलोकनार्थम् ।

---

पाठा० (१) 'निर्वासाः' इत्यधिकः पाठः ह.पु ।

एवञ्च वायोरचाक्षुषत्वेऽपि न क्षतिः ।

**वाय्वग्निविप्रानादित्यमपः पश्यन् तथैव गाः ।**

**न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥**

इति मनु (४/४८) वचने इव नित्यकृत्यार्णव- कथनमत्रापि बोद्धव्यम् । यथा- "वायुपदेन वाय्वागमदेशो लक्ष्यते, वायोरदृश्यत्वादि"त्याचार चिन्तामणिः । "वाय्वादिकं पश्यन् =सांमुख्यमुपलभमान" इति रत्नाकरः । कुल्लूकभट्टस्तु- मनुटीकायां वायोररूपत्वेन दर्शनासम्भवाद् वात्याप्रेरित तृणकाष्ठादिनि-षेधोऽयमित्याह ।

अमेध्यानि = श्लेष्मादीनि । एवञ्च अमेध्यग्रहणेनैव सिद्धे मूत्रपुरीषयोः पृथगुक्तिस्तयोरतिशयेन वर्जनार्थम् । अन्यथादोषाधिक्यापत्तिः । आभिमुख्येन मूत्रपुरीषोत्सर्गे दोषो यथोक्तो महाभारते-

**प्रत्यादित्यं प्रत्यनलं प्रतिगाञ्च प्रतिद्विजम् ।**

**मेहन्ति ये च पथिषु ते भवन्ति गतायुषः ॥** इति

**[ हिन्दी टीका ]**

वायु, अग्नि, ब्राह्मण, सूर्य, जल, विष्णु-आदि देवों की प्रतिमा तथा गायों के सामने तथा गायों के या इन्हें देखता हुआ मलमूत्र या कफ आदि का त्याग न करे। अभिमुख होने का दोष महाभारत मे यों कहा हैं :- सूर्य, अग्नि, गाय तथा द्विजको अभिमुख कर और रास्ते पर जो मलमूत्र त्याग करता है उसकी आयु क्षीण होती हैं ।

**[ मूलम् ]**

अत्र याज्ञवल्क्यः-

**न प्रत्यर्काग्नि-गो-सोम-सन्ध्याऽम्बु-स्त्री-द्विजन्मनः ।[१] इति**

**[ संस्कृत टीका ]**

अत्रेति । अत्र = सामुख्येन, अग्रतो दर्शनेन च निषेधप्रकरणे । न प्रत्येति । पूर्वव्याख्याऽनुसारम् अर्कादीन् प्रति = अर्कादीनामभिमुखम् एतान् पश्यँश्च न मूत्रपुरीषोत्सर्गं कुर्यादित्यर्थः,पूर्वोक्तगौतमवचनैकवाक्यत्वात् ।

---

पाठा० (१). 'इति' पदं ह. पु नास्ति ।

सन्ध्या चात्र उदयास्तवती दिक्। यद्यपि सन्ध्यायामुदङ्मुखत्वं नियमितं तथापि रागतः प्राप्तं सन्ध्याऽभिमुखत्वं निषिध्यते।

[ हिन्दी टीका ]

सूर्य, अग्नि, गाय, चन्द्रमा, सन्ध्या (सूर्य के अस्त तथा उदयवाली दिशा), स्त्री तथा द्विज के सामने हो या इन्हें देखता हुआ मलमूत्र त्याग न करे।

[ मूलम् ]

साङ्ख्यायन-गृह्यम् :-

**नादित्याभिमुखो न जघनेन, न निन्द्यस्थाने। हन्ति मेहयतः प्रज्ञां प्रतिपन्थानमेव च।**

[संस्कृत टीका]

नादित्येति। जघनेनाऽदित्याभिमुखो मूत्रपुरीषोत्सर्गं न कुर्यादिति प्रकरणाल्लभ्यते। यद्यपि स्वस्यादित्यसांमुख्यनिषेधेनैव जघन-साम्मुख्य-निषेधोऽपिलब्धः तथापि स्वस्यादित्य-सामुख्यपरिहारेऽपि प्रसक्तं जघन-साम्मुख्यमत्र प्रतिषिध्यते। स्वस्यैव प्रसक्तं जघनसाम्मुख्यमनेन निषिध्यते।

निन्द्यस्थाने = न पराशुचौ नोद्यानोदकसमीपयोरित्यादिना प्रतिपादिते प्रतिषिद्धे स्थाने। पन्थानं प्रति = मार्गस्याभिमुखञ्च। मेहयतः=मूत्रपुरीषोत्सर्गं कुर्वतः तस्य तत्करणमेव प्रज्ञाम् = बुद्धिं। हन्ति = नाशयति। पुरीषोत्सर्गादिषु दृष्टार्थेषु कर्मसु विधीयमानमुदङ्मुखत्वादि, आदित्याभिमुख्यनिषेधादिकञ्च सर्वं पुरुषार्थं यथासम्भवं दृष्टादृष्टद्वारेति बोध्यमिति वीरमित्रोदयः।

[हिन्दी टीका]

यदि जंघा से सूर्य का आभिमुख्य हो तो मलमूत्र त्याग न करे। यद्यपि सूर्य के प्रति अपने साम्मुख्य के निषेध से ही जघन-साम्मुख्य का भी निषेध हो ही जाता है तथापि तात्पर्य यह है कि यदि अपना मुंह टेढ़ा करके बैठने से सूर्य का साम्मुख्य न भी हो तो भी होनेवाला जघन का साम्मुख्य निषिद्ध माना जाता है। इसी तरह पीछे कहे निन्दनीय स्थानों में तथा रास्तों के अभिमुख हो मल-मूत्रोत्सर्ग करने से उसकी बुद्धि नष्ट होती है। ऊपर से ज्ञातव्य है कि मलमूत्र त्याग आदि दृष्ट प्रयोजन वाले कर्मों में उत्तर दिशा आदि की ओर मुख करने के विधान को तथा सूर्य आदि की ओर मुंह न करने के निषेध को यथासम्भव दृष्ट या अदृष्ट प्रयोजन द्वारा पुरुषार्थ (मनुष्य जीवन का प्रधान उद्देश्य) समझना चाहिए।

[ मूलम् ]

विष्णुपुराणे–

**तिष्ठेन्नातिचिरं तत्र न च किञ्चिदुदीरयेत् ।**

तत्र = मूत्रपुरीषस्थाने[१] ।

[ संस्कृत टीका ]

तिष्ठेन्नेति । तत्र = मूत्रपुरीषोत्सर्गस्थाने । अतिचिरम् = अतिदीर्घकालम् । न निष्ठेन्न वा तत्र किञ्चिद् उदीरयेत् = वदेत् ।

[हिन्दी टीका]

मलमूत्र त्याग के स्थान में अधिक देर तक रुकें नहीं और न कुछ बोलें ही ।

❀ इति मूत्रपुरीषोत्सर्ग-विधिः ❀

## मूत्रपुरीषोत्सर्गोत्तरकालीनं कर्म

[ मूलम् ]

अथ मूत्रपुरीषोत्सर्गानन्तरकालीनं कर्म । तत्र हारीतः–

**लोष्टेन न प्रमृजीत[३] शुष्ककाष्ठेन वा ।**

गुदलिङ्गे[२] इति शेषः । लोष्टेनेति शुष्ककाष्ठाभावे, न पर्ण लोष्टाऽश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात् इति गौतमनिषेधात् ।

[ संस्कृत टीका ]

लोष्टेनेति । शुष्ककाष्ठेन = नीरसकाष्ठेन । एतदभावे लोष्टेन = मृत्पिण्डेन वा प्रमृजीत = गुदलिङ्गे प्रोञ्छेत् । "न पर्णलोष्टे"त्यादिगौतमनिषेध-वचनानुसारं शुष्ककाष्ठाभावे एव मृत्तिकाखण्डेन प्रोच्छनं शास्त्राऽनुकूलं मन्तव्यम् ।

[ हिन्दी टीका ]

प्रथमतः सूखी लकड़ी से, इसके अभाव में मिट्टी के ढेले से गुदा (पुरीषेन्द्रिय) तथा लिङ्ग (मूत्रोन्द्रिय) को मलरहित करें ।

---

पाठ० (१) पुरीपोत्सर्ग । (२) लिङ्गगुदे । (३) मृज्यात् । नापि

## [ मूलम् ]

व्यासः—

नाश्ममूलफलाङ्गारैरुन्मृजेन्नास्थि[1]र्वर्हिषा ।

आपस्तम्बः—

आर्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः संस्रन[2]कर्म[3] वर्जयेत् ।

## [ संस्कृत टीका ]

नाश्मेति । नास्थीत्यत्र नापीति क्वचित् पाठः । संस्रनकर्मेत्यत्र शुन्धनमिति क्वचित्पाठः । ऊर्ध्वानिति । ऊर्ध्वान्=ऊर्ध्वदेशस्थितान् । ओषधिवनस्पतीन् । आच्छिद्य = त्रोटयित्वा । तैः । संस्रनकर्म = अधःपातनम् । शुन्धनमिति पाठे तु शुद्धीकरणमर्थः । वर्जयेत् = त्यजेत् ।

आर्द्रानिति । आर्द्रान् = क्लिन्नान् । फलपाकावसाना औषधयः । ये पुष्पैर्विना फलन्ति ते वनस्पतयः । आर्द्रानिति वचनात् शुष्केषु न दोष इति तस्योज्ज्वला वृत्तिः । अतएव नार्द्रैस्तृणलता पत्रैर्नार्द्रगोमय-भस्मना ।। इति व्यासनिषेधवचनम् । स्वयं प्रशीर्णेन काष्ठेन वा गुदं प्रमृजीत इति पारस्करवचनञ्च सङ्गच्छते । पारस्करवचने गुदमिति लिङ्गस्याप्युपलक्षकम् । तत्रैव स्वयं प्रशीर्णेन = पर्णादिनेत्यर्थः । एवञ्च पूर्वोक्तगौतमवचने पर्णपदं स्वयं प्रशीर्णपर्णातिरिक्तपर्णपरं बोद्धयम् ।

## [हिन्दी टीका]

व्यासवचन के अनुसार पत्थर अदरख आदि मूल, आम आदि फल, कोयला, हड्डी तथा कुश से गुदा एवं लिङ्ग का मल साफ न करे ।

आपस्तम्बवचनानुसार कच्चे-घास पात, औषधि, वनस्पति को ऊपर से तोड़कर उससे मलमूत्र का अपकर्षण करे । किन्तु पारस्कर तथा गौतम के वचनानुसार स्वयं गिरे हुए पत्तों से या सूखी लकड़ी से अपकर्ष करे ।

❁ इति मूत्रपुरीषानन्तरकालीनं कर्म ❁

---

पाठ० (१)ज्या नापि (२) शुन्धनम् । (३) ह. पुस्तके 'स्रंसनकर्म' इत्यस्य स्थाने 'स्रंसनं' इति।

# शौचप्रकरणम्

## [मूलम्]

अथ शौचम् याज्ञवल्क्यबौधायनौ–

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

अतन्द्रितः = अनलसः । एतच्च ऋष्यन्तरविहितसंख्याऽनुवादार्थम्[1]। अतो 'गन्धलेपक्षयादेव शौचम् । संख्याऽऽदिनियमस्त्वदृष्टार्थ' इति व्याख्यानमशुद्धम्, ''शुद्धिमभीप्सते'' ति श्रवणाच्च ।

## [संस्कृत टीका]

अथ शौचमिति । शौचस्यावश्यकत्वमाह दक्षः–

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥

शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ॥

अशौचात्तु वरं बाह्यं तस्मादाभ्यन्तरं वरम् ।
उभाभ्यान्तु शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥ इति ॥

सदा कार्य इत्यनेन शौचस्य पुरुषार्थता, शौचाचारेत्यादिना च कर्मार्थता उक्ता । भावशुद्धिः अन्तःकरणशुद्धिः । गृहीतेति । उभयविधशौचमध्ये बाह्यशौचकरणप्रकारे गृहीतेत्यदि वचनानि बोद्धव्यानि । गृहीत शिश्नः= गृहीतोपस्थः=उपस्थं गृहीत्वेत्यर्थः। शिश्नग्रहणमूर्ध्वादौ मूत्रस्पर्शनिवृत्तिरूपदृष्टार्थम् । उत्थायेति–शौचार्थं स्थलान्तरगमनाय, उत्थाय शौचासंभवात् । तेन स्थलान्तरं गत्वा उपविश्य शौचं कुर्यादिति सूचितं भवति ।

यथाचोक्तं व्यासेन–

उत्थायोद्धृतमृत्तोयैर्लिङ्गपायुकरान् क्रमात् ।
शोधयेदात्मनः शुद्धेस्तदन्यत्रोपविश्य च ॥ इति

---

पाठ० (१) ह्यनुज्ञानार्थम्; ह. पु ।

उत्थायेति निश्शेषमूत्रपातार्थमसक्तानां, समर्थानान्तु निश्शेषपातान्नोत्थानमिति स्मृतिदीपिका । मूले-अभ्युद्धृतैः कमण्डल्वादिना गृहीतैर्जलैः, न तु जलाशयस्थैरेव जलैरिति भावः । एतेन जलान्तःशौचनिषेधः सिद्धः । तदाह पैठीनसिः

**मूत्रोच्चारे कृते शौचं न स्यादन्तर्जलाशये ।**
**अन्यत्रोद्धृत्य कुर्यात्तु सर्वदैव समाहितः ॥ इति ॥**

अतएव-''अभ्युद्धृतैरिति जलाशयं प्रविश्य शौचनिषेधार्थमि''त्याचार विवेकोऽपि । यदा तु जलाशयात् पात्रेण जलोद्धारणं न सम्भवति तदा हस्तेनाप्युद्धृत्य शौचं कर्तव्यम् । तदाह आदित्यपुराणम्-

**रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ।**
**पश्चात्तच्छोधयेत्तीर्थमन्यथा त्वशुचिर्भवेत् ॥ इति ॥**

जलम् जलाशयस्थम्, तस्माद् रत्निमात्रम्=बद्धमुष्टिकरपरिमितं स्थलं त्यक्त्वेत्यर्थः । अनुद्धृते =पात्रेण जलोद्धरणासम्भवे सतीत्यर्थः । तीर्थम् = शौचस्थानम् । गन्धलेपेति । गन्धलेपक्षयकरम् = गन्धलेपयोः क्षयकारकम् । शौचम् = क्षालनम् । अतन्द्रितः=अनलसः सन् । कुर्यात् । अतन्द्रित इत्यनेन मन्वाद्युक्त संख्यानियमः सूचितः, तेन गन्धलेपक्षयः संख्याऽऽदिनियमश्चेतिद्वयमपि शुध्यर्थमावश्यकम् । एवञ्च ''गन्धलेपक्षयादेव शौचं भविष्यति; संख्याऽऽदि-नियमः = मृत् संख्यानियमः मृत्तिकापरिमाणस्य शौचसंख्यायाश्च नियम इति यावत् । अदृष्टार्थः = धर्मार्थ'' इति व्याख्यानम् = याज्ञवल्क्यस्मृतिव्याख्या-मिताक्षराविवेचनम् । अशुद्धम् = अनादेयम्

**एका लिङ्गे गुदे तिस्रः तथैवैककरे दश ।**
**उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥**

इति मनुवचनेन

**न्यूनाधिकं न कर्तव्यं शौचे शुद्धिमभीप्सता ।**
**प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥**

इति दक्षवचनेन च संख्यापरिमाणोभयनियमस्य शुद्धिहेतुत्वबोधनात् ।

[हिन्दी टीका]

अब शौच प्रकरण का प्रारम्भ होता है । शौच प्रसंग में ऊपर से ज्ञातव्य है कि दक्ष ने शौच की आवश्यकता यों कही है–शौच और सदाचार विहीन व्यक्ति की सारी क्रियाएँ निष्फल हो जाती हैं । शौच दो प्रकार के कहे गये हैं–(१) बाह्य और (२) आभ्यन्तर । मिट्टी एवं जल से बाह्य शौच होता है । दूसरा शौच आभ्यन्तर, अन्तःकरण की शुद्धि है । इन दोनों से शुद्ध ही शुद्ध माना जाता है, अन्य नहीं । फिर भी अशौच की अपेक्षा बाह्य अच्छा है और इस से भी आभ्यन्तर अच्छा है ।

मूल वचन का अर्थ है कि आलस्य रहित हो, जिससे जंघा आदि में मूत्र स्पर्श न हो सके, वैसे, अपना मूत्रेन्द्रिय पकड़कर तथा उठकर शौचार्थ अन्य स्थान पर जायें । इससे प्रतीत होता है कि दूसरे स्थान पर जाकर और बैठकर शौचक करे ।

यहाँ स्मृति-दीपिकाकार का मन्तव्य है कि वचन में 'उत्थाय' (उठकर) पद देने का तात्पर्य है कि जिन अशक्त व्यक्तियों का पूरा मूत्रपात न हो पाया हो वे शौचार्थ पूर्वोक्त रीति से अन्य स्थान पर जाये किन्तु जिस समर्थ व्यक्ति का निश्शेष मूत्रपात हो गया हो उसे उठकर जाने की आवश्यकता नहीं ।

शौच प्रसङ्ग में व्यासने कहा है कि शौच करने के लिए कमण्डलु आदि जलपात्र में जल लें । इससे सिद्ध होता है कि जल के भीतर शौच न करें । ज़िसे पैठीनसिने भी कहा है । किन्तु यदि जलाशय से जलपात्रद्वारा या जलपात्र के अभाव में जल लेना सम्भव न हो तो ऐसी स्थिति में आदित्यपुराण का कहना है कि जलाशयस्थित जल से रत्नि(मूठी बाँधे हाथ) भर प्रमाण स्थल को छोडकर शौच करे किन्तु पश्चात् उस स्थान पर से अशुद्ध जल को पानी देकर साफ कर दे । अन्यथा वह मनुष्य शुद्ध नहीं माना जायगा । फलतः कमण्डलु आदि पात्र स्थित जल से गन्ध और लेप (लगा हुआ मलमूत्र) को हटाने योग्य शौच (प्रक्षालन) निरलस होकर करे ।

'अतन्द्रित' कहने से मनु आदि के द्वारा कहे गए संख्यानियम का बोधन सूचित होता है । अब उक्त याज्ञवल्क्य वचन की टीका करते हुए मिताक्षराकार ते जो कहा था कि मिट्टी एवं जल से गन्ध तथा लेप को दूर करने से ही शुद्धि हो जायगी तो दूसरे ऋषि द्वारा प्रदर्शित मिट्टी का परिमाण-नियम तथा शौंच(द्रव्य) संख़्या-नियम अदृष्टार्थ (धर्मार्थ) है। किन्तु यह कहना इसलिए ठीक नहीं कि

मनुने कहा है कि शुद्धि चाहने वाले व्यक्ति अमुक अमुक अङ्गों में इतनी इतनी बार मिट्टी लगावें। इसीतरह संख्या एवं परिमाण के सम्बन्ध में दक्ष ने भी कहा है कि शुद्धि चाहने वाले जन न्यून या अधिक शौच न करे। फलतः मृत्तिका का परिमाण एवं शौच (द्रव्य) संख्या का नियम शुध्यर्थ माना गया है तो फिर अदृष्टार्थक मानना युक्तियुक्त नहीं।

## [मूलम्]

ब्रह्मपुराणे–

**उद्धृतोदक[१] मादाय मृत्तिकाञ्चैव वाग्यतः।**

**उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः॥**

(एतद्वाक्येनोद्धृततोयग्रहणरूपस्यादानस्य विधानात् करकादिगृहीतेनोदकेन शौचं कर्तव्यं न तु जलाशयादेव करेणोद्धृत्य गृहीतेनेति।)[२]

मृत्तिकाग्रहणं [३]कण्ठाऽसक्तमृद्धात्रीतः, हारीताऽनुसारात्। तदसंभवेऽन्यतोऽपि कुर्यात्। शौचमिति शेषः।

### [संस्कृत टीका]

उद्धृत इति। वाग्यतः=मौनी। उद्धृतोदकम् = कमण्डल्वादिना गृहीतं पानीयम्। मृत्तिकाम् = कण्ठाऽसक्तमृद्धात्रीतः, एतदसम्भवेऽन्यस्थानतोऽपि मृदम् आदाय= गृहीत्वा। दिवा= दिवसे। उदङ्मुखः = उत्तराऽभिमुखः। रात्रौ चेत् दक्षिणामुखः = दक्षिणदिगभिमुखः शौचमितिशेषः। प्रक्षालनमित्यर्थः। कुर्यात्।

### [हिन्दी टीका]

मौन हो दिन में उत्तराऽभिमुख तथा रात्रि में दक्षिणाऽभिमुख होकर जलपात्र में लाये जल तथा कण्ठ में बाँधी मृद्धात्री या अन्य स्थान से भी ली गई मिट्टी (दोनों) से शौच (प्रक्षालन) करे।

---

पाठा० (१) उद्धृत्यांदक। (२) अयं कोष्ठान्तर्गतोऽधिकः पाठः मिथिलारिसर्च इंस्टीच्यूट (मिथिला संस्कृत विद्यापीठ) दरभंगायामुपलब्धप्राचीनहस्तलिखितपुस्तकात् स्थापितोऽस्ति। (३) ग्रीवा।

[मूलम्]

यमः—

**आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा ।**
**नाखूत्कृष्टान्न वल्मीकात्[1] पांशुलान्न च कर्दमात् ॥**
**न मार्गान्नोषरा[2]च्चैव शौचशिष्टा[3] परस्य या ।**

विप्र इति शौचकर्तृमात्रोपलक्षणम् । कूलादिति च[4] शुद्धदेशोपलक्षणम् ।

[संस्कृत टीका]

आहरेदिति । शौचयोग्यां मृत्तिकामाह यमः आहरेदिति । विप्रः शौचकर्त्ता, न तु ब्राह्मण एव । कूलात् = शुद्धस्थानात् । यथा च शातातपोऽपि—

**शुचिदेशात्तु संग्राह्या मृत्तिकाऽश्मादिवर्जिता । इति ।**

न तु तटादेवेत्यर्थः, उभयत्र तत्तत्पदस्योपलक्षनत्वात् । उपलक्षणलक्षणञ्च यथा—स्वबोधकत्वे सति स्वेतर बोधकत्वमिति । ससिकताम् = बालुकायुताम् । मृत्तिकाम् = मृदम् । आहरेत् = गृह्णीयात् । (किन्तु) आखूत्कृष्टात् = मूषकोत्खातात्, ''मूषकोत्करादि'' त्याचार चिन्तामणिः । बल्मीकात् = वामलूरात् = कृमिविशेषसञ्चितमृत्तिका-समूहादिति यावत् । पांशुलात् = पांशुः = धूलिः, तद्युक्तात् धूलिधूसरितादितिभावः । (पांशुलः पांशुयुक्ते इति धरणिः)। कर्दमात् =पङ्कात् । मार्गात्=वर्त्मनः । ऊषरात् = ऊषरस्थानात् मृत्तिकां न आहरेत् । एवमेव परस्य = अन्यजनस्य । शौचशिष्टाम् = शौचावशिष्टाम् मृत्तिकां न आहरेदिति सम्बन्धः ।

[हिन्दी टीका]

शौचकर्ता शौच के लिए पवित्र स्थान से बालू वाली मिट्टी लें किन्तु चूहों से फाली गई, दीमकों का बनाया मिट्टी का ढेर (दिमौट), धूलि धूसरित, कीचड़, रास्ता, कल्लर भूमि से तथा दूसरे के शौचकार्य से बची मिट्टी अपने शोच के लिए न लें ।

---

पाठा० (१) बल्मीकान्न । (२) नोषरा (३) शौंचशिष्टाः परस्य च । (४) क्वचिद् 'च' नास्ति ।

[ मूलम् ]

विष्णुपुराणे-

बल्मीकमूषकोत्खातां[१] मृदमन्तर्जलात्तथा[२] ।
शौचावशिष्टां गेहाच्च[३] नादद्याल्लेप-सम्भवाम् ॥
अन्तःप्राण्यवपन्नाञ्च[४]........

अन्तःप्राण्यवपन्नाम् = सकीटाम् ।

[ संस्कृत टीका ]

बल्मीकेति । वर्जनीयाः मृत्तिका उच्यन्ते-यथा बल्मीकमूषकोत्खाताम् = बल्मीकमूषिकाभ्यामुत्कृष्टाम् । "अन्तर्जलात् = जलमध्यात्, इदञ्च वाप्यादि-क्रियमाणशौचातिरिक्तशौचपरं, पत्र जलान्तर्गतमृद्ग्रहणस्यैव विधानादिति वीरमित्रोदयः । दाक्षिणात्यास्तु-वापीकूपतड़ागेष्वपि मृदो ग्राह्याः ।

वापी कूप तडागेषु नाहरेद् बाह्यमृत्तिकाः ।
अन्तर्जलगता ग्राह्याः परतो मणिबन्धनात् ॥

इति स्मृतिमञ्जूषालिखितवचनात् । एतदारण्यकविषयकमिति आचार-मयूखे नीलकण्ठभट्टः । शौचावशिष्टाम् । गेहात् = गृहभित्यादितः । अतएव गेहाच्च = कुड्यादेरित्यर्थः" इति महामहोपाध्याय -रघुनाथविरचिता चारादर्श-फक्किकाया व्याख्याऽपि । लेपसम्भवाम् = चत्वरादिलेपसम्भवाम् । अथवा गेहाच्च लेपसम्भवामित्यप्यन्वयो बोद्धव्यः । अन्तःप्राण्यवपन्नाम् = अन्तः = मध्ये । प्राणिभिः = लघुजीवैः अवपन्नाम् = सम्बद्धाम्, सकीटामिति यावत् । मृदम्= शुद्धिजननार्थं मृत्तिकां नादद्यात् = न गृह्णीयात् ।

उक्तविशेषासम्भवे तु मनुराह-

यस्मिन् देशे तु यत्तोयं या च तत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥ इति ॥

अत्र यैव यत्रेत्येवकारो भिन्नक्रमः ।

---

पाठा० (१) मूषि । (२) लांत । (३) गेहात्तु (४) " हलोत्खाताञ्च पार्थिव । परित्यजंन्मृदस्त्वेतास्सकलाः शौचसाधने ।।" इत्यवशिष्टः पाठो दृश्यते (ह० पुस्तके) ।

[ हिन्दी टीका ]

दीमकों का बनाया हुआ मिट्टी का ढेर (विमौट), चूहों से फाली गई, जल के भीतर की, दूसरे के शौच से बंची, घर की दिवाल आदि की, चबूतरे आदि में लगी हुई तथा कृमि कीटवाली मिट्टी शुद्धि कार्य के लिए नहीं लें।

किन्तु अपवाद में मनु वचनानुसार जिस देश में जो पानी या मिट्टी मिले वहाँ वही प्रशस्त समझे।

[ मूलम् ]

अथ[1] ब्रह्मपुराणे-

**सुनिर्णिक्ते मृदं दद्यात्, मृदन्ते त्वप एव हि[2]।**

सुनिर्णिक्ते = केवलजलप्रक्षालिते । तथा गौतमः-

गन्धलेपापकर्षणे[3] शौचममेध्यस्य[4] तदद्भिः पूर्वं मृदा चेति ।

एवञ्च[5] सुनिर्णिक्तपदं काष्ठादिंप्रोञ्छितगुदाऽनुवादकमित्ययुक्तं व्यर्थत्वाच्च । अतएव सुनिर्णिक्ते= सुप्रक्षालिते पाय्वादाविति[7] कल्पतरुव्याख्यानम्[8]।

[ संस्कृत टीका ]

अथेति । मृज्जलकरणक शुद्धि प्रकार प्रकरण प्रारम्भ सङ्केतकोऽत्राथशब्दो बोद्धव्यः । सुनिर्णिक्ते इति । सुनिर्णिक्ते = केवल जल प्रक्षालिते । अतएव "केवल-जल-प्रक्षालिते पाय्वादावित्याचारचिन्तामणिरपि । मृदम् = मृत्तिकाम् । मृदन्ते तु अपएव = जलान्येव दद्यात् । तथा चाह गौतमोऽपि-गन्धलेपेत्यादि । अमेध्यस्य =

**वसाशुक्रमसृङ्मज्जा मूत्रविट्कर्णविण्नखाः ।**
**श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥**

इति (५/१३५) मनूक्त द्वादशविधमलस्य गन्धलेपयोः अपकर्षणे = अपनयने सति शौचम् । तत्र यस्य मलस्य गन्धमात्रं तस्य तदपकर्षणं, यस्य गन्धो लेपश्च तस्य तदुभयापकर्षणम् । तत्=गन्धलेपापकर्षणं, पूर्वम्, अद्भिः =जलैः, अर्थादनन्तरं मृदा, चकारादन्ते जलेनापि । इदञ्च पायुहस्तपादादेरमेध्यालिप्तस्य शौचम् एवञ्च "सुनिर्णिक्तपदं काष्ठादि-प्रोञ्छितगुदाद्यनुवादकमि"ति हलायु-

---

पाठा० (१) ब्रह्माण्ड (२) च । (३) कर्षणम् । (४) मेध्याक्तस्य । (५) 'एवञ्च' इतिनास्तिु ह. पु । (६) तु । (७) कल्पतरौ (८) न व्याख्यानम् ।

धेन व्याख्यातं तत् अयुक्तम् = अनादेयम् । पूर्वोक्तव्याख्यानात् व्यर्थत्वाच्च । अतएव = सुनिर्णिक्तपदस्य केवलजल- प्रक्षालितपाय्वाद्यर्थबोधकत्वादेव । सुनिर्णिक्ते = सुप्रक्षालिते पाय्वादाविति । कल्पतरुव्याख्यानमपि सुसंगति भवति ।

[ हिन्दी टीका ]

पहले केवल जल से अच्छी तरह प्रक्षालन कर देने पर मिट्टी से और मिट्टी के बाद केवल जल से प्रक्षालन करना चाहिए । जैसा कि गौतमने भी कहा है कि शारीरिक (बारह प्रकार के) मलों को (यथासंभव) गन्ध और लेपको हटा देने पर शुद्धि होती है । यह गन्ध और लेपकी हटना पहले जल से अनन्तर मिट्टी से और सब से अन्त में जल देने से होता है ।

यहाँ हलायुध निबन्ध ने कहा है कि सुनिर्णिक्त पद काठ आदि से पोंछे गए मलस्थान (पायुइन्द्रिय) को अनुवाद रूप से समझाने के लिए कहा गया है । परन्तु यह कहना उपयुक्त नहीं, क्योंकि प्रथम उचित पूर्वोक्त अर्थ के अनुकूल नहीं है । द्वितीय, ऐसा कहना व्यर्थ भी है । क्योंकि ब्रह्मपुराणमें पहले जससे पोंछने धोने (प्रोञ्छन) की ही बात कही गई है । अतः अनुवाद भी इसी का होना संभव होगा । इसलिए ही 'सुनिर्णिक्त' पद की कल्पतरुव्याख्या-सुप्रलाक्षित पायु आदि-सुसंगत होती है ।

[ मूलम् ]

मनुः—

**एका लिङ्गे गुदे तिस्रः तथैवैक[१] -करे दश ।**
**उभयोः सप्त दातव्याः मृदः शुद्धिमभीप्सता ॥**

एककरे=वामे ।

[ संस्कृत टीका ]

एकेति । संख्यानियमस्य शुद्धिहेतुत्वमाह मनुः एका लिङ्गे (५।१३६) इति । मूत्रपुरीषोत्सर्गे सति शुद्धिमभीप्सता 'मृद्वार्यादेयमर्थवत् (५।१३४) इत्युक्तत्वाज्जलसहिता मृदेका लिङ्गे दातव्या, गुदे तिस्रो मृदः । तथैवैकस्मिन् करे वामे ।

---

पाठा० (१) तथैकत्र करे । क्वचित्तु वामकरे इति पाठः ।

शौचविद्दक्षिणं हस्तं नाधः शौचे नियोजयेत् ।
तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत् ॥

इति देवलवचनात्तस्यैवाधःशौचसाधनत्वात्तत्रैव दश मृदो दातव्याः । ततः उभयोः करयोः सप्त दातव्याः । यदा तूक्तशौचेनापि गन्धलेपक्षयो न भवति तदा "यावदपैत्यमेध्याक्तात्" इति वचनादधिकसंख्याऽपि मृद्दातव्या । एतद्विषयाण्येव मुनीनामधिकमृत्संख्यावचनानिं । मृत्परिमाणमाह दक्षः (द०स्मृ४/८)–

लिङ्गेऽपि मृत्समाख्याता त्रिपर्वी पूर्यते यया ।
द्वितीया च तृतीया च तदर्धार्धा प्रकीर्त्तिता ॥ इति ।

यदातूक्तसंख्याया अल्पेनापि गन्धलेपक्षयो भवति तदा संख्यावाक्यारम्भा-सामर्थ्यात्संख्या पूरयितव्यैवेति तन्मन्वर्थमुक्तावली । उक्तगौतमवाक्यैकवाक्यत्वे पूर्वं जलैरनन्तरं मृदा ततश्च पुनः जलैरिति शौचक्रमः आस्थेयः । विष्णुपुराणेऽपि–

एका लिङ्गे गुदे तिस्रो दश वामकरे नृप ।
हस्तद्वये च सप्ताऽन्या मृदः शौचोपपादिकाः ॥ इति ।

[ हिन्दी टीका ]

मलमूत्रोत्सर्ग के बाद शुद्धि चाहने वालों को चाहिए कि लिङ्ग को एक बार, मलद्वार को तीन बार, बायें हाथ को दश बार और दोनों हाथों को सात बार मिट्टी तथा जल से धोंये । उक्त गौतमवचन के साथ एकवाक्यता करने पर जल से, अनन्तर मिट्टी से बाद में पुनः जल से धोये । यदि इस से भी बन्ध और लेप दूर न हो सकें तो अधिक बार भी मिट्टी एवं जल का प्रयोग करे ।

[ मूलम् ]

शङ्खः–

मृत्तिका तु समादिष्टा[1] त्रिपर्वी पूर्यते यया ।

अयञ्च परिमाणविधिः गुदं विहाय बोद्धव्यः,

अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धा परिकीर्त्तिता ॥

इति दक्षेण गुदे परिमाणान्तरविधानात् ।

---

पाठा० (१) समुद्दिष्टा ।

[ संस्कृत टीका ]

मृत्तिकेति। मृत्तिकापरिमाणमाह मृत्तिकेत्यादिना। त्रिपर्वी=त्रयाणां, पर्वणाम्=तर्जनीमध्यमाऽनामिकाऽङ्गुलित्रयस्य चरमग्रन्थीनां। (ग्रन्थिर्ना पर्वपरुषी इत्यमरः)। समाहारः (तद्धितार्थोत्तरपदसमाहारे चेति द्विगुसमासे द्विगोरिति ङीप्) तर्जन्याद्यङ्गुलित्रयचरमग्रन्थित्रयम्। यया=मृत्तिकया। पूर्यते=पूर्णा भवति। एतत्परिमाणा मृत्तिका शौचे समादिष्टा=मुनिभिः कथिता। अयञ्च परिमाण-विधिः=मृत्तिकापरिमाणविधानञ्चेदम्। गुदम्=पायुम्। विहाय=त्यक्त्वा। बोद्धव्यः= ज्ञातव्यः। गुदार्थं दक्षेण परिमाणान्तरविधानात्= अन्यपरिमाणस्य कथनात्। तद्यथा-अर्धेत्यादि।

'गुदे तिस्र' इत्यादि-मनुवचनेन विहित-मृत्तिकात्रये, अर्धप्रसृतिमात्रा = प्रसृतिः पलद्वयम्, (''पलद्वयन्तु प्रसृतिर्मुष्टिरेका पलं स्मृतम्''इति संख्यापरिमाण-धृतवराहपुराणवचनात्। (पाणिर्निकुब्जः प्रसृतिरिति चामरः)। तदर्धमात्रा = तदर्धपरिमाणा, प्रथमा मृत्तिका अपेक्षिता, द्वितीया तृतीया च प्रत्येकं तदर्धा = उक्त प्रसृत्यर्धस्य अर्धा। अर्थात् प्रसृतिचतुर्थांशमितैव (मृत्तिका) परिकीर्त्तिताः=समादिष्टा। ''कल्पतरु -प्रभृतिषु 'तदर्धार्धे'ति पाठो दृश्यते। तेन द्वितीया मृत्तिका अर्धप्रसृत्यर्धा, तृतीया ततोऽप्यर्धेत्यर्थः। परं बहुषु निबन्धेषु तदर्धा परिकीर्तिता इति पाठ उपलभ्यते इति वीरमित्रोदयः।

[ हिन्दी टीका ]

तर्जनी, मध्यमा तथा अनामिका अंगुलियों की तीनो गाँठे जितनी मिट्टी से भर जाय वही प्रमाण (मात्रा) शौच के लिए कहा गया है। किन्तु यह गुदामार्ग को छोड़कर समझना चाहिए, क्योंकि इसके लिए दक्ष ने अन्य ही (मिट्टी की ) मात्रा कही है। जैसे, इसके प्रथम बार के शौच में आधा पसर (आधी अंगुली या एक मूठा), दूसरी तथा तीसरी बार में इसका आधा अर्थात् अजुंलिका चौथा भाग होना चाहिए। यद्यपि कल्पतरु आदि में उद्धृत पाठानुसार आधा पसर पहली बार, उसका आधा दूसरी बार तथा उसका भी आधा तीसरी बार में हो ऐसा अर्थ होता है, परन्तु अधिकतर निबन्धों में मूल पाठानुसार ही पाठ उपलब्ध होने के कारण यही पाठ बहुजनसम्मत है।

[ मूलम् ]

अत्र च लिङ्गे मृत्तिकाद्वयम्, गुदे पञ्च । सप्त[१] वा, वामकरे[२] चतुर्दश विंशतिर्वा[३] त्रिंशद्वा[३], हस्तद्वये चतुर्दश षोडश वा मृत्तिकाः स्मृत्यन्तरे विहिताः, ताश्च लेपानुवृत्तिशङ्कायां बोद्धव्याः। अन्यथा[४] मानवकल्प एव, बहुभिः[५] संवादात्। मानवपक्षेऽपि वामकरपृष्ठे षण् मृत्तिका देयाः, ''षट्पृष्ठतः'' इति हारीतवचनात् ।

[संस्कृत टीका]

अत्रेति। अत्र=पुरीषोत्सर्गसम्बन्धि-शौच प्रकरणे । ननु संख्यायामाधिक्यमन्यत्र दृश्यते। यथा, यमः-

**शिश्ने त्वेका गुदे तिस्रो वामे पाणौ चतुर्दश। इति।**

शंखः-

**मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते ।**
**एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाच्चतुर्दश ॥ इति।**

पैठीनसिः-

**''मृत्तिकां संगृह्य एका लिङ्गे, अपाने पञ्च, एकस्मिन् हस्ते दश, उभयोः सप्त मृत्तिकाः'' इति।**

ब्रह्मपुराणे च-

**द्वे लिङ्गे मृत्तिके देये गुदे सप्त यथाक्रमम् ।**
**त्रिंशद्वा वामहस्ते च तथा देयास्तु मृत्तिकाः ॥**
**द्वयोस्तु षोडशाऽन्यास्तु पुनः सप्त च सर्वदा ।**

इति चेत्, सत्यम्, स्मृत्यन्तरे विहिताश्च ताः मृत्तिकाः अधिकाधिकगन्ध-लेपानुवृत्तौ व्यवस्थित-विकल्पेन बोद्धव्याः।

अन्यथेति। अन्यथा=लेपानुवृत्तिशङ्कायाः अभावे। मानवकल्प एव= मनुप्रदर्शितशौचविधिरेव ग्राह्यः। बहुभिः संवादात्=बहुभिः निबन्धकारैः स्व-स्व-निबन्धग्रन्थे मनुवचनस्यैतस्य कथनात्। किन्तु मानवपक्षेऽपि=

---

**पाठा० (१) च। (२) कर पृष्ठे षट् मृत्तिकाः। (३) द्वात्रिंशद् । (४) तु इत्यधिक (५) क्वचिद् 'भिः' नास्ति । सर्वं ह. पु ।**

[ संस्कृत टीका ]

मृत्तिकेति। मृत्तिकापरिमाणमाह मृत्तिकेत्यादिना। त्रिपर्वी=त्रयाणां, पर्वणाम्=तर्जनीमध्यमाऽनामिकाऽङ्गुलित्रयस्य चरमग्रन्थीनां। (ग्रन्थिर्ना पर्वपरुषी इत्यमरः) । समाहारः (तद्धितार्थोत्तरपदसमाहारे चेति द्विगुसमासे द्विगोरिति ङीप्) तर्जन्याद्यङ्गुलित्रयचरमग्रन्थित्रयम्। यया=मृत्तिकया। पूर्यते=पूर्णा भवति। एतत्परिमाणा मृत्तिका शौचे समादिष्टा=मुनिभिः कथिता। अयञ्च परिमाण-विधिः=मृत्तिकापरिमाणविधानञ्चेदम्। गुदम्=पायुम्। विहाय=त्यक्त्वा । बोद्धव्यः= ज्ञातव्यः। गुदार्थं दक्षेण परिमाणान्तरविधानात्= अन्यपरिमाणस्य कथनात् । तद्यथा-अर्धेत्यादि ।

'गुदे तिस्र' इत्यादि-मनुवचनेन विहित-मृत्तिकात्रये, अर्धप्रसृतिमात्रा = प्रसृतिः पलद्वयम्, ("पलद्वयन्तु प्रसृतिर्मुष्टिरेका पलं स्मृतम्"इति संख्यापरिमाण-धृतवराहपुराणवचनात् । (पाणिर्निकुब्जः प्रसृतिरिति चामरः)। तदर्धमात्रा = तदर्धपरिमाणा, प्रथमा मृत्तिका अपेक्षिता, द्वितीया तृतीया च प्रत्येकं तदर्धा = उक्त प्रसृत्यर्धस्य अर्धा । अर्थात् प्रसृतिचतुर्थांशमितैव (मृत्तिका) परिकीर्त्तिता=समादिष्टा । "कल्पतरु -प्रभृतिषु 'तदर्धार्धे'ति पाठो दृश्यते । तेन द्वितीया मृत्तिका अर्धप्रसृत्यर्धा, तृतीया ततोऽप्यर्धेत्यर्थः। परं बहुषु निबन्धेषु तदर्धा परिकीर्तिता इति पाठ उपलभ्यते इति वीरमित्रोदयः।

[ हिन्दी टीका ]

तर्जनी, मध्यमा तथा अनामिका अंगुलियों की तीनो गाँठे जितनी मिट्टी से भर जाय वही प्रमाण (मात्रा) शौच के लिए कहा गया है। किन्तु यह गुदामार्ग को छोड़कर समझना चाहिए, क्योंकि इसके लिए दक्ष ने अन्य ही (मिट्टी की ) मात्रा कही है। जैसे, इसके प्रथम बार के शौच में आधा पसर (आधी अंगुली या एक मूठा), दूसरी तथा तीसरी बार में इसका आधा अर्थात् अजुंलिका चौथा भाग होना चाहिए । यद्यपि कल्पतरु आदि में उद्धृत पाठानुसार आधा पसर पहली बार, उसका आधा दूसरी बार तथा उसका भी आधा तीसरी बार में हो ऐसा अर्थ होता है, परन्तु अधिकतर निबन्धों में मूल पाठानुसार ही पाठ उपलब्ध होने के कारण यही पाठ बहुजनसम्मत है।

[ मूलम् ]

अत्र च लिङ्गे मृत्तिकाद्वयम्, गुदे पञ्च । सप्त[1] वा, वामकरे[2] चतुर्दश विंशतिर्वा[3] त्रिंशद्वा[3], हस्तद्वये चतुर्दश षोडश वा मृत्तिकाः स्मृत्यन्तरे विहिताः, ताश्च लेपानुवृत्तिशङ्कायां बोद्धव्याः। अन्यथा[4] मानवकल्प एव, बहुभिः[5] संवादात्। मानवपक्षेऽपि वामकरपृष्ठे षण् मृत्तिका देयाः, ''षट्पृष्ठतः'' इति हारीतवचनात् ।

[संस्कृत टीका]

अत्रेति। अत्र=पुरीषोत्सर्गसम्बन्धि-शौच प्रकरणे । ननु संख्यायामाधिक्यमन्यत्र दृश्यते। यथा, यमः-

शिश्ने त्वेका गुदे तिस्रो वामे पाणौ चतुर्दश। इति।

शंखः-

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाच्चतुर्दश ॥ इति।

पैठीनसिः-

''मृत्तिकां संगृह्य एका लिङ्गे, अपाने पञ्च, एकस्मिन् हस्ते दश, उभयोः सप्त मृत्तिकाः'' इति।

ब्रह्मपुराणे च-

द्वे लिङ्गे मृत्तिके देये गुदे सप्त यथाक्रमम् ।
त्रिंशद्वा वामहस्ते च तथा देयास्तु मृत्तिकाः ॥
द्वयोस्तु षोडशाऽन्यास्तु पुनः सप्त च सर्वदा ।

इति चेत्, सत्यम्, स्मृत्यन्तरे विहिताश्च ताः मृत्तिकाः अधिकाधिकगन्ध-लेपानुवृत्तौ व्यवस्थित-विकल्पेन बोद्धव्याः।

अन्यथेति। अन्यथा=लेपानुवृत्तिशङ्कायाः अभावे। मानवकल्प एव= मनुप्रदर्शितशौचविधिरेव ग्राह्यः। बहुभिः संवादात्=बहुभिः निबन्धकारैः स्व-स्व-निबन्धग्रन्थे मनुवचनस्यैतस्य कथनात्। किन्तु मानवपक्षेऽपि=

---

पाठा० (१) च। (२) कर पृष्ठे षट् मृत्तिकाः। (३) द्वात्रिंशद् । (४) तु इत्यधिक (५) क्वचिद् 'भिः' नास्ति । सर्वं ह. पु ।

मनुप्रदर्शितकल्पेऽपि। वामकरपृष्ठे। षण्मृत्तिकाः=षड्वारं जलसहितमृदः दातव्याः, ''षट् पृष्ठतः'' इति हारीतवाक्यैकवाक्यत्वात्।

[ हिन्दी टीका ]

इस मलत्याग सम्बन्धी शौच प्रकरण में अन्य स्मृतियों में जो लिङ्ग में दो बार, मलद्वार में पाँच या सात बार, बाँये हाथ में चौदह, बीस, या तीस बार तथा दोनों हाथों में चौदह या सोलह बार शुद्धि के लिए जलसहित मिट्टी लगाने को कहा गया है वह लेप सम्बन्धी शंका में वैकल्पिक विधान समझना चाहिए। यदि लेप की अनुवृत्ति की शंका न हो तो मनुप्रदर्शित शौचविधि ही ग्राह्य है, क्योंकि बहुत-से निबन्धकारों ने अपने-अपने निबन्धग्रन्थ में इसी मनुवचन को उद्धृत किया है। किन्तु मनुप्रदर्शित विधान में भी षट् पृष्ठतः इस हारीत वचन के साथ एकवाक्यता करने पर अर्थ होता है कि बाँये हाथ के पृष्ठ भाग को छह बार जल सहित मिट्टी से धोयें।

[ मूलम् ]

अत्र यमः-

**तिस्रस्तु मृत्तिकाः देयाः कृत्वा तु नखशोधनम् ।**

हस्तयोरिति[१] शेषः। एवञ्च ''पुनः सप्त च मृत्तिकाः'' इति ब्रह्मपुराणीयं लेपशङ्कायाम्[२] । पुनर्यमः-

**तिस्रस्तु पादयोर्देयाः शुद्धिकामेन[३] नित्यशः ॥**

तिस्र इति प्रतिपादितम् एतच्चा[४] त्यन्तशङ्कायाम् । अन्यथा तु प्रतिपादमेकैका, ''पादयोर्द्वे'' इति ब्रह्मपुराणात् ।

[ संस्कृत टीका ]

अत्रेति। अत्र=शौचे मृत्तिकाग्रहणप्रसङ्गे । तिस्र इति । हस्तयोरिति । हस्तस्य प्रकृतत्वात् हस्तयोरिति शेषः। एवञ्च हस्तयोः नखशोधनन्तु तृणादिना मृत्तिकाऽपसारणेन कृत्वा तिस्रः=वारत्रयम् मृत्तिकाः देयाः। एवञ्च

**द्वात्रिंशद्वामहस्ते च तथा देयास्तु मृत्तिकाः ।**
**द्वयोस्तु षोडशाऽन्यास्तु पुनः सप्त च मृत्तिकाः[५]॥**

पाठ० (१) 'अत्र' इत्यधिकः पाठः। (२) बोधव्यम् इत्यधिकः पाठः क्वचित्। (३) कामस्य। (४) इदञ्चा। (५) क्वचिद् 'भिः' नास्तिः। (६) क्ववचिद् 'तः' नास्ति। सर्व० ह० पु० त० ।

इति श्लोकात्मके ब्रह्मपुराणवचने ''पुनः सप्त च मृत्तिका'' इति, ''षडन्या नखशुद्धौ तु देयाः शौचेप्सुना मृदः'' इति स्मृतिचन्द्रिकाधृतदक्षवचनञ्च लेपानुवृत्तिशङ्कायां बोद्धव्यम् । ब्रह्मपुराणवचने पुनः सप्तचेति नखशोधनादनन्तरमिति श्रीदत्तादय'' इति वीरमित्रोदयः।

पुनर्यम इति। नित्यशः=सर्वदैव। शुद्धिकामेन=शुद्धिं कामयमानेन। तिस्रस्तु=वारत्रयन्तु। मृत्तिकाः देयाः। अत्र तिस्र इति यत् मृत्तिकाविशेषणतया कथितम् तदपि अत्यन्त (लेपगन्ध) शङ्कायां बोद्धव्यम्। अन्यथा=शङ्काया अभावे तु । पादयोर्द्वे = ''पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिना'' इति ब्रह्मपुराण–वचनात्–प्रतिपादमेकैका=एकैकस्मिन्पादे एका एका मृत्तिका दातव्या इत्यत्यथपादप्रक्षालनविषये नित्यकृत्यार्णावोद्धते–छन्दोगाह्निके सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथममिति पारस्करसूत्रात् छन्दोगेतरेषां पूर्वं दक्षिणपादप्रक्षालनं ततो वामपादप्रक्षालनम् । छन्दोगास्तु पूर्वं वामपादस्य ततो दक्षिणपादस्य 'सव्यं पादमवनेनिजे' इति सव्यं पादं प्रक्षालयेत्, 'दक्षिणं पादमवनेनिजे' इति दक्षिणपादं प्रक्षालयेदिति पाद्ये गोभिलदर्शनादि'' ति ग्रन्थकारः (श्रीदत्तः)।

[हिन्दी टीका]

पूर्व रीति से हाथ की शुद्धि कर लेने पर तृण आदि से नहों को शृद्ध कर पुनः जल तथा मिट्टी से तीन बार दोनों हाथों को धोयें। ब्रह्मपुराण के अनुसार जो सात बार मिट्टी देने को कहा गया है (टीका में उद्धृत दक्षवचनानुसार छह बार देने को कहा गया है) वह लेप और गन्ध की शंका में ज्ञातव्य है।

मूल में पुनः उद्धृत यमवचनानुसार ज्ञातव्य है कि सदैव शुद्धि की कामना करने वाले दोनों पैरों को तीन बार मिट्टी देकर धोयें। परन्तु यह भी लेप तथा गन्ध की अत्यन्त शंका में ही है, शंका के अभाव में ब्रह्मपुराण के अनुसार एक एक पैर में एक एक बार मिट्टी देकर धोयें।

नित्य कृत्यार्णव में उद्धृत प्रकृत ग्रन्थकारकृत छन्दोगाह्निक के निर्णयानुसार वाजसनेयी को पहले दहिना पैर धोना चाहिए तो छन्दोग को पहले बायाँ पैर, बाद में दूसरा पैर धोयें।

[ मूलम् ]

मनुः[१] (विष्णुपुराणञ्च)–

**एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।**

**त्रिगुणन्तु वनस्थानां यतीनाञ्च[२] चतुर्गुणम् ॥**

इदन्तु[३] द्वैगुण्यादि संख्यामात्रे, तदनन्तरमेवाभिधानात्[४] ।

**न्यूनाधिकं न कर्तव्यं शौचे[५] शुद्धिमभीप्सता ।**

इति दक्षोक्तं संख्यापरिमाणोभयपरं विशेषाभावात्[६] । एवञ्च

**यावत्साध्विति मन्येत तावच्छौचं विधीयते ।**

**प्रमाणं द्रव्यसंख्यां वा न शिष्टैरुपदिश्यते ॥**

इति देवलवचनं चातुराश्रम्यादन्यत्र, तत्र संख्यादेरश्रवणात् । उदकविषयं वा ''दातव्यमुदकं तावद् यावत्स्यान्मृत्तिकाक्षयः'' इति[७] दक्षेणोक्तत्वात्।

[ संस्कृत टीका ]

एतदिति । एतच्छौचम्=''एका लिङ्गे गुदे तिस्रः'' (५।१३६) यच्छौचमुक्तं तद् गृहस्थानामेव। ब्रह्मचारिणाम् तु द्विगुणम् । वनस्थानाम्=वानप्रस्थानां त्रिगुणम्। यतीनाम्=संन्यासिनां पुनश्चतुर्गुणं बोध्यमितिशेषः । इदन्तु द्वैगुण्यादि= इदञ्च द्विगुणत्वादिकथनम् । संख्यामात्रे= जलसहितमृत्तिकारूप- द्रव्यसंख्या-मात्रविषयकम् । तदनन्तरमेव=संख्या प्रतिपादक-''एका लिङ्गे'' इत्यादि वचनानन्तरमेव । अभिधानात्= मनुना कथनात् । न्यूनाधिकमिति । एतदुत्तरार्धं यथा-''प्रायश्चित्तेन युज्येत विहिताऽतिक्रमे सनि'' इति ।

एवञ्च शौचशुद्धिम्=शौचेन पवित्रताम् अभीप्सता= वाञ्छता। अल्पं बहु वा न कर्तव्यम् । विहिताऽतिक्रमे कृते सति प्रायश्चित्तेन युज्येत । इदञ्च न्यूनाधिकं संख्यापरिमाणोभयविषयम्, विशेषाभावात् = अन्यतरविषय-विशेषमुपक्रम्य कथनाभावात्, अपितु तदुभयमुक्त्वैव दक्षेणाऽभिधानात् । अत एव ''विशेषाभावादिति । दक्षस्मृतौ तत्पूर्वमेकमात्राप्रक्रमादि'' त्याचारादर्श-फक्किका व्याख्याऽपि।

पाठा० (१) 'अत्र' इत्यधिकः पाठः। (२) तु। (३) ञ्च। (४)व वि। (५)चं। (६) विषयं । (७) णाप्यु । सर्वं ह.पु.तः।

एवञ्च विहितसंख्याऽऽदितो न्यूनसंख्याद्यनुष्ठानेन गन्धलेपक्षये जातेऽपि शुध्यर्थं विहितसंख्या पूरणीयैव। विहितसंख्याऽद्यनुष्ठाने कृतेऽपि गन्धलेपानुवृत्तौ अविहितमधिकं न कर्त्तव्यं, द्वितीयार्द्धेन विहिताऽतिक्रमे एव प्रायश्चित्ताभि-धानात्। किन्तु विहिता सैव संख्या आवर्तनीया, मुन्यन्तरोक्ता, तदधिकसंख्या वा पूरणीया, विहितत्वाऽविशेषात्। एवञ्च=दक्षादिवाक्यादुभयोः शुद्धिहेतुत्वेऽवगते च। देवलवचने यावदिति। यावत्कालम् साध्विति= गन्धलेपक्षयो जात इति मन्येत=ज्ञायेत तावत्कालम्। शौचम्=मृज्जलैः क्षालनरूपम्। विधीयते, क्रियते=क्रियेत इति यावत्। शिष्टैरिति कर्त्तृपदमत्राप्यन्वेति। एवमेव शिष्टैः= धीरैः। महाभारतीयं शिष्टलक्षणंयथा शब्दकल्पद्रुमे-

**न पाणिपदचपलो न नेत्रचपलो मुनिः।**
**न च वागङ्गचपल इति शिष्टस्य लक्षणम्॥**

प्रमाणम्=मृत्तिकापरिमाणम्। द्रव्यसंख्या= मृत्तिकासंख्या वा न उपदिश्यते= शिक्ष्यते, कथ्यते इति यावत्। एवञ्च यदिदं देवलवचनं विरुद्धमिव प्रतिभासते, तत् चातुराश्रम्यात्= ब्रह्मचर्यादिचतुराश्रमतः अन्यत्र= अनुपनीतद्विजाद्यर्थमिति भावः। तत्र=चतुराश्रम्यादन्यत्र। संख्याऽऽदेः= मृत्तिका-संख्या-परिमाणोभयनियमस्य। अश्रवणात्=अविधानात्। तथा च, ब्रह्मपुराणम्-

**न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना।**
**गन्धलेपक्षयकरं शौचं तेषां विधीयते॥**

**प्रमाणे शौचसंख्या वा न शिष्टैरुपदिश्यते।**
**यावच्च शौचं मन्येत तावच्छौचं समाचरेत्॥ इति।**

अत्र स्त्री-शूद्रपदमजातोद्वाहाभिप्रायम्, अनुपनीत-द्विजसाहचर्यादिति माधवाचार्यः। उदकविषयंवा=अथवा उदकविषयं देवल-वचनमिदं मन्तव्यम्, दातव्यमुदकं तावद् यावत्स्यान्मृत्तिकाक्षयः इतिदक्षेणोक्तत्वाात्। एतद्वचनार्थस्तु जलदानोत्तरं प्रदत्तमृत्तिकायाः क्षयः=दूरीकरणम्=अपसरणं यावन्न स्यात्तावत्पर्यन्तम्

उदकम्=जलम् मूत्रपुरीषेन्द्रियादौ दातव्यमिति । अतएव-स्त्रीशूद्रानुपनीतैस्तु गन्धलेपक्षयकरमेव शौचं विधेयं, न तु मृत्संख्यानियमस्तेषामि' ति स्वीयच्छन्दोगाह्निके ग्रन्थकारः । अतएव च "आश्रमिणामेव मृत्संख्या-विधानादनाश्रमिविषयम् उदकविषयं वा देवलवचनम् । अतएव "दातव्यमुदकं तावद् यावत्स्यान्मृत्तिकाक्षय" इति दक्षेणाप्युक्तमितिवर्द्धमान-श्रीदत्त-पारिजात-वाचस्पतिमिश्रादय इति वीरमित्रोदयः ।

[हिन्दी टीका]

"एका लिङ्गे" इत्यादि मनुवचन से । लिङ्ग में एक बार, मलद्वार में तीन बार आदि विधि से पहले कहा गया शौच (साधन) गृहस्थों के लिए ही है । किन्तु ब्रह्मचारियों को इसका दुगुना, वानप्रस्थों को तिगुना और सन्यासियों को चौगुना शौच करना चाहिए । ऊपर जो दुगुना आदि कहा गया है, वह शौचार्थ देय मिट्टी की संख्या को समझाने के लिए ही है, क्योंकि सभी मुनियों ने पहले संख्यामात्र का निर्देश करके ही द्विगुण आदि कहा है । परन्तु दक्ष का जो कहना है कि "शौच से शुद्धि चाहनेवाले न्यून अथवा अधिक (घटबढ़) न करें क्योंकि शास्त्रविहित का अतिक्रमण करने पर प्रायाश्चित्त का भागी होगा । यहाँ न्यून-अधिक से मिट्टी की संख्या और परिमाण (इतनापन) दोनों ही लिए जाते है । क्योंकि किसी एक विशेष को न कहकर प्रत्युत इन दोनों के उपक्रम में इस वचन को दक्ष ने कहा है । जबकि दक्ष आदि के वचनों से यह सिद्ध हुआ कि मिट्टी की संख्या और परिमाण दोनों ही शुद्धि के कारण हैं तब देवल का "जबतक गन्ध और लेप दूर न हो जाय तब तक मिट्टी और जल से धोयें किन्तु मिट्टी का परिमाण (इयत्ता) या मिट्टी की संख्या के संबन्ध में शिष्टजनों का कोई निर्देश नही है" यह कथन चारों आश्रमों के बाहर रहने वालों याने अनाश्रमी- अनुपनीत (जिसका उपनयन संस्कार न हुआ हो) द्विज, शूद्र, तथा स्त्रियों के लिए है, ऐसा समझना चाहिए क्योंकि इनके लिए ब्रह्मपुराण के वचनानुसार संख्या आदि नहीं कहा गया है ।

यही विचार अपने 'छन्दोगाह्निक' ग्रन्थ में देवल तथा पैठीनसि के वचनों को उद्धृत करते हुए ग्रन्थकार ने स्पष्ट शब्दों मे कहा है ।

अथवा उक्त देवल का वचन जल के विपय को लेकर कहा गया है ऐसा समझना चाहिए, क्योंकि दक्ष ने कहा है कि जल तब तक देते रहना चाहिए जबतक शौच के लिए दी गई मिट्टी एकदम धुल न जाये ।

[ मूलम् ]

आपस्तम्ब:-

**अह्नि शौचं यथा प्रोक्तं निश्यर्धन्तु तदिष्यते ।**
**पथि पादस्तु विज्ञेय आर्तः कुर्याद् यथाबलम् ॥**

[संस्कृत टीका]

अह्नीति । अह्नि=दिवसे । शौचम्=मृज्जलक्षालनरूपं शौचम् । यथाप्रोक्तम्=येन प्रकारेण यावदुक्तम् । निशि=रात्रौ । तत्=शौचम् । दिवाप्रोक्तस्य अर्धम् । तु= निश्चयेन इष्यते । पथि=मार्गे तु दिवाप्रोक्तस्य चतुर्थांशः विज्ञेयः । रात्रावपि पथि पाद एव, न तु तदर्धम्, तद्विधायकवचनाभावात् । "निश्यर्धमि" त्यनेन यथोक्त-शौचस्यैवार्धविधानात् । अत्रार्द्धत्वम् - संख्यया परिमाणेन च बोध्यम् । परम् "एका लिङ्गे" इत्यत्र तु परिमाणार्द्धमेव ग्राह्यम् । एकसंख्याया अर्धासंभवात्, एकानुष्ठानं विना अर्धानुष्ठानासम्भवाच्च । आर्त्तः=रुग्णादिः । यथाबलम्=स्वशक्त्यनुसारं शौचं कुर्यात् ।

प्रकृतवचनमुपक्रम्य आचारचिन्तामणिस्तु-"सर्वश्चायं यथोक्त-करणाशक्तावेव, न तु निशात्वादि-पुरस्कारेणैव, वाक्यस्या- दृष्टार्थताऽऽपत्तेरि"-त्याह । विण्मूत्रोत्सर्गार्थं प्रवृत्तस्य विण्मूत्रोत्सर्गाभावेऽपि शौचमाह वृद्धपराशर :-

**उपविष्टस्तु विण्मूत्रं कर्तुं यस्तु न विदन्ति ।**
**स कुर्यादर्धशौचन्तु स्वशौचस्य हि सर्वदा ॥ इति**

[हिन्दी टीका]

दिन में जैसा शौच (मिट्टी तथा जल से धोना) कहा है, रात में उसका आधा, रास्ते में उसका भी आधा (दिन का चतुर्थांश) ही । यदि रात में भी रास्ते में हो तथापि चतुर्थांशि ही समझें न कि अष्टमांश क्योंकि इसका प्रतिपादक वचन कोई भी नहीं है । तथा आर्त्त (रोगी आदि) के लिए यथाशक्ति शौच विहित है।

यहाँ प्रकृतवचन के विवेचन प्रसंग पर आचारचिन्तामणि का कहना है कि यह शौच संकोच का प्रदर्शन पूरे शौच को न करने की स्थिति के लिए है ।

मलमूत्रोत्सर्ग के लिए बैठा परन्तु मलमूत्र का त्याग नहीं हुआ तो भी अपने शौच का आधा सभी समय में करना है, ऐसा वृद्धपराशर का कहना है

[ मूलम् ]

ऋष्यऋङ्गः[१]–

यस्मिन् स्थाने कृतं शौचं वारिणा तच्च[२]शोधयेत् ।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥

[संस्कृत टीका]

यस्मिन्निति । यस्मिन् स्थाने=जलाशयप्रान्ते द्वारे वा शौचं कृतम्=हस्तपादादेःशुद्धिः विहिता । तत्स्थानं वारिणा=जलेन शोधयेत्=क्षालयेत् । तत्रत्यां शौचावशिष्टां मृत्तिकामपि शोधयेत्= अपसारयेत्, तदैव शौचकर्त्तुः शुद्धिः नान्यथेतिभावः । "इदं पश्चात्तच्छोधयेत्तीर्थमित्यादित्यपुराणैकवाक्यतया जलाशयशौचपरमिति वदन्ति । श्रीदत्त-मदनरत्नादिषु बहुषु निबन्धेषु तु शौच-सामान्यानन्तरमेवेदं वाक्यं लिखितमि" ति वीरमित्रोदयः ।

[ हिन्दी टीका ]

जिस स्थान (नदी के किनारे या तालाब के पास या दरवाजे आदि) पर हाथ पैर आदि की शुद्धि की हो उस स्थान को जल से पखाल (स्वच्छ कर) दें और शौच कार्य से बची मिट्टी को भी हटा दें, तभी उस व्यक्ति की पूरी शुद्धि होती है । अन्यथा नहीं।

[ मूलम् ]

मूत्रमात्रोत्सर्गे दक्षः-

एका लिङ्गे तु सव्ये त्रिउभयो[३]र्मृदद्वयं स्मृतम् ।

बौधायनः–

मूत्रवद् रेतसः समुत्सर्गे ।

[ संस्कृत टीका ]

मूत्रेति । मूत्रमात्रोत्सर्गे=केवलमूत्रत्यागे । मात्रपदात् पुरीषव्ययच्छेदः । एकेत्यादौमृत्तिकाप्रकरणाल्लभ्यते । सव्ये उभयोरिति च हस्ताभिप्रायेणेति कल्पतरुः । स्पष्टमाह शातातपः–

---

पाठा० (१) 'अत्र' इत्यधिकः पाठः । (२) तत्तु । (३) उभयोर्हस्तयोर्द्वयम् ।

**एकालिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।**

**मूत्रशौचं समाख्यातम् इति ............।**

एवञ्च । एका=जलसहिता मृत्तिका । एकवारं लिङ्गे । सव्ये= वामकरे । तु । त्रिः=वारत्रयम् । उभयोः=करयोः । मृद्वयम्=द्विवारं, मृत्तिका देया एकैकस्मिन् करे एकैकवारमिति भावः ।

बौधायन इति । मूत्रवद्=मूत्रोत्सर्गशौचवत् । रेतसः । शुक्रस्य । समुत्सर्गे = त्यागेऽपि । शौचं कर्तव्यमिति फलितम् ।

[ हिन्दी टीका ]

केवल लघुशङ्का (पेशाव) करने पर लिङ्ग में एकबार बायें हाथ में तीन बार तथा दोनों हाथों में जल सहित मिट्टी देकर शुद्ध करे । बौधायन का कथन है कि मूत्र शौच की तरह शुक्रत्याग में भी शौच होता है ।

[ टिप्पणी ]

अथात्र पादशौचानन्तरं गण्डूषनियममाहआह्निकसूत्रावल्यां प्रयोगपारिजाते च आश्वलायनः –

**कुर्याद् द्वादश गण्डूषान् पुरीषोत्सर्जने द्विजः ।**

**मूत्रे चत्वार एवोक्ता भोजनान्ते च षोडश ॥ इति ।**

गण्डूषनिक्षेपस्थानमाह मार्कण्डेयः –

**पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा ।**

**ऋषयः पृष्ठतः सर्वे वामे गण्डूषमुत्सृजेत् ॥ इति ।**

अनुदकमूत्रपुरीषकरणे प्रायश्चित्तमाहतुः संवर्त्ताङ्गिरसौ-

**कृते मूत्रे पुरीषे वा यदा नैवोदकं भवेत् ।**

**स्नात्वा लब्ध्वौदकं पश्चात्सचैलस्तु विशुध्यति ॥ इति ।**

उदकं लब्ध्वेत्यनेन यथोक्तं शौचमुपलक्षितम् । तेन यथोक्तं शौचं कृत्वा सचैलं स्नात्वा विशुद्ध्यतीत्यर्थः । स्नानाशक्तौ स्नानानुकल्पेनापि विधानं विहितम् ।

[ टिप्पणी हिन्दी ]

यहाँ पैर धो लेने के बाद कुल्ला करने का विधान इस तरह है यथा-मलत्याग के शौच में 12 बार, मूत्र (पेशाब) त्याग करने पर 4 बार और भोजन

के बाद 16 बार गण्डूल (कुल्ला) करना चाहिए और यह कुल्ला अपने से बायें भाग में फेकना चाहिए ।

विना जल के मलमूत्र त्याग करने पर प्रायश्चित्त कहा गया है - मलमूत्र त्याग के बाद यदि जल न मिल सके तो पीछे जल मिलने पर विहित शौच करे। अनन्तर शरीर में लगे सभी वस्त्रों के साथ स्नान करे तभी शुद्ध होता है। स्नान की अशक्ति स्थिति में स्नानानुकल्प से भी विधान का निर्वाह कर लेना चाहिए।

[ मूलम् ]

देवल :-

**धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् ।**
**तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत् ॥**
**प्रकृतिस्थितिरेषा स्यात्कारणादुभयक्रिया ।**

कारणात्=रोगादेः । उभयक्रिया=दक्षिणहस्तेनाधः कायशोधनं वामहस्तेन ऊर्ध्वकायशोधनम् ।

[ संस्कृत टीका ]

धर्मविदिति । धर्मविद्=धर्मज्ञो जनः । अधःशौचे=नाभेरधःकायशुद्धौ । दक्षिणं हस्तं न । योजयेत्=संलगयेत् । तथैव नाभेरूर्ध्वम् । वामहस्तेन न । शोधयेत्= न शुद्धिं विदध्यात् । एषा प्रकृतिस्थितिः=स्वाभाविकी गतिरस्ति, अतः विपरीतं नाचरणीयम् । कारणात्=रोगादेः । उभयक्रिया= दक्षिणहस्ते-नाधः शरीरशोधनम्, वामहस्तेन ऊर्ध्वशरीरशोधनं स्यात् । रोगादिसत्वे आपाततः एतदुभयमुचितमितिभावः ॥

[ हिन्दी टीका ]

धर्मज्ञाताजन नाभि से नीचे भाग की शुद्धि दाहिने हाथ से और (नाभि से) ऊपरी भाग की शुद्धि बायें हाथ से न करें । यही प्रकृति (स्वभाव) की गति है। रोग आदि के होने पर इसके विपरीत भी किए जा सकते हैं ।

[ मूलम् ]

शौचानन्तरं हारीतः-

**गोमयेन मृदा वा कमण्डलुं परिमृज्य पूर्ववदुपस्पृश्याऽदित्यं सोममग्निं वा वीक्षेत'' ।**

अत्र दिवा आदित्यं रात्रौ सोममुभयो[1]रभावेऽग्निमिति बोध्यम् ।

[ संस्कृत टीका ]

गोमयेनेति । गोमयेन, मृदा=मृत्तिकया वा । कमण्डलुं=जलपात्रम् । संशोध्य=प्रक्षाल्य, "साम्भसा गोमयेन मृदा वा तत्कार्यमि" त्याचारचिन्तामणिः । पूर्वोक्ताश्वलायनवचनैकवाक्यतया गण्डूषाणि च कृत्वा । पूर्ववत्=

**उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।**
**अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥**

इत्यङ्गिरोवचनानुसारं मूत्रपुरीषोत्सर्गात् पूर्वं विधेयाऽचमनवत् । उपस्पृश्य= शौचानन्तरमाचम्य, आदित्यम्=दिवासूर्यम् । सोमम् = रात्रौ चन्द्रम्, उभयोरभावे = प्रातः सायं सन्ध्या-समये । कुहेलिकामेघाद्यन्धकारजनित-सूर्य-चन्द्र दर्शनाभावसमये वा । अग्निम्, वीक्षेत = पश्येत् । दिवा आदित्यमग्निं वा रात्रौ सोममग्निं वा पश्येदित्यन्ये ।

[ हिन्दी टीका ]

(जल सहित) गोबर या मिट्टी से जलपात्र को पवित्र कर (तथा कुल्ला कर) मल मूत्र त्याग के पहले जैसे ही इस शौच के बाद भी आचमन करे । अनन्तर दिन हो तो सूर्य, रात हो तो चन्द्रमा और इन दोनों के अभाव में प्रातः सायं संध्या के समय अथवा कुहरा, उमड़े मेघ आदि के कारण सूर्य चन्द्र न दिखने पर अग्नि को देखे ।

यहाँ किसी अन्य का कहना है कि दिन हो तो सूर्य या अग्नि को तथा रात हो तो चन्द्रमा या अग्नि को देखना चाहिए ।

[ मूलम् ]

**ब्रह्मपुराणे: -**

**पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिना ।**
**त्रिराचम्य[2] ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥**

[संस्कृत टीका]

पादयोरिति । सुप्रक्षालितपाणिना = परिमार्जित (विशुद्ध) करेण / पादयोर्द्वे = प्रतिपादमेकैकां मृत्तिकाम् । गृहीत्वा = दत्वा । उभावपि पादौ

---

पाठ० (१) मेतयो । ह.पु. (२ द्विराचम्य ।

विशोध्येत्यर्थः । वचनान्तरबलात् द्वादश, मूत्रत्यागपक्षे चत्वारि च गण्डूषानि कृत्वा, त्रिराचम्य = वारत्रयमाचम्य, सनातनम् = नित्यम्, विष्णुम् = नारायणम् । स्मृत्वा । ततः = तदनन्तरं शुद्धः = शौचकर्त्ता शुचिसम्पन्नो भवेत् । शौचसौलभ्यसम्बन्धे च यथा दक्षः-

**मुधाद्रव्येण शुद्धिः स्यान्न क्लेशो न धनव्ययः ।**
**यस्य शौचेऽपि शैथिल्यन्तस्य चित्तं परीक्षितम् ॥ इति ।**

मुधाद्रव्यम् = सुलभद्रव्यं मृज्जलादिकम् ।

**[ हिन्दी टीका ]**

विधानानुसार दोनों हाथों की शुद्धि कर लेने पर प्रत्येक पैर को एक बार मिट्टी देकर और बाद में जल से पवित्र कर, अन्य वचनानुसार 12 बार या पेशाब के बाद ४ बार कुल्ला कर तथा तीन बार आचमन करे । अनन्तर भगवान् नारायण का स्मरण कर शौचकर्त्ता शुद्ध होता है ।

शौच (शुद्धि) की सुलभता के संबन्ध में दक्षका कटु सत्य रूप से कहना है कि जब मिट्टी जल और भगवत्स्मरण आदि से ही शुद्धि हो जाती है जिसमें न शारीरिक क्लेश और न धनव्यय ही उठाना पड़ता है तो भी यदि कोई इस शुद्धिकरण में आलस्य कर बैठता है तो इसके चित्त की ही परीक्षा हो गई ऐसा समझना चाहिए । अर्थात् समझने में देर नहीं लगेगी कि वह पशुवृत्ति से जीना चाहता है या मानवोचित वृत्ति से ।

**[ मूलम् ]**

अत्र शंखलिखितौ-

**आचम्येशानं मनसा ध्यायेत् ।**

**[ संस्कृत टीका ]**

**अत्रेति** । अत्र=पादप्रक्षालनेन (गण्डूषकरणेन च) शुद्धे सतीत्यर्थः, उद्धृत प्रकृतवचनतः पूर्ववर्त्तिनः "कमण्डलुमुपस्पृश्य प्रक्षाल्य पाणिपादौ च" इति वचनात् । अत्र उपस्पृश्य=परिमृज्येत्यर्थः । आचम्य=आचमनं कृत्वा ईशानम्= महादेवम् ध्यायेत्=चिन्तयेत् ।

"ईशानपदं योगाद् विष्णुपरमिति केचित्, तन्न, रूढेर्योगापसारित्वात्, विष्णुपदेऽपि योगसम्भवाच्चे"ति वीरमित्रोदयः ।

अत्र च द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनमितिंब्रह्मपुराणोक्तम्। शंखलिखिताभ्यान्तु ईशानस्मरणमुक्तम् । तदत्र विकल्प इति केचित् । वस्तुतस्तु समानमूलानुरोधादीशानपदं विष्णुपरम् । शिवपरत्वेऽपि विष्णुस्मरणेन समं समुच्चय एवं युक्तोऽदृष्टार्थत्वादिति छन्दोगाह्निके श्रीदत्तः।

[ हिन्दी टीका ]

पाद शौच आदि से निवृत्त होने पर आचमन कर हृदय से भगवान् शंकर का ध्यान करे । अथवा धर्मार्थ विष्णु स्मरण के साथ शंकर का भी स्मरण करना चाहिए।

[ मूलम् ]

व्यांसः–

शौचं कृत्वा मूत्रोच्चारौ न पश्येत् ।
दृष्ट्वाऽऽदित्यमग्निं सोमं वा पश्येत् ॥

अत्र वसिष्ठेन गोब्राह्मणदर्शनमधिकमुक्तम् ।

[ संस्कृत टीका ]

शौचमिति । शौचं कृत्वा = प्रक्षालनाऽऽदिना शुद्धिं विधाय । मूत्रोच्चारौ = मूत्रं विष्ठां च न पश्येत् । दृष्ट्वा, दिवा सूर्यं, रात्रौ सोमम्, उभयोरभावेऽग्निं पश्येत् । अत्र = शौचप्रकरणे । वसिष्ठेन वासिष्ठ – स्मृत्याम् । गोब्राह्मणयोर्दर्शनं पूर्वोक्तादधिकमुक्तम् । एतयोरपि दर्शनं विधेयमिति भावः ।

[ हिन्दी टीका ]

हाथ पैर धोने आदि से शुद्धि कर लेने पर मूत्र और विष्ठा को न देखे । कदाचित् देखे तो दिन में सूर्य, रात में चन्द्रमा तथा दोनो के अभाव समयों में अग्नि का दर्शन कर लेना चाहिए । इस शौच प्रकरण में वसिष्ठ ने पहले की अपेक्षा गाय और ब्राह्मण का दर्शन कर लेना अधिक कहा है ।

❁ इति शौचप्रकरणम् ❁

# आचमनविधिः

## [ मूलम् ]

अथा ऽचमनविधिः । तत्र देवलः–

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः[१] ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥
शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे ।

एवमेतद्दर्शनात्[२] "प्रत्यक्पादावसेचनमित्यापस्तम्बीयं पश्चिमाऽभिमुखत्वं केवलपादप्रक्षालनविषयम् । तथा

इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः ॥

अथाऽपः प्रथमात्तीर्थाद्दक्षिणात् त्रिःपिबेत्समम् ।
अशब्दमनवस्रावमबहिर्जान्वबुद्बुदम् ॥

आजान्विति अध्वभ्रमणादिना तत्पर्यन्तमशौचे, "आजङ्घाभ्यामि" ति हारीतोक्तेः । प्रथमात् = ब्राह्मात्[३] ।

## [ संस्कृत टीका ]

तत्रेति । तत्र = आचमनविधौ । दैवपित्र्याङ्गाचमनार्थपादप्रक्षालने दिङ्नियममाहाऽचमन-प्रकरणे देवलः प्रथममिति । ततः प्रथमम् = सर्वप्रथमम् शिखाम् = चूडाम् । बद्ध्वा । "शिखां बद्ध्वेति सशिखपुरुषाभिप्रायम्, तेन यस्य सशिखवपनं विहितं, यस्य वा शिखां उच्छिन्ना, तस्य शिखाबन्धनाभावेऽपि न क्षतिः । निर्णिक्ते = केवलजलप्रक्षालिते, शुद्धे इति यावत् । शुभे = अनिषिद्धे, वाससी = वस्त्रे=अधोवसनमुत्तरीयञ्च । 'द्वे' इत्येकमधरीयतयाऽपरमुत्तरीयतयेत्याचारविवेकोऽपि । वसित्वा = परिधाय, वसु आच्छादने इत्यदादेः क्त्वा, तेन "वचिस्वपियजादीनामि" त्यत्र यजादौ भौवादिकस्यैव वसोर्ग्रहणात् सम्प्रसारणाभावः । एतेन यस्यैकवस्त्रत्वमवस्त्रत्वं विहितं तस्य द्विवस्त्रत्वाभावेऽपि न क्षतिः । दैवत्ये = देवसम्बन्धिकार्ये । प्राङ्मुखः उदङ्मुखो वा । पैतृके = पितृसम्बन्धिकार्ये । दक्षिणामुखः । स्थित्वा =

---

पाठा० (१) ज्जलैः । (२) एवञ्चैतत् । (३) प्रतिशब्दातमव्याख्यालेखोऽपि ह.पु.तः ।

आसीनो भूत्वा शनैः = त्वरारहितः सन् । पादौ = चरणौ । प्रक्षालयेत् । अत्र वाजसनेयिना (ब्राह्मणेन) पूर्वं दक्षिणं प्रक्षाल्य सव्यं प्रक्षालनीय-मन्यैस्तद्विपरीतमिति बोध्यम्। तथा च पारस्करः- " सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति । ब्राह्मणश्चेद्दक्षिणं प्रथमम्" इति। अत्र ब्राह्मण-पदेन वाजसनेयी ग्राह्यः । अन्यस्य (सामवेदिनस्तु) सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति गोभिलोक्तेः । एवम् = एवञ्च । एतद्दर्शनात् = प्रकृतदेवलवचनज्ञानात् । प्रत्यक्पादावसेचनम् (प्रत्यक् = पश्चिमाऽभिमुखं यथा भवति तथा, पादाभिसेचनम् = पादप्रक्षालनम् इति आपस्तम्बीयम् = आपस्तम्बवचन-बोधितम् । पश्चिमाभिमुखत्वम् = पश्चिमाभिमुखीभवनम् केवलपादप्रक्षालन-विषयकमेव ज्ञातव्यम् । एवमेव "आचमनानुकूलपादावसेचने च दिशानियमना-त्प्रत्यक्पादावसेचनमित्यापस्तम्बवचनमनारभ्याधीततया केवलपादप्रक्षाल-नपरमवसेयमि" त्याचारविवेकप्रभृतयः । शनैरत्वरमिति शूद्राचारादय इति नित्यकृत्यार्णवे तथापि इत्येवम् = अनेन प्रकारेण । अद्भिः = जलैः । आजानु = ऊरुपर्वपर्यन्तम् (अत्र आङ् मर्यादायाम्) मार्गभ्रमणादिना तत्पर्यन्तमशुचि, धूलिपरमाणुसम्बन्धसम्भवात् । आजङ्घाभ्यामिति हारीत-वचनाच्च । चरणौ = पादौ । पृथक् = एकैकम्, नतु सहैव । आमणि-बन्धाभ्याम् =मणिबन्धः = ब्राह्मतीर्थमूलमित्यपरार्कः । करबाहुसन्धिरिति कल्पतरुः । 'पाणेरूर्ध्वं ' प्रकोष्ठादध इत्याचारविवेकः । पाणिप्रकोष्ठयोः सन्धिरिति वीरमित्रोदयः । "मणिर्बध्यते यत्र । अधिकरणे धञ् । प्रकोष्ठपाण्योः सन्धिस्थानमित्यमरटीकायां भरतः । कलाई इति भाषा । सचकरस्यादिभागः इति शब्दकल्पद्रुमः । तत्पर्यन्तं हस्तौ = करौ च प्रक्षाल्य = परिमृज्य संयतः = इन्द्रियसंयतः । आसीत = उपविशेत् । अत्र संयमनमात्रं विधीयते, आसीनत्वस्य प्राक्सिद्धत्वात् ।

अथ = अनन्तरम् । प्रथमात् = ब्राह्मतीर्थात् । मन्वादिभिराचमनार्ह-तीर्थेषु प्रथमतः ब्राह्मस्यैवाभिधानात् । तीर्थव्यख्यानमिदानीमेवाग्रे स्फुष्टीभविष्यति । दक्षिणात् = दक्षिणकरस्थितात् । इदञ्च तीर्थविशेषणम् , अथवा दक्षिणादित्यत्र करादिति शेषः । समम् = समकालम्, अव्यवधानेनेत्यर्थः । अशब्दम्=पानकाले यथा ताल्वाद्यभिधातजन्यो मुखशब्दो न भवति तथा अनवस्रावम् = पान-काले यथा न स्रवति = च्योतति तथा । अबहिर्जानु = पानकाले जानु यथा

बहिर्न भवति तथा । अबुद्बुदम् = एवम् पानकाले यथा बुद्बुदः नोत्पद्यते तथा । आपः = जलम् । त्रिः = त्रिवारम्, "क्रियाऽभ्यावृत्तिगणने- द्वित्रिचतुर्भ्यः सुच्" (पा० ५/४/१८) इति सुच् प्रत्ययः । एवमग्रेऽपि । पिबेत् । अशब्दमित्यतः सर्वाणि पदानि पिबेदिति क्रियाविशेषणानि सन्ति । अतएव " क्रियाविशेषणानां कर्मत्वं नपुंसकत्वञ्चेत्यनुशासनानुसारं द्वितीयान्तत्वम् ।

हारीतचने "आजङ्घाभ्यामि" त्यत्र 'आङ्' मर्यादाग्राम् । तेन जंघापर्यन्तं पादौ प्रक्षाल्येति हारीतवचनार्थः ।

[ हिन्दी टीका ]

आचमन के पूर्व सर्वप्रथम शिखा बाँधकर, पवित्र तथा अनिषिद्ध दो वस्त्र (कमर के नीचे व ऊपर) धारण कर देव सम्बन्धी कार्य में पूर्व या उत्तर मुँह हो तथा पितृ सम्बन्धी कार्य में दक्षिण मुंह हो धीरे-धीरे अपने दोनों पैर धोये । पारस्कर एवं गोभिल के वचनों के अनुसार वाजसमेयी (यजुर्वेदी) पहले दाहिना पैर, बाद में बायाँ पैर धोये तो छन्दोग (सामवेदी) इसके विपरीत करे ।

देवल के उक्त वचन को देखने के बाद आपस्तम्ब का जो कथन है कि पश्चिम मुंह हो पैर धोये इसका तात्पर्य जहाँ सामान्यतः केवल पैर धोना हो वहाँ के लिए ही समझना चाहिए ।

तथा(द्वितीय-देवल वचन का अर्थ) गली आदि में घूमने आदि के कारण अशुद्ध जंघा से लेकर प्रत्येक पैर तथा मणिबन्ध (कलाई) से लेकर पूरे अग्रिम दोनो हाथ से धोकर तथा आसन पर बैठकर वह आचमनकर्त्ता इन्द्रियसंयत हो जाय ।

इसके बाद आचमन के लिए प्रथमकथित दाहिने हाथ के ब्राह्मतीर्थ से लगातार तीन बार आचमन (सीमित जल का पीना) करे किन्तु आचमन के समय शब्द न हो, जल चूये नहीं, घुटना हाथ के बाहर न हो तथा उस जल में बुलबुले न आवें ।

४४. [ मूल ]

अत्र[१] भविष्यपुराणे[२]-

समौ[३] तु चरणौ कृत्वा तथा[४] बद्धशिखो नृप ।

तथा

घनाऽङ्गुलिकरं कृत्वा एकाग्रः सुमना द्विजः ।

पाठा. (१) त । (२) ब्रह्म । (३) च । (४) तथा, इति, नास्ति, सर्वं ह.पु.तः

नरसिंहपुराणे –

दक्षिणन्तु[1] करं कृत्वा गोकर्णाऽकृतिवत्पुनः ।
त्रिः पिबेद् वीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥

[ संस्कृत टीका ]

अत्रेति । अत्र = आचमनप्रकरणे । समाविति । आचामेदित्यन्वय इत्याचारचिन्तामणिः । बद्धशिखः = बद्धा शिखा येन स बद्धशिखः । समौ चरणौ कृत्वा = अप्रसारितसमस्थितपदयुग्मः, "न चरणौ प्रसार्ये" ति गोभिलवचनात् । तथेति । एकाग्रः = अनन्यमनस्कः । सुमनाः = प्रसन्नचित्तः । द्विजः = कर्मकर्त्ता । घनाङ्गुलिकरम् = घनाः = संहताः, अङ्गुलयः यस्मिन् तथा करम् = दक्षिणहस्तं कृत्वा ।

नरसिंहपुराणे इति । एवमेव, दक्षिणकरम्, गोकर्णाऽकृतिवत् = गोकर्णाऽनुकारिणं कृत्वा, आचमनार्थमत्र स्थितम्, वीक्षितम् = अपद्रव्यनिरासाद्यर्थं विशेषतो निरीक्षितम् । तोयम् =केशकीटाऽदिरहितं जलम् । त्रिः = त्रिवारं पिबेत् =आचामेत् । आस्यम् = मुखम् । द्विः = वारद्वयम् । परिमार्जयेत् =प्रोञ्छेत् ।

गोकर्णाकृतिवत्पुनरित्यत्र पुनर्ग्रहणात् पूर्वंगोकर्णाऽकृतिना हस्तेनोदकं गृहीत्वा ततोऽङ्गुष्ठकनिष्ठे बहिः कृत्वा पुनरपि गोकर्णाऽकृतिं हस्तं कुर्यादिति गम्यते इति एतत्समानार्थकभविष्यपुराणव्याख्यायां हेमाद्रिः ।

[ हिन्दी टीका ]

शिखा बाँधकर, पैर न पसारते हुए अर्थात् समरूप में ही रखकर एवं प्रसन्नचित्त होकर कर्मकर्त्ता अपने दाहिने हाथ से जिसमें अंगुलियाँ सटी हों तथा गाय के कान का आकार बना लिया गया हो, आचमन के जल को अच्छी तरह देखकर तीन बार आचमन करे । बाद में दो बार मार्जन करे (मुंह पोंछ ले) ।

'गोकर्णाकृतिवत् पुनः' यहाँ पुनः पद के उपादान में निबन्धकार हेमाद्रि की व्याख्या है कि पहले तो जल लेने के समय हाथ को गाय के कान के समान करे । जल लेने के बाद उस हाथ से अंगूठे और कनिष्ठ अंगुलि को अलग कर ले तथा पुनः गोकर्णाकार बना ले ।

---

पाठा० (१) च ।

[ मूलम् ]

मनुः -

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।**
**काय-त्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥**

'विप्र' इति आचमनकर्त्तृमात्रोपलक्षणम् । आचमनोद्देश्येन तीर्थाभिधानात्[1] । कायम् = प्राजापत्यत् । त्रैदशिकम् = दैवम् । अत्र सम्भवे ब्राह्मतीर्थेनैवाचमनम्, नित्यकालमिति श्रवणात् । व्रणादिना ब्राह्मतीर्थाऽवरोधे कायत्रैदशिकाभ्यामिति व्यवस्थितो विकल्पः । पित्र्यन्तु सदा निषिद्धम्, न पित्र्येण कदाचनेत्यभिधानात् ।

[ संस्कृत टीका ]

ब्राह्मेणेति । विप्रः = आचमनकर्त्तेति ग्रन्थकारः । अत्र विप्रग्रहणं क्षत्रियवैश्ययोरप्युपलक्षणमिति हेमाद्रिः । विप्रग्रहणमविवक्षितमिति मेधातिथिः । विप्रादिरिति कुल्लूकभट्टः । उक्तहेमाद्रिमतं निरस्य विप्रपदं ब्राह्मणपरमिति वीरमित्रोदयः । "आचारादर्शादिनिबन्धेषु तु विप्र इति आचमनकर्त्तृमात्रोपलक्षणम् । आचमनोद्देश्येन तीर्थविधानादित्युक्तम्, अत्रापि विप्रपदार्थाविवक्षायां युक्तिश्चिन्त्येति पुनरपि स एव । नित्यकालम् = सर्वदा । ब्राह्मेण तीर्थेन । ब्राह्मादितीर्थमनुपदमेववक्ष्यते । कायत्रैदशिकाभ्याम् वा = कः = प्रजापतिस्तदीयं कायम् । 'तस्येदम्' (प्रा० ४/३/१२०) इत्यण्, इकारश्चान्तादेशः वृद्धिश्च । त्रैदशिकम् = दैवम् । ताभ्यां प्राजापत्य-दैवतीर्थाभ्यां वा उपस्पृ शेत् = आचामेत् । अत्र सम्भवे ब्राह्मतीर्थेनैवाचमनं नित्यकालमिति श्रवणात् । व्रणादिना ब्राह्मतीर्थावरोधे कायत्रैदशिकाभ्यामिति व्यवस्थितो विकल्प इति ग्रन्थकारः । शुद्ध्यर्थे कर्माङ्गे नैमित्तिके च सर्वत्राचमने ब्राह्मादि-तीर्थत्रयान्यतमस्य ऐच्छिकविकल्पेन करणत्वेनान्वयः । तुल्यवद् विकल्पश्रवणात् । मेधातिथिस्वरसोऽप्येवमिति वीरमित्रोदयः ।

पित्र्येण तीर्थेन, न कदाचन = न कदाचिदपि आचामेत् । पित्र्यन्तु सदा निषिद्धं, न पित्र्येण कदाचनेत्यभिधानादिति ग्रन्थकारः । अप्रसिद्धत्वादिति कुल्लूकभट्टः । अविधानादेव पित्र्यस्याप्राप्तौ व्रणादिना ब्राह्मादितीर्थ-

पाठा (१) तीर्थ विधानात् । ह.पु. 'पित्र्येण' इति नास्ति ।

विरोधे प्रतिनिधित्वेन प्राप्तेषु तीर्थान्तरेषु पित्र्यस्य निषेधार्थं "न पित्र्येणे" त्युक्तम् । तेन ब्राह्मादितीर्थविरोधे आग्नेयादितीर्थेनाप्याचमनमनुज्ञातं भवतीति वीरमित्रोदयः ।

"ब्राह्मादिसंज्ञेयं शास्त्रे संव्यवहारार्था स्तुत्यर्था च, न तु मुख्यं ब्रह्मदेवताकं सम्भवति, अयागरूपत्वात् । तीर्थशब्दोऽपि पावनगुणयोगादिति कुल्लूकभट्टः ।

सर्वतीर्थावरोधे तु विहितपात्रेणाचमनं कर्त्तव्यम् । स्वयमसामर्थ्ये अन्येन कारणीयम् । गुणलोपे प्रधानलोपानौचित्यादिति वीरमित्रोदयः । व्रणादिना तीर्थत्रयाऽवरोधे तत्तीर्थाभिमुखेन पात्रान्तरेणाचमनं, गत्यन्तराभावादिति आचारविवेकः। शुद्धेरपेक्षिततत्वेन तदुपायेऽनुमीयमाने करणे विशेषबाधे प्रधानमात्रानुष्ठानस्य शास्त्रार्थत्वात् सर्वशक्तिन्यादिति च स एव ।

[हिन्दी टीका]

आचमनकर्त्ता सदा ही ब्राह्मतीर्थ से आचमन करे । घाव आदि के कारण यदि ब्राह्मतीर्थ से आचमन करने की स्थिति न हो तो प्रजापति तीर्थ या दैवतीर्थ से आचमन करे । परन्तु पितृतीर्थ से कभी भी नहीं करना चाहिए ।

ब्राह्म आदि नाम शास्त्र में अच्छी तरह व्यवहार तथा प्रशंसा के लिए दिया गया है । इसी तरह तीर्थ शब्द का प्रयोग भी पवित्रता गुण दिखाने के लिए है, यह ऊपर से समझना चाहिए । (ब्राह्म आदि तीर्थ की व्याख्या मूल के अग्रिम याज्ञवल्क्य वचन से दिखाया जा रहा है ।)

[मूलम्]

याज्ञवल्क्यः-

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।**
**प्रजापति[1] पितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥**

देशिनी = तर्जनी ।

[संस्कृत टीका]

कनिष्ठेति । तीर्थानि वर्ण्यन्ते कनिष्ठेत्यादिना । कनिष्ठायाः । देशिन्याः = तर्जन्याः । अङ्गुष्ठस्य च मूलानि =अधोभागाः । करस्य = पाणेः । अग्रम्

---

पाठा० (१) प्राजापत्य, ह.पु. ।

= अग्रभागश्च, प्रजापतिपितृ-ब्रह्म-देवतीर्थानि । अनुक्रमात् = यथाक्रमं वेदितव्यानि । अर्थात् कनिष्ठामूलम् प्रजापतितीर्थम्, तर्जन्याः मूलम् पितृतीर्थम् । अङ्गुष्ठस्य मूलम् ब्रह्मतीर्थम् । करस्य अग्रभागश्च देवतीर्थमिति विज्ञेयम् । यथा चाह–

मनुरपि–

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ इति ।

अत्र वसिष्ठः–

अङ्गुल्यग्रेषु मानुषे पाणिमध्ये आग्नेयम् इति ।

[ हिन्दी टीका ]

यहाँ तीर्थों का वर्णन किया जाता है । कनिष्ठा, तर्जनी एवम् अंगूठा इन तीनों अंगुलियों का मूल और हाथ का अग्र भाग ये चारों क्रमशः प्रजापति तीर्थ, पितृन्तीर्थ, ब्रह्मतीर्थ तथा देवतीर्थ ज्ञातव्य हैं । अर्थात् कनिष्ठा के मूल में प्रजापति तीर्थ, तर्जनी के मूल में पितृतीर्थ, अंगूठे के मूल में ब्रह्मतीर्थ और हाथ के अग्र में देवतीर्थ होता है।

वसिष्ठवचनानुसार अंगुलियों के अग्रभाग में मानुषतीर्थ तथा हथेली के बीच में आग्नेयतीर्थ होता है, यह ऊपर से समझें ।

[ मूलम् ]

हारीतः–

अन्तरूर्वोर्हस्तौ[1] कृत्वा[2] त्रिरथाऽशब्दे पिबेत् ।

[ संस्कृत टीका ]

अन्तरिति । अथ = आनन्तर्ये । अन्तरूर्वोः = जानुनोर्मध्ये । हस्तौ कृत्वा = उभावपि बाहू कृत्वा । यथाचाह व्यासोऽपि–" बाहू जान्वन्तरा कृत्वा" इति । एतदसम्भवे दक्षिणबाहुमात्रं जानुनोर्मध्ये कृत्वा, "शुचौ देशे आसीनो दक्षिणबाहुं जान्वन्तरा कला" इति आचमन-प्रकरणस्थ-गौतम-बौधायन-वाक्यात् । अतएव "अबहिर्जान्विति देवलनिषेधस्योभयथाऽपि

पाठ (१) अन्तरूर्वोररनी कृत्वा त्रिरपो हार्द पिबेत् । (२) पो / ह.पु.

चरितार्थत्वमित्याचारविवेकः । त्रिः=त्रिवारम् । अशब्दम् = पानकाले यथा शब्दो न भवति तथा । अपः पिबेत् = आचामेदित्यर्थः ।

[ हिन्दी टीका ]

अपने दोनों घुटनों के बीच दोनों हाथों को रखकर या ऐसा सम्भव न हो सके तो दक्षिणबाहु मात्र को मध्य में रख, जिसमें शब्द न हो सके इस तरह तीन बार आचमन करे ।

[ मूलम् ]

याज्ञवल्क्य :-

**अद्भिस्तु प्रकृतिस्थाभिः हीनाभिः फेनबुद्बुदैः ।**
**हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥**
**शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ।**

अन्ततः = ओष्ठप्रान्ततः ।

[ संस्कृत टीका ]

अद्भिरिति । आचमनजलस्वरूपं परिमाणञ्चाह अद्भिरित्यादिना । प्रकृतिस्थाभिः = गन्ध-रूप-रस-स्पर्शान्तरमप्राप्ताभिः । एतच्च वार्षिक-नदीप्रवाहादौ पङ्किलत्वनियमाद्द्रव्यान्तरनिरासस्य शक्यत्वे सतीतिद्रष्टव्य-मित्याचारविवेकः । फेनबुद्बुदैः हीनाभिः = रहिताभिः । "तु" शब्दाद् वर्षधाराऽऽगतानां, शूद्राद्यावर्जितानाञ्च निषेधः । हृत्कण्ठतालुगाभिः, अद्भिः = द्रव्यान्तरासंसृष्टैर्जलैः । यथासंख्यम् = यथाक्रमेण । द्विजातयः = ब्राह्मणक्षत्रियविट्शूद्राः शुध्येरन् । अर्थाद् ब्राह्मणः हृदयगामिनीभिः । क्षत्रियः कण्ठगामिनीभिः । वैश्यः अन्तरास्य-प्रविष्टाभिरद्भिः शुद्धाः भवेयुः । स्त्री च शूद्रश्च, च शब्दादनुपनीतोऽपि । अन्ततः = ओष्ठप्रान्ततः । सकृत् (एकवारमपि) इति वैश्याद् विशेषः, स्पृष्टाभिरद्भिः शुध्येरन् इति भावः ।

"अन्ततः" इत्यस्य व्याख्यायाम् "ओष्ठप्रान्ततः" इति ग्रन्थकारः । एतदाशयवर्णने "श्रोदत्तादयोऽपि उत्तरोत्तरमपकर्षादन्ततः = मुखान्ते = ओष्ठ-प्रदेशे इति यावदिति व्याख्यातवन्त" इति वीरमित्रोदयोऽपि ओष्ठप्रान्तगाभि-(रद्भि)रित्येवव्याख्यातवान् "अन्ततः = ओष्ठप्रान्तेन, ओष्ठप्रान्तेन, उत्तरोत्तमपकर्षात् अन्तशब्दस्य प्रान्तवाचित्वात्तृतीयान्तात् तसिराद्यादावुप

संख्यानादिति नित्यकृत्यार्णवोऽपि । अन्तर्गतेन तालुना इति तु तन्मिताक्षरा । अन्ततः =आस्यान्तरावयवे । अनेनाभक्षणं विवक्षितमिति कल्पतरुः । "शूद्रः स्पृष्टाभिरन्ततः" इति मनु (२।६२) व्याख्यायाम् "अन्ततः इति तृतीयार्थे तसिः । जिह्वौष्ठान्तेनाऽपी"ति कुल्लूकभट्टः । जिह्वाऽग्रेणेति मेधातिथिः । अन्तत इति तृतीयार्थे तसिः । समीपवचनश्चान्तशब्दः । सच सम्बन्ध्यन्तरमपेक्षते । ततश्च यत्र स्थाने वैश्यस्याचमनं विहितं तत्समीपवर्त्तिना स्थानेन दन्तैरेवे"ति हेमाद्रिः । अतएव "तालुगाभिरिति दन्तगाभिरिति हेमाद्रिः । ओष्ठप्रान्तेनेति श्रीदत्त इत्याचारमयूख इति नित्यकृत्यार्णवः ।

हृदयङ्गमानामपां परिमाणमाह उशनाः—

**माषमज्जनमात्राः हृदयङ्गमाः भवन्ति इति ।**

हेमाद्रौ तु हृदयङ्गमादीनां परिमाणमाहेत्यवतार्य एतद्वाक्यस्य- शेषोऽपिलिखितः । यथा, माषमज्जनमात्रा हृदयङ्गमा भवन्ति, तदेकैकपादहान्या कण्ठतालुदन्तगाः ताभिस्त्रैवर्णिकाः स्त्रीशूद्रौ चाचामेरन्नि" ति वीरमित्रोदयः ।

**[ हिन्दी टीका ]**

आचमन का जल प्रकृति (स्वभाव) में स्थित हो अर्थात् दूसरे के गन्ध, रूप, रस. या स्पर्श को प्राप्त न किया हो । फेन (झाग) तथा बुलबुले से रहित हो तथा उसमें दूसरा द्रव्य न मिला हो ।

वचन में 'तु' शब्द के पढ़ने से वर्षा की धारा में आये तथा शूद्र के द्वारा दिये गए जल से आचमन का निषेध अर्थ अभिव्यक्त होता है ।

हृदय तक पहुँचने वाले ऐसे जल के आचमन से ब्राह्मण, कण्ठ तक पहुँचने वाले ऐसे जल के आचमन से क्षत्रिय, तालु तक पहुँचने वाले ऐसे जल के आचमन से वैश्य और स्त्री शूद्र तथा अनुपनीत बालक ये ओष्ठ में एक बार वैसे जल के स्पर्श (रूप आचमन) से भी शुद्ध हो जाते हैं ।

जल की मात्रा के संबन्ध में शास्त्रसम्मति यह है कि जिस जल में पाँच रत्ती भर सोने की मणि या एक ऊरद (माष) डूब जाय वह हृदयगामी होता है । इस का तीन हिस्सा जल कण्ठगामी, आधा जल तालुगामी और चतुर्थांश जल ओष्ठ या दन्तगामी होगा ।

[ मूलम् ]

आपस्तम्बः-

**भूमिगतास्वप्स्वाचम्य प्रयतो भवति । यं वा प्रयतः आचामयेत्[१] ।**

भूमिगतास्वप्स्विति उद्धरणस्थानमपेक्षितम् 'उद्धृत्य[२] परिप्लुताभिरद्भिरिति[२] शङ्खवचनात् ।

[ संस्कृत टीका ]

भूमीति । भूमिगतासु = भूस्थितासु । अप्सु = जलेषु । आचम्य = आचमनं विधाय । प्रयतो भवति = पूतो भवति । (पवित्रः प्रयतः पूत इत्यमरः) ।

प्रायत्यर्थमाचमनं भूमिगतास्वप्सु कर्त्तव्यमिति उज्ज्वलायां हरदत्तः । उद्धृत्य = जलादाच्छिद्य । परिप्लुताभिः = गृहीताभिः । परिपूताभिरिति पाठेतु निरस्ताऽपद्रव्याभिरित्यर्थः । अद्भिः = जलैः । आचमनं कार्यमित्यर्थक "उद्धृत्य परिप्लुताभिरद्भिरिति शङ्ख (लिखित) वचनात् उद्धरणस्थानम् = जलाशयस्थानम् अपेक्षितं भवति । यदा तु पात्रस्थेन जलेनाचामति तदा यं वा प्रयतः इति । प्रयतः परः यं जनं वक्ष्यमाणपात्राद्यावर्जित-जलेन आचामयति सोऽपि प्रयतो भवतीत्यर्थः ।

तथाकथितजलालाभपक्षे देवलः-

**येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका ।**
**तत्र तन्नावमन्तव्यं धर्मस्तत्र हि तादृशः ॥ इति ।**

[ हिन्दी टीका ]

आचमनकर्त्ता भूमि में स्थित जल से आचमन करने से पवित्र होता है ।

एतावता "जलाशय से लिए गये पवित्र जल से आचमन करे" शंख (लिखित) के इस कथनानुसार तथा मूल के 'भूमिगतासु' इस पद से उद्धरण (जलाशय) स्थान आचमन के लिए अपेक्षित होता है ।

जलपात्र स्थित जल से आचमन करने के पक्ष में पवित्र दूसरा व्यक्ति पवित्रपात्रस्थजले से जिसे आचमन कराता है वह भी पवित्र होता है ऐसा समझना चाहिए। किन्तु यथाविहित जल तथा मिट्टी के न मिलने की स्थिति में देवल का

---

पाठा (१) आचामेत् इति मुद्रितपुस्तकपाठः । हस्तलिखिते तु आचमेत् इति (२) उद्धृत परिपूताभि । ताभिरद्भिरितिशङ्खलिखित" इति च ।

कहना है कि जिन देशों में जैसा जल या मिट्टी मिल सके वहाँ उन्हीं से काम चलायें ।

[ मूलम् ]

गौतमः–

**शुचौ देशे आसीनो दक्षिणबाहुं जान्वन्तरा[1] कृत्वा यज्ञोपवीत्या-मणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाऽपः आचामेत् ॥ १ ॥ द्विः[2] परिमृज्येत ॥ २ ॥ पादौ चाभ्युक्षेत् ॥ ३ ॥ खानि चोपस्पृशेत् शीर्षण्यानि च[3]॥ ४ ॥ मूर्धनि च दद्यात्[4] ॥ ५॥**

हृदयस्पृश इति ब्राह्मणपक्षे । चतुर्वेति त्रिराचामतोऽ परितोषपक्षे । एवञ्च चतुर्वेति फलभूमाऽर्थमिति व्याख्यानमशुद्धम्, कल्पनाप्रसङ्गात् । खानि = इन्द्रियाणि । उपस्पृशेदप इत्यन्वीयते । तदुक्तं - गोभिलगृह्ये ''इन्द्रियाण्यद्भिः संस्पृशेत् अक्षिणी नासिके कर्णाविति । मनुरप्याह -'' खानि चैव स्पृशेदद्भिरि'' ति ।

[ संस्कृत टीका ]

शुचाविति । शुचौ देशे = आचमनकाले अनुपहते पवित्रे स्थाने । आसीनः = आसीन इत्युपलक्षणम् तेन तिष्ठन् प्रह्वो वेत्यर्थ : । जान्वन्तरा = जानुनोर्मध्ये, दक्षिणबाहुं कृत्वा । दक्षिणं बाहुमित्युक्तेर्वामहस्तस्य नावश्यम्भवः। यज्ञापवीतीति पूर्वं स्वस्थानस्थमपि यथास्थानर्निवेशनार्थम् अथवा उत्तरीयविन्यासार्थम् । आमणिबन्धात् = यस्मिन् देशे मणिर्बध्यते आ = तस्मात् । पाणी = करौ । प्रक्षाल्य = परिमृज्य । वाग्यतः = शब्दमकुर्वन् । हृदयस्पृशः = यावत्यः पीताः हृदयं स्पृशन्ति । यासु माषो मज्जति तावतीरप आचमेत् । इदञ्च हृदयस्पृश इति ब्राह्मणपक्षे = विप्राभिप्रायेणोक्तम् । तेन क्षत्रियादिनिमित्तमन्यत्र यथानिर्दिष्टमन्यैर्ग्राह्यम् ।

चतुर्वेति त्रिराचामतोऽपरितोषपक्षे अर्थात् भावशुद्ध्यपेक्षया विकल्पः । चतुर्वेत्यैच्छिको विकल्प इति माधवः । यत्र मन्त्रवदाचमनं विहितं तत्र तेन

---

पाठा (१) जान्वतन्तरं । (२) ''द्विः परिमृज्येत'' इति पाठः गौतमप्रणीतधर्मसूत्राणि नामकपुस्तकं दर्शनात् स्थापितः । परं प्रकृतग्रन्थे, नित्यकृत्यार्णवे, वीरमित्रोदयादौ च नोलभ्यते । (३-४) क्वचिदिदं 'च' द्वयं नास्ति ।

सह चतुः, अन्यत्र त्रिरिति विकल्प इति प्रकृत-गौतम-सूत्रस्य हरदत्त-कृता मिताक्षरावृत्तिः। एवञ्च चतुर्वेति फलभूमम् = फलबाहुल्यार्थम्। (बहो र्भाव इत्यर्थे बहुशब्दात् पृथ्वादिभ्य इमनिज्वा (पा.सू. ५/१/१९२२) इतीमनिचि बहोर्लोपो भू च बहोः (६/४/१५८) इति बहोर्भूरादेशे प्रत्ययंकारलोपे च भूमन् शब्दः निष्पद्यते। फलस्य भूमा = फलबहुत्वम् तदर्थमिति यत् केषाञ्चिद् व्यख्यानम् तत् अशुद्धम् = अनादेयम्। कल्पनाप्रसङ्गात् फलाधिक्यबोधक श्रुतिवाक्यान्तरस्य कल्पनाकरणापत्तेः। अतएव "कल्पनाप्रसङ्गादिति फलभूमाबोधक श्रुत्यन्तरस्येत्यादिबोधः" इत्याचारादर्शफक्किकाव्याख्याऽपि। तथाच निराधारकल्पनाया अनादेयतया नेदं मतं समीचीनमिति भावः।

परिमृज्यंत इति। प्रतियोगं सोदकेन दक्षिणपाणिना ओष्ठयोः द्विः परिमार्जनम् विधेयमित्यर्थः ॥ २ ॥

पादौ चाभ्युक्षेत् = चरणौ च सोदकेन पाणिना उपस्पृशेत्। चकाराच्छिरश्चेति मिताक्षरावृत्तौ हरदत्तः। "पादौ चेति चकारात् पूर्वं सव्यपाणेः, उत्तरम् मूर्ध्नोऽभ्युक्षणं समुचितम्, "दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेदि" ति आपस्तम्बवचन-स्वरसादिति वीरमित्रोदयः ॥३॥

शीर्षण्यानि = शीर्षे भवानि = शिरसि जातानीति यावत्। खानि = इन्द्रियाणि। उपस्पृशेत् = अपः संस्पर्शयेत्। इन्द्रियाण्यद्भिः संस्पृशेत्, अक्षिणी नासिके कर्णाविति गोभिलगृह्यवचनेन "खानि चैव स्पृशेदद्भिरि" ति मनुवचनेन चैकवाक्यत्वात्। अत्र चकारः प्रतीन्द्रियोपस्पर्शनार्थ इति हरदत्तः। उपस्पृशेदित्यत्र अप इत्यन्वीयते। उप स्पृशेत्=उपस्पर्शयेत्, अन्तर्भावितण्यर्थः। पारिजाते तु उपस्पर्शयेदित्येव पाठ" इति नित्यकृत्यार्णवः ॥ ४ ॥

मूर्धनि च दद्यात् = चकारान्नाभौ मूर्धनि च सर्वाभिरङ्गुलिभिरुपस्पृशेदित्यर्थ इति हरदत्तः। वस्तुतस्तु-सर्वाभिस्तु शिरःपश्चादिति दक्षवचनैकवाक्यतया दद्यादित्यस्याङ्गुलीरित्यध्यहारो युक्त इति वीरमित्रोदयः। दद्यादित्यस्य अप इति शेष इति हेमाद्रिः ॥ ५ ॥

### [ हिन्दी टीका ]

द्विजाति पवित्र स्थान में बैठकर झुककर या उठकर दोनों घुटनों के बीच दाहिना हाथ रखकर, यज्ञोपवीत को यथा स्थान निवेश कर या उत्तरीय वस्त्र के रूप

में धारण कर, कलाई पर्यन्त आगे से पूरे हाथ को धोकर ब्राह्मण हृदयगामी अर्थात् स्वजाति के अनुसार तत्स्थानगामी जल से तीन या चार बार मौनी हो आचमन करे ।। १ ।। दो बार होठों (ओष्ठों) का मार्जन करे ।। २ ।। अनन्तर दोनो पैर, बायें हाथ तथा शिर पर दाहिने हाथ से जल छिड़के ।। ३ ।। शिर में स्थित इन्द्रिय (दोनों आँखों नाको तथा कानों) का जल सहित हाथ से स्पर्श करे ।। ४ ।। अनन्तर जल सहित सभी अंगुलियों से नाभि तथा मस्तक का स्पर्श करे ।। ५ ।। यहाँ चार बार आचमन कहने का तात्पर्य तीन बार आचमन करने पर संतोप या भावशुद्धि न होने की स्थिति में है । यहाँ निबन्धकार का मत है कि तीन या चार वार का विकल्प ऐच्छिक है । यहीं गौतमधर्मसूत्र पर मिताक्षरावृत्ति निबंधकार हरदत्त का कहना है कि जहाँ मन्त्रों के साथ आचमन कहा गया हो वहाँ चार बार, अन्यत्र तीन बार का विकल्प समझना चाहिए । यहीं किसी अन्य का कहना है कि अधिक फललाभ के लिए चार बार आचमन का विधान किया गया है । परन्तु यह कहना युक्तिहीन है क्योंकि कंवल कपोलकल्पना की आपत्ति हो जायेगी । अर्थात् किसी भी धर्मसूत्र या स्मृतिवचन आदि का आदिम स्रोत वेदवचन होता है। सामान्यतः नित्यकर्म या अवश्य कर्त्तव्य का कोई भी विशेष फल नहीं माना जाता । यदि माना भी जाता है तो यही कि शास्त्रविहित कर्त्तव्य करने से सामान्य धर्म । अब यदि इस सामान्यतः कर्त्तव्य आचमन का जो प्रत्यक्षफल - कर्म करते समय उत्पन्न अन्तः सन्ताप का शमन–(जैसा कि वचन भी हैं आन्तरं खि(स्वि) द्यते यस्मात्तस्मादाचमनं स्मृतम्) मान्य किया गया है । उससे अधिक फल मानने के लिए वैसे वेदवचन की नई कल्पना करने की आवश्यकता हो जायगी, जो अनगलि होगा । हाँ, शिष्टाचार के आधार पर उतने ही वेदवचन का अनुमान किया जा सकता है जिससे इसमें प्रामाणिकता अक्षुण्ण रह सके न कि मनमाने ढंग से अजुल फजुल किसी भी वेदवचन का । अतः अधिक फल लाभ के लिए चार बार आचमन करने का विधान मानना अनुचित और (असंगन होगा ) ।

[ मूलम् ]

दक्ष :–

प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितम् ।
संवृत्या[१]ङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥
संहृत्य[२] तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥

पाठा (१) "सम्मृष्टाङ्गुष्ठमूलेन" इति आह्निकसूत्रावल्यां पाठः । तट्टिप्पण्याञ्च अङ्गुष्ठ मूलेन = निर्लोमप्रदेशेनेत्यर्थः इति ।(२) संहत्य ।

**अङ्गुष्ठाऽनामिकाभ्याञ्च चक्षुः श्रोत्रे पुनः पुनः ।**
**कनिष्ठाऽङ्गुष्ठयोर्नाभि[3] हृदयन्तु तलेन वै ।**
**सर्वाभिश्च शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत् ॥**

तिसृभिः = तर्जनी-मध्यमाऽनामिकाभिः । अत्र घ्राणस्य चक्षुषः श्रोत्रस्य च स्पर्शनं पुटद्वये, तदभि प्रायेण[4] पुनः पुनरिति । बाहुस्पर्शनम् चांसदेशे ।

**[ संस्कृत टीका ]**

प्रक्षाल्येति । हस्तौ पादौ च प्रक्षाल्य । वीक्षितम् = अपद्रव्यनिरसनार्थं विशेषतः निरीक्षितम् । अम्बु = जलम् । त्रिः पिबेत् । मुखं संवृत्येत्यत्र परिमृज्यादित्यन्वयः । उपस्पृशेदित्यत्र संवृत्येत्यनुषज्यते । मुखमत्रौष्ठद्वयम् । तद् अलोमक-प्रदेशे, संवृत्य = सम्मील्य सम्मिलितमिति यावत् अर्थात् सलोमभागे द्विः । अङ्गुष्ठमूलेन = निर्लोमाङ्गुष्ठप्रदेशेन । प्रमृज्यात् = सम्मृज्यादित्यर्थः । अतएव "त्रिः प्राश्यापो द्विः प्रमृज्ये" त्यादिच्छन्दोगपरिशिष्टवचनं तट्टीकाकृन्नारायणेनेत्थं व्याख्यातम् - "एवमपो भक्षयित्वा मुखं वारद्वयमूर्ध्वं सलोमकस्थाने मार्जयेत्, नत्वलोमके, पुराचमनेऽनवस्थाप्रसङ्गात् । तथाच वसिष्ठः (परिशिष्टञ्च) -"आचान्तः पुनराचामेद् वासश्च परिधायौष्ठौ संस्पृश्य यत्रालोमकावि" ति । एवमेवाचारचिन्तामणि-रत्नाकरादीनामपि विवेचनं बोध्यम् एवमेव च "त्रिराचामेद् द्विः परिमृजीत" इति गोभिलगृह्यवचनांश-(११५) व्याख्यायां बख्शी मुकुन्दशर्माणोऽपि ।

संहृत्य = परस्परं संयोज्य । तिसृभिः = तर्जनीमध्यमाऽनामिकाभिरङ्गुलिभिः, "मध्यमाभिः मुखं नित्यं संस्पृशेत् कुरुनन्दन !" इति भविष्य- पुराणैकवाक्यत्वात् । पूर्वम् =प्रथमतः । एवमास्यम् = संवृतमुखम् । उपस्पृशेत् = उप = समीपे स्पृशेत् । अत्र "अक्षिणी नासिके कर्णाविति गोभिलगृह्यसूत्रव्याख्यायां प्रकृत दक्षवचनस्थमुपस्पृशेदिति प्रतीकमुपादाय -"उपस्पृशेत् ओष्ठौ । तदेतद् भोक्ष्यमाणविषयम् । तथा आपस्तम्ब :- "भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेद्द्विः परिमृजेत् सकृदुपस्पृशेत्" इति । एतच्च अङ्गुलित्रयेणेत्याचारचिन्तामणिः । मुखमिति संवृतश्यावान्ताधरोष्ठम् । अत्र प्रमार्जनानन्तरं प्रभूतजलेन दक्षिणहस्तं

(३) नाभिं कनिष्ठामूलेन । नाभिं कनिष्ठाङ्गुष्ठेन । (४) 'णैव' इति ह.पु. ।

प्रक्षाल्य ततः एवम्भूतमेवाऽस्यं मुखमोष्ठौ श्मश्रुतोऽधः श्यावादुपरि द्विरुपस्पृशेदिति स्वीयमृदुला व्याख्यायां-व्याख्याय तट्टिप्पण्याञ्च-तथाचापस्तम्बः त्रिरोष्ठौ परिमृजेद्द्विरित्येकें, सकृदुपस्पृशेत्'' । इति सकृदिति ओष्ठावित्यनुषङ्गः। उपस्पृशेत् = उप-समीपे स्पृशेत् । तेन श्यावोपरि लोमोदयादधः स्पृशेत् । तदेतन्त्रि बन्धेषुव्यक्तमिति व्याख्यातवन्तः मुकुन्दशर्माणः । एतेन द्विः सकृद्वेति विकल्पः सिध्यति ।

''दन्तमूलात्प्रभृति ओष्ठौ । तत्रालोमकः प्रदेशः श्यावः । तस्यान्तः सलोमकः । तत्पर्यन्तावोष्ठावुपस्पृश्याचामेदिति हरदत्तः । श्यावान्तपर्यन्तौ विलोमकाविति कल्पतरुरपि ।

पश्चात्, अङ्गुष्ठेन, प्रदेशिन्या = तर्जन्या च । घ्राणम् = नासापुटद्वयम् । अनन्तरम् अङ्गुष्ठानामिकाभ्याञ्च । चक्षुःश्रोत्रे = चक्षुषोः श्रोत्रयोश्च पुटद्वयम् । पुनः पुनरित्युपादानात् । ''अक्षिणी नासिके कर्णाविति गोभिलवचनाच्च । एतच्च स्पर्शनं दक्षिणवामक्रमेणाऽपिबोध्यम् ।

अत्राङ्गक्रमव्याख्याने-पूर्वमास्यं पश्चाद् घ्राणमनन्तरञ्चक्षुषी पुनः श्रोत्रे पुनः नाभिं संस्पृशेदित्यन्वय इतिकल्पतरुः ।

एवञ्च ''तदभिप्रायेण पुनः पुनरिती'' तिग्रन्थोक्त्या उक्तकल्पतरुः कटाक्षितः, घ्राणयोः चक्षुषोः श्रोत्रयोश्च पुनः स्पर्शः इति व्याख्यान्तरमपि च निरस्तम् । अत्र सर्वेषामिन्द्रियाणां नाभेश्च स्पर्शः सजलाभ्यां तत्तदङ्गुलिभ्यां कार्यः, इन्द्रियाण्यद्भिः संस्पृशेदिति गोभिलसूत्रात् । ''खानि चोपस्पृशेदद्भिरि''ति मनुवचनाच्च । तलेन = सजलेन पाणितलेन । हृदयम् = वक्षः स्थलम् । ''सजलेन हृदयञ्चैव स्पृशेत्पाणितलेन तु'' इति शङ्खवचनात् ।

''खान्यद्भिः मूर्धानं हृदयञ्च स्पृशेतदि''ति विष्णुवचनाच्च ।

अग्रेण = अङ्गुल्यग्रेण । बाहू = अंसप्रदेशौ । अंसौ स्पृष्ट्वा कराग्रेणेति वैयाघ्रपादवचनात् । सर्वाभिः = प्रकरणादङ्गुलिभिः सजलाभिरेव, उक्त-विष्णुवाक्यात् । पश्चात् शिरः संस्पृशेत् ।

अत्र फलश्रुतौ शङ्खः-

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम ॥ १ ॥

गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ २ ॥

स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ ॥ ३ ॥

स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वदेवताः ।
नाभेः संस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः ॥ ४ ॥

संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ।
मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥ ५ ॥

पुरुषः परमात्मेति रत्नाकराचार-चिन्तामणी इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

हाथ-पैर धोकर अच्छी तरह परीक्षित जल से तीन बार आचमन करे । अनन्तर दोनों ओठों के मिलाने से संकुचित कर लोमवाले प्रदेश में दो बार मार्जन करे क्योंकि वसिष्ठ आदि मुनियों के वचनानुसार निर्लोम ओष्ट प्रदेश के स्पर्श से पुनः आचमन का विधान किया गया है । इस तरह इग्म ( निर्लोम) प्रदेश का मार्जन हो तो पुनः आचमन की आपत्ति हो जायेगी और सहैव अनवस्थापात भी हो जायेगा । अनन्तर सर्वप्रथम तर्जनी, मध्यमा और अनामिका इन तीनों अंगुलियों को सटाकर मुंह सलोम प्रदेश का स्पर्श करें । पश्चात् अंगुष्ठ और तर्जनी से नाक के दोनों पूड़े को, अनन्तर अंगुष्ठ और अनामिका से दोनों नाक, दोनो आंख तथा दोनों कानों के पुटों का स्पर्श करे । बाद में कनीनिका और अंगुष्ठ से नाभि का, हाथ के तलभाग से हृदय (छाती) का, अंगुलियों के अग्रभाग से दोनों कंधों का, अन्त में सभी अंगुलियों से शिर का स्पर्श करे । यहाँ ध्यान रखना है कि मुंह के स्पर्श को छोड़कर अन्य सभी स्पर्श भींगे अंगुलि तथा हाथ आदि से हो । एवं गोभिल गृह्यकी मृदुला व्याख्याऽनुसार ये क्रियाएँ भोजन से पूर्व के लिए हैं ।

इसकी फलश्रुति में शंख ने कहा है :- आचमन में तीन बार जो जल पिया जाता है उससे ब्रह्मा विष्णु और महेश ये त्रिदेव तृप्त होते हैं । दो बार के मार्जन से गंगा और यमुना तृप्त होती हैं । नाक के दोनों पूड़ों के स्पर्श से स्ववैद्य दोनों अश्विनी कुमार, नेत्र के दोनों पूड़ों के स्पर्श से सूर्य और चन्द्रमा कान के दोनों पूड़ों के स्पर्श से वायु और अग्नि दोनों कंधों के स्पर्श से सभी देवता तथा शिर के स्पर्श से पुरुषोत्तम भगवान् तृप्त होते है ।

[ मूलम् ]

तथा च शङ्खः -

तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
अङ्गुष्ठ[1] मध्यमायोगे स्पृशेन्नेत्रद्वयं ततः ॥
अङ्गुष्ठाऽनामिकायाश्च योगेन श्रवणे स्पृशेत् ।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः[2] ॥

[ संस्कृत टीका ]

तर्जन्येति । प्रकारान्तरमाह शङ्खः तर्जन्येति । वचनमिदं सुगममतः संस्कृतव्याख्याऽनपेक्षिता । परमत्र आचमनविध्यनन्तरं देवलः-

रेतोमूत्रशकृन्मोक्षे भोजनेऽध्वपरिश्रमे ।
शौचमेवंविधं प्रोक्तमीषच्चान्यत्र वर्तते ॥ इति ।

एवंविधम् = यथोक्तसकलाङ्गसम्पन्नम् । ईषत् = आचमनमात्रमपि इन्द्रियस्पर्शादिरहितम् । त्वरादिवशादन्यत्र शुद्धये भवतीत्यर्थ इत्याचारचिन्तामणौ वाचस्पतिमिश्राः प्राहुः ।

अन्यत्रेत्युक्तिः वैधकर्मव्यतिरिक्तविषया । तत्र विशिष्य तद्विधानादिति गोभिलगृह्यसूत्रव्याख्यायां मुकुन्दशर्माणः ।

[ हिन्दी टीका ]

यहाँ शंखवचनानुसार दूसरा प्रकार कहा जाता है :-

तर्जनी और अंगूठे के योग से दोनों नासपुट, अंगूठा और मध्यमा के योग से दोनों नेत्र, अंगूठा और अनामिका के योग से दोनों कान तथा कनिष्ठा और अंगूठे के योग से दोनों कंधो का स्पर्श करे ।

यहाँ आचमन विधि के बाद देवल का कहना है कि शुक्र, मूत्र तथा मल-त्याग में भोजन एवं मार्ग की थकावट में उक्त सकलाङ्ग सहित शौच विधि है । इससे अन्यत्र इन्द्रियस्पर्श आदि से रहित आचमनमात्र ही विहित है । शीघ्रता आदि कारणवश अन्यत्र आचमन मात्र शुद्धि के लिए है, ऐसा आचारचिन्तामणि नाम के ग्रन्थ में वाचस्पतिमिश्र ने कहा है ।

---

पाठा० (१) मध्यायोगेन । (२) 'इति' इत्यधिकोऽत्र पाठः ह.पु. ।

किन्तु म०म० मुकुन्द झा की व्याख्या है कि उक्त वचन में स्थित "अन्यत्र" पद वैधकर्म से अतिरिक्त अर्थ का बोधक है । क्योंकि वहाँ (मूत्रपुरीषोत्सर्ग, भोजन आदि स्थल में) विशेषकर सकलाङ्ग शौच का विधान किया गया है ।

[ मूलम् ]

**इन्द्रियस्पर्शानन्तरं भविष्यपुराणे-**

**यद् भूमावुदकं वीर ! समुत्सृजति मानवः।**
**वासुकिप्रमुखान्नागांस्तेन प्रीणाति भारत ॥**

[ संस्कृत टीका ]

इन्द्रियेति । इन्द्रियस्पर्शानन्तरम् = इन्द्रियस्पर्शात्परम् । हे वीर ! भारत ! मानवः यद् उदकम् = जलम् भूमौ = पृथिव्याम् । समुत्सृजति = परित्यजति । तेन = जलेन । वासुकिमुख्यान् । नागान् = सर्पान् प्रीणाति = तर्पयति ।

[ हिन्दी टीका ]

इन्द्रियस्पर्श के बाद मनुष्य पृथ्वी पर जो जल गिराता है उससे वासुकी आदि सर्पों को तृप्त करता है ।

[ मूलम् ]

**देवलः—**

**सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा द्विजः ।**
**उष्णीषी वाऽपि नाऽचामेद् वस्त्रेणाऽवेष्ट्य वा शिरः ॥**
**न गच्छन्न शयानश्च न ह्वलन्[1] न परान् स्पृशन् ।**
**न हसन्नैव[2] सञ्जल्पन्नात्मानं नैव वीक्षयन् ॥**
**केशान्नीवीमधःकायमस्पृशन् धरणीमपि ।**
**यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥**

आत्मानम् = हृदयम् । वीक्षयन् इति स्वार्थे णिच् । अधःकायः = नाभ्यपेक्षया।

[ संस्कृत टीका ]

सोपानात्क इति । आचमनकर्तृ-धर्मानाह सोपानत्क इति । द्विजः = द्विजातिः कर्मकर्त्ता वा । सोपानत्कः = उपानहौ प्रसिद्धे, ताभ्यां सह वर्तते

---

पाठा० (१) 'चलन्' इति नित्य कृ.पा. । (२) जल्पन् वाऽत्मा ।

इति सोपानत्कः । जलस्थः = जले स्थितः । मुक्तकेशः = मुक्तशिखः, 'न मुक्तशिखः, न प्रावृतकण्ठः, न वेष्टितशिरा[१]' इति बौधायनवचनात् । उष्णीषी शिरोवेष्टनवान् किरीटवान् वा (उष्णीषं शिरोवेष्टकिरीटयोरित्यमरः)। श्मश्रुदेशेऽपि वेष्टनवानुष्णीषीति हेमाद्रिस्मृतिचन्द्रिकाकारौ । उष्णीषवेष्टनस्याधिकनिन्दार्थं पृथगभिधानमित्यपरे । अत्रोष्णीषं किरीटमिति वीरमित्रोदयः । वस्त्रेण शिरः आवेष्ट्य न आचामेत् । न गच्छन् = न व्रजन् । न शयानः = न शय्यामासीनः, तन्द्रामाकलयन् वा । न परान् स्पृशन् । न हसन् = हास्यं कुर्वन् स्मयमानो वा । न ह्वलन् = कम्पमानः । आत्मानम् = हृदयम् वक्षःस्थलमिति यावत् । वीक्षयन् = पश्यन् । चुरादौ बहुलनिर्देशेन स्वार्थे णिच् प्रत्ययात् । केशान् = भूमिस्थितान् पतितान् वा कचान् । नीवीम् = अधोवस्त्रग्रन्थिम् । अधःकायम् = नाभेरधःप्रदेशम् । धरणीम् = पृथिवीमपि । अस्पृशन्-करेणेतिशेषः, भूयः प्रक्षालयेत्करमित्यग्रे दर्शनात् । अविहितस्पर्शनिषेधोऽयम् । यदि च एतानि केशादीनि स्पृशति, भूयः = पुनः करं प्रक्षालयेत् ।

[हिन्दी टीका]

कर्मकर्त्ता जूता पहन कर, जल में स्थित होकर शिखा खोलकर मुरेठा या पगड़ी बांधकर या मुकुट लगाकर तथा किसी कपड़े से शिर बांधकर आचमन नहीं करें ।

न जाता हुआ, न लेटता हुआ, न कँपता हुआ, न दूसरे का स्पर्श करता हुआ, न हँसता हुआ, न दूसरे को कुछ कहता हुआ, न अपनी छाती (हृदय) को देखता हुआ आचमन करे । केश, कमर, नाभि से निचला भाग तथा पृथ्वी का हाथ से स्पर्श कर आचमन न करे । यदि केशादि में किसी का स्पर्श कर लेता है तो उसे पुनः हाथ धो लेना चाहिए । हाँ, इससे सिद्ध हो जाता है कि आचमन के पहले पृथ्वी का हाथ से स्पर्श करना निषिद्ध होने पर भी चरण स्पर्श निषिद्ध नहीं माना जाता क्योंकि यह तो आचमन का अनुकूल ही होता है ।

[मूलम्]

**व्यास :–**

शिरः प्रावृत्य कण्ठं वा मुक्तकक्षशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

अत्र ब्रह्मपुराणे-

**कण्ठं शिरो वा प्रावृत्य रथ्याऽऽपणगतोऽपि वा ।**

आपणः = क्रयविक्रयभूमिः ।

[ संस्कृत टीका ]

शिर इति । शिरः कण्ठं वा, प्रावृत्य = वस्त्रादिना आवेष्ट्य । मुक्त-कक्षशिखोऽपि वा = कक्षः, कक्षा, कच्छः, कच्छा इति समे समपर्यायाः। परिधानाञ्चले कक्षः इत्यमर मेदिनीकारौ । परिधानवस्त्रस्य पृष्ठतो निहिताञ्चलम् उद्ग्राहिणी कक्षा (कच्छा) इति हेमचन्द्र इति शब्दकल्पद्रुमः। कक्षः (कच्छः) = परिधानावञ्चलम् अथवा परिधानवस्त्रस्य पृष्ठतो निहिताञ्चलञ्च शिखा (चूड़ा) च इति विग्रहे द्वन्द्वसमासे कक्षशिखे । मुक्ते = अबद्धे कक्षशिखे येन यस्य वा स मुक्तकक्षशिखः । पादयोः शौचम् = प्रक्षालनम् । अकृत्वा च । आचाऽन्तोऽपि = कृताऽचमनोऽपि । अशुचिर्भवेत् = शुचिर्न भवेदित्यर्थः ।

ब्रह्मपुराणे इति । "अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" इत्येवास्यापि वचनस्योत्तरार्द्धम् । एतच्च पादशौचं पादाशौचपक्ष एव बोध्यम् । तदैव तस्यावश्यकत्वात् । रथ्या = प्रतोली (रथ्या प्रतोलीत्यमरः, गली इति हिन्दी)। आपणः = क्रयविक्रयभूमिः, तत्र स्थितोऽपीत्यर्थः । अन्यत्सर्वं पूर्ववत्समानमेव ।

[ हिन्दी टीका ]

शिर या कण्ठ को कपड़े से ढककर परिधानवस्त्र (धोती) के आगे एवं पीछे वाले चारों कोनों (अञ्चलों) को बिना पहने, (मिथिली भाषा में साँची और ढेका बिना खोंसनहि । ) शिखा खोलकर तथा दोनों पैर बिना धोये आचमन करने पर भी पवित्र नहीं होता है । फलितार्थ में आचमन के पहले शिर तथा कण्ठ कपड़े से ढके नहीं होने चाहिए । धोती का प्रत्येक कोना (खूँट या लांग) शरीर में संलग्न हो, लटकता हुआ नहीं रहना चाहिए । शिखा बाँधी हो तथा दोनो पैर धुले होने चाहिए तभी आचमन से शुद्धि होती है । हाँ, ऊपर से ज्ञातव्य है कि पैर का धोना पैर की अपवित्रता पक्ष में ही है ।

कण्ठ या शिर को कपड़े आदि से ढक लेने पर गली या दूकान पर भी आचमन करने से शुद्धि नहीं होती है ॥ २ ॥

[ मूलम् ]

प्रचेताः

नानन्तर्वासा:[1] न शब्दं कुर्वन्नामेध्ये ।

अनन्तर्वासाः =[2] अन्तर्वस्त्रशून्यः । अत्र गोभिलः

[3]नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम्[4] ।

[ संस्कृत टीका ]

नानन्तेति । अनन्तर्वासाः = अन्तर्वस्त्रशून्यः = अधोवस्त्ररहितः = नग्न इति यावत् । न शब्दं कुर्वन् = न मुखशब्दं कुर्वन् । आचामेदित्यनुवृत्तौ न मुखशब्दं कुर्यादिति शङ्ख-लिखितैकवाक्यत्वात् । अमेध्ये = मूत्रपुरीषोत्सर्गे कुर्वन् अमेध्यमिति पाठे तु सामान्यतः श्लेष्मादिकं कुर्वन् न आचामेदिति प्रचेतोवचनस्थाग्रिमक्रिययाऽन्वयः । अत्र गोभिल इति । अत्र = आचमन-प्रकरणे । अन्तरीयम् = अधःपरिधानवस्त्रम्, तदेकदेशः = अञ्चलम् । तेन उत्तरीयकं कल्पयित्वा । एकवासाः भूत्वा न आचामेदित्यर्थः ।

[ हिन्दी टीका ]

अधोवस्त्र (धोती साड़ी पायजामा आदि) से रहित (नग्न) होकर, मुंह से शब्द करता हुआ, मलमूत्र कफ आदि (अमेध्य) का त्याग करता हुआ आचमन नहीं करे ।

अधोवस्त्र (धोती आदि) के अञ्चल से उत्तरीय वस्त्र की कल्पना कर आचमन नहीं करना चाहिए ।

[ मूलम् ]

बौधायनः[5] –

दानमाचमनं होमं भोजनं देवताऽर्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृताऽवसक्थिको यश्च प्रौढपादः स उच्यते ॥

---

पाठ० (१) नानन्तर्वासा न निर्वासा नाश्रु कुर्वन्, न चामेध्यम् । (२) आधोवस्त्र / ह.पु. । (३) नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् । (४) ता । (५) सांक्ष्यायनः-ह.पु. ।

[ संस्कृत टीका ]

दानमिति । प्रौढपादः दानादिकं पितृतर्पणान्तमुच्यमानं न कुर्वीतेत्यर्थः । प्रौढपादमाह आसनेत्यादिना । आसनाऽरूढपादः = आसनारूढपादतल : जानुनो र्जङ्घयोः कृतावसक्थिकः = वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः इत्याह्निकतत्वम् । कृतावसक्थिकः = उपवेशनसौकर्य्याय कृतवस्त्रादिवेष्टन इत्याचारादर्शपक्किकाव्याख्या ।

कृतावसक्थिक-शब्दस्य व्युत्पत्तिः यथा च शब्दकल्पद्रुमे - अवसक्थिका = अवरुद्धे सक्थिनी यया बन्धप्रणाल्या सा । वस्त्रादिद्वारा पृष्ठजानुङ्घाद्वयदृढ-बन्धनपूर्वकोपवेशनम् । कृता अवसक्थिका येन स कृतावसक्थिकः । फाँड बान्धिया वसा इति वङ्गभाषा ॥

प्रौढपाद = (प्रौढः पादो यस्य सः) आसनाऽ रोपितपादतलः = वस्त्रादिद्वारा पृष्ठजानु-जङ्घाद्वयदृढबन्धनपूर्वकोपवेष्टा इति यावत् । योगपट्टाऽकृतिना वस्त्रेणाविष्टितजानुद्वयमवस्थानमवसक्थिकेति हेमाद्रिः ।

[ हिन्दी टीका ]

आसन पर पादतल रखकर अंगोछे आदि वस्त्र से पीठ घुटना (जानु) तथा दोनों जांघों को मजबूती से बांधकर अर्थात् फाँड बाँधकर बैठने वाला प्रौढ़पाद कहलाता है । ऐसा प्रौढ़पाद हो कर दान आचमन भोजन देवपूजन वेदाध्ययन तथा पितृतर्पण नहीं करे ।

[ मूलम् ]

हारीतः ( मरीचिश्च )-

न[१] बहिर्जानु न त्वरया नासनस्थो नचोत्थितः ।
न पादुकास्थः नान्यचित्तः[२] शुचिः प्रयतमानसः ॥

तथा,

भुक्त्वाऽऽसनस्थोऽप्याचामेन्नान्यकाले कदाचन ।

[ संस्कृत टीका ]

न बहिरिति । बहिर्जानु = जानुभ्यां बहिर्हस्तौ हस्तो वा यथा न भवेत् तथा कृत्वा किन्तु बाहुं जान्वन्तरा कृत्वैवेति भावः । न त्वरया = शीघ्रतयाऽपि न । नासनस्थः = अपितु भूमिस्थपाद एव, "भूमिष्ठपादोऽनासनस्थ इति

पाठा० (१) न बहिर्जानुः । (२) नाचित्तः ।

प्रयोगप्रकरणीयनित्यकृत्यार्णवलेखात् । नचोत्थितः = अपितु उपविष्ट एव । न पादुकास्थः = उपानत्सहितः, व्यवहार-प्रसिद्ध-काष्ठमयपादुकासहितोऽपि वा न (पादुका पादुपानत्स्त्री इत्यमरः) । नान्यचित्तः=नान्यमनस्कः । शुचिः = शौचेप्सुः । प्रयतमानसः = पवित्रमानसो जन आचामेत् । यथाऽह - याज्ञवल्क्योऽपि-'अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुख' इति ।

आसनस्य निषेधेऽपि, भुक्त्वा= भोजनोत्तरम् आसनस्थोऽपि आचामेत् । अन्यकाले = भोजनाऽन्यसमये । कदाचन = कदाचिदपि आसनस्थो नाचामेदिति भावः ।

[ हिन्दी टीका ]

शौच चाहनेवाले आचमनकर्त्ता को जानुओं (घुटनों) के बाहर हाथकर, जल्द जल्द, आसन पर स्थित होकर, खड़ा होकर, जूता या खड़ाउन पहनकर तथा अन्यमनस्क होकर आचमन नहीं करना चाहिए ।

भोजन के बाद आसन पर बैठकर भी आचमन कर सकते किन्तु इससे अन्य समय में आसनस्थ हो कभी भी आचमन न करे । आसन पर बैठे रहने पर भी पैर भूमि पर रहे तो आचमन में कोई दोष नहीं, यह निष्कर्ष ज्ञातव्य है ।

[ मूलम् ]

**गोभिल :-**

**जानुभ्यामूर्ध्वमाचम्य जले तिष्ठन्न दुष्यति ।**

[ संस्कृत टीका ]

जान्विति । जानुभ्यामूर्ध्वं जले तिष्ठन् आचम्य न दुष्यति, अपितु शुद्ध्यत्येवेति भावः । यथा च विष्णुरपि-

**जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।**
**अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति ॥ इति**

एतेन जान्वोरधस्ताज्जले तिष्ठतः आचमननिषेधाज्जानुमात्रे जले तिष्ठतः आचमनमनुमतं भवतीति प्रतीयते । अतएव जातूकर्ण्यः-

**जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले ।**
**सर्वतः शुचिराचान्तस्तयोस्तु युगपत्स्थितः ॥ इति ।**

तयोः = जलस्थलयोः स्थितः = विद्यमानः सन्नाचान्तः सर्वतः = उभयत्रापि शुचिर्भवतीत्यर्थः ।

[ हिन्दी टीका ]

यदि जल में आचमन करे तो दोनो घुटनों के ऊपर जल में खड़ा होकर आचमन करने से शुद्धि होती है । किन्तु घुटनों से कम जल में नहीं करना चाहिए जैसा कि विष्णु का कहना है कि ऐसे जल में सौ बार भी आचमन करने से शुद्धि नहीं होती है ।

[ मूलम् ]

पैठीनसिः-

अन्तरुदकमाचान्तोऽन्तरेव शुद्धो[१] भवति ।

बहिरुदकमाचान्तो बहिरेव शुद्धो[२] भवति ।

तस्मादन्तरेकं पादं[३] बहिरेकं कृत्वाऽऽचामेत् सर्वत्र शुद्धो भवति ।

[ संस्कृत टीका ]

अन्तरिति । अन्तरुदकम् = जलमध्ये । आचान्तः = कृताऽचमनः । अन्तरेव =जलकृत्येष्वेव । शुद्धः = शुचिर्भवति । तस्मात्, अन्तः = उदकमध्ये । एकं पादम् = चरणमेकम् । बहिः = स्थले च । एकं = पादं, कृत्वा = निधाय आचामेत् । एवं च । सर्वत्र = उभयत्राऽपि, जलकृत्येषु स्थलकृत्येषु चेति यावत् । शुद्धः = शुचिर्भवतीत्यर्थः । यथाच हारीतोऽपि-

जलस्थो वा स्थलस्थो वा द्वयोर्वा समवस्थितः ।
जलस्थो जलकृत्येषु स्थलस्थः स्थलकर्मसु ॥
उभयोस्तूभयस्थस्तु कर्मस्वधिकृतो भवेत् ॥ इति ।

अत्र "अस्य नोत्तरेदनुपस्पृश्येत्यनन्तरं लिखनात्तद्विषयत्वमिति रत्नाकराद्यभिप्राय" इति वचनस्यास्य स्नानप्रकरणीयत्वात्तत्रैवायं नियम इति श्रीदत्तोपाध्याय इत्याचारविवेक इति च नित्यकृत्यार्णवः ।

पाठा (१) शुद्ध्यति । (२) शुद्धःस्यात् । (३) बहिरेकं कृत्वा पादमाचामेत् - ह.पु. ।

[ हिन्दी टीका ]

जल के भीतर आचमन करने से जलकृत्यों के लिए कर्मकर्त्ता पवित्र माना जता है तो स्थल में आचमन करने से स्थलकृत्यों के लिए । अतः एक पैर जल के भीतर तो दूसरा स्थल पर रखकर आचमन करने से दोनों ही कर्मों के लिए पवित्र अधिकारी माना जाता है । (यह मूलवचन का अर्थ हुआ) किन्तु नित्यकृत्यार्णव में उद्धृत रत्नाकर (कर्त्ता म.प. चण्डेश्वर) आदि का अभिप्राय है कि उक्त पैठीनासिवचन को नो त्तरेदनुपस्पृश्य (अर्थात् बिना आचमन किये नदी पार नहीं करना चाहिए) के बाद पढ़े जाने के कारण इसे नदी पार करने से सम्बन्धित समझना चाहिए ।

यहीं आचारविवेक (कर्त्ता म.म. शूलपाणि) के लेखानुसार श्रीदत्तोपाध्याय का मत है कि उक्त पैठीनसि वचन को स्नान प्रकरणीय होने के कारण यह नियम स्नान प्रकरण में ही लागू होगा ।

[ मूलम् ]

**व्यासः—**

अपः पाणिनखाग्रेण आचामेद् यस्तु[1] वै द्विजः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

[ संस्कृत टीका ]

अप इति । यो द्विजः । पाणिनखाग्रेण = करनखाग्रभागेन । अपः=जलम् । आचामेत् (तस्य) तत् = आचमनम् । सुरापानेन = मदिरापानेन । तुल्यम् = समानमिति ऋषिः = मन्त्रद्रष्टा महापुरुषः । अब्रवीत् = अकथत् ।

[ हिन्दी टीका ]

जो द्विज या कर्मकर्त्ता हाथ के नख के अग्र भग से आचमन करता है उसका वह आचमन मदिरापान के समान है ऐसा ऋषियों ने कहा है ।

[ मूलम् ]

**बौधायनः—**

पादप्रक्षालनेनोच्छिष्टेन[2] च नाचामेत् । यद्याचामेत् किञ्चित्तु भूमौ[3] स्रावयित्वाऽऽचामेत्[4] ॥

---

पाठा० (१) वैद्विजः । ब्राह्मणः । (२) (अ) प्रक्षालनेच्छेपेण, (आ) पादप्रक्षालनोच्छिष्टेन । (इ) प्रक्षालनाच्छेपेण । (३) प्लावयित्वा । (४) क्वचित् आचामेत् इति नास्ति ।

[ संस्कृत टीका ]

पादेति । पादप्रक्षालनेन = यत्पात्रस्थोदकेन पादप्रक्षालनं कृतं तदवशिष्टेन, उच्छिष्टेन = पात्रस्थपीतावशेषेण च जलेन नाचामेत् । अन्यस्यानुपलब्धौ च तेनापि यदि आचामेत्तदा भूमौ किञ्चिज्जलं स्रावयित्वा = पातयित्वा आचामेत् ।

[ हिन्दी टीका ]

पैर धोकर या पीकर बचे जल से आचमन न करे । दूसरा जल न मिलने पर यदि करना पड़े तो थोड़ा जल भूमि पर गिराकर किया जा सकता है ।

[ मूलम् ]

आपस्तम्बः –

**नाग्न्युदकशेषेण वृथा कर्माणि कुर्वीताऽऽचामेद्वा । पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् । तथा न वर्षधारास्वाचामेत् । न प्रदरोदकेन[१] तप्ताभिश्चाकारणात् ।**

प्रदरो = विदीर्णभूभागः । अकारणात् = रोगादिव्यक्तिरिक्तेन[२] ।

[ संस्कृत टीका ]

नाग्न्युदकेति । अग्न्युदकशेषेण = अग्निपर्युक्षणाद्यर्थोपात्तोदकशेषेण, वृथा यतोऽतः कर्माणि न कुर्वीतेत्यर्थ इति कल्पतरुः ।

यद्वा अग्निपरिसमूहने परिषेचने च यदुपयुक्तमुदकं तच्छेषेण वृथा कर्माणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत नाचामेच्च । अवृथाकर्मत्वादाचमनस्य पृथक् पुनः प्रतिषेधः इति तद्व्याख्या उज्ज्वला । "अग्न्युदकम् = अग्नि-पर्युक्षणार्थमुदकम् । न कुर्वीतेत्यत्र हेतुः – वृथा, यत इति शेष" इत्याचारादर्शफिक्किकाव्याख्या । वृथेति यत इत्यध्याहाराद्धेतुः । यतो वृथा कर्माणि स्युरिति नित्यकृत्यार्णवः । पाणिसंक्षुब्धेन = पाणिनाऽऽलोडितेन, कुम्भादिगतोदकेन नाचामेदिति भावः । एकपाण्यावर्जितेन = एकः पाणिर्यस्य तेन जनेन । (एकपाणिरन्यएवेति रत्नाकरः । श्रीदत्तादिस्वरसोऽप्येवमेवेति नित्यकृत्यार्णवः) यद् आवर्जितम् =प्रक्षिप्तं, प्रदत्तमिति यावत् तेनोदकेन च नाचामेदित्यर्थः । यथा च भविष्य (कूर्म) पुराणमपि – "नैकहस्ताऽपितजलैरि" ति । वर्षधारासु = वृष्टिधाराजलेषु नाचामेत् । अस्मादेव प्रतिषेधाच्छिक्यादिस्थकरकादेर्या धारा तत्र प्रायत्यर्थमाचमनं न भवतीति केचित् ।

---

पाठ (१) न प्रदरोदकम् । (२) व्यतिरेकेण, ह. पु. ।

यद्यपि 'अभौममम्भो विसृजन्ति मेघाः पूते पवित्रे परमं सुगन्धि' इति हरिवंशवचनेन वर्षधाराजलस्य पवित्रत्वमस्त्येव तथापि वचनसामर्थ्यादाचमने निषेधः इति वीरमित्रोदयः। प्रदरः = स्वयं विदीर्णभूभागः। तत्र स्थितेनोदकेनाऽपि नाचामेदित्यर्थः। न तप्ताभि : = नाग्निभिरिति हलायुधः। युक्तञ्चैतत् अशृताभिरिति शंखसंवादात् इति नित्यकृत्यार्णवः। अकारणात् = रोगादिव्यतिरिक्तेन, रोगादिव्यतिरेकेणेतियावत्। रोगादिकं विना न तप्ताभिराचामेदित्याचार-चिन्तामणिः। एतेन सूत्रे 'तप्ताभिरित्युक्ते शृतशीताभिर्ज्वरिवज्जरादिवशात्तादृशोष्णपायिनामाचमनेऽपि न दोष इति गम्यते।

[हिन्दी टीका]

अग्नि के पर्युक्षण (श्राद्ध होम या पूजन आदि के समय बिना किसी मन्त्रोच्चारण के चारों ओर जल छिड़कना) आदि कार्य में गृहीत जल के शेष से किया गया कर्म निष्फल होता है अतः उससे कर्म नहीं करना चाहिए, यह अर्थ कल्पतरुकार के व्याख्याऽनुसार है। यहीं उज्ज्वला (वृत्ति) कारहरदत्त के अनुसार अर्थ होता है कि अग्नि की परिचर्या परिसमूहन परिषेचन आदि में उपयुक्त (लाये गए) जल के शेष से अदृष्टरूप प्रयोजन से रहित पादप्रक्षालन (पैर धोना) कर्म नहीं करना चाहिए और वैसे जल से आचमन भी न करे।

हाथ से आलोडित (बराबर चलाये गए) जल से तथा एक हाथवाले व्यक्ति के द्वारा (या एक हाथ से ) किसी अन्य व्यक्ति के दिये गए जल से आचमन नहीं करना चाहिए।

इसी तरह वर्षा के जल से, स्वयं फटी हुई पृथ्वी में स्थित जल से तथा रोग आदि कारण न होने पर आग के द्वारा गर्म जल से भी आचमन नहीं करना चाहिए। फलतः रोगी की तरह वृद्धावस्था आदि कारणवश गरम पानी सेवन करनेवालों के लिए गरम जल से आचमन में दोष नहीं है, ऐसा फलितार्थ होता है।

[मूलम्]

अतएव वशिष्ठः-

प्रदरादपि योग्यास्ता गोस्तर्पणाय[1]याः स्युः।
न वर्णरसदुष्टाभिर्याश्च स्युरशुभागमाः॥

अशुभागमाः = अशुचिदेशागताः।

---

पाठाः(१) (अ) प्रदरादपि याः गोस्तर्पणे समर्थाः स्यु। (आ) गोतर्पणाः याः स्युः। (इ) गोस्तर्पण-समर्थाः। (ई) प्रदरादपि यो या गोस्तर्पणाय स्युः इति, कस्यचन पाठः हस्तलिखितपुस्तकात्।

[ संस्कृत टीका ]

अतएवेति । अतएव = न प्रदरोदके इति निषेधशास्त्रस्य सत्त्वादेव अप आचमेदित्यनुवृत्तौ उक्तप्रदराऽपवादमाह वसिष्ठः प्रदरादपीत्यदिना ।

प्रदरादपि = स्वयं विदीर्णभूभागादपि । याः = यत्परिमाणा आपः । गोस्तर्पणाय = गोःपिपासाविच्छेदाय । योग्याः = सर्मथास्युस्ता आचामेत् । वर्णरसदुष्टाभिः = रूपरसान्तरं प्राप्ताभिः । याश्च अशुभागमाः = निन्दितदेशकालागतास्ता अपि न आचामेन् । अत्र नित्यकृत्यार्णवः -वर्णसदुष्टाः = द्रव्यान्तरसंसर्गेण दूषितवर्णरसाः । अशुभागमाः = निन्दितदेशादायान्तीः एता उभयीरपि नाचामेत् । गोतर्पणीस्तु साधीयसीरा चामेदित्याचारचिन्तामणिः । अशुभा आगमा यासान्तास्तथा । अशुभत्वन्निन्दितदेशकालादिनेति रत्नाकरः । युक्तञ्चैतत् -देशवत्कालस्यापिदूषकत्वात् । यथा- दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदक मित्यत्र दशाह इति । "कालस्य निन्दितत्वञ्च रात्र्यादिरूपत्वेन । तथाऽऽह पराशरः -

**अपो रात्रौ न गृह्णीयात् प्रविष्टा वरुणाऽऽलयम् ।**
**आवश्यकेऽथ मन्त्रेण धाम्नो धाम्न इति स्वयम् ॥ इति ।**

आवश्यके = आवश्यककार्ये सतीति वीरमित्रोदयः ।

[ हिन्दी टीका ]

स्वयं विदीर्ण भूभाग के जल निषेध के अपवाद में वसिष्ठ का कहना है कि स्वयं विदीर्ण (अपने आप फटी) भूमि का जल इतना हो कि जिससे एक गाय की प्यास शान्त हो जाय तो उस जल से आचमन हो सकता हे । साथ ही जिस जल में दूसरा रूप या रस आ गया हो, तथा निन्दित स्थान से या रात्रि आदि रूप निन्दत समय में लाया गया हो तो ऐसे निन्दित जल से आचमन नं करना चाहिए । यहाँ पराशर का वचन है कि रात में जलाशय से जल नहीं लेना चाहिए । यदि आवश्यक कार्य आ पड़े तो "धाम्नो धाम्नः" यह मन्त्र पढ़कर लिया जा सकता है ।

[ मूलम् ]

शङ्खलिखितौ (गौतमश्च)-

**न शूद्राऽशुच्येकपाण्यावर्जिताभिः ।**

अत्र अशुचिना एकपाणिना वा परेणाऽवर्जितं जलं निषिद्धम्, शूद्रसाहचर्यात् (तस्य च कर्तृत्वादन्यत्रापि लुप्ततृतीया कर्तृपरैव । अवैषम्यार्थन्तु एकःपाणिर्यस्येति

व्युत्पत्या एकपाणिः पुरुषो नतु एकश्चासौ पाणिश्चेति समासः।)[१] 'मूत्रपुरीषे कुर्वन् दक्षिणहस्ते गृह्णाति, सव्य आचमनीयमि' ति बौधायनेन वामकरे कमण्डलु-धारण-विधानाच्चेति प्रपञ्चितं छन्दोगाह्निके ।

[ संस्कृत टीका ]

न शूद्रेति । अद्भिराचामेदिति शेषः । शूद्रेण । अशुचिना = अस्पृश्य-स्पर्शादिदूंषितेन द्विजेनापि । एकपाणिना = एकः पाणिर्यस्येति व्युत्पत्या (बहुव्रीहिसमासाश्रयणात्) आचमनकर्त्तृहस्ते (एकेन हस्तेन वामहस्तेन वा) जलप्रदात्रा (जनेन) च या आवर्जिताः = प्रक्षिप्ताः प्रदत्ता इतियावत् ताभिरद्भिर्ना चामेदिति उक्तवचनस्य साधारणोऽर्थः ।

प्रपञ्चितं छन्दोगाह्निके इति । ''आचामेदद्भिरित्यनुवृत्तौ - शङ्खलिखितौ न शूद्राऽशुच्येक पाण्यावर्जिताभिः' ।। इति ।अशुचिपदमाचमनकर्तृव्यतिरिक्तपरम्, शूद्रसाहचर्यात् । एवमेकपाणिपदमपि एकः पाणिरस्येति बहुव्रीहेरतिरिक्तपरमेव । तेन स्वयं वामपाण्यावर्जिताऽचमनमनिषिद्धम् । तथसति ''भूमिगतास्वप्स्वाचाम्य प्रयतो भवति । यं वा प्रयत आचामयेत्'' इत्यापस्तम्बविरोध इति चेन्न, प्रयतोपदेशस्य पूर्ववाक्यैकवाक्यतया अप्रयतनिरासपरत्वात् । तेनायर्थः - भूमिष्ठा(ष्ठजला)चमनमप्रयतपराऽन्या (ना) वर्जिताऽचमनञ्च शुद्धिकरम् । तथाच कमण्डल्वधिकारे बौधायनः ''मूत्र-पुरीषे कुर्वन् दक्षिण-हस्तेन गृह्णाति सव्य आचमनीयम्।। इति । आचमनीयम् = आचमनविधिं कुर्वन् सव्ये हस्ते कमण्डलुं गृह्णातीत्यर्थः । एतेनाचमने वामकराऽवर्जितत्वं व्यक्तमुक्तम् । अन्यथाऽ[१] दृष्टार्थापातादि'' तिच्छदोगाह्निकम् ।

[ टिप्पणी ]

अत्र नित्यकृत्यार्णवे तु- उक्तशङ्खलिखितवचनमुद्धृत्य ''अत्राशुचिपद-माचमनकर्तृभिन्नपरम् । शूद्रसाहचर्यात् । एकपाणिपदमपि बहुव्रीहिणा कर्तृव्यतिरिकधर्मिपरमेव । तेन स्वयं वामपाण्यावर्जितमनिषिद्धमेव । अतएव बोधायनोऽपि-'मूत्रपुरीषे कुर्वन् दक्षिणहस्तेन गृह्णाति, सव्य आचमनीयमिति

(१) कोष्ठस्थांयं मूलपाठः हस्तलिखितपुस्तकानुसारं स्थापितः ।

केचित् । तन्न, एकपाणिनेत्यत्रैकश्चसौ पाणिश्चे-तिकर्मधारयो लाघवात् । साहचर्यस्याप्रयोजकत्वात् । न तु शूद्रसाहचर्यात् तस्य कर्त्तृत्वादन्यत्राऽपि तृतीया कर्तृपरैवावैषम्यार्थम्, एकः पाणिर्यस्येति बहुव्रीहेः सर्वजघन्यत्वादिति द्वैतपरिशिष्ट-स्मृतिकौमुद्यौ ।

अत्र सामान्येनैकपाण्यावर्जिताचमननिषेधात् "भूमिगतास्वप्स्वाचम्य प्रयतो भवति । यं वा प्रयत आचामये" दित्यापस्तम्बवचनेन प्रयतपरनियमनाच्च स्वयमेवावर्जितेनाचमनं न शुद्धिहेतुरिति कल्पतरुस्तन्न, कमण्डल्वधिकारे "मूत्रपुरीषे कुर्वन् दक्षिणहस्तेन गृह्णाति, सव्य आचमनीय"मिति बौधायनेनाचमनं कुर्वतो वामकरे कमण्डलुधारणविधानात् । एतन्निषेधस्य एकः पाणि र्यस्या-वर्जनक्रियाऽन्वयीति व्युत्पत्या परैकपाण्यावर्जितविषयत्वात् । अन्यथा बौधायनवचनस्यादृष्टार्थत्वं, तेन सममस्य वा विरोधापत्तेः । 'यं वा प्रयत आचामयेदि' त्यापस्तम्बवचने प्रयतपदस्य न नियमपरत्वं किन्तु अप्रयत-निरासपरत्वं, बौधायनविरोधसमाधानस्यावश्यकत्वात् । एवञ्च "नैकपाण्या-वर्जितेने" त्यापस्तम्बवचने "एकहस्ताऽर्पितैरि"ति भविष्यपुराणवचने च लुप्ततृतीया कर्तृपरैव । नत्वेकश्चासौ पाणिश्चेति व्युत्पत्या समानाधिकरण-तत्पुरुषश्च, कर्तृपरशूद्राशुचिपदाभ्यां करणपरैकपाणिपदस्य द्वन्द्वसमासानुपपत्तेः । तुल्यरूपेणैकक्रियाऽन्वयिपराणामेव पदानामितरेतरयोगाऽनुशासनात् । उक्तयुक्तेरवैषम्यस्यावश्यकत्वात् । वचनानामेकमूलत्वे लाघवात् । व्यवहारोपग्रहाच्च । एवमेव श्रीदत्ताह्निकादय इत्याचारविवेकः । रत्नाकरस्मृतिसारादयोऽप्येवमेव ।

"शूद्रेण, अशुचिना, एकपाणिना वा आवर्जिताभिः = हस्ते दीयमानाभिः। स्वयञ्चाशुचिना एकपाणिनाऽऽवर्जिताभिरद्भिराचमनमविरुद्धमित्याद्याचार-चिन्तामणिरपि ।

स्मृतिसमुच्चयस्तु -"न शूद्राशुच्येकपाण्यावर्जिताभिरि" ति लिखित्वा मूत्रपुरीषे कुर्वन् हस्ते जलं निषिद्धम् नतु धृतकमण्डल्वादिस्थितमपि, मूत्रपुरीषे कुर्वन्" इत्यादि कमण्डलुमधिकृत्य बौधायनोक्तेरिति विशेषमाह । एकश्चासौ पाणिः । एकः पाणि र्यस्य सः तेन एकपाणिरहितदत्तेन जलेन नाचामेत् । एकेत्यत्र पाणिपदं वामहस्तपरं बौधायनस्वरसात् ।

हरिनाथ-निबन्धे तु पाणिविकलपुरुषदत्तेन नाचामेदिति व्याख्यातम् ।

एकपाण्यावर्जित - हस्तनिक्षिप्तजलेन नाचामेदिति हरदत्त इत्याचार-दीपिका'' इति धनुर्धराचार्येणोल्लिखितम् ।

अत्र वीरमित्रोदयस्तु-''अत्र कल्पतरुः - 'न शूद्राशुच्येकपाण्या-वर्जिताभिरि'ति सामान्येनैकपाण्यावर्जितेनाचमननिषेधात्, ''यं वा प्रयत आचामये'' दि त्यापस्तम्बवचनेनावर्जने प्रयतपरनियमनाच्च स्वयमावर्जितेनाचमनं न शुचित्वे हेतुरित्युक्तं भवतीत्याह । अथैवं ''मूत्रपुरीषे कुर्वन् दक्षिणहस्ते गृह्णाति सव्ये आचमनम्'' इति कमण्डल्वधिकारस्थ बौधायनवचनविरोधः । तस्य हि आचमनं कुर्वन् सव्यहस्ते कमण्डलुं गृह्णातीत्यर्थः । तत्कमण्डलुग्रहणञ्च आचमनोपयोगिजलावर्जनरूपदृष्टप्रयोजनार्थम् । अन्यथाऽदृष्टार्थताऽऽपत्तेरिति चेन्न । आपस्तम्बवचनस्वरसात् शुध्यर्थाचमनोदके एव प्रयतपरावर्जितत्वनियमः एकपाण्यावर्जितत्वनिषेधश्च । एतदतिरिक्ताचमनोदके तु स्वीयैकपाण्यावर्तित्वं बौधायनानुमतमिति तदभिप्रायात् । गौडमैथिलादिनिबन्धेषु च शङ्ख-लिखितादिवाक्ये अशुचिपदम् आचमनकर्तृव्यतिरिक्तपरं शूद्रसाहचर्यात् । बौधायनेन सामान्यतः स्वीयपाण्यावर्जितोदकेनाचमनाभ्यनुज्ञानाच्च । अतएवात्रत्यैकपाणिपदम् 'एकपाण्यावर्जितेन नाचामेदि' त्यापस्तम्बसूत्रस्थैक-पाणिपदं चाचमनकर्तृव्यतिरिक्तैकपाणिपरम् । तेनाऽशुचेरपि स्वस्य वामं-पाण्यावर्जवनमप्यविरुद्धम् । तथा चोद्धृतोदकाचमनपक्षे स्वयमशुचिना शुचिना वा वामपाण्यावर्जनं , प्रयतपरोभयपाण्यावर्जनम् , आचमनकर्तृव्यतिरिक्त-शूद्राऽनावर्जनञ्चानुमतमिति शङ्खलिखितगौतमापस्तम्बबौधायनवाक्य-पर्यालोचनयाऽवगम्यते इती''ति प्राह ।

उक्तबौधायनवचनव्याख्या यथा, मूत्रपुरीषे = मूत्रपुरीषोत्सर्गम् । कुर्वन् । दक्षिणहस्ते = सव्येतरकरे । कमण्डलुम् = जलपूर्णपात्रम् । गृह्णाति = गृह्णीयात् । आचमनीयम् = आचमनविधिं कुर्वन् । सव्ये = वामे (हस्ते) (वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणमित्यमरः) । कमण्डलुं गृह्णीयादिति पूर्वेण सम्बन्धः ।

### [ हिन्दी टीका ]

शूद्र, अस्पृश्यस्पर्शादि दोष से दूषित चाहे वह द्विज भी क्यों न हो तथा अन्य व्यक्ति के द्वारा एक हाथ या बायें हाथ से आचमनकर्त्ता के हाथ में दिये जानेवाले जल से आचमन नहीं करना चाहिए । यह प्रकृतवचन का सामान्य अर्थ है ।

यहाँ विशेषतः विवेचनीय विषय ग्रन्थकार के ही संकेतानुसार अपने पूर्व प्रणीत दूसरे ग्रन्थ छन्दोगाह्निक में यों पल्लवित किया गया है कि - प्रकृत वचन में स्थित ''अशुचि'' पद आचमनकर्त्ता से अन्य व्यक्ति परक है। क्योंकि वचन में धर्मिबोधक शूद्र पद उक्त पद के सहैव निर्दिष्ट है। इसी तरह 'एकपाणि' पद भी एकः पाणिर्यस्य' इस व्युत्पत्ति बल से बहुव्रीहिसमास के आधार पर आचमनकर्त्ता से अन्य (व्यक्ति) परक ही है। इससे सिद्ध होता है कि अपने बायें हाथ द्वारा (दाहिने हाथ में) दिये गये जल से आचमन करना निषिद्ध नहीं है।

किन्तु अब ऐसी स्थिति में ''भूमिगतास्वप्स्वाचम्य'' इत्यादि आपस्तम्ब वचन का विरोध हो जाएगा। क्योंकि इस वचन का अर्थ है-'आचमनकर्त्ता भूमि में स्थित जल से आचमन करने से पवित्र होता है तथा जलपात्र स्थिल जल से आचमन करने के पक्ष में पवित्र दूसरा व्यक्ति (पवित्र) पात्रस्थ जल से जिसे आचमन कराता है, वह भी पवित्र हो जाता है। फलतः इस वचनबल पर पात्रस्थ जल से आचमन के पक्ष में पवित्र दूसरे व्यक्ति का नियमन किया जाता है तो (शंखलिखित वचनानुसार) स्वयमेव अपने हाथ से दिये गए जल से आचमन शुद्धिकारी कैसे माना जाय ? विरोध स्पष्ट है। अतः अपने (बायें) हाथ से दिया गया जल शुद्धिकारक नहीं, यही निष्कर्ष होता है। यह मत कल्पतरुकार का है। किन्तु 'इति चेन्न' आदि पदों के द्वारा इस मत के खण्डनार्थ ग्रन्थकार का आगे समाधान है कि पात्रस्थ जल से आचमनपक्षीय ''यं वा प्रयत आचमयेत्'' इस आपस्तम्ब वचन का प्रकृत शंखलिखित वचन के साथ एकवाक्यता करने पर आपस्तम्ब वचन के आचमन कराने वाले दूसरे पवित्र व्यक्ति का तात्पर्यार्थ. ' अपवित्र अन्य व्यक्ति से भिन्न, व्यक्ति माना जायेगा। अब आपस्तम्ब का भावार्थ यह निकला कि भूमि स्थित जल से आचमन तथा अपवित्र अन्य व्यक्ति से भिन्न व्यक्ति द्वारा दिये गए जल से आचमन शुद्धिकारक है। दूसरी बात, कमण्डलु (जलपूर्णपात्र) धारण प्रकरण में बौधायन ने कहा है कि - ''मलमूत्र त्याग के समय दाहिने हाथ में और आचमन के समय बायें हाथ में कमण्डलु रखना चाहिए।'' इससे तो आचमन के लिए अपने वायें हाथ से जल देना स्पष्ट कहा जाता है।

यहाँ इस कमण्डलु ग्रहण का आचमनोपयोगी जल प्रदान रूप दृष्ट प्रयोजन को छोड़कर अदृष्ट (धर्म) फल मानना उपयुक्त नहीं होगा।

[ टिप्पणी हिन्दी ]

यहाँ नित्यकृत्यार्णव में उद्धृत अनेक मतों की चर्चाओं में सर्वप्रथम है द्वैत परिशिष्ट (कार-केशवमिश्र) तथा स्मृतिकौमुदी (कार देवनाथ ठाकुर) का 'केचित्' पद से उक्त श्रीदत्त मत के खण्डन में एवं प्रकारान्तर से पूर्व प्रदर्शित कल्पतरुकार

के मतमण्डन में तर्क है कि उक्त एकपाणि(ना)पद के विग्रह (अर्थ) में एकश्च सौ पाणिश्च' यह कर्मधारय समास ही लाघवात् उचित है। क्योंकि (पूर्व प्रदर्शित) साहचर्य नियम अप्रयोजक (नियामक नहीं) होता है। अतः अशुचि पद या शूद्र पद के साहचर्य से एकपाणिपद को धर्मिपरक मानना ठीक नहीं। इसीतरह शूद्र पद के साहचर्य से शूद्र पद के कर्त्तृत्व बल पर उक्त वचन स्थित या अन्य वचन में भी स्थित 'एकपाणि' पद में वैषम्य की दृष्टि से लुप्त तृतीया को कर्त्तृपरक मानना भी ठीक नहीं। अतः इसे दृष्टि में रखते हुए बहुब्रीहि समास मानना सर्वथा निन्दनीय है।

उक्त दोनों निबन्धों के द्वारा प्रदर्शित खण्डन के खण्डन में तथा श्रीदत्त मत के मण्डन में कल्पतरुखण्डनसम्बन्धी श्रीदत्त के आशय का वर्णन करते हुए आचारविवेक (कार-म.म. शूलपाणि उपाध्याय) का विशेषतः विवेचन है कि "नैकपाण्यावर्जितेन" इस आपस्तम्बन वचन में "नैकहस्तापिर्ततैः" इस भविष्यपुराण वचन में और "न शूद्राशुच्येकपाण्यावर्जिताभिः" इस प्रकृत शंखलिखित वचन में भी निर्दिष्ट लुप्त तृतीया कर्तृपरक ही है, न कि 'एकश्चासौ पाणिश्च' इस व्युत्पत्ति के अनुसार समानाधिकरण तत्पुरुष समास माना जा सकता है क्योंकि प्रकृतवचन में कर्त्तृपरक 'शूद्र' एवम् 'अशुचिं' पद के साथ करणपरक 'एकपाणिपद' का द्वन्द्व समास ही नहीं होगा। (धवखदिरौ छिन्धि के जैसे) समान रूप से एक क्रिया में अन्वयी पदों का ही इतरेतरयोग द्वन्द्व होना शब्दानुशासन शास्त्रसिद्ध है। अतः उक्त युक्ति से अवैषम्य रहना ही आवश्यक है। सकल वचनों में लाघबात् एक ही मूल (आधार या तर्क) मानना ठीक है। साथ ही व्यवहार भी ऐसा ही है। अतएव श्रीदत्तकृत आह्निक (आचारदर्श एवं छन्दोगाह्निक) आदि का भी ऐसा ही कहना है।

म.म. चण्डेश्वर ठाकुर प्रणीत रत्नाकर एवं म.म. हरनिथोपाध्याय प्रणीत 'स्मृतिसार' आदि निबन्धों का भी यही मत है।

आचारचिन्तमणि में म.म. वाचस्पतिमिश्रने भी व्याख्या की है। शूद्र-अशुचि या एकपाणि द्वारा हाथ में दिये गए जल। इससे सिद्ध होता है कि स्वयं शुचि या अशुचि रहने पर भी अपने (बायें) हाथ से दिये गए जल से आचमन विरुद्ध नहीं।

स्मृतिसमुच्चय (कार वीरेश्वर ठाकुर) ने उक्त शंखलिखित बचन लिखकर विशेष रूपमें कहा है कि मलमूत्रत्याग के समय हाथ में लिया गया जल निषिद्ध है, न कि हस्तधृत कमण्डलुस्थित जल भी। क्योंकि बौधायन ने "मूत्रपुरीषे कुर्वन्" इत्यादि वचन से उस समय कमण्डलु धारण का विधान किया है एवं प्रकृत वचन में स्थित एकपाणि पद में बहुव्रीहि समास तथा 'पाणिपद वामहस्तपरक है जैसा कि बौधायन वचन का स्वरस है।

स्मृतिसार (कारहरिनाथोपाध्याय) ने तो एकहस्तविकल पुरुष द्वारा दिये गए जल से आचमन का निषेध कहा है ।

आचारदर्शकी टीका 'आचारदीपिका' में टीकाकार हरिलाल ने एकहस्तप्रदत्त जल से आचमन निषेध माननेवाले हरदत्त मन को उद्धृत किया है ।

ये हैं धनुधराचार्य प्रणीत नित्य कृत्यार्णव में उद्धृत विभिन्न मैथिल निबन्धों के विवेचन ।

किन्तु उक्त खण्डित कल्पतरु मत के समाधान में वीरमित्रोदय का तात्पर्य वर्णन है कि प्रकृत "न शूद्राशुचि" इत्यादि शंखलिखित वचन द्वारा प्रदर्शित एक हाथ से दिये जाने वाले जल का निषेध तथा "यं वा प्रयतः आचमयेत्" इस आपस्तम्ब वचन द्वारा प्रदर्शित विधान शुद्धि के लिए किया जाने वाले आचमन के उपयोगी जल के संबन्ध में ही है । तदतिरिक्त (कर्माङ्ग तथा नैमित्तिक) आचमनोपयोगी जल के लिए तो अपने एक (बायें) हाथ से जल लेने का विधान बौधायन सम्मत है, ऐसा समझना चाहिए ।

प्रकृत वचन के व्याख्या प्रसंग में पुनः वीरमित्रोदय का लेख है कि गौड मैथिल आदि निबन्धों के अनुसार "न शूद्राशुचि" इत्यादि मूल वचन में अशुचि पद का अर्थ है आचमनकर्त्ता से अतिरिक (अशुचि) व्यक्ति, क्योंकि वचन में धर्मिबोधक शूद्र पद के साथ ही अशुचि पद कहा गया है । तथा बौधायन ने समान्यतः अपने बायें हाथ में गृहीत कमण्डलु के द्वारा दिये गए जल से आचमन की आज्ञा दी है । अतएव मूलवचन के 'एक पाणि' पद और "एकपाण्यावर्जितेन नाचामेत्" इस आपस्तम्ब के "एकपाणि" पद का अर्थ है - आचमन कर्त्ता से अन्य वह व्यक्ति जो एक हाथ से आचमन के लिए जल देता हो । इससे सिद्ध हुआ कि स्वयं यदि अशुचि (अपवित्र) भी हो तो अपने बायें हाथ से आचमन के लिए जल लेना विरुद्ध नहीं । निष्कर्ष निकला कि जल पात्र स्थित जल से आचमन के पक्ष में स्वयम् अपवित्र हो या पवित्र किन्तु आचमन के लिए अपने बायें हाथ से जल देना, पवित्र दूसरे व्यक्ति के दोनों हाथों से जल देना तथा आचमन कर्त्ता से अन्य यदि शूद्र हो तो उसका जल न लेना शास्य सम्मत है ।

यह निष्कर्ष शंख-लिखित, गौतम, आपस्तम्ब तथा बौधायन के वचनों के पर्यालोचन से सिद्ध होता है ।

❀ इति आचमनम् ❀

# आचमन-निमित्तानि

[ मूलम् ]

अथाचमननिमित्तानि । तत्र[1] पैठीनसिः–

**उच्छिष्टरेतो-विण्मूत्रं संस्पृश्योन्मृज्याचम्य**

**प्रयतो भवति, त्रिः प्रक्षाल्य तं देशम्[2] ।**

आचमनप्रक्षालनयोरर्थक्रमेण[3] पाठक्रमबाधः ।

[ संस्कृत टीका ]

तत्रेति । तत्र = आचमन-निमित्तेषु । उच्छिष्टेति । उच्छिष्टम् = भुक्ताऽवशिष्टम्, रेतः = शुक्रम्, विट् = विष्ठा मूत्रञ्चेत्येषां समाहारद्वन्द्वः । तेनात्रैकवचनम् । संस्पृश्य = स्पृष्ट्वा । तं देशम् = तत्संस्पृष्टशरीरभागम् । त्रिः = त्रिवारम् । प्रक्षाल्य = जलेन संप्रोञ्छ्य । आचम्य = आचमनं विधाय । अत्र मूले यद्यपि आचम्येति पाठानन्तरं त्रिः प्रक्षाल्येति पाठो दृश्यते तथाऽपि 'पाठक्रमादर्थक्रमो बलीयानि'ति सिद्धान्तात् पूर्वं प्रक्षाल्य अनन्तरम् आचम्य इति रूपेण बोधो भवति । एषैव स्थितिः उन्मृज्याचम्येत्यत्राऽपि विद्यते । "त्रिः प्राश्याऽपो द्विरुन्मृज्य मुखम्" इति कात्यायवचनेन, "त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्" इति मनुवचनेन च आचमनोत्तरमेव मार्जनदर्शनात् । एवञ्च आचमनोत्तरमुन्मृज्य = मुखं परिमार्ज्य । प्रयतः = पूतो भवति । एवमेवान्यत्र "वृद्धिरादैजि"ति (१।१।१।) पाणिनीय-प्रथमसूत्रेऽपि भट्टोजिदीक्षितकृत -"आदैच्च वृद्धिसंज्ञः स्यादिति वृत्त्यनुसारं पाठक्रमादर्थक्रमस्य बलवत्त्वं बोध्यम् ।

[ हिन्दी टीका ]

जूठा अन्न या जल, वीर्य, विष्ठा तथा मूत्र का स्पर्श हो जाने पर स्पर्श हुए अंग को पानी से तीन बार साफ करें । अनन्तर आचमन तथा मुख का मार्जन करने पर पवित्र होता है ।

---

पाठा० (१) छ. पुस्तके तत्रेति पाठो नास्ति । एवमेव (२) प्रदेशम्, (३) 'रानुक्रमेण' इति च पाठभेदः ।

[ मूलम् ]

मनुः–

वसाशुक्रमसृङ्मज्जामूत्रविट्[१]कर्णविन्नखाः ।
श्लेष्माश्रुदूषिकास्वेदा द्वादशैते नृणां मलाः ॥

[ संस्कृत टीका ]

वसेति । वसा = कायस्नेहः । शुक्रम् = वीर्यम् । असृक् = रक्तम् । मज्जा = शिरोमध्ये पिण्डितः स्नेहः । विट् = विष्ठा । कर्णविट् = कर्णमलः । दूषिका = नेत्रमलमिति स्मृतिसमुच्चयः । स्वेदः = श्रमादिना देहनिस्सृतं जलम्, इति वसादयो द्वादश नराणां देहसम्बन्धिनो मलाः भवन्ति। "अत्र नृपदं रूढ्या मनुष्यमात्रपरम् । न तु "नृ गतावि" ति धात्वनुसारात् प्राणिमात्रपरम्, रूढेर्बलवत्वात् । अतएव

ददर्श च वने तस्मिन् महतः सञ्चयान् कृतान् ।
मृगाणां महिषाणाञ्च करीषान् वह्निकारणात् ॥

इति रामायणे मुनीनां महिषादिपुरीषसंग्रहः । इति वीरमित्रोदयः ।

"मूत्रविट् घ्राणकर्णविट्" इति कुल्लूकभट्टानुसारी पाठः । तेनात्र नखस्थाने घ्राणविट् भवतीति विशेषः ।

[ हिन्दी टीका ]

चर्बी, वीर्य, शोणित (लहू), मज्जा (सिर की हड्डी के भीतर रहने वाला तरल पदार्थ), पेशाव, निष्ठा, कान का मल, नह या नाक का मल, कफ, आँसू, आँखों की कीचड़ और पसीना ये बारह मनुष्यों के दैहिक मल हैं ।

[ मूलम् ]

बौधायनः–

आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये ।
उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यति ॥

अत्र प्रक्षालनानन्तरमाचमनम्[२] ।

---

पा० (१) मूत्रविट्घ्राण कर्णविट् ।

पाठा० (२) ह. पुस्तके – 'क्षालनोत्तर' इति पाठभेदः ।

[ संस्कृत टीका ]

आददीतेति । उक्तद्वादशमलानधिकृत्य बौधायन आह– आददीत इत्यादि । एतेषां मलानां स्पर्शे सति, पूर्वेषु षट्सु = वसाशुक्रमसृङ्मज्जामूत्रविट्पर्यन्तेषु । शुद्धये = शुद्ध्यर्थम् । मृदः = मृत्तिकाः । अपः = जलानि च । आददीत = गृह्णीयात् मृज्जलाभ्यां प्रक्षालयेदिति भावः ।

"यद्यपि

विण्मूत्रोत्सर्ग-शुध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥

इति मनुवाक्येन द्वादशस्वपि मृज्जलाभ्यां शुद्धिरित्यापाततः प्रतीयते तथा उदाहृतबौधायनवाक्यैकवाक्यतया पूर्वषट्के मृज्जलयोरुभयोः, उत्तरषट्के केवलजलस्यैवान्वये मनोस्तात्पर्यमुन्नेयमिति वीरमित्रोदयः ।

'आददीतेत्यादिप्रकृतबौधायनवचनमुद्धृत्य "ततश्च 'द्वादशस्वपि' इति मानवं मृद्वारिग्रहणवचनं व्यवस्थया मृद्वारिणो ग्रहणे सति न विरुद्ध्यते" इति मन्वर्थमुक्तावली ।

गोविन्दराजस्तु मनुबौधायनसन्दर्शनादुत्तरषट्केऽपि विकल्पः । स च व्यवस्थतो दैवपित्र्याद्यदृष्टकर्म-प्रवृत्ते उत्तरेष्वपि मृदमादद्यान्नान्यदेत्याह ।

अत्र प्रक्षालनानन्तरमाचमनमिति ग्रन्थकारः । एतच्च रत्नाकरादिभि-रुपेक्षितमित्याचारविवेकः इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

चर्बी से विष्ठा पर्यन्त छह मलों की शुद्धि मिट्टी और जल से होती है । अवशिष्ट छह मलों की शुद्धि केवल जल से होती है ।

यहाँ प्रक्षालन के बाद आचमन करना चाहिए । किन्तु रत्नाकर आदि का कहना है यह आवश्यक नही है ।

[ मूलम् ]

देवलः–

उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं चाऽपि तथाविधम् ।
तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति ॥
यदम्भःशौचनिर्मुक्तं क्षितिं प्राप्य विनश्यति ।
प्रक्षाल्याऽशुचिलिप्तञ्च संस्पृश्याऽचम्य शुद्ध्यति ॥

यदम्भ इत्यादि । शौचजलार्द्रित[1]भूभागं संस्पृश्याशुचिलिप्तमङ्गं प्रक्षाल्याऽचम्य शुद्ध्यतीत्यर्थः ।

[ संस्कृत टीका ]

उच्छिष्टमिति । उच्छिष्टम् = भुक्ताऽवशिष्टम् । तत्सम्बन्धान्मानवोऽपि उच्छिष्टः, पापोऽहमितिवल्लाक्षणिकोऽयं प्रयोगः । एवञ्च उच्छिष्टं मानवम् । तथाविधम् = उच्छिष्टं भोज्यं वा स्पृष्ट्वा । तथैव = उच्छिष्टदेहावयववत् हस्तौ पादौच प्रक्षाल्य, आचम्य शुद्ध्यति अथवा मूत्रपुरीष-कर्म भोजनादिचोच्छिष्टनिमित्तं भवतीत्यतः उच्छिष्टम् = एतन्निमित्ततया अपवित्रमित्यर्थो बोद्धयः । एवमग्रेऽपि ।

यदम्भ इत्यादि । शौचनिर्मुक्तम् = शौचकार्ये प्रयुक्तम् । यद् अम्भः = जलम् । क्षितिम् = पृथ्वीम् । प्राप्य, विनश्यति विलीनं भवति । तेन शौचजलेन आर्द्रि भूभागम् = क्लिन्नभूखण्डम् । संस्पृश्य स्पृष्ट्वा । अशुचिलिप्तमङ्गम् = अपवित्रजलसंस्पृष्टमङ्गं प्रक्षाल्य = जलेन परिमृज्य । आचम्य शुद्धो भवतीत्यर्थः ।

[ हिन्दी टीका ]

जूठे मुंह वाले व्यक्ति का या जूठे यक्ष्य पदार्थ का स्पर्श करने पर उस स्पृष्ठ अग्ड़ को धोकर बाद में हाथ पैर धोये तथा आचमन करे । अथवा मलमुत्र भोजन आदि निमित्तवश अपवित्र व्यक्ति या वैसी ही भोज्य वस्तु का स्पर्श होने पर पूर्ववत् आचमन समझना चाहिए ।

इसी तरह शौचकार्य में प्रयुक्त जल से भींगी पृथ्वी का स्पर्श करने पर उस अपवित्र जल से लिप्त अंग को धोकर आचमन करे तो वह शुद्ध होता है ।

[ मूलम् ]

बौधायनः—

नीवीं विस्रंस्य[2] परिधायोपस्पृशेत् ।

[ संस्कृत टीका ]

नीवीमिति । नीवीम् = परिहितस्य वाससो बन्धो (नीवी इति प्रकृतवचन व्याख्यायां गोविन्दस्वामिनः)। तां विस्रंस्य = मोचयित्वा । परिधाय = पुनर् धोवस्त्रं संधार्य च । उपस्पृशेत् = आचामेत् ।

---

पाठा (१) जलार्द्रित इति स्थाने 'जलार्द्र' इत्यत्र ह.पु.पा.।

(२) विसृज्य । विस्रंष्य = मुक्त्वा [illegible] ह. पु ।

''एतद् बौधायनदर्शनादन्यत्रापि वासःपदमधरीयवस्त्रपरम् । आचमना-सम्भवे च आर्द्रं तृणं भूमिं गोमयं वा उपस्पृशेदिति बौधायनात्तृणादिना स्पर्श इति विकल्प इति रत्नाकरादयः'' इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

कमर में लगे अधोवस्त्र (धोती आदि) की गांठ खोलकर पुनः पहनने पर आचमन करे ।

[ मूलम् ]

आपस्तम्बः –

**स्वप्ने[२], क्षवथौ, सिङ्घाणिकाया,[३] अश्रुण श्चालम्भे लोहितस्य, केशानामग्ने, गवां, ब्राह्मणस्य, स्त्रियाश्चालम्भे, महापथं गत्वाऽमेध्यं[४] वापस्पृश्याऽप्रयतञ्च[५] मनुष्यं, नीवीं परिधायाप उपस्पृशेत् ।**

क्षवथौ = हिक्कायाम्[६] । सिङ्घाणिकाया अश्रुणश्च स्पर्शे[७] ।

[ संस्कृत टीका ]

स्वप्न इति । स्वप्ने = निद्रायाम् । क्षवथौ = हिक्कायाम् । अत्र नित्य-कृत्यार्णवस्तु क्षवथुः = छिक्केत्याचारादर्शादयः । क्षवथुरुत्काश इति बोध्यम् । छिक्केति त्वपव्याख्यानम् ।

**छिक्का क्षवथु जृम्भासु नृणामायुः प्रहीयते ।**
**अतस्तद्दोषशान्त्यर्थं जीवोत्तिष्ठाऽङ्गुलिध्वनिः ॥**

इति शिष्टोपगृहीतवाक्येषु क्षवथुशब्दस्योत्काशवाचित्वावगमादन्यथा सह प्रयोगानुपपत्तेः । काशस्तु क्षवथुः पुमानित्यमरकोशाच्चेत्याह । नैतन्मनोहरम् । यतः, वैंकटेश्वर (स्टीम) ग्रन्थागार बम्बईतः सन् १९०६, सन् १९५६ ई० वर्षेषु प्रकाशिताचारादर्शपुस्तकेषु क्षवथौ = हिक्कायामिति व्याख्योपलभ्यते, नतु छिक्कामिति ।

अथच समपर्याययोः क्षवथ-क्षुत-शब्दयोः व्युत्पत्तिः शब्दकल्पद्रुमरीत्या द्रष्टव्या । यथा- (अ) क्षवथुः पुं० क्षु+अशुच् । क्षुतम् । कास इति मेदिनी ।

---

पाठा (२) सुप्ते । (३) सिङ्घाणिकायाश्चालम्भे । (४) चो, इति ह.पु.पा० । (५) इतोऽग्रे 'विधाय उपस्पृशेत्' एतावन्मात्रं ह.पु.पा. । ६) क्षवथौ = छिक्कायाम् इत्यन्यत्र ह.लि. पुस्तके च पाठः । (७) अश्रुणश्चालम्भे = स्पर्शने इति ह.पु.पा.।

(आ) क्षुतम् क्ली०/ क्षु शब्दे क्षुते च भावे क्तः । नासिकाऽभिघा-तजन्यसशब्दवायु निःसरणम् । हाँची इति भाषा । तत्पययिः । क्षुत् २ । क्षवः ३ इत्यमरः २/६/५२ । क्षुता ४ । छिक्का ५ । क्षवथः ६ । क्षुतः ७ । इति शब्दरत्नावली । हाञ्छिः ८ । इति जटाधरः । इति।

एवञ्च प्रकृते प्रकरणानुरोधात् नासिकेत्यत्र कण्ठपदसंयोजनेन कण्ठाभिघातजन्य-सशब्द-वायु-निस्सरणरूपा हिक्कैवाऽर्थोस्तु । नचाऽत्र व्याकरण विरोधः नवा शिष्टोपग्टहीतवाक्यविरोधः ।

उत्काशोऽपि हिक्कावन्न क्षवथुशब्दस्य कोशरीत्या पर्यायो भवति । 'कासृ' शब्दकुन्सनयोरिति धातो र्हलश्च (३।३।१२) इति घञिनिष्पन्न कास (श) शब्दापेक्षया सोपसर्गकोत्कास (श) शब्दस्य भिन्नार्थकत्वञ्च भवति । तथापि उत्काशवद् हिक्काया अपि क्षवयु-शब्दवाच्यत्वावगमनं समानमेव स्यात् । अपरञ्च, हिक्का जलपानेन शाम्यतीति लोके प्रसिद्धम् ।

"आन्तरं खिद्यते यस्मात्तस्मादाचमनं स्मृतम्" इति वचनानुसारेण हिक्काऽऽदिजन्यान्तःसन्तापशान्तिरेव तत्प्रयोजन मभिधीयते च । तथा च हिक्का छिक्का पाठयोरुपलभ्यमानत्वेऽपि उपयोगितया हिक्केत्याचारादर्शसम्मतः पाठोऽनुसरणीयः । फलतः उत्काशपर्यन्तानुधावनस्य काऽऽवश्यकता ? अपव्याख्यान-प्रश्नोऽपि च नोदेष्यतीत्यलम् ।

सिङ्घाणिकायाः = नासिकानिर्गत-श्लेष्मणः । अश्रुणः = नेत्रनिर्गतजलस्य च । आलम्भे = स्पर्शे । लोहितस्य = रुधिरस्य । केशानाम् = शिरोगतानां भूगतानाञ्चेति हरदत्तः । प्रच्युतानामिति स्मृत्यर्थसारे । अग्न्यादीनां चतुर्णामालम्भे । महापथम् = राजमार्गं, श्मशानं वेत्याचारदीपिका । अमेध्यम् = नाभेर-धोगतानीन्द्रियछिद्राणि, वसादयो देहमलाश्च । यथाऽऽह मनुः (५/१३२)

**ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।**

**यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥**

इति । अत्र खानि = इन्द्रियछिद्राणि । व्यक्तिबहुत्वापेक्षया स्त्री-पुंसयो रुपस्थभेदेन वा उत्तरार्द्धे यानीति बहुवचनम् । देहच्युता मला अमेध्या इत्यर्थः । उपस्पृश्य = स्पृष्ट्वा । अप्रयतम् = अपवित्रञ्च मानवम् = मनुष्यम् । उपस्पृश्य । नीवी = अधोवासोग्रन्थिः, तद्योगादधोवासो लक्ष्यते इति हेमाद्रिरुज्ज्वलाकारश्च। तच्च परिधाय । अप उपस्पृशेत् = आचामेत् ।

प्रकृतवचने अग्निगोब्राह्मणानां स्पर्शे यदाचमनं विहितं तत् विहित-स्पर्शेतरस्पर्शमात्रनिमित्तकं न तु तत्स्पर्शजन्याप्रायत्यनिमित्तकमिति कल्पतरुः। एवमेवाचारचिन्तामणिरपि।

"गवां प्रसूतानां दशदिनाऽभ्यन्तरे, ब्राह्मणस्य गायत्रीरहितस्य, स्त्रिया, परकीयाया इति गौडाः। अग्नेः कर्मकाले स्पर्शो न विधेय इति केचित्। राद्धान्तो, गवामाननस्पर्शः, ब्राह्मणस्य अध उच्छिष्टस्य सन्ध्यावन्दनादि-रहितस्य वा, अग्नेश्चितास्थस्य चाण्डालादिगृहस्थितस्य वा, स्त्रियाः स्वैरिण्या इत्याचारदीपिके" ति नित्यकृत्यार्णवः।

अत्र मदनरत्ने स्मृत्यर्थसारे वीरमित्रोदयादौ च विभिन्नानि मतानि सन्ति। विशेषजिज्ञासुभिस्तत एव द्रष्टव्यानि।

[ हिन्दी टीका ]

निद्रा तथा हिचुकी, अन्य व्याख्याकार के अनुसार छींके, इससे भी अन्य व्याख्या के अनुसार ख़खार करने (गले का कफ साफ करने) के बाद, आँसू, शोणित (लहू), सिर में स्थित या भूमि पर गिरे केश, अग्नि, गाय, ब्राह्मण तथा स्त्री के स्पर्श होने पर, राजमार्ग या श्मशान में चलकर, नाभि से निचली इन्द्रिय के छिद्र, देह के पूर्वोक्त बारह प्रकार के मलों और अपवित्र मनुष्य का स्पर्श होने पर, एवं पहने हुए अधोवस्त्र (धोती आदि) को खोलकर पुनः पहनने पर आचमन करना चाहिए। (यह मूल वचन का सामान्य अर्थ हुआ।)

यहाँ कल्पतरु का कहना है कि मूल वचन में जो अग्नि गाय तथा ब्राह्मण का स्पर्श होने पर आचमन कहा गया है वह प्रणाम आदि के समय विहित स्पर्श से भिन्न स्पर्श स्थल के लिए ही है, न कि इनके स्पर्श से होने वाली अपवित्रता से बिधान किया गया है। आचारचिन्तामणि का भी यही मत है।

यहाँ गौड़ों का मत है कि गाय, ब्राह्मण और स्त्री पद से क्रमशः दसदिन के भीतर व्याई गाय, गायत्रीरहित ब्राह्मण और परकीया नारी विवाक्षित है। कर्म काल में अग्नि का स्पर्श नहीं करना चाहिए यह किसी का मत है।

किन्तु आचारादर्श की हरिलाल कृत टीका आचारदीपिका में गायों के मुंह, उच्छिष्ट या सनध्यावन्दनादिरहित ब्राह्मण, स्वेच्छाचारिणी स्त्री तथा चितास्थित या चाण्डालादिगृह स्थित अग्नि का स्पर्श निषिद्ध कहा गया है। फलतः इनके स्पर्श होने पर आचमन करे।

ऊपर से ज्ञातव्य है कि छींक, हिचुकी व जँभाई होने पर आदमियों की आयु क्षीण होती है। अतः इस दोष की शान्ति के लिए छींक के समय 'जीव',

हिचुकी के समय 'उत्तिष्ठ' कहना चाहिए तथ जभाई के समय चुटकी बजा देनी चाहिए (यह बात विज्ञानसिद्ध भी है )। प्रकृतवचन के 'क्षवथु' शब्द की व्याख्या में आचारादर्श सम्मत छिक्का या हिक्का अर्थ (पाठ) है इस संबन्ध में संस्कृत टीका द्रष्टव्य है ।

[ मूलम् ]

तथा (आपस्तम्बः)–

**रिक्तपाणिः वयस उद्यम्यापः[1] स्पृशेत् ।**

**शक्तिविषये न मुहूर्त्तमप्यप्रयतः स्यात् ।**

रिक्तपाणिः = शून्यपाणिः । वयसः[2] =पक्षिणः । उद्यम्य-पाणिमिति शेषः ।

[ संस्कृत टीका ]

रिक्तेति । रिक्तपाणिः = शून्यपाणिः काष्ठलोष्ठादिशून्यहस्त इति यावत् । वयसः = पक्षिणः, प्रोत्सारणाय त्रासार्थं वा उद्यम्य उत्क्षिप्य, प्रकरणात्पाणिमितिशेषः। अपः स्पृशेदाचामेद्वा । रिक्तपाणिरित्यनेन काष्ठलोष्ठादिसंहितस्य पाणेरुद्यमने दोषाभावः सिध्यति । केचन उक्तवचने वयसे इति चतुर्थ्यन्तं मन्यन्ते । अतएव, शक्तिविषये = हस्ते काष्ठलोष्ठादि शक्तौ सत्याम् । मुहूर्त्तमपि = किञ्चित्कालमपि । न अप्रयतः स्यात् = किन्तु पूर्ववत्पूत एव तिष्ठेत् ।

[ हिन्दी टीका ]

यदि पक्षी को उड़ाने या डराने की दृष्टि से अपना खाली हाथ कोई उठाता है तो उसे जलस्पर्श या आचमन करना चाहिए । यहीं यदि हाथ में काठ, ढेला आदि हो तो कुछ समय के लिए भी अपवित्रता नहीं होती है ।

[ मूलम् ]

**विष्णुः–**

**पञ्चनखास्थि निःस्नेहं स्पृष्ट्वाऽऽचामेत् । चाण्डालम्लेच्छसम्भाषणे च ।**

---

पाठा०(१) अप उपस्पृशेत् । (२) हस्तलिखितपुस्तकेषु वयसे पक्षिणे इति पाठः ।

[ संस्कृत टीका ]

पञ्चनखेति । निःस्नेहम् = स्नेहशून्यं वसारहितमिति यावत् । पञ्चनखाऽऽस्थि = पञ्चनखनरवानरादीनामस्थि । यथा चाह मनुरपि (५/८७)

**नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।**

**आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥ इति ।**

स्पृष्ट्वा । चाण्डाल-म्लेच्छ-सम्भाषणे च । चाण्डालः = ब्राह्मण्यां शूद्रेण जातः (स्याच्चाण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः इत्यमरः) । म्लेच्छः =

**गोमांसखादको यस्तु विरुद्धं बहु भाषते ।**

**सर्वाऽचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥**

इति बौधायनोक्तः । सह सम्भाषेत इति गौतमधर्मसूत्रव्यायाख्यायां वर्णाश्रमधर्मरहितदेशे सिंहलद्वीपादौ ये वसन्ति ते म्लेच्छा इति हरिहरोक्तो वा । ताभ्यां सह, सम्भाषणे = परस्पराऽलापे च आचामेत् ।

[ हिन्दी टीका ]

पाँच नह वाले नर वानर आदि प्राणियों की सूखी हड्डी का स्पर्श होने, चाण्डाल (ब्राह्मणी में शूद्र से उत्पन्न) एवं म्लेच्छ (आचार विचार विहीन अंट संट बहुभाषी गोमांसखादक जन) से परस्पर सम्भाषण करने पर आचमन करे ।

[ मूलम् ]

हारीतः—

**स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपुरीषोत्सर्गदर्शने देवतामभिगन्तुकाम आचामेत्। तथा रथ्यामाक्रम्य सुषुप्सुः । तथा[१]जलमित्यनुवृत्तौनोत्तरेदनुपस्पृश्य ।**

[ संस्कृत टीका ]

स्त्रीति । स्वैरिण्या स्त्रिया । असदाचारिणा शूद्रेण । उच्छिष्टम् = भुक्तावशिष्टम् तद्योगादुच्छिष्टी लक्ष्यते, अनेन च सह । अभिभाषणे = परस्पराऽलापे । मूत्रपुरीषोत्सर्गदर्शने = मूत्रविष्ठात्यागदर्शने । देवताम् = देवताधिष्ठितप्रतिमादर्शनार्थमभिगन्तुकामः । रथ्याम् = प्रतोलीम् । (रथ्या

पा. (१). जलानुवृत्तौ ।

प्रतोली विशखा इत्यमरः)। आक्रम्य=अतिक्रम्य । सुषुप्सुः = निद्रातुमिच्छुः । तथा, जलमित्यनुवृत्तौ, अनुपस्पृश्य=आचमनमविधाय । नोत्तरेत् = न सन्तरेदिति रत्नाकरः ।

[ हिन्दी टीका ]

स्वेच्छाचरिणी स्त्री, असदाचारी शूद्र तथा जूठे मुंह वाले अथवा अपवित्र व्यक्ति से परस्पर सम्भाषण करने, मल या मूत्र का त्याग देखने, देवता दर्शनार्थ चलने की इच्छा करने, गली के माग से चलने एवं निद्रा की इच्छा करने पर आचमन करना चाहिए । बिना आचमन किये जलवाले नदी नाला आदि का पार एक तरफ से दूसरे तरफ जाना न करे ।

[ मूलम् ]

यमः–

उत्तीर्योदकमाचम्यावतीर्योपस्पृशेत्ततः ।
य एवं श्रेयसा युक्तो वरुणश्चैव पूजितः ॥

[ संस्कृत टीका ]

उत्तीर्य इति । आचम्य उदकम् अवतीर्य उत्तीर्य चेत्यन्वयः । अवतीर्य = जलं प्रविश्य । उत्तीर्य = निर्गत्य । तृ प्लवन–सन्तरणयोरिति धात्वनुसारात् तृधातोरेकस्यैव च हारीतवाक्ये प्लवनार्थकत्वं यमवाक्ये अवतरणार्थकत्वमिति कल्पतरुसम्मतोऽर्थ इति वीरमित्रोदयः ।

यः = मानवः । एवं करोति स, श्रेयसा = कल्याणेन । युक्तः = सम्पन्नो भवति । तेन च, वरुणः = जलाधिष्ठातृदेवो वरुणः । पूजितः = आराधितो भवति ।

[ हिन्दी टीका ]

जो नदी नाला आदि पार करने के समय आचमन कर जल में प्रवेश करता है और दूसरे तट पर पहुंचने पर पुनः आचमन करता है उसके द्वारा जल के देव वरुण पूजित होते हैं तथा वह कल्याण से युक्त होता है

[ मूलम् ]

मन्वङ्गिरोबृहस्पतय :–

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वोऽनृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

[संस्कृत टीका]

सुप्त्वेति । निद्रा-क्षुद्-भोजन-श्लेष्मनिरसन-मृषावाद-जलपानादि कृत्वाऽध्ययनं चिकीर्षुः शुचिरप्याचामेत् ।

[हिन्दी टीका]

सोकर, छींक कर, खाकर, नाक या मूँह से कफ फेककर, झूठ बोलकर तथा पढ़ने के पहले पवित्र हो तो भी आचमन करना चाहिए ।

[मूलम्]

संवर्तः-

चर्मारं स्जकं वेणुं[1] धीवरं नटमेव च ।
एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन् ॥

[संस्कृत टीका]

चर्मारमिति । चर्मारम् चर्म = चर्मक्रियाम् ऋच्छति । ऋ गतौ । कर्मण्यण् (३/२/१) इत्यण् । चर्मकार इति जटाधर इति शब्दकल्पद्रुमः । रजकम् = वस्त्रधावकं कुसुम्भादिना वस्त्ररञ्जनकर्तारं वा । वेणुम् =वेणोर्भेदनेन यो जीवति 'वुरुड' इति विश्वरूप इति मन्वर्थमुक्तावली । धीवरम् = मत्स्यहारिणम् । नटम् = रङ्गावतरणजीविनम्, जायाजीविनं वा । एतान् नरः । मोहात् = अज्ञानात् स्पृष्ट्वा । प्रयतोऽपि = शुचिरपि । आचामेन् ।

[हिन्दी टीका]

चर्मक्रियाजीवी चमार, धोबी या रंगरेज, बाँस छेदकर जीविका चलाने वाले (डोम), मल्लाह, नाटक खेलकर जीविकोपार्जन करने वाले या आल्हा आदि गाकर जीविका चलाने वाले जातिविशेष का स्पर्श होने पर द्विज को आचमन करना चाहिए ।

[मूलम्]

ब्रह्मपुराणे -

अधम-वर्णस्य[2] संलापे सुप्ते वा दन्तधावने ।
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः ॥

अधमवर्णः = चाण्डालादिः ।

---

पाठा. (१) वणम् । वैणम् । (२) अववर्णस्य / अधवर्णस्य ।

[ संस्कृत टीका ]

अधमेति । अधमवर्णस्य = चाण्डालादेः । अधमवर्णोत्र चाण्डालादिरित्याचारचिन्तामण्यादय इति नित्यकृत्यार्णवः ।

संलापे = परस्परसम्भाणणे । संलापो भाषणंमिथ इत्यमरः ) सुप्ते = स्वापानन्तरम् । दन्तधावने च कृते । प्रयतोऽपि नरः आचम्य शुद्धो भवतीत्यर्थः ।

[ हिन्दी टीका ]

चाण्डाल आदि के साथ परस्पर वार्तालाप करने, सोकर उठने तथा दातुन करने के बाद पवित्र जन (द्विज) भी आचमन करने से शुद्ध होता है ।

[ मूलम् ]

वायुपुराणे -

निष्ठीवने[१]तथाभ्यङ्गे तथा पादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्युपहतस्य[२] च ॥
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ॥
उच्छिष्टस्याऽपि[३] संस्पर्शे दर्शने चान्त्यजन्मनाम्[४]।

सर्वेषु = आचमनाचमननिमित्तेषु । 'विना यज्ञोपवीतेन' इति यज्ञोपवीत-मोचनमाचमननिमित्तमुक्तम् । अत्र स्नानमध्यपतितान्याचमननिमित्तान्यग्रे वक्ष्यामः ।

[ संस्कृत टीका ]

निष्ठीवन इति । निष्ठीवने = मुखेन नासिकया वा कठिनश्लेष्मत्यागे । " निष्ठीविते = मुखेन कठिनश्लेष्मत्यागे कृते । निष्ठीवने = नासानिस्सृते कठिनश्लेष्मणि, इति स्मृतिदीपिके" ति नित्यकृत्यार्णवलेखात्, उभयविधपाठोपलम्भाच्चात्र तथा व्याख्या व्यधायि ।

तथा अभ्यङ्गे = तैलादिमर्दने । तथा, पादावसेचने = पादयोः प्रक्षालने । उच्छिष्टस्य = उच्छिष्टमुखस्य शौचाचरणात्पूर्वम् मूत्रपुरीषोत्सर्गादिकारिणो वा ।

---

पाठा. (१) निष्ठीविते । (२) अशुच्यप्रयतस्य च । (३) उच्छिष्टस्य च । (४) वासिनाम् ।

अशुच्युपहतस्य = अशुचिवस्तुसम्पर्कादप्रयतस्य च । सम्भाषात् = सम्भाषणात् ।

अत्र नित्यकृत्यार्णवस्तु 'अशुच्यप्रयतस्य च' इति पाठमुल्लिख्य अशुच्युपहतस्य चे'ति पाठान्तरमाचारा' दर्श स्मृतिसार स्मृतिमञ्जरीषु लिखित-मिति लिखितवान् अस्ति ।

सर्वेषु सन्देहेषु = आचमनाचमननिमित्तेषु संशयेषु आचमननिमित्तस्या चमनस्य च संशयेष्विति यावत् । अतएव संदेहेषु आचमन-तन्निमित्त-विषयकेष्विति कल्पतरुरपि । शिखां मुक्त्वेति । शिखामोचननिमित्तं त्वाचमनं पुनः शिखां बध्वैव कार्यम् । शिखाबन्धनस्य सर्वकर्माङ्गत्वादितिवीरमित्रोदयः ।

''विना यज्ञोपवीतेनेति । विना यज्ञोपवीतेनेति यज्ञोपवीतमोचनमाचमन-निमित्तमुक्तमिति प्रकृतग्रन्थः ।

''विना यज्ञोपवीतेनेत्यनेन यज्ञोपवीतत्याग आचमननिमित्ततया उक्त इति रत्नाकरादयः । शिखां मुक्त्वेति । शिखामोचनं, तेन तत्करणानन्तरं पुनर्बद्धां शिखां धृत्वा यज्ञोपवीतमाचमनीयमित्यर्थ इत्याचारविवेक'' इति नित्य-कृत्यार्णवः । विना यज्ञोपवीतेनेति यज्ञोपवीतत्यागो निमित्तम् । एतदपि यज्ञोपवीत-धारणानन्तरं कार्यं, यज्ञोपवीतस्याऽपि सर्वकर्माङ्गत्वादिति वीरमित्रोदयः । उच्छिष्टस्यापि संस्पर्शे = भुक्ताऽवशिष्टस्य च स्पर्शे जाते । अन्त्यजन्मनाम् = अन्त्यावसायिनाम् । अत्रैतदन्त्यजन्मनामिति पदमन्त्यावसायिबोधकम् आचमननिमित्तप्रकरणीय-अन्त्यावसायिदर्शनमन्त्यजस्पर्शनमिति छन्दोगाह्निकात् । ''दर्शने चान्त्यजन्मनामि''ति प्रकृतवचने दर्शनपदोपादानाच्च । अन्त्यावसायिनोऽत्र चाण्डाला इत्याचारचिन्तामणिरिति मुकुन्दझाकृत-च्छन्दोगाह्निकटिप्पणी । एतेषु निमित्तेषु सत्सु, नित्यम् = नियमतः । उपस्पृशेत् = आचामेत् ।

**[ हिन्दी टीका ]**

मुंह या नाक से कड़ा कफ गिरने, तेल उबटन आदि की मालिश करने, पैर धोने, जूठ मुंह वाले या शौच आचरण के पहले मलमूत्र-त्यागी या अशुचि वस्तु के सम्पर्क के कारण अपवित्र व्यक्ति से बात करने, आचमन अथवा आचमन निमित्त के संशय होने, शिखा खोलकर पुनः बाँधने, पुराने यज्ञोपवीत के बदले नये पहनने, जूठी आदि अपवित्र वस्तु का स्पर्श होने तथा चाण्डाल आदि का दर्शन होने पर अवश्य ही आचमन करना चाहिए ।

स्नानप्रसंगी आचमन-निमित्त स्नान-प्रकरण में (आगे) कहे जायेंगे ।

**❀ इति आचमननिमित्तानि ❀**

## द्विराचमननिमित्तानि

### [ मूलम् ]

अथ द्विराचमननिमित्तानि अत्र[1] याज्ञवल्क्यः–

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।**
**आचान्तः पुनराचामेद् वासोऽपि परिधाय च ॥**

### [ संस्कृत टीका ]

अत्रेति । अत्र = द्विराचमननिमित्तेषु । स्नात्वेति स्नान-जलपान-क्षुद्-निद्रा-भोजन-रथ्याऽतिक्रमण-वासःपरिधानादि कृत्वा, आचान्तः = कृताचमनोऽपि । पुनराचामेत् = द्विराचामेत् । "चकराद् रोदनाध्ययनारम्भ-चापल्यानृतोक्त्यादिषु बोध्यम् । स्मृत्यन्तरवचनात् । भोजने तु आदावपि द्विराचमनम्, भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेदिति तन्मिताक्षरा ।

### [ हिन्दी टीका ]

स्नान, जलपान, छींक, निद्रा, भोजन, गली का अतिक्रमण तथा धोती आदि अधो वस्त्र पहनने के बाद साधारण आचन के अनन्तर पुनः आचमन करना चाहिए ।

मूल वचन में 'च' पद के उपादान से अन्य स्मृतिवचनानुसार रोना, पढ़ने का आरम्भ, चपलता तथा झूठ बोलने आदि पर भी द्विराचमन करना चाहिए ।आपस्तम्ब वचनानुसार भोजन के आदि में भी दो बार आचमन करना चाहिए ।

### [ मूलम् ]

**पैठीनसिः-**

**कलिल-कास-श्वासापगमे रथ्याचत्वरश्मशानान्निष्क्रम्याऽचान्तः पुनराचामेत् ।**

कलिलम् = कठिनः श्लेष्मा । श्वासोऽत्र विकृतः व्यायामादिना । अन्यस्य सदातनत्वात् ।

### [ संस्कृत टीका ]

कलिलेति । कलिलस्य = कठिनश्लेष्मणः । कासस्य = क्षवथोः । स्त्री क्षत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमानित्यमरः (२/६/५२) । श्वासस्य

---

पाठान्तर (१) तत्र । इति ह.पु. ।

= व्यायामादिना विकृतश्वासस्य च । प्राकृतस्य सदातनत्वात् । अपगमे = बहिर्निर्गमे । रथ्या = प्रतोली । चत्वरम् = नानाजनावस्थानदेशः इति ग्रन्थकारः । भूतादिबलिस्थानमिति कल्पतरुरिति वीरमित्रोदयः । भूतबलि-स्थानमित्याचारविवेक इति नित्यकृत्यार्णवः । श्मशानम् = शवशयन-स्थानम् । तथा चोक्तं स्कान्दे काशीखण्डे (अ०३०)–

**श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते ।**
**निर्वचन्ति श्मशानार्थं मुने ! शब्दार्थकोविदाः ।**

इतिशब्दकल्पद्रुमः । एभ्यः, निष्क्रम्य = आगत्य । आचान्तः = कृताऽचमनोऽपि । पुनराचामेत् = द्विराचामेदित्यर्थः ।

[ हिन्दी टीका ]

घना (कड़ा) कफ, खाँसी, व्यायाम आदि के कारण से विकृत श्वास के निकलने पर, इसी तरह सभा या भूतादिबलि या भूतबलि स्थान तथा श्मशान से आने पर दुबारा आचमन करे ।

[ मूलम् ]

**यमः–**

**सकर्दमे तु वर्षासु प्रविश्य ग्रामसङ्करम् ।**
**जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यान्तु[1] द्विगुणाः स्मृताः ॥**

एतत्प्रक्षालनम्[2] रथ्याऽऽक्रमण[3] नैमित्तकाचमनात्प्राक् ।

[ संस्कृत टीका ]

सकर्दम इति । वर्षासु = वृष्टौ जातायाम् । सकर्दमे = सपङ्के, ग्रामे सतीति शेषः । ग्रामसङ्करम् = ग्रामस्याऽवकरस्थानम् = सम्मार्जन्या निक्षिप्त-धूल्यादिस्थानमिति यावत् । (सम्मार्जनी शोधनी स्यात् संकरोऽवकरस्तथा । क्षिप्ते इत्यमरः २/२१८) प्रविश्य = गत्वा । जङ्घाभ्याम् = जङ्घापर्यन्तस्य शुद्ध्यर्थं जलसहितास्तिस्रः मृत्तिकाः । पद्भ्याम्=चरणशुद्ध्यर्थम् । द्विगुणाः = जल-सहित-षण्मृत्तिकाः देया इत्यर्थः । एतज्जल सहित षण्मृत्तिकाभिः जङ्घे चरणे च प्रक्षालयितव्ये इति भावः ।

---

पाठा० (१) 'तद्' इति ह.पु । (२) एतत्प्रक्षालनम् । (३) निमित्तका ।

एतच्च प्रक्षालनं रथ्याऽतिक्रमणनिमित्तकादाचमनात्पूर्वमेव आचरणीयमिति बोध्यम् ।

[ हिन्दी टीका ]

वर्षा से गाँव में कीचड़ हो जाने पर झाड़ू से बुहारे गए बहारन (जंजाल) वाले स्थान में जाने के बाद जलसहित मिट्टी से दोनो जंघा पर्यन्त अंग करे तीन बार दोनों पैरो को छह बार धोवें किन्तु यह धोना रथ्या (गली) से आने के निमित्त होने वाले आचमन से पहले ही होना चाहिए ।

[ मूलम् ]

**वसिष्ठः** –

**आचान्तः पुनराचामेद् वासोऽपि परिधाय च ।**
**ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ ।**

[ संस्कृत टीका ]

आचान्त इति । वासः = अधोवस्त्रम् । परिधाय = सन्धार्य । यत्र = ओष्ठयोः । लोमकौ = रोमौ । आधारस्य ओष्ठस्य द्वित्वेन आधेये रोमेऽपि जातिगतं द्विवचनम् । न स्याताम् । तथा = तादृशौ । ओष्ठौ । संस्पृश्य = स्पृष्ट्वा च । तथा च सलोमकयोरोष्ठयोः स्पर्शेन पुनराचमनापत्तिरिति फलितम्। आचान्तः पुनराचामेत् ।

[ हिन्दी टीका ]

धोती आदि अधोवस्त्र पहनने तथा बिना केश वाले दोनों ओठों का स्पर्श करने पर पुनः आचमन करें

[ मूलम् ]

आपस्तम्बः–

**भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेद् द्विः प्रमृज्येत्[1] ।**

[ संस्कृत टीका ]

भोक्ष्यमाणेति । प्रयतोऽपि । पूतोऽपि । भोक्ष्यमाणः = भोजनं चिकीर्षुः । द्विः = वारद्वयम् । आचामेत् । द्विश्च, प्रमृज्येत् = परिमार्जनं कुर्यात् । द्विः परिमृज्येदित्यादिविशेषो भोक्ष्यमाणस्यैव ।

---

पाठा० (१) परिमृजेत् । क्वचित् सकृदुपस्पृशेदित्यधिकः पाठः । हस्तलिखितपुस्तके तु द्विराचामेत सकृदुपस्पृशेत, अन्यत्र सकृत् तद्द्विर्वा इति पाठः ।

द्विरित्युक्त्या ''त्रिरोष्ठौ परिमृजेद् द्विरित्येके, सकृदुपस्पृशेदि'' त्यादिना स्वयमुक्तस्य वैकल्पिकस्य त्रिरित्यस्य व्यावृत्तिः ।

[ हिन्दी टीका ]

भोजन के पहले दुबारा आचमन करे तथा दुबारा मार्जन करे ।

[ मूलम् ]

शङ्ख :-

**मूत्रपुरीष[1]ष्ठीवनादिषु शुक्ल[2] वाक्याऽभिधानेषु च[3क] पुनरुपस्पृशेत् ।**

शुक्लम् = परुषम् ।

[ संस्कृत टीका ]

मूत्रेति । मूत्रस्य, विष्ठायाः, नासिकातः, कठिनश्लेष्मणश्च त्यागादौ । शुक्लवाक्याऽभिधानेषु च= कठोरवचनभाषणेषु च । पुनरुपस्पृशेत् = द्विराचामेत्। द्विराचमनोत्तरं विष्णुस्मरणमाह आचारचिन्तामणिधृतं ब्रह्मपुराणम् -

**द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ।**

[ हिन्दी टीका ]

मल, मूत्र तथा नाक से घनीभूत कफ के त्याग आदि एवं कठोर वचन के भाषण करने पर दुबारा आचमन करे । आचारचिन्तामणिधृत ब्रह्मपुराणवचन के अनुसार द्विराचमन के बाद सनातन विष्णु भगवान का स्मरण कर शुद्ध होता है ।

[ मूलम् ]

अत्र द्विराचमने पाणिपादप्रक्षालनं सकृदेव दृष्टैक्यात्[3] । आस्यमार्जनं पुनरावर्तते[4], दृष्टभेदात् । आस्यस्पर्शादिमप्यावर्तते, अदृष्टार्थत्वात् । आचान्तस्य पुनराचमनविधानात् साङ्गस्यैवावृत्तिः । अतएव त्रिरभ्यस्त[5] माचमनमावर्तते, नतु द्विरित्यनेन त्रिरित्यस्य बाधः ।

[ संस्कृत टीका ]

अत्रेति । अत्र = पूर्वोक्ते । द्विराचमने, आचमनाङ्ग-पाणिपादप्रक्षालनम् । सकृदेव = एकवारमेव । दृष्टैक्यात् = शास्त्रे शिष्टव्यवहारे च एकस्यैव प्रत्यक्षप्रयोजनस्य उक्तप्रक्षालनस्य दृष्टत्वात् । आस्यमार्जनम् =

---

पाठा० (१) 'निष्ठीवनादि' इति. ह. पु. । (२) शुक्तम् । (३क) 'षु' इति नास्ति । (३) दृष्ट्यै । (४) मार्जनं त्वावर्त्तते । (५) भ्यस्तमेवा।

संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततोमुखम् ।

इत्यादिनोक्तं संवृतौष्ठयोः अलोमकप्रदेशे अङ्गुष्ठमूलेन मार्जनम् । पुनरावर्तते । दृष्टभेदात् = मार्जनविषये शास्त्रे व्यवहारे च भेदस्य दर्शनात् । अत्रापि दृष्टप्रयोजनस्य= सद्भावाच्च । आस्यस्पर्शादिकम्=संहृत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेदित्यादिनोक्तमस्य स्पर्शादिकमपि । आवर्तते = पुनर्विधीयते । अदृष्टार्थत्वात् = धर्मार्थत्वात् । आचान्तस्य = कृताचमनस्य । पुनराचमनविधानात् । साङ्गस्यैव =पाणिपादप्रक्षालनंविहाय मार्जनादिसहितस्यैव त्रिराचमनस्य । आवृत्तिः = पुनराचरणम् । अतएव = साङ्गस्यैवाचमनस्यावृत्तेः स्वीकारादेव । त्रिरभ्यस्तम् = त्रिवारं विहितमेकमाचमनम् । आवर्तते = अभ्यस्यते । द्विरित्यनेन = द्विराचामेत्, पुनराचामेद्, द्विराचमनमित्याद्यनेकस्थलीय-वचनांशेन त्रिरित्यस्य = "त्रिराचामेदपः पूर्वमि" त्यादि वचनविहितस्य सामान्यत स्त्रिराचमनस्य । नतु बाधः = द्विराचमने नैव बाधः । अर्थाद् विधीयमान-द्विराचमनेऽपि त्रिस्त्रिराचमनमाचरणीयमेवेति भावः । अत्र दृष्टयैक्यादिति पाठं मत्वा "दृष्टयैक्यात् - धूल्यादिनिरासरूपस्य दृष्टप्रयोजनस्य प्रथमं जातत्वादित्यर्थः । दृष्टभेदात्-मुखे जलप्रोञ्छनस्य द्वितीयाचमनेऽपि कर्त्तव्यादित्यर्थः । अदृष्टार्थत्वेऽपि तस्य जातत्वात्, पुनः किन्तेनेत्यत आह आचान्तस्येति" इति म.म. रघुनाथविरचिताचारादर्शफक्किकायाः व्याख्या ।

अत्र "एवमेव स्मृतिसारोऽपीति तथा पञ्चम (आचमन) तरङ्गे" द्वितीया-चमनेऽप्येवमेव । तच्च द्विराचमने साङ्गमावर्ततेऽदृष्टार्थत्वात् । न तु पाद-प्रक्षालनमपि । दृष्टार्थत्वादित्याचारचिन्तामणिः । पादप्रक्षालनञ्च द्वितीयाच-मने नावर्तते । दृष्टैक्यात् । पादाप्रायत्यपक्षे तदप्यावर्तते । आस्यमार्जनन्तु सर्वथाऽऽवर्तते । अदृष्टार्थत्वादिति शूद्राचार" इति च नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

इस द्विराचमन प्रकरण में आचमन का अङ्ग हाथ पैर का धोना एक ही बार होता है क्योंकि शास्त्र तथा शिष्टजनों के व्यवहार में एक बार उक्त प्रक्षालन देखा जाता है। इसका दृष्ट (मुख्य) प्रयोजन हाथ पैर की धूल आदि गन्दगी को हटाना तो पहले ही कर लिया गया है । (शूद्राचार निबन्धग्रन्थ के अनुसार यदि कदाचित् पूरी पवित्रता नहीं हो पाई हो तो पुनः पादप्रक्षालन कर लेना चाहिए ऐसा विवेचन है ।) क्योंकि मुंह के जल को पोछना (मार्जन) तो द्वितीय आचमन में भी

विधानानुसार कर्त्तव्य है । इसका भी यह प्रयोजन प्रत्यक्ष है । इसी तरह तीन अंगुलियों से विहित ओष्ठस्पर्शादि की भी आवृत्ति होती है । क्योंकि ये क्रियाएँ धर्म के लिए की जाती है ।

आचमन करने के बाद पुनः आचमन का विधान होने से हाथ पैर धोन को छोड़कर मार्जन आदि सकल अंग सहित आचमन की आवृत्ति होती है । अतएव तीन बार में किये जानेवाले आचमन की आवृत्ति द्विराचमन या पुनराचमन में होती है । न कि द्विराचमन के "द्वि" पद से तीन बार के आचमन का पुराचमन में निषेध होता है। अपितु द्विराचमन में तीन तीन बार (योग से छह बार) आचमन करना फलितार्थ में सिद्ध होता है ।

नित्यकृत्यार्णव के अनुसार हरिनाथोपाध्याय कृत स्मृतिसार, गोण्ढ़िमिश्र प्रणीत शूद्राचार का भी ऐसा ही मत है ।

❁ इति द्विराचमननिमित्तानि ❁

# आचमनानुकल्प-विधिः

[ मूलम् ]

अथाचमनानुकल्पविधिः । तत्र[1] मार्कण्डेयपुराणे-

कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्वीताऽलम्भनं वाऽपि दक्षिणश्रवणस्य च[2] ॥

यथा विभवतो ह्येतत्पूर्वाऽभावे ततः परम् ।
न विद्यमाने[3] पूर्वस्मिन्नुत्तरप्राप्तिरिष्यते ॥

[ संस्कृत टीका ]

तत्रेति । तत्र = आचमनानुकल्पविधौ । कुर्यादिति । "सति निमित्ते सर्वाङ्गमाचमनं कुर्यात् । आचमनासम्भवे गोपृष्ठस्य = भूतलस्य । स्पर्शम् । "गौरिला कुम्भिनी क्षमा" इति भूमिपर्यायेऽमराभिधानात् । भूतलमार्द्र-मित्याचारदीपिकाकाराः। आर्द्रं तृणं भूमिं गोमयञ्चोपस्पृशेदिति बौधायन-स्मरणादिति गोभिलगृह्यसूत्रव्याख्यायां म.म. मुकुन्दझाशर्माणः ।. अथवा, अर्कदर्शनम् = सूर्यदर्शनम् । अथवा दक्षिणश्रवणस्य = सव्येतरकर्णस्य । आलम्भनम् = स्पर्शम् । कुर्वीत । एतत् = पूर्वोक्तम् । यथाविभवतः = यथासम्भवतः । ज्ञेयमिति शेषः । पूर्वाभावे = अनुकल्पेष्वपि प्रथमस्यासम्भवे । ततः = पूर्वस्मात् । परमिष्यते । हि= यतः । पूर्वस्मिन् न विद्यमाने सति । उत्तर-प्राप्तिः = उत्तरस्य = अग्रिमस्य प्राप्तिः = प्रसङ्गः । इष्यते = अभीष्यते ।

अत्र "गोपृष्ठस्य = भूतलस्य । दक्षिणकर्णस्पर्शकल्पो विप्रस्यैव । 'विप्रस्य दक्षिणे कर्णे नित्यं निष्ठन्ति देवता' इति पराशरवचनात्। विप्रान्यस्तु गोपृष्ठस्पर्शादिकमनुकल्पान्तरमाचरेदित्यर्थः । 'यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ' इति वचनाद् विष्णुस्मरणमाचमनानुकल्पत्वेनाचरन्ती" ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

निमित्त उपस्थित होने पर प्रथमतः विधानानुसार सर्वाङ्गसहित आचमन करे। यह यदि सम्भव न हो तो अनुकल्प में गीली घास या गीले गोबर या पृथ्वी का स्पर्श करे। अथवा सूर्य का दर्शन करे । अथवा अपने दाहिने कान का स्पर्श करे। यहाँ पूर्व-पूर्व के अभाव में उत्तर-उत्तर का ग्रहण करना चाहिए ।

पाठान्तर (१) विधिः, तत्र इति ह. पु. नास्ति । (२) वै । (३) पूर्वोक्ते ।

यहाँ नित्यकृत्यार्णव के विवेचन के आधार से ज्ञातव्य है कि पराशर वचनानुसार दाहिने का अनुकल्प केवल ब्राह्मण के लिए हो सकता है। ब्राह्मणेतर के लिए अन्य अनुकल्प है किन्तु आचमन का अनुकल्प विष्णु स्मरण तो सभी करते हैं।

[ मूलम् ]

पराशरः–

क्षुते निष्ठीविते चैव दन्तश्लिष्टेऽनृते[1] तथा।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥

[ संस्कृत टीका ]

पराशर इति। कर्मस्थस्य क्षुतादावित्यनुवृत्तौ पराशर इति बोद्धव्यम्। क्षुते इति। क्षुते = क्षीवे जाते। निष्ठीविते = मुखेन कठिनश्लेष्मत्यागे। दन्तश्लिष्टे = दन्तसंलग्ने उच्छिष्टलेपे, तन्निर्हत्येत्यर्थः। अनृते = मिथ्या भाषणे सति। पतितानाम् = स्वधर्मभ्रष्टानाम्। (एतस्य व्युत्पत्तिर्यथा–पतति = भ्रष्टो भवति स्वधर्मात्, शास्त्रविहितकर्मणः, सदाचारादिभ्यो वा यः, (पत्+कर्त्तरि क्तः) स पातित्यविशिष्टः स्वधर्मच्युतः पतितः। तस्य लक्षणं मार्कण्डेयपुराणे यथा-

यः स्वधर्मं समुच्छिद्य परधर्मं समाश्रयेत्।
अनापदि स विद्वद्भिः पतितः संप्रकीर्त्तितः ॥ इति

सम्भाषे = परस्परालापे च दक्षिणं श्रवणं स्पृशेत् ॥ इति। पराशरशातातप-वचनान्युद्धृत्य एतेषु निमित्तेषु समर्थोऽपि नाचामेत् किन्तु दक्षिणकर्णमेव स्पृशेदिति स्मृतिदीपिकेति नित्यकृत्यार्णवः।

[ हिन्दी टीका ]

छींक होने, मुंह से कठिन कफ त्यागने, दाँत में लगे अन्नादि के हटाने, झूठ बोलने तथा पतितों के साथ बातचीत करने पर दाहिने कान का स्पर्श करें। (यह मूल वचन का अर्थ हुआ)। स्मृतिदीपिका में पराशर तथा शातातपवचन को उद्धृत कर निबन्धकार म०म० वामदेवोपाध्याय का मत है कि द्विराचमन के निमित्त (उपरि उक्त के अलावे अधो वस्त्र पहनना, अश्रुपात होना, अधोवायु त्याग तथा नाक से कठिन कफ त्याग आदि उपस्थित होने पर कर्मस्थित (ब्राह्मण)

---

पाठान्तर (१) तथाऽनृते इति पाठः ह० पुस्तके।

व्यक्ति समर्थ हो या असमर्थ आचमन न कर अपने दाहिने कान का ही स्पर्श करे।

[ मूलम् ]

वृद्धशातातपः[१]–

वातकर्मणि, निष्ठीव्य, दन्तशिष्टे तथाऽनृते।
क्षुते, पतितसम्भाषे दक्षिणं श्रवणं स्पृशेत्॥

[ संस्कृत टीका ]

वृद्धशातातप इति। अत्रापि कर्मस्थस्य क्षुतादावित्यनुवृत्तौ वृद्धशातातप इति बोध्यम्। वातेति। वातकर्मणि = अधोवायुसमुत्सर्गे। निष्ठीव्यं = मुखेन कठिनं श्लेष्माणं त्यक्त्वा। अन्यत्सर्वं पूर्ववद् बोध्यम्।

[ हिन्दी टीका ]

अधोवायु का त्याग होने, मुंह से कठिन कफ त्यागने, दाँत में लगे अन्नादि कण को हटाने, झूठ बोलने, छींक होने, पतितों के साथ सम्भाषण करने पर कर्म स्थित व्यक्ति दाहिने कान का स्पर्श करें।

[ मूलम् ]

अत्र बौधायनः -

आर्द्रं तृणं भूमिं गोमयञ्चोपस्पृशेत्।

तत्र[१] आपस्तम्बः:-

आर्द्रं वा शकृत् ओषधिं वा[२] भूमिं वा।

शकृत् = गोमयम्।

[ संस्कृत टीका ]

आर्द्रमिति। आचमनमुक्त्वा तदनुकल्पमाहतुरार्द्रमिति। आर्द्रमिति सर्वान्वयीति हेमाद्रिः। शकृत् = गोमयम्। आर्द्रं गोमयमिति बौधायन वाक्यात्। गोरेव शकृतः पावनत्वाच्च। आर्द्रतृणसाहचर्याद् भूमिगोमयावप्यार्द्रावेव ग्राह्यावित्याचारदीपिकाऽपि।

[ हिन्दी टीका ]

आचमन के अनुकल्प में बौधायन तथा आपस्तम्ब का क्रमशः कहना है कि (अ) गीली घास या गीली पृथिया या गाय के गीले गोबर का स्पर्श करे तथा (आ) गीले गोबर या भीगी औषधि या भीगी पृथ्वी का स्पर्श करे।

❀ इति आचमनानुकल्पविधिः ❀

---

(१) अत्र। (२) 'वा' नास्ति। (३) यावन्नापः ह. पु.।

# आचमनापवादः

[ मूलम् ]

अथाचमनापवादः । तत्रापस्तम्बः–

**न श्मश्रुभिरुच्छिष्टो भवति, अन्तरास्ये सद्भिः यावन्न हस्तेन स्पृशति ।**

वशिष्ठः–

**न श्मश्रुगतो लेपः ।**

अशुचिरिति शेषः ।

[ संस्कृत टीका ]

न श्मश्रुभिरिति । अन्तरास्ये = मुखाभ्यन्तरे । सद्भिः = विद्यमानैः । श्मश्रुभिः=मुखरोमैः । (मानवः) उच्छिष्टः = अपवित्रः, न भवति । यावत्कालम् हस्तेन तानि श्मश्रूणि न स्पृशति । स्पर्शने तूच्छिष्टो भवत्येव ततश्चाचामेदिति भावः । श्मश्रुसम्भवविषयकं वाक्यमदः, श्मश्रुधारणस्य काम्यत्वात् ।

न श्मश्रु इति । लेपः = अन्नकणदुग्धादिलेपः । श्मश्रुगतो लेपः = "थूत्कारारम्भ" इति, आचमनापवाद इत्यात्रापवादः सामान्यतया निरूपितस्य विशेषोद्देश्यताऽवच्छेदेन निषेधाजनकत्वमितिचाचारदीपिकेति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

मूँछ के मुंह के भीतर रहने पर उससे व्यक्ति अपवित्र नहीं होता जब तक कि ऐसे का हाथ से स्पर्श न करे । अर्थात् स्पर्श करने पर तो आचमन करना चाहिए ।

मूँछ के ऊपर लगे अन्नकण दुग्ध आदि अथवा थूत्कार जल का लेप अशुद्ध नहीं होता ।

[ मूलम् ]

गौतमः–

**दन्तश्लिष्टे[1] दन्तवदन्यत्र जिह्वाभिमर्शनात्[2] ॥ १ ॥**
**प्राक् च्युतेरित्येके ॥ २ ॥**
**च्युतेरास्रावविद्[3] विद्यान्निगरन्नेव तच्छुचिः ॥ ३ ॥**

पाठा० (१) श्लिष्टेषु । (२) मर्षणात् । (३) च्युतेष्वास्रव ।

प्राक्च्युतेरित्येके इति । जिह्वाऽऽश्लिष्टमपि दन्तलग्नं न च्यवते तदा शुद्ध्यतीत्यर्थः । तेन दन्तलग्नं जिह्वास्पृष्टमाचमनार्थमाकर्षणीयम् । यदि न च्यवते तदा दन्तलग्ने सत्याचमनं न कर्त्तव्यम् । च्युतेरित्यादि । यद्दन्त[४]-लग्नमाचमनोत्तरं च्यवते तदा आस्राववत् = लालावत्, निगिरन्नेव[५] शुद्ध्यति ।

[ संस्कृत टीका ]

दन्तेति । दन्तश्लिष्टे विशेषमाह दन्तेति । दन्तश्लिष्टे = दन्तलग्ने उच्छिष्टलेपे । अन्यत्र जिह्वाऽभिमर्शनात् = दन्तलग्नं यावज्जिह्वया दन्तेभ्यो भेदेन नोपलभ्यते तावद्दन्तवन्नाशुचीत्यर्थः । अर्थाज्जिह्वास्पृष्टन्त्वशौचाय भवत्येव तदपि उपलभ्यमानरसञ्चेदशुचीति बोध्यम् ।। १ ।।

प्राक्च्युतेरित्येके इति । सत्यपि जिह्वया भिन्नत्वेन रसावगमे यावन्न च्यवते तावच्छुचिरित्येके मन्यन्ते इति सूत्रार्थः । जिह्वेति । जिह्वाऽऽश्लिष्टमपि = जिह्वयाऽऽलोडितमपि । दन्तलग्नम् । न, च्यवते = निस्सरति । तदा शुध्य-तीत्यर्थः। तेन दन्तलग्नं जिह्वा-स्पृष्टमाचमनार्थम्, आकर्षणीयम् = तृणादिना निर्हरणीयम् = अपसारणीयमिति यावत् । अपसृते च आचमनं विधेयम् -

**भोजने दन्तलग्नानि निर्हृत्याऽचमनं चरेत् ।**

इति देवलवचनात् । यदि न च्यवते तदा दन्तलग्न सति आचमनं न कर्तव्यमिति भावः । मूले इत्येके इति कथनात्कस्याप्यन्यस्य मुने र्मतमिति ध्वन्यन्ते ।।२।।

यद् दन्तलग्नमिति । आचमनोत्तरं यद् दन्तलग्नम् = दन्तश्लिटं, न च्यवते तद्, आस्रावववत् = लालावत्ः आस्यजलवदिति यावत् । निगिरन्नेव = निगरणम् अन्तःप्रवेशनं तत्कुर्वन्नेव, निगलन्नेवेति यावत् । शुचिः (इति) विद्यात् = शुद्ध इति जानीयात् = शुद्ध्यतीत्यर्थः । निगिरन्नेव तच्छुचिरिति वक्तव्ये आस्रावववद्यादिति वचनम् आस्रावस्यापि निगरणादेव शुचिरिति सूचनार्थम् ।। ३ ।।

[ हिन्दी टीका ]

दाँतों के बीच घुसा अन्नकण आदि जीभ के द्वारा जबतक दांतों से अलग रूप में ज्ञात न हो तब तक दातों के जैसे अशुद्ध नहीं है ।। १ ।।

---

पाठा० (४) यदि दन्त । (५) निगल ह. पु. ।

जीभ से बार-बार प्रयत्न करने पर भी यदि वह अन्नादि भाग दाँतों से निकले ते भी शुद्ध ही है । यह किसी अन्य मुनिका मत है । किन्तु वैसे अनादि भाग को तृण आदि से निकाल देना चाहिए । निकल जाने पर "भोजन के बाद दाँतों में सटे अन्नादि को निकाल कर आचमन करे" इस देवलवचनानुसार आचमन कर लेना चाहिए । यदि कदाचित् निकल नहीं रहा हो और दाँतों में ही सटा रहे तो आचमन की आवश्यकता नहीं ।। २ ।।

आचमन के बाद दाँतों में घुसा हुआ वह अन्नादि कण स्वतः निकल आता है तो उसे मुंह के पानी (लाला-लार) के जैसे निगल जाने से ही शुद्धि हो जाती है । इस कथन से यह ध्वनित होता है कि मुखजल को भी निगल जाने से ही शुद्धि हो जाती है ।। ३ ।।

## [मूलम्]

तथा[1] देवलः–

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥
नो तत्र बहुशः कुर्याद् यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद् व्रणे कृते [2]॥

## [संस्कृत टीका]

भोजने इति । भोजने = भोजनसमये । दन्तलग्नानि = जिह्वाऽऽश्लिष्ट-दन्तसम्बद्धानि आस्वाद्यमानरसान्यन्नादीनि । निर्हृत्य = उद्धृत्य । आचमनं चरेत् । (यदि) असंहार्यम् = अनिर्हरणीयम् । दन्तलग्नम् = जिह्वा स्पृष्ट-दन्तलग्नं (भवेत्) तदस्पृष्टस्य तु संहार्यस्यापि नाचमननिमित्तता, अन्यथा गौतमवचने 'अन्यत्र जिह्वाऽभिर्शनादि'ति निरर्थकमेव भवेत् । (तदा) लेपम् = अन्नादे र्भागम् । दन्तवन्मयेत । यथा दन्ते सति नाचमनमावश्यकं भवति तथैव तदन्नादौ सति नावश्यकमिति भावः । तत्र = लेपे। उद्धरणे = अपसारणार्थम् । बहुशः बहुधा । यत्नम् = प्रयत्नम् । न कुर्यात् । (यतः) तृणवेधाद् व्रणे कृते । अत्यर्थम् = अत्यधिकम् । अशौचम् = अशुद्धिः। भवेत् । अतस्तदुद्धरणार्थं भूयान् यत्नोऽपि न कार्य इति भावः ।

---

पाठा० (1) 'च' इति, (2) 'इति' इति चात्र ह.पु. अधिकः पाठः ।

यद्यपि (मूलपुस्तके) व्याख्यातैतद्मूलवचनानन्तरं च्युतेरित्यादि । यद्दन्तलग्नमाचमनोत्तरं च्यवते तद्दास्रावल्लालावन्निगिरन्नेव शुध्यतीत्यंशः प्रकाशितोऽस्ति किन्तु व्याख्यासौकर्य्यार्थम् वचनानन्तरमेव निवेश्य व्याख्यायि। पाठकैः यथास्थानमवलोकनीयः ।

[ हिन्दी टीका ]

भोजन के समय दाँतों में सटे हुए जिह्वा से स्पृष्ट तथा जिससे रस का आस्वादन हो रहा हो ऐसे अन्नादिकण को निकाल कर आचमन करें । यदि दाँत से निकालने योग्य नहीं हो तो इन्हें दाँतों के समान ही समझें । अर्थात् तब आचमन आवश्यक नहीं। किन्तु उसे निकालने के लिए बार-बार प्रयत्न भी नहीं करना चाहिए, क्योंकि उपस्थिति में मजबूत तृण द्वारा निकालने से यदि घाव हो जाय तो बहुत ही आशौच (अपवित्रता) हो जाता है ।

[ मूलम् ]

तथा[१] वसिष्ठः-

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥

यच्चापीति[२] । दन्तच्युत[३] मप्यन्नकणादि यत् प्रमाणादवशिष्ट-माचमनोत्तरमुपलभ्यते तदपि निगिरन्नेव[४] शुध्यतीत्यर्थः ।

[ संस्कृत टीका ]

दन्तवदिति । दन्तलग्नेषु = दन्तश्लिष्टेषु । दन्तवद् व्यवहारः । यच्चापीति । यच्चापि = दन्तच्युतमपि यदन्नकणादि । आचान्तस्य = कृताचमनस्य। अन्तर्मुखे = मुखाभ्यन्तरे । अवशिष्टम् = प्रमादाऽवशिष्टम् । उपलभ्यते । तदपि, निगिरन्नेव = गिलन्नेव । शुचिः = शुद्ध्यतीत्यर्थः ।

[ हिन्दी टीका ]

दाँतों में सटे अन्नकण आदि दाँत के समान ही है । अतः यहाँ असखम्प आवश्यक नहीं । किन्तु आचमन के बाद भी यदि असावधानी वश अवशिष्ट अन्न-कण आदि मुंह में मालूम होता हो तो उसे निगल जाने से ही शुद्धि हो जाती है।

---

पाठा० (१) 'तथा च' इति ह. पु. पाठः । (२) यच्चापीत्यादि । (३) 'ताद' इति । (४) 'गिरन्नेव' इति च ह. पु. ।

[ मूलम् ]

शङ्खः –

दन्तवद्दन्तलग्नेषु रसवर्जम् ।

[ संस्कृत टीका ]

दन्तेति । दन्तलग्नेषु = दशनसंलग्नेषु । रसवर्जम् = रस्यते इति रसः = आस्वाद्यमानान्नकणादीति यावत्, तद् वर्जयित्वा रसश्चेत् तत्र नोपलभ्यत इत्यर्थः । दन्तवद् शुचित्वव्यवहारः ।

एतेनाचामनं नावश्यकमिति बोधितं भवति । अर्थाद्दन्तलग्नान्युपलभ्यमान-रसाानि चेद् भवन्ति तदा तान्यशुचीन्येव ज्ञातव्यानि । एवञ्चात्राचमनं विधेयमिति भावः ।

[ हिन्दी टीका ]

जिससे रस का आस्वाद आ रहा हो उसे छोड़कर ही दाँतो में लगे लेप की शुद्धि समझनी चाहिए और आचमन की आवश्यकता नहीं । किन्तु दाँतो में सटे उन अन्नकणों के रह जाने पर जिससे रस का आस्वाद न हो रहा हो तो आचमन करना चाहिए ।

[ मूलम् ]

मनुः–

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽ[1]ङ्गं न यन्ति याः ।।

अस्यायमर्थः[2] । मुखच्युता जलविन्दवो भूमि-पतिताः स्पृष्टा अपि शुचयः । अङ्गलग्नास्तु रोमद्वयक्लेदसमर्था आचमनहेतवः । तथा पैठीनसिः–

भूमिगता बिन्दवः परामृष्टाः पूता विग्नुषः शुद्धद्विरोम-क्लिन्नेष्वाचामेत् ।

तथा, मनुः–

स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भूमिकास्ते समा ज्ञेया न तैरप्रयतो भवेत् ।।

[ संस्कृत टीका ]

नोच्छिष्टमिति । याः, मुख्याः = मुखे भवाः मुखच्युता इति यावत् ।

पाठा० (१) विप्लुपः । (२) अस्यार्थः । ह. पु. ।

विप्लुषः = जलबिन्दवः । अङ्गं न । यन्ति = गच्छन्ति । ताः, उच्छिष्टम् = अशुचिम् । न, कुर्वते = कुर्वन्ति ।

अस्य तात्पर्यार्थः- मुखच्युता जलबिन्दव इत्यादि ॥ १ ॥

तथाच पैठीनसिः भूमिगता इति । बिन्दवः = आचमनबिन्दवः 'मुखजा विप्लुषो मेध्यास्तथाऽऽचमन-बिन्दवः' इति याज्ञवल्क्य (१/१९५) वाक्यैकवाक्यत्वात्। भूमिगताः = भूनिपतिताः । परामृष्टाः = स्पृष्टाः । पूताः = पवित्राः, नाप्रायत्यमापादयन्तीति यावत् । विप्लुषः = उक्तयाज्ञवल्क्य-मन्वेकवाक्यतया मुखजा जलबिन्दवः । भूमिगताः = भूमिपतिताः । शुद्धाः = पवित्राः-नाप्रायत्यहेतव इति यावत् । रोमद्वयक्लिन्नेषु = लोमद्वयपर्यन्तमार्द्रेष्वङ्गेषु सत्सु । आचामेत् । एवञ्च ते आचमन-बिन्दवः ताश्च मुख-निर्गता विप्‌ुषः अङ्गपतिता अपि रोमद्वयार्द्रीभावमापादयितुं समर्था एव आचमननिमित्तमिति भावः ॥ २ ॥

तथा (मनुः) । स्पृशन्तीति । अत्र विशेषमाह मनुः स्पृशन्तीति । परान् आचामयतः = आचमनार्थमन्येभ्यो जलं ददतः । ये बिन्दवः = जलकणाः । पादौ स्पृशन्ति न जङ्घादि । ते = बिन्दवः । भूमिगैः = भूमिगताऽचमन-बिन्दुभिः, विशुद्धभूमिष्ठोदकै र्वा । समाः = तुल्याः ज्ञेयाः = बोद्धयाः । तैः बिन्दुभिः । आचामयिता, अप्रयतः = अपूतो न भवति । अपितु पूत एव सन्तिष्ठते । अतएव नाचमनार्हो भवतीति भावः ।

अत्र "अत्र आचामयत इत्यभिधानादन्येषमाचमनविन्दुसंस्पर्शे भवत्येवा प्रायत्यमितीति, पादग्रहणाच्च जङ्घाद्यङ्गान्तरस्पर्शो दुष्ट एवेति मेधातिथिः । पादौ न जङ्घाद्यङ्गदिरिति कुल्लूकभट्टोऽपि । हेमाद्रिस्तु "भूमिगैः = अनुपहत-भूमिसंस्थोदकैरित्यर्थः । एते च भूम्यभिघातोत्थिता एव स्पृष्टाः शुद्धाः, नान्तरालस्पृष्टाः इति च वीरमित्रोदयः ।

"भूमिगता उच्छिष्टादिजलकणाः स्पृष्टा अपि न स्युराशौचाय, ततोऽपि क्षुद्रा अङ्गे पतिता नाशौचाय, रोमद्वयक्लेदकास्त्वङ्गे लग्नाः सकृदाचमनहेतव इत्याचारचिन्तामणिः । भूमिसंलीनाः स्थूला अपि बिन्दवोऽङ्गपतिता श्चैकरोमकूपक्लेदनक्षमाः क्षुद्रबिन्दवः रोमद्वयक्लेदकास्त्वाचमनहेतव इत्यर्थः ।

पृथगुपलभ्यमाना बिन्दवः आचमनकरणे पादपतिताश्चाचमनहेतव एवेति स्मृतिदीपिके''ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

मुंह से निकला जलकण यदि भूमि पर गिरे और उसका स्पर्श हो तो भी उस जलकण से अशुद्धि नहीं होती । किन्तु वही यदि शरीर के अंग पर गिरे और दो रोमों के बीच के स्थान को गीला कर दे तो आचमन करना चाहिए ।। १ ।।

जैसा कि पैठीनसि ने भी कहा है कि आचमन के जलकण का यदि स्पर्श हो तो भी शुद्धि रहती है, तथा मुख से निकले जल-कण भूमि पर गिरकर शुद्ध हो जाते हैं किन्तु यदि वही आचमन तथा मुख से निर्गत जलकण किसी अंग पर गिरे और दो रोमों के बीच के स्थान को गीला कर दें तो आचमन करे ।। २ ।।

मनु के स्पृशन्ति आदि श्लोक का अर्थ - (पुनः मनु का विशेषतः कहना है कि) दूसरों को आचमन करने के लिए शुद्ध जल देते समय जल देने वाले के पैरों पर जल की बूँदे, जो भूमि के आघात से ऊपर उठी है, गिरे तो उन्हें भूमि निपतित जल विन्दु या पवित्र भूमि पर स्थित जल के समान समझें । उससे शरीर अशुद्ध नहीं होता ।

यहाँ आचारचिन्तामणि का सरांश में कहना है कि भूमिपतित जूठे आदि अपवित्र जलकणों का स्पर्श होने या अंग पर छोटे वैसे जलकणों के गिरने से अशुद्धि नहीं होती है । किन्तु उनसे यदि रोंगटे गीले हो जायं तो एक बार आचमन करना चाहिए । स्मृतिदीपिका (म.म. वामदेवोपाध्याय) का भी प्रायः ऐसा ही कहना है ।

[ मूलम् ]

अत्र्यङ्गिरसौ–

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा ।।

अप्सु उच्छिष्टतानिषेधात् ''पीत्वाऽप''[१] इति श्रवणाच्च । एवञ्च ''पीत्वाऽप'' इत्याचमनविधिभया ''दप्स्वि''ति अपोऽशानविषयं प्राणाहुतिसन्निकर्षादिति कल्पतरुकारादीनां[२] व्याख्यानमशुद्धम् ।

---

पाठा० (१) आपः । (२) इत्याद्या । ह. पु. ।

[ संस्कृत टीका ]

मधुपर्के इति । विप्रपदमत्र द्विजातिपरं तेन विप्रः = द्विजातिः । मधुपर्के सोमे च अप्सु च = मधुपर्कप्राशने सोमरसप्राशने जलपाने च कृते । कृतासु च प्राणाहुतिषु (एतद्भक्षणनिमित्तकः) उच्छिष्टः = अशुचिः । न भवेत् ।

(इति) तु । यथाऽत्रेर्वचनम् = येन प्रकारेण अत्रिमुनेः कथनम् । तथा = तथैव ज्ञेयमिति शेषः ।

अत्र "अत्र (सर्वत्र) मधुपर्कादावुच्छिष्टतानिषेधादुच्छिष्टतानिवर्तक-भक्षणोत्तराचमनस्यार्थतो निषेधसिद्धावपि 'भोक्ष्यमाणः प्रयतोऽपि द्विराचामे'दि-त्यादिना विहितं प्रथममाचमनं स्यादेव । इदं पुनरत्र प्रतिभाति ।

सुप्त्वा, क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

इति मनुना प्रयतस्यापि नैमित्तकाचमनविधानादुच्छिष्टत्वनिषेधेनाशुचित्वाभावे सिद्धे, अशुचित्वनिवर्तकाचमनाभावे सिद्धेऽपि पानभोजनादिनिमित्त-माचमनमावश्यकमेव । अतएव मधुपर्कप्राशनानन्तरं 'सर्वं वा प्राश्नीयात् प्राग्वा सञ्चरे निनयेदाचम्य प्राणान् संमृशती' त्यादिना गृह्यसूत्रेऽपि आचमनमभिहितम् । अनुच्छिष्टताभिधानञ्च तत्स्पर्शने सम्भाषणे च परे-षामाचमनाभावस्य, तस्यापि शूद्रादिस्पर्शाद्दोषाधिक्याभावस्य तदुत्तरमाचमनं विनैव कर्माधिकारस्य च बोधनाय । नैमित्तिकाचमनाकरणे पुरुषः परं प्रत्यवैति, कर्म तु साङ्गमेव । गृह्ये तथैव क्रमदर्शना" दिति वीरमित्रोदयः ।

एतेन तु "अप्सु उच्छिष्टतानिषेधात्" पीत्वाऽऽप इति नैमित्तिकमाचमनं, प्रयतोऽपीति श्रवणाच्चेति संक्षिप्तप्रकृतग्रन्थविवेचनस्याशयः प्रस्फुटितो जातः।

अत्र "अप्स्विति प्राणाहुतिसाहचर्यप्राप्तापोशनविषयम्, आचमनोदक-पानविषयं वा । अन्यत्रोदकपाने पीत्वाऽऽपोऽध्येष्यमाणश्चेत्याचमनविधेरि-तिकल्पतरुः । हेमाद्रिरपि अप्स्विति प्राणाहुतिसन्निधानादमृतापिधान-मसीत्यादिनोदकपाने कर्त्तव्ये भुक्तवानपि मन्त्रोच्चारणं प्रति नोच्छिष्ट इत्यर्थः" इति वीरमित्रोदयः ।

एवञ्च पुरोदीरितरीत्या यत् कल्पतरुकारादीनां व्याख्यानम् तत् अशुद्धम् = अनादेयम्, ग्रन्थप्रतिपादितपूर्वोक्तयुक्तेः । 'मधुपर्के' इत्यादिवचने अप्स्वित्यस्य जलसामान्यपरत्वेनैवोपपत्तौ सङ्कोचे मानाभावेन च अपोऽशानविशेषपरतया कल्पतरुकारादिभिर्व्याख्यातस्यानुपयुक्तत्वाच्च । आचमनोदक-विषयं वेत्यपि न सम्यक् । सङ्कोचे मानाभावात् । आचमनविधिवैयर्थ्यात् । अनवस्था-पाताच्च। अतएव "एवञ्च 'मधुपर्क' इत्यादिवाक्ये अप्स्वित्यस्य जलसामान्य-परत्वेनोपपत्तौ कल्पतरुकारादिभिर्यदपोशानादिविशेषपरतया व्याख्यातं तद् विचारणीयमितीति;

"आचमनोदकपानन्तु नाचमननिमित्तम् । आचमनविधिवैयर्थ्याऽनवस्थ-योरन्यतरप्रसङ्गादितिं । पूर्वोक्तं हेमाद्रिं सन्दर्भयन्-'यत्तु हेमाद्र्यादौ भुक्तवतोऽपि अमृतापिधानमसीति मन्त्रपाठप्राप्त्यर्थमनुच्छिष्टत्वविधानमित्युक्तं, तदपि न साधीयः । मन्त्रपाठविधिबलादेवोच्छिष्टस्यापि मन्त्रपाठप्राप्तेरनुच्छिष्ट-त्वविधाने वैयर्थ्यादितीति च वीरमित्रोदयः ।

अतएव च प्रकृत-मधुपर्क इत्यादि वचनस्य आचारादर्शकृतव्याख्यायाः ग्राह्यत्वादेव स्वविवेचनं प्रमाण(प)यन् 'मधुपर्के च सोमे चे' त्यादि-वचनव्याख्यायाम् "अप्सूच्छिष्टतानिषेधात् पीत्वाऽऽप इति नैमित्तिकमाचमनं प्रयतोऽपीति श्रवणाच्चेति श्रीदत्तलिखनान्मधुपर्कादिप्राशनानन्तरं नैमित्तिकमाचमनं तत्सम्मतमपीति वीरमित्रोदयलेखोपि साधु सङ्गच्छते ।

अत्र प्रकृताचारादर्शपङ्क्तीनामतीव संक्षिप्ततया विवदमान-विषयकतया च नित्यकृत्यार्णवोद्धृतानि त्रीणि उद्धरणान्यप्यधो निर्दिश्यन्ते । तानि यथा-

(१) "मधुपर्के चेति वाक्येनोच्छिटतानिषेधेन पीत्वेत्यध्ययननैमित्तिका-चमन-सम्भवात्प्रयतोऽपीति श्रवणाच्च प्राणाहुतिसन्निकर्षेणापोशानविषयमिति कल्पतरुकारोक्तं परास्तं, सङ्कोचे मानाभावदिति ग्रन्थकृदाशय आभाती" त्याचारादर्शटीकाऽऽचारदीपिका, इति ।

(२) "अप्स्वित्यपोशानविषयं प्राणाहुतिसाहचर्यात् । अन्यत्रोदपाने 'पीत्वाप' इत्यादिनाचमनविधानात्" इत्याचारचिन्तामणिप्रभृतयः, इति ।

(३) "श्रीदत्तानुसारिणस्तु 'पीत्वापोध्येष्यमाणश्चाचामेत्प्रयतोऽपि सन्' इति वचनाज्जलपानसामान्ये नैमित्तिकाचमनं नत्वाशौचनाशकम् । एवं मधुपर्कप्राशन-सोमप्राशनयोः । प्राणाहुतिपदार्थश्च हुतशेषाज्याशनार्थकः, आयुर्घृतमिति श्रुत्या घृतस्य प्राणपोषकत्वेन प्राणपदस्यापि कथञ्चिदायुः पदस्येव तत्प्रतिपादकत्वबोधनात् । यद्वा, प्राणरूपास्वाहुतिष्वप्स्वित्यपोशानमेव समस्तपदार्थः, 'आपोमयः प्राण' इति छान्दोग्यसंवादात् । अथवाऽतृप्तस्य सायंप्रातर्मनुष्याणामशनं देवनिर्मितमिति नित्यविधिपालनाय शुद्धप्राणाहुतिषु जलादिना कृतेष्वित्यर्थ इति स्मृतिदीपिका ।। इति ।

एवञ्च = पूर्वोक्तव्याख्यानस्य युक्तत्वाच्च । पीत्वाऽप इत्याचमन-विधिभयात् = पीत्वाऽपोध्येष्यमाणश्चेति वचनप्राप्तपाननिमित्तिकाचमन-विधिभयमवलम्ब्य=तादृशाचमनविधिं परित्यज्येत्यर्थः । अप्स्वित्यपोशानविषयम् = अत्रिवचनपठितमप्स्वितिपदम् अमृताऽपिधानमसीत्यादिमन्त्रसम्पाद्याच-मनविषयकम् । प्राणाहुतिसन्निकर्षात् = तत्रैव पठितप्राणाहुतिपदसान्निध्यात् । अत्र "प्रयतोऽपीति प्रथमाचमनेन किञ्चित्प्रायत्यवानपि पुनराचामेदित्यर्थक-मित्याचारादर्शफक्किकाव्याख्या ।

[ हिन्दी टीका ]

द्विजाति (कर्मकर्त्ता) मधपर्कप्राशन, सोमरसप्राशन, जल पीने एवं हुतशेष आज्य (घृत) के प्राशन अथवा प्राण पोषण के निमित्त पञ्चग्रास आदि लेने के बाद भी अत्रि के कथनानुसार अशुचि नहीं होते हैं । यह मूल वचन का अर्थ है ।

"किन्तु यहाँ मधुपर्क आदि के पानस्थल में उच्छिष्टता के निषेध से ही उच्छिष्टता दोष को हटाने वाले आचमन का भी अर्थतः (स्वभावतः) निषेध हो ही जाता है, फिर भी " भोजन करने को उद्यत जन भोजन के पहले दो बार आचमन करने" इस वसिष्ठ वचनानुसार विहित प्रथम द्विराचमन तो होना ही चाहिए ।

पुनः विशेषतः ज्ञातव्य है कि 'निद्रा, छींकने, खाने, मुंह या नाक से कठिन कफ फेकने, मिथ्याभाषण तथा पानी पीने के बाद एवम् अध्ययन आरम्भ के पहले पवित्र व्यक्ति भी आचमन करें' मनु के इस कथनानुसार पवित्र व्यक्ति के लिए भी आचमन का विधान किया गया है । फलतः उक्त उच्छिष्टता के निषेध से अपवित्रता के अभाव की सिद्धि होने एवम् अपवित्रता को हटाने वाले आचमन के अभाव की सिद्धि होने पर भी पानी पीने, भोजन आदि के निमित्त से होने वाला आचमन तो आवश्यक होगा ही । अतएव मधुपर्कप्राशक (पान या भक्षणों) के बाद "सर्वं वा प्राश्नीयात्" इत्यादि गृह्यवचनानुसार भी आचमन कहा गया है । तब

अनुच्छिष्टताविधान का तात्पर्य यह है कि मधुपर्क आदि भक्षण करने वाले से स्पर्श या परस्पर बातचीत करने पर दूसरे व्यक्ति को आचमन की आवश्यकता नहीं होगी। या उसे भी शूद्र आदि के स्पर्श से अधिक दोष का अभाव तथा आचमन के बिना ही अन्य कर्म करने का अधिकार रहेगा। किन्तु नैमित्तिक आचमन न करने पर अनुष्ठानकर्त्ता पुरुष तो प्रत्यवायभागी बनता ही है। भले ही उसका अङ्ग सहित कर्म क्यों न सम्पन्न हो जाय। विशेष कर मधुपर्क प्राशन स्थल में तो आचमन के बाद ही अग्रिम कर्म शुरू करना चाहिए। क्योंकि गृह्य ग्रन्थ में वैसा ही क्रम देखा जाता है।''

यह प्रसङ्ग वीरमित्रोदय से लिया गया है।

निष्कर्ष में फलितार्थ हुआ कि मूल अत्रि के वचन से जल पीने के बाद उच्छिष्टता का निषेध रहने पर भी ''पीत्वाऽप:'' इत्यादि उक्त मनुवाचनानुसार नैमित्तिक आचमन होगा ही। क्योंकि इसी मनुवचन में 'प्रयतोऽपि' पद पढ़ा गया है। जिससे सिद्ध होता है कि पवित्र रहने पर भी नैमित्तिक आचमन करना ही चाहिए।

अब यहाँ कल्पत (कार आदि) का कहना है कि अत्रि वचन में 'प्राणाहुति' पद के साथ 'अप्सु' पद पढ़े जाने के कारण इसका तात्पर्य भोजनान्त में 'अमृतापिधानमसि' (स्वाहा) आदि मन्त्रों के द्वारा किये जाने वाले आचमन से या सामन्यत: आचमन के समय जल के पीने से है। इससे अन्य जल पीने पर ''पीत्वाऽपोऽध्येष्यमाणश्च'' इस मनु वचन ने आचमन का विधान किया है। परन्तु यह कहना युक्तिसंगत नहीं, क्योंकि प्रथम कारण तो प्रकृत ग्रन्थ में कही गई पूर्वोक युक्तियाँ है। और मधुपर्क आदि वचन में 'अप्सु' पद से जलसामान्य अर्थ कर देने से ही सर्वत्र सामञ्जस्य हो ही जाता है तो फिर 'अमृतापिधान' वाले मन्त्र से कर्त्तव्य आचमन के जल का अर्थ करना अनुपयुक्त ही तो होगा।

(यहीं नित्यकृत्यार्णव में उद्धृत हरिलाल कृत टीका आचारदीपिका का कहना है कि इस तरह अर्थ संकोच करने में कोई प्रमाण भी नहीं, ऐसा ग्रन्थकार का आशय आभासित होता है।)

''देखें तो कल्पतरुकार का अथवा रूप में अप्सु पद का तात्पर्य यह कहना कि सामान्यत: आचमन वाले जल के पीने से है। किन्तु यह भी उचित नहीं। क्योंकि आचमन जल का पीना आचमन का निमित्त नहीं हो सकता। यदि ऐसा हो तो आचमन का विधान व्यर्थ या अनवस्था दोष का प्रसंग हो जायेगा।

प्रसंगात् ऊपर से (वीरमित्रोदय के लेखानुसार) ज्ञातब्य हो कि यहीं हेमाद्रि (आदि) का कहना है कि प्राणाहुति पद के समीप 'अप्सु' पद के पढ़ने में 'अमृतापिधानमसि' अत्यादि मन्त्रों से कर्त्तव्य आचमन में कृत भोजन (खाये हुए) व्यक्ति अक्त मन्त्रोच्चारण के प्रति अशुचि नहीं होता । किन्तु यह कहना भी असंगत है क्योंकि मन्त्र पाठ के विधानबल से ही उच्छिष्ट (जूठे) मुंह वाले को मन्त्रपाठ की प्राप्ति हो जाती है, तब इसके लिए अनुच्छिष्टता के विधान की कल्पना व्यर्थ है'' । ये विवेचन वीरमित्रोदय से लिए गए हैं ।

यहाँ वीरमित्रोदय ने ग्रन्थकार की कल्पतरु आदि संबंधी खण्डनवाली व्याख्या को उक्त युक्ति-प्रतियुक्तियों के द्वारा पूर्णतः पल्लवित करते हुए भी अपने विवेचन विशेष के उद्धरण प्रदर्शन से श्रीदत्त सम्मत कहकर सर्वथा समर्थित बतलाया है । जो संस्कृत टीका से द्रष्टव्य है ।

यहाँ आचारादर्श की पक्तियाँ अतीत संक्षिप्त होने तथा विवादी विषय से युक्त होने के कारण संस्कृत टीका में नित्यकृत्यार्णव में उद्धृत तीन उद्धरण दिखये गए हैं ।

(१) इनमें पहले आचारादर्श की टीका हरिलाल कृत आचारदीपिका का मुख्य वक्तव्य ऊपर कोष्ठक चिह्न के घेरे में दिखा दिया गया है ।

(२) आचारचिन्तामणि प्रभृति के मत कल्पतरुकार (आदि) के वर्णित मत के अनुयायी है।

(३) वहीं स्मृतिदीपिका (म.म. वामदेवोध्याय प्रणीत) के अनुसार श्रीदत्तानुसारियों का कहना है कि ''पीत्वाऽपोऽध्येष्यमाणश्च'' इस वचन से जलसामान्य के पीने पर भी नैमित्तिक आचमन तो होना ही चाहिए । भले ही मूलोक्त अत्रि वचनानुसार आशौचनाशक आचमन की आवश्यकता न हो । यही स्थिति मधुपर्क प्राशन तथा सोमरस प्राशन स्थल में भी ज्ञातव्य हो । प्राणाहुति पद का अर्थ है :- हुतशेष घृत का प्राशन अथवा सायंप्रातः नित्य विधिपालन निमित्त जल आदि के द्वारा की गई शुद्ध प्राणाहुति (अर्थात् जल आदि के सहैव पञ्चग्रास लेना) । अथवा प्राणाहुति संवलित अप्सुपद का अथ है अमृताऽपिधानमसि (स्वाहा) मन्त्र द्वारा लिये जाने वाले आचमनजल का पान ।

यहाँ आचारादर्श फक्किा व्याख्यानुसार 'प्रयतोऽपि' पदों का तात्पर्य है कि प्रथम आचमन से थोड़ी सी शुद्धि वाला होने पर पूर्ण शुद्धि के लिए पुनः (दुबारा) आचमन कर लेना चाहिए ।

[ मूलम् ]

शातातपः -

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।
ताम्बूले चेक्षुखण्डे[1] च नोच्छिष्टो भवति द्विजः ।

फले = कटुतिक्तकषाये जातीफलादौ सतामाचारादित्याहुः । भक्ष्ये = कटुकषाये ।

तथा चात्र[2] लघुहारीतः–

कषाय कटुताम्बूले[3] भुक्त[3] स्नेहाऽनुलेपने ।

[ संस्कृत टीका ]

दन्तलग्न इति । दन्तलग्न इति फलादेर्विशेषणम् । दन्तश्लिष्टे इति तदर्थः । फले = कटुतिक्तकषाये जातीफलादौ, सतामाचारादित्याहुः = कल्पतरु-कारा शिष्टाश्चेति शेषः । "फले = कटुतिक्तकषाये जातीफलादौ सतामाचारादिति कल्पतरुः । फलमूले चाग्निपक्वभिन्ने समाचारादिति रत्नाकरः । भक्ष्ये=फलमूलातिरिक्ते कटुकषाये" इति वीरमित्रोदयात् । "फले कटुतिक्ते कषाये, शिष्टाचारात् । भक्ष्ये = फलमूलभिन्ने तादृश्येव जाती कोशादौ । एतेषु दन्तलग्नेषूपलभ्यमानरसेष्वपि नाप्रायत्यमित्यर्थ" इति नित्यकृत्यार्णवाद्वा ।

तथाचात्र लघुहारीत इति । अत्र = आचमननिवृत्तौ । भुक्तस्नेहे = अत्यन्तानिर्हार्ये इतिशेषः। "एतच्च (भुक्ता नुलग्ने च) सौरभार्थोपभुक्तावशिष्टविषयम् । ताम्बूलसाहचर्यादि"ति माधवः ।

आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् ।

इति विष्णुवाक्येन तु ताम्बूलचर्वणनिमित्तकमाचमनं निषिध्यते । नतु भक्षणनिमित्तकम् । कश्चित्तु ताम्बूलेतरभोजनेष्वाचमनमावश्यकं ताम्बूले तन्नावश्यकमिति तदर्थ इत्याह । यदि च पूर्वलिखित-भक्षित-चर्वित-लीढेत्यमरकोशाच्चर्वणभक्षणयोः पर्यायता तदा विनिगमका-भावात्ताम्बूलभक्षणस्य पूर्वं परतश्च नाचमनमिति वस्तुस्थितिरिति वीरमित्रोदयः कषायकटु ताम्बूले भुक्तस्नेहानुलेपने (इत्यत्र) सामानाधिकारण्येनान्वयः इत्याचारचिन्तामणिः । कटुकषायरूपे फले मूले ताम्बूले चेक्षुखण्डे च भुक्ते नोच्छिष्टो न वा तस्मिन् दन्तगते तदीयस्नेहे मुखगते वेत्युक्तवचनयोरर्थ इति नित्यकृत्यार्णवः । उक्तलघुहारीतवचनस्योत्तरार्द्ध यथा–

---

पाठा० (१) दण्डे । (२) 'च' इत्येव ह. पु. । (३) भक्ष्ये स्नेहे ।

मधुपर्के च सोमे च नोच्छिष्टो मनुरब्रवीत् ॥ इति ।

[ हिन्दी टीका ]

कटुतिक्त कषाय रसवाले जायफल (जातीफल) आदि फल, अदरख आदि मूल, फल-मूल से अन्य कटु कषाय रसवाले भक्षणीय पदार्थ-छिलकेदार जाय फल आदि-पान चाहे इसकी लाली दिखती भी हो तथा ईख (गन्ना) खाने या इसके टुकड़े दाँतों में सटे रहने या इनके रस का आस्वादन होने पर एवम् किसी के द्वारा सुगन्धि आदि हेतु चन्दन के उपभोग करने से बचे चन्दन लगाने पर व्यक्ति अशुचि नहीं होता । अतः आचमन की आवश्यकता नहीं ।

[ मूलम् ]

मनुः-

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

द्रव्यमन्नपानादि[१] व्यतिरिक्तम् । तथा च बृहस्पतिः -

प्रचरँश्चान्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद् द्रव्यमाचम्य प्रचरेत्पुनः ॥

[ संस्कृत टीका ]

उच्छिष्टेनेति । द्रव्य हस्त इति = द्रव्यहस्तपदेन शरीरसम्बन्धमात्रं द्रव्यस्य विवक्षितम् । आमणिबन्धात् पाणिं प्रक्षाल्येति द्रव्यहस्तस्याचमनासभ्मवात् । स्कन्धादिस्थितद्रव्यः इति मन्वर्थमुक्तावली । कंथञ्चन =केनाऽपि प्रकारेण । तु = यदि । उच्छिष्टेन = अशुचिना केनापि जनेन । संस्पृष्टो भवति तदा । तद् द्रव्यम् अन्नपानादिव्यतिरिक्तद्रव्यम् । अनिधायैव = भूमौ अनवस्थाप्यैव । आचान्तः =कृताचमनः । शुचितामियात् = शुध्येत्, सहैव द्रव्यञ्च शुध्येत् ।

"उक्तमनु-वचनम् अभ्यवहार्य-अन्न-व्यञ्जनव्यतिरिक्तद्रव्यहस्तपरमिति विश्वरूप-भर्तृयज्ञाविति कल्पतरुरिति वीरमित्रोदयः, इत्याचारचिन्तामणिरिति नित्यकृत्यार्णवश्च ।

मूले, द्रव्यमन्नपानादिव्यतिरिक्तम् । अर्थात् द्रव्यपदमन्नपानादिभक्ष्य-भिन्नद्रव्यपरम् । प्रचरन्नित्यादि बृहस्पतिवचनात् । तथाहि-प्रचरम् = गच्छन् । अन्नपानेषु-हस्तादौ सत्स्वित्यर्थः । भूमौ निधाय तद्द्रव्यमित्यग्रे दर्शनात् ।

यदा, उच्छिष्टम् = आचमनानर्हाशुचिम् । उपस्पृशेत् = संस्पृशेत् । यद्यपि उच्छिष्टनिमित्तं मूत्रपुरीषकर्म भोजनादि च भवति तथापि प्रकृते उच्छिष्टशब्दः आचमनानर्हाशुचिवचनः। स्नानार्हाऽशुचिवचनत्वे तु आचमनमात्रविधि विरोधात् । तदा, तद्द्रव्यम् = अन्नपानादिभक्ष्यद्रव्यम् । भूमौ = पृथिव्याम् । निधाय आचम्य च पुनः । प्रचरेत् = गच्छेत्। एवञ्च बृहस्पतिवचनेऽस्मिन् द्रव्यपदमन्नपानादिभक्ष्यपरं सिद्धम् । यथा च वसिष्ठोऽपि-

**प्रचरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत् ।**
**भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रचरेत्पुनः ॥ इति ।**

अभ्यवहार्येषु = भक्ष्येषु । अत्र बृहस्पतिवचने "प्रचरन् = परिवेषणं कुर्वाणः । स्नेहपक्वान्नादिपरमेतदिति स्मृतिसमुच्चय इति नित्यकृत्यार्णवः ।

"अत्र विशेषमाहतुः शङ्खलिखितौ-

**द्रव्यहस्त उच्छिष्टो निधायाचम्याभ्युक्षेद् द्रव्यम् ।**

एतदभ्यवहार्यद्रव्यविषयम् । एवञ्च द्रव्यहस्तस्याचमनाच्छुद्धिः, द्रव्यस्य तु निधानाभ्युक्षणाभ्यामिति फलितम् । यदा तु द्रव्यस्यैव साक्षादुच्छिष्टस्पर्श स्तदा तत्परित्याज्यमेवे"ति वीरमित्रोदयः ।

**[ हिन्दी टीका ]**

(अन्नपानादि से भिन्न) द्रव्य को कन्धे आदि पर रखकर चलते समय यदि किसी अपवित्र पुरुष से स्पर्श हो जाय तो उस द्रव्य को पृथ्वी पर बिना रखे ही आचमन कर लेने से वह व्यक्ति तथा वह द्रव्य भी शुद्ध हो जाता है ।

वचन में पठित द्रव्य पद अन्नपान आदि भक्ष्य पदार्थ से भिन्न परक है । क्योंकि बृहस्पति का कहना है कि यदि अन्नपान आदि भक्ष्य पदार्थ साथ में लेकर कहीं जाते समय आचमन के निमित्त वाले किसी अशुचि व्यक्ति का स्पर्श हो जाय तो उस अन्नपान आदि को पृथ्वीपर रखकर और आचमन कर अपना रास्ता पकड़े ।

यहाँ स्मृतिसमुच्चय (म.म. वीरेश्वर ठाकुर विनिर्मित निबन्ध) के अनुसार बृहस्पतिवचन स्थित "प्रचरन्" पद का अर्थ घृततैल आदि स्नेह पदार्थ से पक्व अन्नादि को परोसना हुआ है ।

यहीं शंखलिखित वचन के विशेष आधार पर वीरमित्रोदय का कहना है कि अन्नपान आदि लेकर चलने वाले को अपवित्र व्यक्ति से स्पर्श होने पर आचमन करने से वह व्यक्ति तथा अन्नादि शुद्ध हो जाता है किन्तु यदि उस अन्न में ही साक्षात् उच्छिष्ट का स्पर्श हो तो वह त्याज्य ही है ।

[मूलम्]

(..........बृहस्पतिः– )

अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रं पुरीषञ्च द्रव्यहस्तो न दुष्यति ॥
शौचं कुर्यात्तु[1] प्रथमं पादौ प्रक्षालयेत्ततः ।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात् ॥

द्रव्यहस्तः = गृहीतद्रव्यः । द्रव्यपदञ्चासङ्कुचितमेव ।

कृत्वा मूत्रं पुरीषञ्च द्रव्यहस्तः कथञ्चन ।
भूमावन्नं प्रतिष्ठाप्य कृत्वा शौचं[2] यथाविधि ॥
तत्संयोगात्तु पक्वान्नमुपस्पृश्य ततः शुचिः ।

इत्यापस्तम्बवचनात् ।

प्रक्षाल्य पादौ निक्षिप्य आचम्याऽभ्युक्षणं पुनः ।
पुष्पादीनां तृणादीनां प्रोक्षणं हविषां तथा ॥

इति वायुपुराणवचनाच्च[3] । निक्षिप्य = द्रव्यं भूमौ धृत्वेत्यर्थः ।

[संस्कृत टीका]

अरण्ये इति । अरण्ये = वने । अनुदके = जलरहितप्रदेशे । रात्रौ = निशि। चौरव्याघ्राऽकुले पथि = चौरेण व्याघ्रादिना वा भयावहे मार्गे । द्रव्यहस्तः = गृहीतान्नपानादिद्रव्यो जनः । मूत्रं पुरीषञ्च कृत्वा । न दुष्यति = न दोषभाग् भवति । तु = किन्तु । (अत्र) प्रथमम् । (भूमौ द्रव्यं निधाय) शौचं कुर्यात् = द्रव्यादिप्रक्षालनं कुर्यात्। ततः पादौ प्रक्षालयेत् । (ततः गण्डूषादीनि कृत्वा) उपस्पृश्य = आचम्य । तत् = निधापितं द्रव्यम् । अभ्युक्ष्य = जलेन सिक्त्वा । गृहीतं (सत्) शुचितामियात् = आचान्तेन तेन जनेन गृहीतं तन्निधापितद्रव्यं शुध्यतीति भावः । द्रव्यहस्त इत्यत्र 'हस्त'–

---

पाठान्तर (१) 'तु प्रथमं कुर्यात्' इति, (२) 'स्नानं', इति, (३) 'त्' इति च हस्तलिखित पुस्तके ।

पदमङ्गान्तरस्याप्युपलक्षणार्थम् । द्रव्यपदञ्चात्रासङ्कुचितमन्नादेरपि संग्राहकमिति रत्नाकरादय: । गृहीतं शुचितामियादित्यनेन शौचात्पूर्वं भूमौ द्रव्यनिधानमाक्षिप्यते'' इति वीरमित्रोदय: ।

यथा चाहापस्तम्बोऽपि-कृत्वा मूत्रमित्यादि । द्रव्यहस्त: = गृहीतान्नपानादि-द्रव्यो जन: । कथञ्चन = पूर्वोक्तापत्काले केनापि प्रकारेण । मूत्रं पुरीषञ्च कृत्वा। भूमौ = भूम्युपरि तदन्नम् = हस्तादिगृहीतान्नपानादि । प्रतिष्ठाप्य = निधाय । यथाविधि = विधानानुसारम् । शौचं कृत्वा । उपस्पृश्य = आचम्य । शुचि: = पूतो जायते । ततस्तदन्नं गृह्णीयादितिभाव: । (तत:) तत्संयोगात् तु = शुचिपुरुषसंयोगात्तु । (गृहीतं) पक्वान्नम् । (शुचिर्जायते ) अशुचिपुरुष-संयोगाद् यथा तदशुचि, तथैव शुचिपुरुषसंयोगाच्छुच्यपीत्यर्थ: । अत्र पक्वान्नमित्यनन्तरं 'शुचि' इति शेष: ।

अत्राचारादर्शफक्किाव्याख्या तु ''तत्संयोगात्तु उपस्पृश्येत्यत्रान्वेति । पक्वान्नम्- तदपीत्यर्थ:। इदञ्च घृतपक्वाद्यभिप्रायकम् पृथुकाद्यभिप्रायकं वा । ओदनादेरन्यत्रानयनाप्रसङ्गात् । एवञ्चासंकुचितमित्यपि तदभिप्रायमेवेति ध्येयमि'' त्याह ।

यथा च वायुपुराणेऽपि प्रक्षाल्य पादावित्यादि । (मूत्रपुरीषत्यागानन्तरम्) -निक्षिप्य = गृहीतान्नपानादि द्रव्यं निधाय । (शौचं कृत्वा) पादौ प्रक्षाल्य । पुन: आचम्य (च) । पुष्पादीनां तृणादीनां (च) । अभ्युक्षणम् = जलेन सेचनम् । तथा हविषाम् = अन्नपानादिभक्ष्याणाञ्च । प्रोक्षणम् = जलेन प्रोञ्छनम् आचमनकर्त्ता कुर्यादिति शेष: । एतेनाचमनकर्त्ता गृहीततत्तद्द्रव्य: शुध्यतीति भाव: ।

अत्र मार्कण्डेयस्तु अनिधायैव शौचं कुर्यादित्याह । यथा-

पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति य: ।
अनिधायैव तद् द्रव्यमङ्के कृत्वा समाश्रितम् ॥
शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि ।
अन्नमभ्युक्षयेच्चैवमुद्धृत्यार्कञ्च दर्शयेत् ॥
त्यक्त्वाऽग्रमात्रं वा तस्माच्छेषं शुद्धिमवाप्नुयात् ॥ इति ।

## [ हिन्दी टीका ]

जंगल, जलरहित प्रदेश, रात तथा चोर व्याघ्र आदि से भयावह रास्ते में मलमूत्र त्याग करने पर भी अन्न, पानी आदि के साथ वह पथिक या उसके साथ का अन्न पानी आदि तब तक अशुद्ध माना जायेगा जब तक कि साथ के अन्नपानादि को पृथ्वी पर रखकर प्रथम शौच आदि से निवृत्त हो आचमन कर उस अन्नादि पर जल न छिड़क दें ।

मूल वचन में आये 'द्रव्यहस्त' पंद का हस्त पद दूसरे अंग का बोधक है। जैसा कि आपस्तम्ब ने भी कहा है –

अन्नपानादि को लेकर जानेवाला व्यक्ति पूर्वोक्त आपत्ति के समय में भी मलमूत्र त्याग के बाद उस अन्नादि को पृथ्वी पर रखकर विधानानुसार पहले शौचादि से निवृत्त हो आचमन करे । अनन्तर उस अन्नादि का ग्रहण करे । फलतः जैसे अपवित्र व्यक्ति के संयोग से पकाया गया अन्न (पक्वान्न) अपवित्र हो जाता है उसी तरह शौचसम्पन्न व्यक्ति के संयोग से वह पक्कान्नादि शुद्ध भी हो जाता है ।

यहाँ पक्वान्न (पकवान) पद का अर्थ घृतपक्व पयःपक्व या वह्नि से भर्जित (भूँजा) अथवा चूड़ा आदि है । क्योंकि भात आदि को संदेश रूप में अन्यत्र ले जाना व्यवहारविरुद्ध व संभव भी नहीं ।

वायुपुराण में भी कहा गया है कि गृहीतद्रव्य व्यक्ति मलमूत्र त्याग के बाद साथ के अन्न आदि को भूमि पर रखें फिर विधानानुसार शौच, पाद प्रक्षालन आदि कर आचमन करे । अनन्तर फूल आदि तथा तृण (घास) आदि पर जल छिड़ककर और अन्न आ[illegible] भक्ष्य पदार्थ पोंछकर ले लें तो वह आचमनकर्त्ता तथा लिया गया वह द्रव्य भी शुद्ध माना जाता है ।

मार्कण्डेय (पुराण) का तो यह मत है कि पकवान को भूमिपर न रखकर अपनी गोद में ही संभालकर यदि मलमूत्र त्याग करे और अनन्तर शास्त्रानुसार शौच तथा आचमन कर उसे जल से सींच दें तो वह पकवान शुद्ध ही माना जाता है। अथवा वर्त्तन से सामान निकाल कर सूर्य को दिखा दें । अथवा थोड़ा सा निकालकर त्याग दें तो अवशिष्ट पूरा ही शुद्ध माना जाता है ।

❁ इति आचमनापवादः ❁

# दन्तधावनम् ।

[ मूलम् ]

अथ दन्तधावनम् । तत्र दक्षः –

उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथाविधि[१]।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥

उषःकालः=सन्ध्यातः पूर्वं प्राचीप्रकाशवान् ।

[ संस्कृत टीका ]

तत्रेति । तत्र=दन्तधावनप्रकरणे । उष इति । सन्ध्यातः पूर्वम् = सूर्योदयात्पूर्वं दण्डद्वयात्मकसन्ध्यासमयतः पूर्वम् । प्राचीप्रकाशवान्=पूर्वदिशि प्रकाशवान् कालः उषःकालो बोद्धव्यः । ''उषःकालश्च–लोहितदिगुपलक्षितकालात्प्रागीषद्दिक्प्रकाशवान् कालः इति कल्पतरुः । धर्माद्यर्थचिन्तनावरुद्धातिरिक्तब्राह्ममुहूर्त्तभागः सन्ध्यातः पूर्वं प्राचीप्रकाशवानिति पारिजातः । उषःकालो ब्राह्ममुहूर्त्त इति शङ्करमिश्रछन्दोगाह्निकमि''ति नित्यकृत्यार्णवः । एतस्मिन् उषःकाले सम्प्राप्ते तु, यथाविधि=विधिमनतिक्रम्य = यथाविहितम् । यथार्थवदिति पाठे तु–यथाविहितशौचोपपादकमृज्जलादि–संख्यावदित्यर्थः । शौचम्= मूत्रपुरीषोत्सर्गनिमित्तिकां क्रियाम् । कृत्वा । दन्तधावनपूर्वकम्=दन्तधावनं कर्म, पूर्वम्=पूर्ववर्त्ति यस्य, तत्, स्नानं प्रकुर्वीत । दन्तधावनम् = दन्तमलापकर्षणमिति रत्नाकरशूद्राचारौ ।

[ हिन्दी टीका ]

सूर्योदय के दो घड़ी पूर्ववर्त्ती प्रातः सन्ध्यासमयके पूर्व पूर्वदिशामें थोड़े प्रकाशवाले समय को उषःकाल कहते हैं । यह समय प्राप्त होने पर शास्त्रानुसार मलमूत्र त्याग निमित्तक शौचादिक्रिया कर दतवन करे और अनन्तर स्नान करे ।

---

पाठा० (१) यथार्थवत् ।

[ मूलम् ]

याज्ञवल्क्यः —

प्रातःसन्ध्यामुपासीत दन्तधावनपूर्वकम्[1] ।

अत्र स्नाने सन्ध्यायाञ्च दन्तधावनस्य नाङ्गत्वम् ।

मुखे पर्युषिते नित्यं भवत्यप्रयतोनरः ।
तस्मात् पूर्वं[2] प्रयत्नेन भक्षयेद्दन्तधावनम् ॥

इति वृद्धशातातपवचनेनाचमनवत् स्वतन्त्रस्यैव[3] शुचिहेतुतयाऽभिधानात्। एवञ्च "दन्तान् प्रक्षाल्य स्नायादि" ति छन्दोगपरिशिष्टेऽपि कालार्थः संयोगः ।

[ संस्कृत टीका ]

प्रातरिति । स्नानाशक्तौ दन्तधावनं विधाय प्रातःकालिकसन्ध्या उपासनीयेति याज्ञवल्क्यस्मृत्यर्थः । अत्र=पूर्वोक्तवचनद्वयप्रतिपाद्ये । स्नाने, सन्ध्यायाञ्च = सन्ध्यावन्दने च । दन्तधावनस्य = दन्तधावनकर्मणः । अङ्गत्वम् = पारार्थ्यापरपर्यायं तद्भिन्नत्वे सति तज्जन्यफलजनकत्वरूपं तदङ्गत्वम् । यथा-स्नानसन्ध्याकर्माङ्गम्-स्नानसन्ध्याकर्मभिन्नत्वे सति स्नान-सन्ध्याकर्मजन्यफलजनकत्वम् । अथवा मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापार (अपूर्व अदृष्ट)-जनकत्वरूपं सहकारित्वरूप-लौकिकाङ्गत्वव्यावृत्तपारिभाषिकाङ्गत्वमपि । न भवति । मुखे = वदनाभ्यन्तरे । "पर्युषिते (सति)=परित्यज्य स्वकालम् उषिते (परिपूर्वकवस्धातोः क्तप्रत्यये) व्युष्टे इत्यर्थः । 'वासि' इति भाषा इति शब्दकल्पद्रुमः । नरः=मनुष्यः । नित्यम्=प्रत्यहम् । अप्रयतः=अपवित्रः । भवति । तस्मात्=अतो हेतोः, अपवित्रतानिवारणार्थमिति यावत् । पूर्वम् = स्नानात्पूर्वम् । प्रयत्नेन = प्रयासेन । दन्तधावनम् = दन्तमलापकर्षकं काष्ठम् । भक्षयेत् = दन्तानामुपरि प्रधावयेदि" त्यर्थकवृद्धशातातपवचनेन आचमनविधिवत्, स्वतन्त्रस्यैव = अन्यानधीनस्यैव । शुचिहेतुतया=शुद्धिकारणतया । अभिधानात्=कथनात् । तथा च-स्वतन्त्रस्य दन्तधावनकर्मणः कथमपि नाङ्गत्वमिति भावः ।

---

पाठ० (१) पूर्विकाम् । (२) सर्वं । (३) शुद्धि ।

एवञ्च=अतएव । ''दन्तान् प्रक्षाल्य स्नायादि''ति छन्दोगपरिशिष्टवचनेऽपि, कालार्थः= 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवद्दन्तधावनकर्मणः स्नानसन्ध्याकर्मणोश्च पौर्वापर्येण आरम्भकालबोधनार्थः । अत्र चाचारादर्शपङ्क्तीरुल्लिख्य ''दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवदि''ति वीरमित्रोदयः । अत्रैव च-''कालार्थः संयोग इति । संयोगः= सान्निध्यप्रतिपादनम् । कालार्थः-तत्पूर्वकालत्वं तस्य बोधयितुं, न त्वङ्गत्वमित्यर्थ'' आरम्भणीयावदिति भावः'' इत्याचारादर्शफक्कि-काव्याख्यापि । अतएव ''दन्तान् प्रक्षाल्य स्नायादिति छन्दोगपरिशिष्टेप्यारम्भणीयावत्* कालार्थ एव संयोगो नत्वङ्गाङ्गिभाव'' इत्याचारचिन्तामणौ विशेष'' इति नित्यकृत्यार्णवः । अत्र आचारादर्शोक्तवचनद्वयं प्रदर्श्य दक्षः-

**यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।**

**दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥**

---

* **टिप्पणी**-आरम्भणीयावदिति ग्रन्थरहस्यावबोधनार्थं श्रीमथुरानाथ-तर्कवागीशकृतरहस्याख्यटीकाऽलङ्कृतो गङ्गेशोपाध्यायविरचितः प्रत्यक्षखण्डमङ्गलवादीयन्यायतत्त्वचिन्तामणिरप्यत्रावलोकनीयः । यथा चैतन्मूलपङ्क्तिः-''दर्शारम्भसमये नियमेन क्रियमाणाया अप्यारम्भनी-यायास्तदर्थितया अक्रियमाणत्वात्'' इति ।

अस्याः रहस्याख्यटीका च यथा-''दर्शेति दर्शारम्भसमये= दर्शारम्भपूर्वसमये । आरम्भनीयायाः=यागस्य, 'आग्नेयाष्टाकपालं चरुं निर्वपेत्, दर्शपौर्णमासावारिप्समानः' इति श्रुतिवचनेन दर्शपौर्णमासपूर्वकाले क्रियमाणत्वं, नतु तदर्थितया । न वा फलान्तराभाव इति भाव'' इति ।

अत्र तत्त्वचिन्तामण्याचारचिन्तामण्योः पाठभेददर्शनेन ज्ञातुं शक्यते यद् आरम्भनीया एव आरम्भणीयाशब्देनाप्युच्यते ।

एवमेव दर्शपूर्णमासौ दर्शपौर्णमासपदाभ्यामपि व्यवह्रियेते । इति ।

अत्र स्नाने सन्ध्यायाञ्च दन्तधावनमङ्गं, क्त्वा-श्रवणादिति केचित्, तन्न,

**मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।**

**तस्मात् सर्वप्रयत्नेन भक्षयेद् दन्तधावनम् ॥**

इति शातातपेन स्वतन्त्रस्यैव शुद्धिहेतुत्वेनाभिधानात् । आनन्तर्यमात्रे च क्त्वा शक्तेः, नत्वङ्गाङ्गिभावेऽपि, बहुषु व्यभिचारात् । किन्तु 'दन्तधावनपूर्विकाम्' इत्यत्र 'स्नायादि'त्यत्र च दर्शारम्भणीययोरिव कालार्थसंयोगः'' इति द्वैत (सुश्लिष्ट) परिशिष्टे आचारचिन्तामणिप्रणेतृ-म०म० वाचस्पति मिश्रस्य पौत्राः तत्समसामयिकाश्च म०म० केशवमिश्राः ।

अत्र ''स्नानाशक्तौ दन्तधावनानन्तरमेव सन्ध्योपासनम्-

**प्रातःसन्ध्यामुपासीत दन्तधावनपूर्विकाम् ।**

इति याज्ञवल्क्यवचनादि''ति ग्रन्थकारकृतं छन्दोगाह्निकम् । अतएव ''अत्र कृतशौचस्य दन्तधावनान्ते प्रातःसन्ध्योपासनाभिधानात्तत्र (प्रातः सन्ध्यावन्दने) स्नानस्यानावश्यकत्वमुक्तं भवति । किन्तु रात्रिवासस्त्यागस्तु परमावश्यक इत्युक्तमधस्ताद् विष्णुस्मरणोपक्रमे । तथा च स्नानाभावे तदङ्गतर्पणमपि नास्त्येव इति च्छन्दोगाह्निके श्रीदत्तोपाध्यायाः प्राहुरिति नित्यकृत्यरत्नमाला टिप्पणी ।

**[ हिन्दी टीका ]**

दतवन करने के बाद स्नान करने की सामर्थ्य न होने पर प्रातःसन्ध्या कर लेनी चाहिए, यह हुआ मूल स्मृतिवचनका अर्थ ।

अब ग्रन्थकार का विवेचन है कि उक्त दक्ष तथा याज्ञवल्क्य के वचनों से प्रतिपादित स्नान एवं प्रातःसन्ध्या का अंग (सहायक, जिसका स्वयं का मुख्य फल कुछ भी न हो ) दतवन नहीं, क्योंकि वृद्धशातातप का कहना है कि ''दिनरात बीत जाने पर मुंह वासी हो जाता है जिससे मनुष्य अपवित्र हो जाता है । अतः इस अपवित्रता को हटाने के लिए प्रयत्नपूर्वक दतवन करनी चाहिए'' । इस तरह दतवन अन्याधीन (सहायक) न होकर स्वतन्त्र विधि है । अतएव ''दाँतों को (दतवन से) साफ कर स्नान करना चाहिए'' इस छन्दोगपरिशिष्ट वचन में भी तदवन और स्नानसन्ध्यावन्दन का पौर्वापर्य (पहले तथा बाद के) रूप से आरम्भ करने को दिखाने हेतु समायोजन (निर्देशन) किया गया है ।

दृष्टान्त मे वीरमित्रोदय के अनुसार 'दर्श एवं पूर्णमास नामक यज्ञ करने के बाद सोमयाग करना चाहिए' इस श्रुतिवचन से कहे गए दर्शसहित पूर्णमास तथा सोमयाग में अथवा प्रकृत में आचारादर्शफक्किव्याख्याके अनुसार संयोग पद का अर्थ सान्निध्यप्रतिपादन है । अर्थात् छन्दोगपरिशिष्ट वचनद्वारा प्रतिपादित दन्तधावन और स्नान का सान्निध्य प्रतिपादन कालार्थ है, अर्थात् स्नानसे पूर्वकाल में दतमन कर लेने के बोधन के लिए है । फलतः यहाँ अङ्गाङ्गिभाव नहीं है । जैसे कि दर्श एवं पौर्णमास याग के पहले आचारणीय आरम्भनीया नामक याग में अङ्गाङ्गिभाव नहीं होता है ।'' इसी हेतु आचारचिन्तामणि का भी कहना है कि दर्शसहित पौर्णमासनामक यज्ञ करने वाले को पहले आरम्भनीय(णी)या नामक यज्ञ, जिसमें आठ कपालों (मिट्टी के पात्र विशेष) में पकाये गए अग्निदेवतावाले चरु (आग्निमें हवन किये जाने वाले अन्न विशेष) का अग्नि में प्रक्षेप किया जाता है, कर लेना चाहिए, इस श्रुतिवचन के अनुसार आरम्भणीया नामक यज्ञ तथा दर्शसहित पौर्णमास नामक यज्ञ में पौवापर्य दिखाया गया है उसी तरह प्रकृतमें भी समझें ।'' किन्तु यहाँ अङ्गाङ्गिभाव नहीं माना जा सकता है । क्योंकि इसके स्पष्टीकरण में द्वैत (सुश्लिष्ट) परिशिष्ट के अनुसार किसी का मत (कहना ) है कि ''दक्षवचन–

यथाहनि तथा प्रातः नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥

(दाँत साफ कर मध्याह्न के जैसे प्रातःकाल में भी नित्य ही स्नान करे)–के 'दन्तान् प्रक्षाल्य' में 'क्त्वा' प्रत्यय को सुने जाने के कारण स्नान तथा सन्ध्या (वन्दन) में दन्तधावन अङ्ग है'' । किन्तु अभी अभी पूर्व में सिद्ध कर ही दिया गया है कि दन्तधावन किसी का अंग न होकर स्वतन्त्र विधि है । दूसरी बात, क्त्वा प्रत्यय की शक्ति अनन्तर (कर के) अर्थ में ही है नकि अंगाङ्गिभाव अर्थ) में भी । यदि वैसा माने तो बहुतो स्थल पर व्यभिचार (दोष) हो जायगा । अतः दर्शयज्ञ आरम्भ करने के पहले आरम्भणीया नामक याग करने के विधान के जैसे ही दतवन एवं स्नान (और सन्ध्यावन्दन) स्थल में भी पौर्वापर्य दिखाना ही मूलवचनों का उद्देश्य है ।

हाँ, संस्कृत व्याख्या को सहायता निमित्त जो संस्कृत टिप्पणी लिखी गई है उसमें दिखाये गए म० म० गङ्गेशोपाध्यायकृत न्यायतत्त्वचिन्तामणि तथा उसकी श्री मथुरानाथ तर्कवागीश कृत 'रहस्या- ख्या व्याख्या के अनुसार 'आरम्भनीया' नामक याग का उल्लेख है तो संस्कृत टीका में प्रदर्शित आचारचिन्तामणि तथा द्वैत

परिशिष्ट में उसे आरम्भणीया शब्द से कहा गया है । अतः दोनों ही शब्द एक ही याग के वाचक होने पर भी कोई क्षति नहीं, क्योंकि एक वस्तु के कई नाम हुआ करते हैं । इसी तरह दर्शपूर्णमास का पर्याय दर्शपौर्णमास हैं ।

यहाँ ग्रन्थकार के अपर ग्रन्थ छन्दोगाह्निक तथा इसके आधार से प्रतिपादक-नित्यकृत्यरत्नमाला टिप्पणी कहना है कि स्नान न करने की स्थिति में दतवन के बाद ही सन्ध्योपासन कर लें । साथ ही स्नानं न होने की स्थिति में इसका अङ्गभूत तर्पण भी नहीं होगा किन्तु रात के पहने कपड़े को बदल लें ।

[ मूलम् ]

छन्दोगपरिशिष्टे -

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशो वर्चः प्रजा[१] पशु व सुनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि[१अ] वनस्पते ॥

शुचिर्भूत्वा = आचम्येत्यर्थः । मन्त्रेण = आयुर्बलमित्यादि[२]ना वक्ष्यमाणेन । भक्षयेदिति दन्तघर्षणाऽभिप्रायम् । तदुक्तमत्रैव[३]-

नारदाद्युक्तवार्क्षेयमष्टाङ्गुलिमपाटितम्[४] ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत् ॥ इति ।

[ संस्कृत टीका ]

उत्थायेति । उत्थाय = ब्राह्मे मुहूर्ते देवादीन् स्मृत्वा शय्यातः उत्थाय । नेत्रे = नयने । जलेन प्रक्षाल्य । शुचिर्भूत्वा = आचम्य । समाहितः = अनन्यमनस्कः । मन्त्रेण = आयुर्बलमित्यादिना वक्ष्यमाणमन्त्रेण । दन्तधावनम् = दन्तमलापकर्षकं काष्ठम् । भक्षयेत् = दन्तेषु घर्षयेत् । अत्रैव=छन्दोगपरिशिष्टे एव । नारदेति । नारदाद्युक्तवार्क्षेयम् = नारदशिक्षादिग्रन्थाभिहितवृक्षसम्भवम् । अष्टाङ्गुलिम् = अष्टाङ्गुलिप्रमाणम् । अपाटितम् = अनुत्पाटितम्,

''नोत्पाटयेद्दन्तकाष्ठं नाङ्गुल्या धावयेत् क्वचित्''

---

पाठान्तर (१) देहि । (१अ) क्वचिद्विसर्गरहितोऽपि पाठः । (२) क्वचिद् अनेनेति पाठो नोपलभ्यते । (३) अत्र आदितः अनेनेत्यपि पाठः । (४) कात्यायनस्मृतौ '' नारदायुक्तवार्क्षं यदष्टाङ्गुलिमपाटितम् ।'' इति पाठः।

इति कूर्मपुराणात्। सत्वचम् = त्वक्सहितम् । दन्तकाष्ठम् = दन्तमलापकर्षकं काष्ठं स्यात् । तदग्रेण = तदग्रभागेन । प्रधावयेत् = शोधयेत् । दन्तानिति शेषः । दन्तधावनमन्त्रमाह-आयुर्बलं यशो वर्च इत्यादि ।

हे वनस्पते = हे वृक्षाधिष्ठितदेवते । नः = अस्माकम् । आयुः = जीवनम् । बलम् = शक्तिम् । यशः = कीर्त्तिम् । वर्चः = तेजः । प्रजाः = सन्ततिम्, स्वजनं वा । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । पशुम् । वसु = धनम् । ब्रह्म = तपः । प्रज्ञाम् = प्रतिभाम् । ब्रह्मप्रज्ञाम् = वेदा (शास्त्रा)ध्ययन बुद्धिं वा । तथा, मेधाम् = धारणावतीं बुद्धिम् । त्वम् । धेहि = यथेच्छं पोषयेत्यर्थः । क्वचिद् देहीत्यपि पाठान्तरम् ।

नारदी शिक्षा यथा -

**आम्रपौलासबिल्वानामपामार्गशिरीषयोः ।**
**वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥**
**खदिरश्च कदम्बश्च करवीरकरञ्जयोः ।**
**सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥ इति ।**

पौलासः = आम्रातकवृक्षः ।

"भक्षयेदिति दन्तसम्बन्धाद् गौणमभिधानम् पूर्वोत्तराचमनरूपभक्षण-धर्मप्राप्त्यर्थमिति कल्पतरुः । भक्षयेदिति गौणः प्रयोगः, भोजनधर्माणामाद्यन्ताचमनोपवासविरोधित्व श्राद्धदिनद्विर्भोजन-दोष, वाग्यमादीनां प्राप्त्यर्थ इति स्मृतिदीपिके''ति नित्यकृत्यार्णवः ।

"भक्षयेदित्युक्त्याऽस्य भक्षणसधर्मत्वं व्रतादिप्रतिबन्धे बोधितं भवति । ततश्चोदयान्ते तत्करणे दिवाकर्मस्वनधिकारः प्रसज्येतेति । .................. अतएव चोदये दन्तधावननिषेधकवचनं शिष्टाः पठन्तीति नित्यकृत्य-रत्नमालाटिप्पणी ।

सूर्योदयानन्तरं दन्तधावनकरणनिषेधप्रसङ्गे यथा पद्मपुराणे कार्तिक माहात्म्ये -

**उदिते तु दिवानाथे यः कुर्याद्दन्तधावनम् ।**
**स निर्लज्जः कथं ब्रूयात्पूजयामि जनार्दनम् ॥**

इति (प्रेमनिधिठक्कुरप्रणीत) धर्माधर्मप्रबोधिनीति नित्यकृत्यार्णव:।

[ हिन्दी टीका ]

ब्राह्म मुहूर्त्त में हरिस्मरण आदि करके शय्या से उठकर पानी से आँख पोंछकर शौचादि से निवृत्त हो आचमन कर तथा अनन्यमनस्क हो -

"आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते ॥ "

(अर्थात् हे वनस्पति के अधिष्टाता देवता, तू हमारी आयु, बल, यश, तेज, सन्तान (या जन), पशु, धन तथा तपस्या, प्रतिभा या वेदशास्त्र) पढ़ने की बुद्धि का पोषण करो। 'धेहि' के स्थान पर यदि देहि पाठ है तो 'दो' ऐसा अर्थ होगा इस मन्त्र से दतवन करे ।

दन्तधावन (दतवन) काष्ठ नारदशिक्षा आदि ग्रन्थों में वर्णित वृक्षों, आठ अंगुलियों, तथा छिलकेदार की हो किन्तु उपाड़ा या उखाड़ा गया न हो ।

यहाँ मूल में कहे गए दन्तधावन के साथ " भक्षयेत्" (दतवन का भक्षण करना चाहिए) पद के कहने का तात्पर्य ग्रन्थकार श्रीदत्तोपाध्याय के मत से हुआ कि दाँतों के ऊपर दन्तधावन का घर्षण करे (जिससे दाँतों का मल दूर हो ) ।

यहीं कल्पतरु का कहना है कि 'भक्षेयत्' पद का उपादान दाँत से सम्बन्ध होने के कारण गौण है अत: इसका तात्पर्य हुआ कि भोजन के पहले तथा बाद में होने वाले आचमन की प्राप्ति यहाँ भी हो । अर्थात् दतवन के पहले तथा बाद में आचमन किये जायँ ।

यहीं स्मृतिदीपिका का कहना है कि 'भक्षयेत्' पद का गौण प्रयोग भोजन में प्रयुक्त होने वाले आद्यन्त (पहले तथा बाद के) आचमन, उपवास में विरोध श्राद्धदिन में दुबारा भोजन का दोष तथा मौन रहने आदि धर्मो की प्राप्ति हो । अर्थात् भोजन करने के जैसे दतवन करने में भी उक्त बाते हों ।

यहीं नित्यकृत्यरत्नमाला की टिप्पणी का कहना है कि 'भक्षयेत्' कहने से भक्षण के समान ही दतवन करने से भी व्रत आदि में प्रतिबन्ध आना समझा जाता है । इससे यह सिद्ध होता है कि शिष्टजन इसी हेतु सूर्योदय के बाद निषेधक वचन पढ़ते है ।

फलत: नित्यकृत्यार्णव में उद्धृत (निबन्धकार प्रेमनिधि ठक्कुर प्रणीतं) धर्माधर्मप्रबोधिनी ग्रन्थ के अनुसार पद्मपुराण (कार्त्तिक माहात्म्य) का कहना है कि सूर्योदय के बाद दतवन करने वाला व्यक्ति हरिपूजन का अधिकारी कैसे हो सकता है । आदि ।

निष्कर्ष में व्रत, उपवास, श्राद्ध आदि दिनों में उक्त कारणों से ही तृण पत्ते से दतवन करने का विधान किया गया है ।

[ मूलम् ]

नृसिंह[1]पुराणे–

**प्रादेशमात्रमपि वा वस्वङ्गुलिमथापि वा ।**

[ संस्कृत टीका ]

प्रादेशेति । प्रादेशमात्रम् = प्रसारितहस्ते तर्जनीसहितमङ्गुष्ठं प्रादेशः । (ठुठ्ठी–इति भाषा) । प्रादेशतालगोकर्णास्तर्जन्यादियुते तते इत्यमरः ।) तत्प्रमाणम् । अथापि वा= अथवा । वस्वङ्गुलिम् = अष्टाङ्गुलिप्रमाणं दन्तधावनमुचितमिति भावः ।

[ हिन्दी टीका ]

दतवन प्रादेश या आठ अंगुलि के बराबर होनी चाहिए ।

[ मूलम् ]

विष्णुः –

**कनीन्यग्रसम-स्थौल्यं सकूर्चं[2] द्वादशाङ्गुलम् ।***
**प्रातर्भुक्त्वा च यतवाग् भक्षयेद्दन्तधावनम् ॥**

सकूर्चम् = चूर्णिताग्रम् । भुक्त्वा चेति भोजनोत्तरं दन्तलग्ननिर्हरणार्थं दन्तधावनमित्यर्थः ।

**"भोजने दन्तलग्नानि निर्हृत्याऽचमनं चरेत्"**

इति देवलवचनात् । एवञ्चात्र दन्तधावने कालादिनिषेधो नादर्तव्यः सामर्थ्यात् । हलायुधनिबन्धे तु भुक्त्वेति यतिविषयतया व्याख्यातम् ।

---

पाठान्तर (१) 'नर' इति । ह.पु. (२) सुकूर्चमिति पाठं मत्वा कुर्चम् = चुर्णिताग्रमिति द्वैत (सुश्लिष्ट) परिशिष्टम् । एवमेव 'वस्वङ्गुलमथापिवा' इति नास्ति ह.पु. । (३) धावनविधि इति ह.पु. ।

* अत्रत्या टिप्पणी हिन्दी टीकाया अनन्तरं द्रष्टव्या ।

## [ संस्कृत टीका ]

कनीन्येति । यतवाग् = मौनी सन् । कनीन्याः = कनिष्ठाङ्गुलेः, अग्रस्य = अग्रभागस्य, समम् = समानं स्थौल्यम् = स्थूलता यस्य तत्। सकूर्चम् = चूर्णिताग्रम् । द्वादशाङ्गुलम्=द्वादशाङ्गुलिप्रमाणम् । दन्तधावनम् = दन्तमलापकर्षकं काष्ठम्। प्रातः = प्रातः काले । भुक्त्वा च भोजनोतरञ्च। भुक्त्वा चेति वचनं भोजनोत्तरं दन्तलग्नकणादिनिष्कासनार्थं दन्तधावनस्यावश्यकतां बोधयति । ''भोजने दन्तलग्नानी'ति देवलवाक्यात् । भक्षयेत्=दन्तेषु घर्षयेत् । तथाच भोजनोत्तरकालिककर्त्तव्य-दन्तधावनस्य दन्तलग्नकणादिनिर्हरणमेव प्रयोजनम्, नतु प्रातःकालिक दन्तधावनवद् मुखपर्युषितत्वप्रयुक्तापवित्रतानिवारकतया शुचित्वाऽऽपादनमपि । एवञ्च = एतेन । अत्र = भोजनोत्तरकालिके । दन्तधावने । कालादिनिषेधः = ''पर्वस्वपि च वर्जयेत्'' । नाङ्गुलिभिर्दन्तान् प्रक्षालयेदित्यादि-वक्ष्यमाणकालादिनिषेधनियमाः । नादर्तव्यः = नाङ्गीकर्तव्यः । सामर्थ्यात् = उक्तदेवलवचनबलात् । दन्तलग्ननिर्हरणस्यावश्यकत्वाच्च । अतएव ''सामर्थ्यात् = दन्तलग्नापसरणरूपप्रयोजनसामर्थ्यादि''ति म.म. रघुनाथोऽपि । अतएवाद्यत्वे वंशस्य तृणादेर्वा लघुखण्डेनानुकल्पेन (खड़िका इति भाषा) प्रत्यहं दन्तलग्नान्यपाक्रियन्ते शिष्टैः ।

हलायुधनिबन्धे तु = हलायुधशर्मणास्वनिर्मिते ब्राह्मणसर्वस्वनामके निबन्धे तु । भुक्त्वेति वचनम्, यतिविषयतया = संन्यासिपरतया, न गृहस्थादिविषयतयेति भावः । व्याख्यातम् । अतएव ''हलायुधस्तु भुक्त्वेति यतिमात्रविषयन्न गृहस्थादिविषयम् न भुक्त्वा दन्तधावनं कुर्यान्नाजीर्णे न रात्रावि'ति व्यासवचनविरोधादित्याह । केषाञ्चिदौत्कलानां तथा व्यवहारोऽपि । वस्तुतस्तु यत्पदार्थभोजने दन्तलग्नता न सम्भवति तत्परं व्यासीयं भुक्त्वेतिपदम् । भोजनात्पूर्वमेव प्रातर्दन्तधावनन्न तु किञ्चिद्भक्षणोत्तरन्तन्त्रेणेवत्येवं परं वा । न रात्राविति प्रभाते दन्तधावनन्तु तत्पूर्वमेव रात्रावित्यवगन्तव्यमित्याचारविवेक इति नि.कृ. ।

---

पाठा० (१) 'पावन विधिः' इति ह.पु.

## [ हिन्दी टीका ]

प्रातः काल तथा भोजन के बाद मौन होकर अपनी कानी (कानीनी) उँगुलिके अग्रभाग के बराबर मोटी, लम्बाई में बारह उँगुलि के हो तथा जिसका अग्रभाग थकूच दिया गया (चूर्णित) हो, ऐसी दतवन करें। भोजन के बाद दतवन करने का विधान दातों में लगे अन्नादिकण को हटाने के उद्देश्य से किया गया है। जैसा कि देवल ने भी कहा है–भोजन के समय दाँतों में सटे पदार्थ को दूर कर आचमन करे।

यहाँ प्रातः काल की दतवन के लिए आगे कहे जाने वाले निषेधक वचनों (पर्वस्वपि च वर्जयेत्' 'नाङ्गुलिभिर्दन्तान् प्रक्षालयेत्'। के आधार पर भोजन के बाद होनेवाली तदवन का निषेध नियम मानना उचित नहीं क्योंकि प्रथम तो देवल का वचन ही प्रवल प्रमाण है। दूसरी बात, दाँतों में सटे अन्नादि कणों का हटना भी आवश्यक है। (इसी हेतु अनुकल्प में बाँस या तृण आदि के छोटे टुकड़े (खडिका) द्वारा अन्नादिकणों के हटाने का शिष्टजनव्यवहार भी प्रचलित है। इससे सिद्ध हुआ कि प्रातः कालिकदतवन के लिए ही प्रतिपत् आदि तिथि का निषेध है।

हलायुध निबन्ध की व्याख्या में तो भोजन के बाद दतवन करने का विधान सन्यासियों के लिए ही कहा गया है।

## [ टिप्पणी ]

अत्र दन्तधावन–परिमाण–विषये कूर्मपुराणे तु "मध्यमाङ्गुलिसमं स्थौल्यं द्वादशाङ्गुलसम्मितम्" इति, एवञ्चविष्णूक्तेन कनीन्यग्रसमस्थौल्येनास्य मध्यमाङ्गुलिस्थौल्यस्य विकल्पः।

आयामे तुतु–अङ्गुलमपाटितमिति छन्दोगपरिशिष्टेऽभिहितम्। अत्रैवाग्रे वक्ष्यमाण–महाभारतीयेन ऋजुंवितस्तिमात्रञ्चेत्यनेन कूर्मपुराणे विष्णुस्मृतौ च द्वादशाङ्गुलसम्मितमित्येन च द्वादशाङ्गुलमुक्तम्।

तदेतेषां पक्षाणां स्वगृह्यानुक्तौ व्यवस्थामाहकृत्यस–रसमुच्चय समुद्धृत–द्वैतपरिशिष्टे–

वितस्तिः (द्वादशाङ्गुलप्रमाणम्) प्रथमः कल्पः। प्रादेशप्रमाणम्–मध्यमः। अष्टाङ्गुलमपकृष्टः। चतुरङ्गुलमत्यन्तापकृष्टः।

---

पाठा० (१) दशाङ्गुलन्तु।

जावाल:

द्वादशाङ्गुलं[१] विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
सप्ताङ्गुलञ्च वैश्यानां शूद्राणाञ्च षडङ्गुलम् ॥ इति

कृत्यसार-समुच्चयटिप्पण्यां स्मृतिचन्द्रिकायाञ्च वर्णभेदेन दन्तधावन प्रमाणभेदे गर्ग:–

द्वादशाङ्गुलं विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्तसम्मितम् ॥
चतुरङ्गुलमानन्तु नारीणां नात्र संशय'' इति
''अन्तर - प्रभवानाञ्च षडङ्गलमुदाहृतम्'' ।

इत्यर्धश्लोक: स्मृतिमञ्जूषायामधिक'' इति वीरमित्रोदय: ।

''इति(उक्त)स्मृतिमञ्जूषावाक्याद्व्यवस्थां केचिदाहु''रित्याचारचिन्तामणि: । अन्तर-प्रभवा:=वर्णसङ्करा इति स्मृति-दीपिकेति नित्यकृत्यार्णव:

[ टिप्पणी हिन्दी ]

कूर्मपुराण में कहा गया है कि दतवन बिचली उँगली के समान मोटी तथा बारह अंगुलि की हो । फलत: मुटाई में छोटी अंगुलि या बचिली का समान होना विकल्प रूप से दोनों ही पक्ष शास्त्रसम्मत है ।

लम्बाई के सम्बन्ध में कहीं आठ अंगुलि, कहीं बित्तेभर, कहीं बारह अंगुलि तो कहीं प्रादेश (ठुड्ढी) प्रमाण होना विकल्प रूप से सभी पक्ष शास्त्रसम्मत हैं । किन्तु वारह अंगुलि के बराबर दन्तकाष्ठ का होना प्रथम कल्प है, प्रादेश प्रमाण होना मध्यम कल्प है, अष्टांगुल के बाराबर अपकृष्ट है, चार अंगुलि का होना अत्यन्त अपकृष्ट होना ज्ञातव्य है । ऐसी स्थिति में यदि उक्त पक्षों का विधान अपने गृह्य में न हो तो कृत्यसारसमुच्चयनामके ग्रन्थमें उद्धृत द्वैत परिशिष्ट में कही गई व्यवस्था समझें ।

यथा, वारह अङ्गुलि की दतवन उत्तम है । प्रादेश प्रमाण माध्यम, आठ अंगुलि की अधम तथा चार अंगुलि की अधमाधम है । साथ ही जावालि का वचन है कि वारह अंगुलि की दतवन ब्राह्मणों के लिए, नौ अंगुलि की क्षत्रियों के लिए, सात अंगुलि की वैश्यों के लिए और छह अंगुलि की शूद्रों के लिए होनी चाहिए ।

पुन: उसी कृत्यसारसमुच्चय की टिप्पणी तथा स्मृतिचन्द्रिका में उद्धृत गर्ग का वचन है कि ब्राह्मणों के लिए बारह (या दश) अंगुलि, क्षत्रियों के लिए नौ अंगुलि,

वैश्यों के लिए आठ अंगुलि, शूद्रों के लिए सात अंगुलि तथा सामान्यतः स्त्रियों के लिए चार अंगुलि की (दतवन) होनी चाहिए। फलतः उक्त व्यवस्था में कहीं कहीं अन्तर होने पर भी वैकल्पिक रूप में किसी एक का ग्रहण कर लें। इति।

[ मूलम् ]

तथा (विष्णुः)

अद्यादुदङ्मुखः प्राङ्मुखो वा।

[ संस्कृत टीका ]

अद्यादिति। उदङ्मुखः=प्रागुदङ्मुख इत्यर्थः। उदङ्मुखत्वे दोषश्रवणात्। तदाह कात्यायनः–

पूर्वामूखो धृतिं विन्द्याच्छरीरारोग्यमेव च।
दक्षिणेन तथा चौर्यं पश्चिमेन पराजयम्॥
उत्तरेण गवां नाशं स्त्रीणां परिजनस्य च।
पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात्॥ इति

दिक्फले गर्गश्च

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च।
दक्षिणेन तथा कुष्ठं पश्चिमेन पराजयः॥
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च। इति।

एतेन पूर्वामुखत्वमपि दोषरहितं सिद्ध्यति।

[ हिन्दी टीका ]

दतवन पूर्व दिशा या ईशान कोण (पूर्व उत्तर दिशा) की ओर मुंह कर करे। क्योंकि अन्यदिशाओं में दोष कहे गए हैं।

[ मूलम् ]

महाभारते तथा

प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरं ततः।
प्राङ्मुखश्चोपविष्टश्च भक्षयेद्दन्तधावनम्॥

दक्षिणं बाहुमुद्धृत्य = उपवीती भूत्वेत्यर्थः।

[ संस्कृत टीका ]

प्रक्षाल्येति । हस्तौ पाठौ मुखञ्च प्रक्षाल्य । सुसमाहितः = अनन्यमनाः । प्राङ्मुखः=पूर्वदिगभिमुखः उपविष्टश्च सन् । दक्षिणं बाहुमुद्धृत्य=उपवीती भूत्वा । दक्षिणं बाहुमृद्धृत्येत्यनेनोपवीतधारणेतिकर्तव्यैकदेशोत्कीर्त्तनेन उपवीती भूत्वेत्यर्थः सूचितः । उपवीतलक्षणे मनुः–

"उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विज" । इति ।

दक्षिणबाहुम्= सव्येतरहस्तम् । जान्वन्तरं कृत्वा=जानुनोर्मध्यवर्त्तिनं कृत्वा । दन्तधावनम् । भक्षयेत् = दन्तोपरि घर्षयेत् । दन्तान् शोधयेदिति यावत् ।

[ हिन्दी टीका ]

हाथपैर तथा मुंह धोकर अनन्यमनस्क हो पूर्व मुँह होकर बैठ जाना चाहिए । अनन्तर सव्य हो तथा दोनों हाथों को दोनों घुटनों के बीच में कर दतवन करे ।

[ मूलम् ]

विष्णुः–

**प्रक्षाल्य भुक्त्वा[1] तज्जह्याच्छुचौ देशे प्रयत्नतः ।**

[ संस्कृत टीका ]

प्रक्षाल्येति । तत् - दन्तधावनम् । भुक्त्वा = दन्तोपरि घर्षयित्वा । भङ्क्त्वा इति पाठे तु मध्यतः विच्छिद्येर्थः । प्रक्षाल्य च । प्रयत्नतः । शुचौ देशे = विण्मूत्रादिरहिते देशे । जह्यात् = त्यजेत्।

यथाऽऽह महाभारतेऽपि -

**"प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् ।**

**पतितेऽभिमुखे सम्यग् भोज्यमाप्नोत्यभीप्सितम् ॥ इति ।**

'भोज्यं प्राप्नोतितद्दिने' इत्याचारविवेकपाठः । एवमेव नित्यकृत्यार्णवोऽपि ।

---

पाठा० (१) भङ्क्त्वा ।

एवञ्च प्रक्षालितं दन्तधावनं स्वाभिमुखीभूय यथा न पतेदेवं परित्यज्ये''दिति नित्यकृत्यरत्नमालायाः मूलं मृग्यम् ।

[ हिन्दी टीका ]

दाँत का घर्षण (सफाई) कर तथा जल से धोकर दतवन को प्रयत्नपूर्वक मलमूत्रत्याग आदि से रहित पवित्र स्थान में फेंक दें ।

महाभारत में फलश्रुति में कहा है कि यदि सम्मुख में अच्छी तरह दतवन गिरे तो उस दिन मनोवाञ्छितभोजन मिलता है ।

[ मूलम् ]

नरसिंहपुराणे –

तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम् ॥
खदिरश्च कदम्बश्च करञ्जश्च वटस्तथा ।
तिन्तिणी वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च ॥
अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा ।
एते[1] प्रशस्ताः कथिताः दन्तधावनकर्मणि ॥
दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम् ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥

(शुष्कमनूर्ध्वम्[2] । नोर्ध्वशुष्कमिति निषेधात् )

[ संस्कृत टीका ]

तस्मादिति । तस्मात् = ''मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः'' इति पूर्ववर्तिवचनानुसारम् । अप्रायत्यात् =अपवित्रतानिवारणार्थमित्यर्थः । शुष्कम् = किञ्चिन्नीरसम् । तच्चातिशुष्कभिन्नं स्वस्वस्थानशुष्कभिन्नं च बोध्यम् ''नातिशुष्कं नोर्ध्वशुष्कमि''त्यग्रेऽभिधानात् । आर्द्रम् = ईषदार्द्रम्,

---

पाठा० (१) एते प्रशस्ताःकथिता इत्यादि सम्पूर्ण एव श्लोको नास्ति ह. पुस्तके । (२) कोष्ठान्तर्गतोऽयं पाठः ह. पुस्तक एव । एवमेवात्र वचनं ह.पुस्तकानुसारं ।

'खदिरश्च करञ्जश्च कदम्बं वटकं तथा' पाठभेदोऽपि दृश्यते । एवमेव तिन्तिणी इत्यत्र तिन्त्रिडी इति ह.पु. पाठः । परमाचारचिन्तामणौ तिन्तिली पाठभेदो दृश्यते ।

अग्रेतनहारीतवचनेन तथैव प्रतीतेः । दन्तधावनम् = दन्तधावनकाष्ठम् । भक्षयेत् = दन्तेषु घर्षयेत् । तत्रैते अधोनिर्दिष्टाः प्रशस्ता विद्यन्ते । तद्यथा - खदिरः = तिक्तसारः । कदम्बः = हरिप्रियः । करञ्जः = चिरविल्वः । वटः = रक्तफलः । तिन्तिली अम्लिका । वेणुपृष्ठम् = वंशक्ष्यत्वग्भागः आम्रनिम्बौ = रसालसर्वतोभद्रौ । अपामार्गः = मयूरकः । बिल्वः = श्रीफलः । अर्कः = मन्दारः । उदुम्बरः = यज्ञाङ्गः ।

दन्तकाष्ठस्य = दन्तमलापकर्षककाष्ठस्य । समासेन = संक्षेपेण । प्रशस्यताम् = उत्कृष्टताम् । वक्ष्यामि । यथा सर्वे कण्टकिनः = कण्टकयुक्ताः वृक्षाः । पुण्याः = पुण्यदायिनः । क्षीरिणः = दुग्धशालिनो वृक्षाः । यशस्विनः = कीर्तिप्रदाः भवन्ति ।

[ हिन्दी टीका ]

खैर, कदम्ब, करूँजा (या करौना), बड़, इमली, बाँस, आम, नीम, अपामार्ग (चिर्चीरी मैथिली, चिचिड़ा हिन्दी, आँधी झाड़ा राजस्थानी) बेल, अर्क (आक मैथिली आँकड़ा राजस्थानी) तथा गूलर की दतवन उत्तम मानी गई है, यह तुरन्त की तोड़ी गई न हो तथा सर्वथा सूखी भी न हो । संक्षेप में काँटे वाले तथा दूध वाले वृक्षों की दतवन उत्कृष्ट होती है ।

[ मूलम् ]

अत्र विष्णुः-

**वटासनार्कखदिरकरञ्जकरवीरसर्जारिमेदापामार्ग-मालती-ककुभ-विल्वानामन्यतमं, कषायं, तिक्तं कटुकं वा[१] ।**

असनः = आसन इति प्रसिद्धः । सर्जः = शालः । अरिमेदो = विट् खदिरः ।

[ संस्कृत टीका ]

अत्र = उत्कृष्टदन्तकाष्ठप्रसङ्गे । वटः = रक्तफलः । असनः = आसन इति मिथिलामध्यदेशादौ प्रसिद्धः । अर्कः = मन्दारः । करञ्जः = चिरबिल्बः । करवीरः = हयमारकः । सर्जः = शालः बन्धूकपुष्पः ।

---

पाठा० (१) 'कटुं वा' इति ह.पु. ।

अरिमेदः = विट्खदिरः । अपामार्गः । मालती = जाती । ककुभः = अर्जुनः । बिल्वः = श्रीफलः । एषामन्यतमं = पूर्वोक्तेषु कञ्चिदेकम् । कषायम् = कषायरसशालि । तिक्तम् = तिक्तरसशालि । कटुकम् = कटुरसशालि वा । अविहितमप्रतिषिद्धञ्चान्यदपि कषायतिक्तकटुकान्यतम रसशालि ग्राह्यमित्यर्थः । दन्तधावनं स्यादिति पूर्वेण सम्बन्धः ।

**[ हिन्दी टीका ]**

बड़, आसन, अर्क (आक या आंकड़ा), करूँजा या करौना, खैर, करवीर या कनैल, सखुआ, दुर्गन्ध खैर, चिरचिरी चिड़िया या आँधा झाड़ा, चमेली, अर्जुन और बेल इनमें किसी एक की या कषाय, तीता व कटुरस की दतवन होनी चाहिए ।

**[ मूलम् ]**

अत्र हारीतः–

**"बिल्वखदिराम्रपौलासशिरीषापामार्गाणामेकतमम्"** ।

पौलासः = आम्रातकः । तथा,

**" पलाशकोविदारश्लेष्मातकतिल्वक[1]शाकवृक्षनिर्गुण्डी शिखण्डिवेणुवर्जम्"** ।

तिल्वकः = चील्ह[2] (चील) इति प्रसिद्धः । शिखण्डी = मयूर शिखा । वेणुनिषेधस्त्वगितरविषयः[2अ]। शाकवृक्षः = सगम(व)न इति प्रसिद्धः ।

**"प्लक्ष-माषक-बदरी करञ्ज-शमी-शिंशपा इत्येके । दधित्थ-हरीतक्यश्वत्थ[3] शालामलकानि, इत्यपरे ।**

एके अपरे इत्युभयत्र वर्जयित्वेति शेषः । तथा

**"अनार्द्रं, नाशुचि, नातिशुष्कं, नातिस्थूलम्, अपोथिताग्रम् अनोष्ठग्रन्थि"** ।

अनार्द्रमिति सद्यश्छिन्ननिवृत्त्यर्थम् । विधिस्तु पूर्वमीषदार्द्रस्य । अपोथिताग्रम् = अचूषिताग्रम्[4] । अनोष्ठग्रन्थि = ओष्ठस्पर्शिग्रन्थिरहितम्[5] ।

---

पाठा०(१) चिलुकः = चिलूकः । विल्वकः । (२) 'चि' इति । (२अ) पर इति च ह.पु. । (३) अश्वकर्णः = लताशालः । (४) अचूर्णिताग्रम्' (५) 'विहीनम्' इत च ह. पु. पाठः ।

[ संस्कृत टीका ]

बिल्वेति । बिल्वः । खदिरः । आम्रः । पौलासः = आम्रातकः (महुआ इतिभाषा) शिरीषः = कपीतनः । अपामार्गः । एषामेकतमम् = एष्वन्यतमम् । पलाशः = किंशुकः । कोविदारः = काञ्चनार (ल)-सदृशः श्वेतपुष्पः । श्लेष्मातकः = बहुवारः । विल्वकः = चिल्ह, चील्हा चील इति वा पश्चिमदेशे प्रसिद्धः । शाकवृक्षः=सगमन इति, इदानीं सागवान इति प्रतिद्धः । निर्गुण्डी = सिन्दुवारः । शिखण्डी = मयूरशिखा । शिखण्डिसंज्ञकः कण्टकिगुल्म इत्यपरे । वेणुवर्जम् = वेणुः = वंशः, तन्निषेधश्च त्वगितरविषयः । "तिन्तिली वेणुपृष्ठञ्चे" त्यादिना नरसिंहपुराणेन प्राशस्त्याभिधानात् । प्लक्षः =ब्रह्मदारु इत्याचारचिन्तामणिः । पर्कटी वृक्षो वा । प्लक्षो जटी पर्कटी स्यादित्यमरः । माषकः वृक्षविशेषः । दरा = कर्कन्धूः । शमी = सक्तुफला, शनिग्रहस्य हवनेन्धनवृक्षविशेषः । शैनी इति भाषा । शिंशपा = पिच्छिला । दधित्थः =कपित्थः । कैंता इति भाषा । हरीतकी =हर्रा इति भाषा । अश्वत्थः = पिप्पलः । अश्वकर्ण इति पाठे तु लताशाल इति पर्यायः । शालः =शङ्कुवृक्षः = सर्ज इति यावत् । आमलकम् धात्रीवृक्षः । आंवला इति भाषा । एके अपरे इत्युभयोरग्रे वर्जयित्विति शेषः । एवमेव कल्पतरुरपि ।

अनार्द्रम्=ईषदार्द्रम् । ईषदर्थेऽत्र नञ् । नातिशुष्कमित्यग्रेऽभिधानात् । प्रक्षालनस्य विहितत्वेन आर्द्रताया आवश्यकत्वाच्च । अनार्द्रमिति पदोपादानात् सद्यश्छिन्ननिवृत्तिः प्रतीयते । यतः पूर्वव्याख्यानरीत्या ईषदार्द्रस्यैव दन्तधावनस्य विधिः = विधानम् । नाशुचिः = अशुचिदेशोद्भव-रहितम् । नातिशुष्कम् = नातिनीरसम् । नातिस्थूलम् = कनीनिका-मध्यमाऽङ्गुल्यन्यतराधिकस्थौल्यरहितम् । अपोथिताग्रम् = चूर्णिताग्ररहितम् । अथवा ईषच्चूर्णिताग्रम् । अत्रापीषदर्थकनञा समासात् । अपोथिताग्रमिति पाठेऽपि आङः ईषदर्थकत्वेन आ = ईषद्, चूर्णिताग्रमित्येवार्थो विधिपक्षीयः ।

[ हिन्दी टीका ]

बेल, खैर, आम, महुआ, शिरीष, अपामार्ग (चिरचीरी) इनमें से किसी की भी दतवन हो किन्तु पलाश, कोविदार, कचनार के जैसे सफेद फूलवाला, बहुआर,

पश्चिम देश में प्रसिद्ध चील, सागवान, सिन्दुवार, संभालू वृक्ष, निर्गुण्डी का पेड़, मयूरशिखा या शिखण्डी नाम की काँटेदार झाड़ी तथा त्वचा भाग के अतिरिक्त बाँस त्याज्य है ।

शहतूत का पेड़ या पाकड़, माषक, बेर, करूँजा या करोना, शैनी, सरीफा या शीशम, कैंता, हर्रा (हरीड़), पीपल, सखुआ और आँवला ये भी त्याज्य है ।

साथ ही तुरन्त की टुटी हुई, अपवित्र स्थान में उत्पन्न, बहुत सूखी, अनामिका या मध्यमा अंगुलि से अधिक मोटी, किसी के द्वारा दातों के सफाई कार्य व्यवहार में लाई गई हो अथवाा आगे के भाग में विना थकूची हुई, तथा दतवन के समय जिसकी गाँठ ओठों को स्पर्श करनेवाली हो वैसी दतवन (लकड़ी) भी नहीं होनी चाहिए ।

## [ मूलम् ]

**विष्णुः–**

**न श्लेष्मातकारिष्टविभीतकधवधन्वनजं, न कोविदार-शमी-पीलु-पिप्पलेङ्गुदगुग्गुलजम्, न बब्बूर[1]-निर्गुण्डी-शिग्रु-तिल्लक[2]-तिन्दुकजम् । न पारिभद्राम्लिकामोचक-शल्मलीशणजं, न मधुरं, नाम्लं, नोर्ध्वशुष्कं, न सुषिरं न पूतिगन्धि, न पिच्छलम्[3] ।**

धन्वनः = धामनिरिति[4] प्रसिद्धः । निर्गुण्डी = सिन्दुवारः ।

## [ संस्कृत टीका ]

न श्लेष्मेति । "श्लेष्मातकः = (शीतः) बहुआर इति ख्यातः । अरिष्टम् = हरिड़ इति प्रसिद्धम् । विभीतकम् = बहेरा इति प्रसिद्धमि"ति कृत्यासार समुच्चये अमृतनाथः । अरिष्टः = रीठी इति वा प्रसिद्धः । (अरिष्टः फनिलः समौ इत्यमरः) । हरिठ इति प्रसिद्ध इत्याचारचिन्तामणिः । धवः = स्वनामख्यातः वृक्षविशेषः । तत्पर्यायः धुरन्धरः " धवो घटो नन्दितरुः स्थिरो धौरो धुरन्धरः । धवः शीतः प्रमेहार्शः पाण्डुपित्तकफावहः

---

पाठा० (१) बर्बुर । (२) चिल्लक । (३) च्छि इति (४) 'इ' इति च ह.पु. पाठः ।

इति भावप्रकाशः । धन्वनः = धामनि, धामन इति वा प्रसिद्धः । कोविदारः = चमरिकः (कोविदारे चमरिक इत्यमरः) । कोइआर इति ख्यात इति कृत्यसारसमुच्चयः । श्वेतपुष्पः काञ्चनारसदृश इति नित्यकृत्यार्णव-वीर-मित्रोदयौ । शमी = शिवा । पीलुः =गुड़फलः । (पीलौ गुड़फल इत्यमरः) पीलुरित्येव पश्चिमदेशे प्रसिद्धः । पिप्पलः = अश्वत्थः । इङ्गुदः = तापसतरुरित्यमरः । सुजनीति प्रसिद्ध इत्याचारचिन्तामणिः । इङ्गुवाकः कण्टकिवृक्षविशेषः इतिवीरमित्रोदयः । मुजैलीति प्रसिद्ध इति नित्यकृत्यार्णवः । हिंगौट इति राजस्थानी भाषा । इङुआ का पेड़ इति हिन्दी । गुग्गुलः = एतन्नाम्नैव प्रसिद्धः । रक्तशोभाञ्जनवृक्ष इति नित्यकृत्यार्णवः । बब्बूरः = बबूलः । निर्गुण्डी = सिन्दुवारः । शिग्रुः = शोभाञ्जनः । सोहिजन इति मैथिली भाषा । तिल्लकः = पुष्पवृक्षविशेष इति शब्दकल्पद्रुमः । प्रायः तिलैआ इति भाषा । तिन्दुकः = स्फूर्जकः = तेन्दुआ इति तेनु इतिवा प्रसिद्धः । पारिभद्रः = निम्बतरुः । फरहट्ट, फरहद इति वा भाषा । अम्लिका = तिन्तिली । मोचका = कदली । शाल्मली = पिच्छिला । सेमर इति भाषा । शणः = शणपर्णी । पटुआ इति प्रसिद्धः । इत्येतेषां दन्तधावनं निषिद्धम् ।

एवमेव न मधुरम् = मधुररसशालि न । नाम्लम् = अम्लरसशालि न । नोर्ध्वशुष्कम् = वृक्षे एव शुष्कं न । न ससुषिरम् = छिद्रयुक्तं न । न पूतिगन्धि = दुर्गन्धं न । (पूतिगन्धिस्तु दुर्गन्धे इत्यमरः) । न पिच्छलम् = चिक्कणमपि दन्तधावनं निषिद्धम् ।

## [ हिन्दी टीका ]

बहुआर, हरडे या रीठी, बहेड़ा, धाव, धामनि, कोईआर, शैनी, पीलु, पीपल, इंगुद (हिगौट), गुग्गुल, बबूर, सिंधुआर, सोहिजन, तलै, तेन्दुआ, अर्थात् तेनु, बकायन फरहद, इमली, केला तथा शणवृक्ष (सनपटुआ) की दतवन निषिद्ध है ।

साथ ही दतवन न मीठे रस, न खट्टे रस की और न वृक्ष से ही सूखी, छेदवाली, न दुर्गन्धि वाली एवं न चिकनी ही हो ।

[मूलम्]

महाभारते–

त्याज्यं सपत्रमज्ञातमूर्ध्वशुष्कञ्च पातितम् ।
त्वग्विहीनं ग्रन्थिमुखं तथा पालाशशांशिपम् ॥
ऋजुं वितस्तिमात्रञ्च कीटाऽग्निभिरदूषितम् ।

ऋजुमित्यादिना विधिः ।

[संस्कृत टीका]

त्याज्यमिति । निषेधमाह त्याज्यमित्यादिना । सपत्रम् = पत्रेण = दलेन सहितम् । अज्ञातम् = अविदितगुणनामधेयम् । ऊर्ध्वशुष्कम् = वृक्षे एव शुष्कम्। पातितम् = उत्पाटितम् । ''नोत्पाटयतेद्दन्तकाष्ठमि''ति कूर्मपुराणात् । त्वग्-विहीनम् = त्वचा रहितम् । ग्रन्थिमुखम् = ओष्ठस्पर्शिग्रन्थि-मुखम् । तथा पालाशम् = पलाशवृक्षोद्भवम् । शांशिपम् = शिंशपावृक्षोद्भवम् च । (दन्तकाष्ठम्) त्याज्यम् = हेयम् ।

अत्र कृत्यसारसमुच्चये विशेषमाह गर्गः–

कुशङ्काशं पलाशञ्च शिंशपां यस्तु भक्षयेत् ।
तावद्भवति चाण्डालो यावद् गङ्गां न पश्यति ॥

उशनाः च

कार्पासदन्तकाष्ठञ्च विष्णोरपि हरेच्छ्रियम् ॥ इति ।

ऋजुमित्यादिना विधिरिति । ऋजुम् = सरलम् । वितस्तिमात्रम् = द्वादशाङ्गुलप्रमाणम् । कीटाग्निभिरदूषितम् = कीटैः = कृमिभिः । अग्निभिश्च । अदूषितम् = अविकृतसारम् । दन्तकाष्ठं ग्राह्यमित्यर्थः ।

[हिन्दी टीका]

जिसमें पत्ता हो या जिसका गुण तथा नाम ज्ञात न हो, जो वृक्ष का सूखी हो, जमीन से उखाड़ी गई हो, त्वचा से रहित हो तथा जिसके मुँह पर गाँठ हो वैसी

दतवन निषिद्ध है । साथ ही पलाश तथा शिंशपा (शरीफा या शीशम) की दतवन भी निषिद्ध है ।

कृत्यसारसमुच्चय में उद्धृत गर्ग के वचनानुसार कुश, काश, पलाश तथा शिंशपा (शरीफा या शीशम) की दतवन करने वाला तबतक चाण्डाल बनकर रहता है जब तक गङ्गा का दर्शन न कर ले ।

शुक्राचार्य का कहना है कि कपास काष्ठ की दतवन तो विष्णु भगवान की भी लक्ष्मी को हर लेने वाली है ।

[ मूलम् ]

उशनाः -

नाङ्गुलिभि[१]र्दन्तान् प्रक्षालयेत् ।

[ संस्कृत टीका ]

नाङ्गुलीति । दन्तकाष्ठ-स्थाने अङ्गुलीरेव प्रकल्प्य ताभिः दन्तान् न प्रक्षालयेत् = न शोधयेत् । यथा च कूर्मपुराणेऽपि-

''नाङ्गुल्या धावयेत्क्वचित्'' । इति ।

अतएव ''नाङ्गुलि[१]भिरिति निषेधेऽपि पत्रकाष्ठमृदाद्यन्तरिताङ्गुलिकरणकं दन्तघर्षणमनिरुद्धमि''ति स्मृतिदीपिके''ति नित्यकृत्यार्णवः ।

अत्र अङ्गुलिपदम् अनामिकाङ्गुष्ठभिन्नाङ्गुलिपरम् । यथा स्मृतिचन्द्रिकायां माधवीये च याज्ञवल्क्य :-

इष्टकालोष्टपाषाणैरितराङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ।। इति ।

अनामिकाऽङ्गुष्ठौ मुक्त्वा इतराङ्गुलिभिरिति योजना । पैठीनसिस्तु - तर्जनीमेव निषेधति । यथा- ''तृणपर्णोदकेन नाङ्गुल्या वा दन्तान् धावयेत् प्रदेशिनीवर्जमि''ति । परं तर्जनीपदस्य निषिद्धाङ्गुल्यन्तरोपलक्षणत्वे सर्वसमन्वयः ।

---

पाठान्तर (१) नाङ्गुलीभिः ।

## [ हिन्दी टीका ]

उँगलियों से दतवन न करें । यदि परिस्थिति वश करना पड़े तो अनामिका तथा अंगूठे से कर सकते हैं ।

यहीं स्मृतिदीपिका के व्याख्याऽनुसार, पत्ता, काष्ठ, मिट्टी आदि का माध्यम बनाकर (अर्थात् बीच में रखकर) किसी भी अंगुलि से दतवन करना निषिद्ध नहीं है ।

## [ मूलम् ]

अत्र च[1] शौचार्थदन्तधावने विहितखदिरादिद्रव्य[2]विशेषाभावे सामान्य-शास्त्रा[3]नु ग्रहाय सर्वशक्तिन्यायाद्द्रव्यान्तरोपादानप्रशक्तौ[4]पलाशादिनिषेधाः [5]सार्थकाः ।

## [ संस्कृत टीका ]

अत्र चेति । अत्र च = दन्तधावनप्रकरणे । शौचार्थदन्तधावने = "मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः" इति नरसिंहपुराणवचनेन बोधिते शौचार्थदन्तधावने । विहितखदिरादिद्रव्यविशेषाभावे = खदिरश्च कदम्बश्च" इत्यादिना विहितखदिरादिद्रव्य-विशेषस्यानुपलब्धौ । सामान्यशास्त्रानुग्रहाय = "मुखे पर्युषिते नित्यमित्यादिपूर्वोक्तसामन्यशास्त्रस्य प्रवृत्तये । सर्वशक्तिन्यायात् = सर्वप्रसक्तिन्यायात् । अत्र " ननु विहितालाभेऽ प्रयतेनापि क्रियतामित्याशङ्क्याह सर्वशक्तीति । सर्वैरङ्गैरुपेतो यजेतेत्यादिना प्रायत्यमन्तरा कृतमपि कर्म निष्फलमनिष्कर्षादित्यर्थः" इति म.म. रघुनाथः । द्रव्यान्तरोपादानप्रशक्तौ = विहिताविहितसकलदन्तकाष्ठरूपद्रव्याणां ग्रहणस्याप्रशक्तौप्रसक्तौ = प्रसङ्गे सतीति यावत् । पालाशादिनिषेधाः = "न पालाशं दन्तधावनं स्यान्न श्लेष्मातकारिष्टे" त्यादिना बोधिताः निषेधाः । सार्थकाः = सप्रयोजना भवन्ति ।

---

पाठा० (१) 'च' इति पाठः नित्यकृत्यार्णवे ह. पुस्तके नास्ति । (२) द्रव्याभावे इत्येव नित्यकृत्यार्ण वोद्धृताचारादर्शपाठः । (३) 'शास्त्रार्थः' इति ह.पु. पाठः । (४) प्रसक्तौ इति ह.पु.। (५) 'निषेधः' सार्थकः इति नित्यकृत्यार्णवीयाचारादर्शपाठः ।

"अत्र नानास्मृतिषु विहितानि आम्राम्रातकविल्वा, पामार्ग, शिरीष खदिर, तिन्तिली, वेणुपृष्ठ, वटासनार्क, करञ्ज, करवीर, शाल, निम्ब, विट् खदिर, मालत्यर्जुन, कदम्बो, दुम्बरकाष्ठानि । तथा निषिद्धान्यानि कटुतिक्त कषाय कण्टकिक्षीरीणि । विहितनिषिद्धानि तु करञ्ज, तिन्तिली, निम्ब, शाल, वट काष्ठानि। निषिद्धानि तु पलाश, कोविदार, श्लेष्मातक, चिह्लक, तिन्दुक, शाकवृक्ष, सिन्दुवार, शिखण्डी, वेणुगर्भ, प्लक्ष, माषक, बदरी, शमी, शिंशपा, कपित्थ, हरीतक्यश्वकर्णामलक, विभीतक, धन्वन, पीलु, पिप्पलेङ्गुद, गुग्गुल, शोभाञ्जन, पारिभद्र, कदली, शाल्मलि काष्ठानि । अन्यान्यपि मधुराण्यम्लानि च। विहतेष्वपि ओष्ठस्पर्शिग्रन्थिकं वृक्ष शुष्कं, सच्छिद्रं, पूतिगन्धि, चिक्कणं त्वग्विहीनं, पाटितं, सद्यश्छिन्नं सपत्रमपरिचितञ्च निषिद्धम् ।

अत्र चेयं व्यवस्था, मुख्यतो विहितमुपादेम् । तदलाभे विहितनिषिद्धम् । तदलाभेऽत्वविहितानिषिद्धम् । निषिद्धन्तु सर्वथा नोपादेयम् । तथाहि, दन्तधावनकरणत्वे हि प्रसक्ते काष्ठसामान्ये, विशेषविधिमहिम्ना शेष-निषेधे सिद्धेऽपि कण्ठतस्तन्निषेधस्य प्रतिनिधि-विधयाऽप्युपादानवारणपरत्वात् । यथा "मौद्गश्चरुर्भवती"त्यनेन विशेषविधिनाऽर्थतः प्रतिषेधेऽपि माषादौ पुनर "यज्ञिया वै माषा" "इति शब्दतस्तन्निषेधो मुख्यालामे प्रतिनि-धित्वेनाऽप्युपादानवारणायेत्याचारचिन्तामणिः" । एवमेवाचारविवेकादयः इति नित्यकृत्यार्णवः ।

## [ हिन्दी टीका ]

यहाँ शुद्धि के लिए प्रातःकाल में किये जाने वाले दन्तधावन में भक्षयेद् दन्त धावनमित्यादि (दतवन करनी चाहिए) सामन्य नियम के आधार पर तथा शास्त्र विहित खदिर (खैर) आदि काष्ठ न मिलने की स्थिति में भी विहित पलाश तेन्दु सेमर आदि काष्ठ का निषेध सार्थक है ।

यहाँ उक्त मूल गन्थ के प्रायः व्याख्या रूप आचारचिन्तामणि तथा आचार विवेक आदि के विवेचन के अनुसार ज्ञातव्य है कि अनेकों स्मृतियों में विहित दन्तधावनकाष्ठ ये हैं । यथा-आम, महुआ, विल्व, अपामार्ग (चिरचिरी, आँधी

झाड़ा, चिचड़ा), शिरीष (अति कोमल फूलों वाला एक वृक्ष), खैर, इमली, बाँस का ऊपरी भाग, बड़, आसन, अर्कवृक्ष (आक, आकड़ा, मदार) करञ्ज (एक झाड़, कंजा) करवीर (कनेल), सखुआ, नीम, विट्खदिर, मालती (लताविशेष जिसके फुल बड़े खुशबूदार होते हैं), अर्जुन, कदम्ब और गूलर । साधारणतः निषिद्ध से भिन्न वे हैं जो कड़वे, तीते या कषायरस वाले हों या कांटेदार हों या दूध वाले काठ हों ।

किसी शास्त्र से विहित होने पर भी यदि दूसरे शास्त्र से निषिद्ध हों तो वे विहित-निषिद्ध कहलाते हैं । जैसे कंजा, इमली, नीम, सखुआ और बड़ (बरगद का पेड़) हैं।

जिनका केवल निषध ही कहा गया हो वे निषिद्ध कहलाते हैं । जैसे पलास, कोविदार (कचनार के जैसे सफेद फूल वाला), बहुआर, चील, तेंदुआ, शिखण्डी (एक काँटेदार झाड़ी), सागवान, बाँस का भीतरी भाग, शहतूत पेड़ या पाकड़, माषक (वृक्ष विशेष), बेर, शैनी, सरीफा या शीशम, कपित्थ (कैंता), हर्रे का पेड़, अश्वकर्ण (लताशाल), आंवला, बहेड़े का पेड़, धामनि, पीलु (पश्चिम देश में प्रसिद्ध), पीपल, इंगुद (हिंगोर), गुग्गुल, सोहिजन, फरहद, केला तथा सेमर हैं ।

यहाँ तो यह व्यवस्था है- मुख्य रूप में विहित दन्तधावन ही ग्राह्य हो । यदि यह उपलब्ध न हो तो निषिद्ध होने पर सदैव अन्यशास्त्र द्वारा विहित भी हो तो वह ग्राह्य है । यदि यह भी न मिले तो जिसका न विधान और न निषेध ही हो वह ग्राह्य है । किन्तु निषिद्ध तो सर्वथा अग्राह्य हो । क्योंकि दन्तधावनकाष्ठ की दृष्टि से सामान्य(शास्त्र)तः सभी काष्ठ प्राप्त हो जाते है तब विशेष विधि शास्त्र के आधार से शेष का निषेध स्वतः सिद्ध हो जाता है । फिर भी प्रतिपदोक्त रूप से किया गया (काष्ठ विशेष का) निषेध प्रतिनिधि रूप से भी उस काष्ठ ग्रहण के प्रतिषेध का बोधक होगा । जैसे कि मीमांसाशास्त्र का सिद्धान्त है कि "मौद्गश्चरुर्भवति" (अर्थात् मुद्ग (मूंग) का चरु (हवन के लिए पकाया गया अन्न = हव्यान्न बनता है ) इस विशेष (विधि) शास्त्र के द्वारा माष (ऊरद) का प्रतिषेध फलितार्थ में हो ही जाता है तो फिर 'अयज्ञिया माषाः' (ऊरद यज्ञोपकारक नहीं हैं) इस तरह के शब्द से इनका निषेध सूचित करता है कि मुख्य मूंग के न मिलने पर भी इसके प्रतिनिधि रूप से कदाचिदपि ऊरद तो नहीं ही लिया जाय ।

[ मूलम् ]

अत्र[1] महाभारते–

पर्वस्वपि च वर्जयेत् ।

[ संस्कृत टीका ]

अत्रेति । अत्र = दन्तधावननिषेधप्रसङ्गे । पर्वस्वपि =

चतुर्दश्यष्टमी चैवामावास्या चैव पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥

इति विष्णुपुराणोक्तपर्वदिनेषु । वर्जयेत् = दन्तकाष्ठसंयोगं त्यजेत् । सम्पूर्णश्लोकात्मकं वचनं यथा–

वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि च वर्जयेत् ॥ इति ।

[ हिन्दी टीका ]

चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा तथा रविसंक्रान्ति इन दिनों में लकड़ी से दतवन नहीं करनी चाहिए ।

[ मूलम् ]

नरसिंहपुराणे –

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः[2] ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
अलाभे दन्तकाष्ठानां प्रतिषिद्धदिने तथा[3] ।
अपां द्वादशगण्डूषैः मुखशुद्धिर्विधीयते ॥

[ संस्कृत टीका ]

प्रतिपदिति । प्रतिपदि, अमायां, षष्ठ्यां, नवम्याञ्च काष्ठेन दन्तधावनं न कर्त्तव्यम् । कृते च, दन्तानां काष्ठसंयोगोऽयम् । आसप्तमं कुलम् =

पाठा० (१) 'अत्र' इति पाठो नस्ति ह.पु. । (२) श्राद्धवासरे । भारत इति ह.पु. । (३) प्रतिषिद्धे तथा दिने इति ह.पु. ।

सप्तपुरुषान् यावत् दहति = सन्तापयति । दन्तकाष्ठानाम् (विहितानाम्)अलाभे = अप्राप्तौ । प्रतिषिद्धदिने = ''पर्वस्वपि च वर्जयेदि'' महाभारतवचनेन,

**श्राद्धे जन्मदिने चैव विवाहेऽजीर्णसम्भवे ।**

**व्रते चैवोपवासे च वर्जयेद् दन्तधावनम् ॥**

इति वीरमित्रोदयधृतविष्णुवचनेन

**''समिधा क्षीरवृक्षस्य क्षयाहोपोषणं विना'' इति ।**

दन्तकाष्ठं कुर्यादिति शेषः । क्षयाहपदं श्राद्धदिनोपलक्षकम् । उपोषणपद-मुपवासदिनस्य तदुषसोऽप्युपलक्षकमि''ति कृत्यसारसमुच्चय-विवेचनेन, मूलोक्तवचनादिना च प्रतिपादिते प्रतिषिद्धदिने । अपाम् = जलस्य । द्वादशगण्डूषैः = द्वादशसंख्याकमुखपूर्णजलनिक्षेपैः । मुखशुद्धिः = मुखशौचम् । विधीयते ।

''अत्र दन्तकाष्ठानामभावे पर्णैरपि दन्तधावनं कार्यं, जिह्वोल्लेखस्तु सदा कार्य एव । यदाहतुः व्यासशातातपौ-

**प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ।**

**पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव तु ॥ इति ।**

इदञ्च दन्तधावनाप्राप्तिकालस्याप्युपलक्षणम् । तत्रापि दन्तशौचसाधन-स्याकाङ्क्षितत्वात् । अतएव अलाभेदन्तकाष्ठानामित्यादिनृसिंहपुराणवाक्ये चतुर्थचरणे ''पत्रैर्वा मुखशोधनमि''ति क्वचित्पाठोऽपी''ति

एवञ्च दन्तकाष्ठाभावपक्षे दन्तधावनाप्राप्तिकाले च पर्णै र्जलगण्डूषैर्वा मुखसंशोधनं विकल्पितम् । अलाभे दन्तकाष्ठानामिति दन्ताभावस्याप्युपल-क्षणम् । शोध्याभावेन दन्तकाष्ठानामनुपादानेऽपि मुखशोधनस्यावश्यकत्वेन तत्साधनाकाङ्क्षायामेकत्र दृष्टन्यायेनैतदुपादानस्यैवौचित्यादिति च वीरमित्रोदयः ।

''अपां द्वादशगण्डूषैरित्यत्र गण्डूषस्य दन्तधावनतुल्यत्वेऽपि न तत्र मन्त्रान्वयः व्रीहिकार्यकारिणि यवे व्रीहिमन्त्रस्येवेति प्रकृतावेव श्रुतत्वात्,

मन्त्रलिङ्गविरोधाच्चेतिवर्धमान इति नित्यकृत्यार्णवः। व्रतादौ तु प्रकरणाद्दन्तकाष्ठभक्षणाभावोऽङ्गं, दीक्षितस्य दानहोमाद्यभाववत्। अत्र गण्डूषानां दन्तधावनकार्यकारित्वेऽप्यसमवेतार्थत्वादविधानाच्च न तत्र मन्त्रान्वयः। व्रीहिकार्यकारिषु यवेषु ब्रीहीणां मेधेत्यादिमन्त्राभाववदिति वीरमित्रोदयः।

दन्तधावनतदनुकल्पाचरणेऽपि सर्वत्र दन्तकाष्ठसजातीयकाष्ठेन जिह्वोल्लेख आवश्यकः। यथा च स्मृतिचन्द्रिकाधृतविष्णुः-

"कनिष्ठिकाग्रवत् स्थूलं पर्वार्धकृतकूर्चकम्।
दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा" ॥ इति।

पर्वार्द्धम् = अङ्गुष्ठपर्वार्द्धम्। जिह्वोल्लेखनिका = दन्तकाष्ठजातीय-काष्ठभवा। उपस्थितत्वात् तथाशब्दस्वरसाच्च। दन्तधावनार्थं जिह्वोल्लेखार्थं वा (नियमित) काष्ठानां फलश्रुतौ यथा स्मृतिचन्द्रिकायाम् गर्गः-

सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे।
प्लक्षे[1] चैवार्थसम्पत्तिर्बदर्यां मधुरः स्वरः॥

खदिरे चैव सौगन्ध्यं[2] बिल्वे तु विपुलं धनम्।
उदुम्बरे[3] वाक्यसिद्धि र्बन्धूके च दृढा श्रुतिः[4]॥

सैन्ध्रे[5] च कीर्त्तिसौभाग्यं पालाशे सिद्धिरुत्तमा।
कदम्बे[6] च तथा लक्ष्मीश्चाम्रे चारोग्यमेव च॥

अपामार्गे[7] धृतिर्मेधा प्रजा शक्तिर्वपुः शुचिः।
आयुः शीलं यशो लक्ष्मीः सौभाग्यं चोपजायते॥

अर्केण हन्ति रोगाँस्तु बीजपूरेण तु व्यथाम्।
ककुभेन[8] तथाऽऽयुष्मान् भवेत्पलितवर्जितः॥

---

पाठा० (१) प्लक्षजे। (२) सौभाग्यम्। (३) औदुम्बरे तु वाक् सिद्धिः। (४) मतिः। (५) सैन्ध्रे कीर्त्तिश्च सौभाग्यम्। (६) कदम्बे सकला लक्ष्मीराम्रे आरोग्यमेव च। (७) अपामार्गे श्रुतिर्मेधा प्रजाप्राप्तिस्तथैव च। (८) कुकुभेन। (९) उदजे (१०) कुटुनः=वृक्षविशेषः

दाडिमे सिन्दुवारे च कुब्जके[९] कुटजे[१०] तथा ।
जाती च करमर्दश्च[१] दुःस्वप्नं चैव नाशयेत् ॥ इति ।

अधिकं नित्यकृत्यार्णवे द्रष्टव्यम् । यत्तु

यो मोहात्स्नानवेलायां भक्षयेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह ॥

इति व्यासेनोपन्यस्तं , तत् मध्याह्नस्नानपरम् ।

मध्याह्ने स्नानकाले तु यः कुर्याद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवैः पितृगणैः सह ॥

इति प्रचेतोवचनैकवाक्यत्वात् । प्रातःस्नानस्य तु दन्तधावनोत्तरं विधानाच्च ।

अथाऽयं संक्षेपः ।उषःकाले शुचौ देशे शुचिराचान्त उपवीती प्राङ्मुख उदङ्मुखो वा आम्राम्रातकशिरीषापामार्गखदिरतिन्तिडीवेणुपृष्ठवटार्कासनकरवीरशालनिम्ब विट्खदिरमालत्यर्जुनकदम्बोदुम्बर-णामन्यतमन्तथा निषिद्धान्य-कटुतिक्तकषाय- कण्टकिक्षीरवद्वृक्षभवमनोष्ठस्पर्शग्रन्थि सत्वचं किञ्चिच् (अङ्गुष्ठपर्वार्द्धम्) चूर्णिताग्रम्-कनिष्ठाङ्गुल्यग्रसमस्थौल्यं वितस्तिपरिमाणं प्रादेशमात्रं वा द्वादशाङ्गुलमष्टाङ्गुलं वा समादाय ओं आयुर्बलमित्यादिमन्त्रेण दन्तकाष्ठाग्रेण दन्तान् वाग्यतो धावयित्वा दन्तकाष्ठं प्रक्षाल्य शुचौ देशे स्वाभिमुखीभूय यथा पतत्येवं परित्यज्याचामेत्। अष्टमी चतुर्दश्यमावस्या- पूर्णिमासङ्क्रान्तिरूपेषु पर्वसु प्रतिपत्षष्ठीनवमीषु श्राद्धदिने उपवासदिने विहितादिदन्तकाष्ठाः लाभे च द्वादशजलगण्डूषैस्तृणपत्रादिना वा दन्ताधावनीयाः इति नित्यकृत्यार्णवः ।

## [ हिन्दी टीका ]

प्रतिपत् (पडिवा), अमावास्या, षष्ठी तथा नवमी तिथि में, निषिद्ध दिन (पूर्वोक्त पर्व, रविसंक्रांति, श्राद्धदिन, व्रत उपवासदिन, जन्मदिन, विवाहदिन,

पाठ० (१) करमंदश्च ।

अजीर्णवाले दिन तथा इनके उषःकाल आदि निषिद्ध दिन) तथा विहित दन्तकाष्ठ न मिलने तथा दन्तधावन का उचित समय न मिलने पर अथवा दाँत न होने पर मुखशुद्धि निमित्त जल से बारह बार कुल्ला कर लेना चाहिए। किन्तु व्यास तथा शातातप के वचनानुसार कुल्लों के स्थानपर (तृण) पत्तों से भी मुखशुद्धि कर लेनी चाहिए। इन कुल्लों या तृणपत्तों के कल्प में ''आयुर्बलम्'' इत्यादि मन्त्र का पाठ नहीं होगा।

पूर्वोक्त सभी कल्पों में तथा सभी दिनों में जिह्वोल्लेख (जीभ की सफाई) तो दतवन के लिए विहित लकड़ी से करना ही चाहिए।

दतवन एवं जिह्वोल्लेख हेतु नियमित कुछ दन्तकष्ठों की गर्गमुनि द्वारा कथित फलश्रुति निम्न प्रकार है। सखुआ से धैर्य, बड़ से दीप्ति, करञ्ज (एक झाड़, कंजा) से रणविजय, पाकड़ या ब्रह्मदारु (शहतूत का पेड़) से अर्थलाभ, बेर से मधुर स्वर, खैर से सुगन्धि या सौभाग्य, बिल्व से विपुल धन, गूलर से वाक्सिद्धि, बन्धूक (गुल दुपहरिया का पौधा) से दृढश्रुति या मति, सैन्ध्र से कीर्त्ति और सौभाग्य, पलाश से उत्तम सिद्धि, कदम्ब से लक्ष्मी, आम से आरोग्य, चिचरी से धैर्य, मेधा सन्तानोत्पादनशक्ति, शारीरिक कान्ति, पवित्रता, आयु, शील, यश, लक्ष्मी और सौभाग्य, आक से रोगहानि, ककुभ (अर्जुन वृक्ष), से बाल में सफेदी न होते हुए आयु में वृद्धि, दाडिम, सिन्दुआर, कुब्जक (मैथिली कुआ नाम का वृक्ष) कुटज, वृक्ष विशेष जिसका इन्द्रयव नामका फल प्रसिद्ध है, जाती (चमेली), करमर्द (करौना या करूंजा) से दुःस्वप्न को नाश होने का फल है। इससे अधिक नित्यकृत्यार्णव ग्रन्थ में देखें।

इति दन्तधावनम्

# प्रातःस्नानादि

## [ मूलम् ]

**अथ** प्रातःस्नानादि । तत्र छन्दोगपरिशिष्टे कात्यायनः-

**यथाऽहनि तथा प्रातः नित्यं स्नायादनातुरः ।**
**दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥**

**अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।**
**प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः ॥**

गेहे इत्युद्धृत[१]जलस्नानोपलक्षणम्, नद्याद्यभावे विधानात् ।

## [ संस्कृत टीका ]

तत्रेति । तत्र = प्रातःस्नानप्रसङ्गे । यथाऽहनीति । अनातुरः = स्नान-संवर्द्धनीयरोगशून्यः । यथा = यथेतिकर्त्तव्यतया मृदालम्भादिरूपया । अहनि= मध्याह्ने । स्नायात् = स्नानं कुर्यात् । तथा = तथैव रीत्या । नित्यम् = प्रत्यहम् । दन्तान् = दशनान् । प्रक्षाल्य = शोधयित्वा । नद्यादौ = नद-नदी-देवखात-गर्त-प्रस्रवणादिषु । प्रातः = प्रातःकालेऽपि स्नायादिति वचनार्थः । अनातुर इति विशेषणादातुरस्य ज्वराद्यभिभूतस्य स्नानाकरणे न दोषः । गेहे चेत्=उद्धृतजलेन स्नाने कथञ्चित् करणीये । अमन्त्रवत् = अमन्त्रकमेव । तत् = स्नानं, कार्यम् ।

"गेहे = उद्धृतोदके गेहे वा । अमन्त्रवत् = मन्त्रशून्यम् । स्नानसंवर्धनीयव्याधिकेन तु मार्जनादिना शौचमुत्पाद्य सन्ध्यावन्दनादि कार्यमि"-त्याचारचिन्तामणिः । गेहपदस्योद्धृतोदकपरत्वम्, नद्याद्यभावे विधानादिति प्राञ्च''इति नि त्यकृत्यार्णवः ।

---

पाठा० (१) "अत्र गेहे इत्युद्धृतोदक परंन द्याद्यभावे विधानादित्याचारादर्श इति नित्यकृत्यार्णवः । "अत्र गेह इत्युद्धृतोदकोपलक्षणम् । नद्याद्यभावे विधानादित्याचारादर्श" इति नित्यकृत्यरत्नमालाटिप्पणी । गेहे इत्युद्धृतोदकमात्रोपलक्षणमिति ह.पु । गेह इत्युद्धृतोदकस्नानोपलक्षणम् नद्याद्यभावे विधानादिति श्रीदत्तोऽपी''ति वीरमित्रोदयः ।

अत्र, नित्यकृत्यरत्नमालाटिप्पणी यथा- "गेहे चेदिति । यदि गृहे स्नानं तदा मन्त्रं विनैवेत्यर्थः । अत्र गेह इत्युद्धृतोदकोपलक्षणम् । नद्याद्य-भावे विधानादित्याचारादर्शः । अत्रेदं बोद्धव्यम् । पुंसां जलेऽशिरस्कं (शिरोवर्जं) स्नानं निषेधत्यापस्तम्बः-"अशिरोऽवमज्जनमप्सु वर्जयेदि"ति । तथा च-

**अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।**
**आर्द्रेण वाससाऽपि मार्जनं दैहिकं विदुः ॥**

इति जाबालिवचनमुष्णोदकपरतया ज्ञेयम् । तस्य शिरसि निषेधस्य वैद्यकेऽपि दर्शनात् । एतत्सर्वं वारुणस्नानमेव, जलसाध्यत्वात् । अत्र "प्रातःस्नानं द्विविधं, नित्यं काम्यञ्च । तत्र नित्यमुक्तम् । काम्यं माघादौ मासविशेषे क्रियमाणम्। तच्च (नित्यं) प्रातः स्नान-सन्ध्योपासनानन्तरं स्वकाम्योक्त-विधिविस्तारेणैव कार्यम् । यत एतत् (माघादिविहितस्नानं) किञ्चिदभ्युदितेरवौ क्रियत इति सदाचार" इति ब्राह्मणसर्वस्वे हलायुधः । वस्तुतस्तु नित्यमन्त्रोत्तरं काम्यमन्त्रान् पठित्वा तन्त्रेणैव स्नानमाचरन्ति । यथा स्नानेन सह तर्पणे क्रियमाणे तन्त्रेणैव मृत्पिण्डमुद्धरन्ति, नतु तर्पणाङ्गं पृथक् । अतएव काम्यस्नानमप्यनुदये एवोक्तं द्वैतपरिशिष्टे इति ।

प्रकृतवचनमुद्धृत्य प्रतिपादितं मतद्वयं वीरमित्रोदये यथा-

"कल्पतरु-प्रभृतयस्तु तत्प्रातःस्नानं यदि गेहे केनचिन्निमित्तेन करोति तदा स्नानाङ्गमन्त्ररहितं कार्यमित्याहुः । ...... "यदा गृहाभ्यन्तरेऽवश्यक-र्तव्यतया प्रातः स्नानं करोति तदा देहप्रक्षालनरूपं स्नानममन्त्रकमेव कार्यमिति ब्राह्मणसर्वस्वे हलायुधः ।" ".... इदञ्च प्रातःस्नाने एव । प्रातः स्नानमुपक्रम्याभिधानात् । मध्याह्नस्नानन्तु गृहे अनुपपत्त्या क्रियमाणं समन्त्रकमेव" ।

मैथिलास्तु -

**"मलापकर्षणं तीरे मन्त्रवत्तु जले स्मृतम्"**

इति दक्षवचनेन समन्त्रकस्नानस्य जले एव नियमनात् मध्याह्नस्नानमपि गेहेऽमन्त्रकमेवेत्याहुः । अत्र गृहपदं नद्यादिभिन्नस्थलपरम् । नद्यादा-वित्युक्त्वा गेहे चेदित्याद्यभिधानेन तथा प्रतीतेः । अतएव नद्यादौ गृहसम्भवेऽपि तत्र समन्त्रकमेव स्नानम् । गेहे इत्युद्धृतोदकस्नानोपलक्षणम् । नद्याद्यभावे विधानादिति श्रीदत्तोऽपी''ति । ''पार्श्वे = जलपार्श्वे । जले न कर्त्तव्यमिति यावत् । अतएव पार्श्वे- न जलमध्ये इति रत्नाकर'' इत्यप्यन्यत्र स एव ।

नद्याद्यभावे विधानात् = योग्यजलाशयाद्यभावे ताम्रादिपात्रस्थजलैः स्नानविधानात् । यथाऽऽह व्याघ्रपादः -

**अभावे कूपवापीनामन्येनापि समुद्धृते ।**
**रजोदृष्टेऽपि पयसि ग्राम्यभोगो न दुष्यति । इति ।**

अन्येन = कुम्भादिनेति स्मार्ता इति कृत्यसारसमुच्चयः । योग्य कूपादीनामभावे नद्यादिभ्योऽपि कुम्भादिना उद्धृतजलेन स्नानादि विधेयमितिभावः । यथा वा विष्णपुराणे -

**नदीनदतडागेषु देवखातजलेषु च ।**
**नित्यं क्रियाऽर्थं स्नायीत गिरिप्रस्रवणेषु च ॥**
**कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि ।**
**स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे ॥ इति ॥**

कूपसम्बन्धिनोद्धृतेन तोयेन भुवि स्थितः स्नानं प्रकुर्वीत इति द्वितीय-वचनस्य पूर्वार्द्धार्थः । अन्यत्रापि तडागादाववगाह्य स्नानासम्भवे तथैव स्नायादिति द्वितीयार्द्धार्थः ।

अल्पत्वादिति । स्नानकर्मणः बहुत्वात् = समन्त्रकस्नानकर्मणः बहुसमयसाध्यत्वात् । होमकालस्य = सूर्योदयात्पूर्वं विद्यमानस्य हवन-समयस्य । अल्पत्वात् = स्नानकर्मण्येवाधिकसमयस्य व्यये जाते

अल्पत्वेनावशेषात् । प्रातःस्नानम् । न, तनुयात् = न विस्तारयेत् । यतः होमलोपः = स्नानोत्तरकालीनावश्यकहवनाद्यकरणम् । अत्र होमपदं स्नानोत्तरकालीनावश्यककर्मपरं, तुल्ययुक्तेः प्रातः सन्ध्यावन्दनास्याप्यावश्यकत्वात्। विगर्हितः = लोकशास्त्राभ्यां विनिन्दितोऽस्ति । न तनुयादित्यनेन संक्षेप आक्षिप्तः । सच संक्षेपः योगियाज्ञवल्क्येनाभिहितः । यथा –

**योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः ।**
**असामर्थ्यान्न कुर्याच्चेत्तदाऽयं विधिरुच्यते ॥**
**स्नानमन्त्रजपं चैव मार्जनाचमने तथा ।**
**तीर्थस्याऽवाहनं चैव तीर्थस्य परिकल्पना ॥**
**अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।**
**स्नानाचरणमेतत्तु समादिष्टं महात्मभिः ॥ इति ।**

अतएव "तीर्थपरिकल्पन-जलाभिमन्त्रणाचमन-मार्जनान्तर्जलजप-स्नानान्यघमर्षणसूक्तेन त्रिरावृत्तेनेत्येवंरूपः संक्षेपः पद्मपुराणीयादिवेतिकल्पतरु-रत्नाकरौ" इति नित्यकृत्यार्णवः ।

## [ हिन्दी टीका ]

नदी, नद, देवता के समीप खुदे तालाब, ह्रद (गहरी झील या बड़ा और गहरा सरोवर), झरना आदि में मिट्टी आदि लेकर मन्त्रपूर्वक होनेवाले मध्याह्न स्नान के जैसे ही प्रातःस्नान भी प्रातःकाल दाँत साफ कर करना चाहिए । योग्य नदी आदि के अभाव में (जहाँ भीतर प्रवेश कर स्नान करना आदि संभव न हो) या किसी भी कारणवश जलाशय के उद्धृत (निकाले गए) जल से (आचारचिन्तामणि के अनुसार या घर में भी) स्नान करे तो वह स्नान बिना मन्त्र का होगा । यह प्रथम पद्यात्मक वचन का अर्थ हुआ ।

यहाँ ग्रन्थकार का विवेचन है कि उक्त वचन में पठित 'गेहे' पद उद्धृत (जलाशय से निकाले गए) जल से स्नान का बोधक है क्योंकि योग्य नदी आदि जलाशय के अभाव में इसका शास्त्रीय विधान है ।

यहाँ प्रकृत वचन प्रसंग पर वीरमित्रोदय में दो मत दिखाये गए हैं जिनमें प्रथम कल्पतरु एवं ब्राह्मणसर्वस्व का कहना है कि प्रातःस्नान यदि घर में किसी भी कारणवश अवश्य कर्त्तव्य हो तो यह देहप्रक्षालन रूप प्रातःस्नान विना स्नानांग मन्त्र का ही करना चाहिए । मध्याह्न स्नान तो घर में अनुपपन्न होने के कारण मन्त्रसहित ही होगा ।

यहीं द्वितीय मत मैथिलों (निबन्धों) का है कि "नित्य, नैमित्तिक एवं काम्य स्नानों में पहला नित्य स्नान दो प्रकार का होता है - (१) मलापकर्षण स्नान और (२) प्रातःस्नान । मलापकर्षण (तेल उवटन आदि लगाकर शरीर के मल को दूर करने के निमित्त किया जाने वाला) स्नान तो जल में न करके जल के समीप तट पर करें किन्तु जल और स्थल दोनों स्थानों पर होने वाला भी प्रातःस्नान स्नानांग मन्त्रों के साथ (स्थल पर न होकर) जल में ही हो" इस दक्ष कथन के अनुसार मन्त्रों के साथ होने वाला स्नान जब जल में भी नियमित हो जाता है तो कात्यायन-प्रतिपादित मध्याह्न-स्नान भी घर के स्नानपक्ष में विना स्नानांग मन्त्रों का ही होगा ।

अतएव श्रीदत्तोपाध्याय का भी स्पष्ट स्वरस वैसा ही है । इस विषय का विशेष विवेचन पद्मपुराणीय-स्नान-प्रकरण की अन्तिम टिप्पणी में भी देखा जा सकता है । साथ ही वीरमित्रोदय द्वारा कल्पतरुकार को मैथिलेतरनिबन्धकार समझे जाने का विवेचन भी इसी ग्रन्थ के प्राक्कथन लेख में देखा जा सकता है ।

"स्नानकर्म के लिए अधिक समय की आवश्यकता होती है । अतः प्रातःकाल का स्नान विस्तृत न करें, क्योंकि सूर्योदय के पहले और स्नान के बाद होने वाले आवश्यक हवन (प्रातः सन्ध्यावन्दन) आदि का लोप लोक शास्त्र दोनों ही दृष्टियों से निन्दित है"। (फलतः योगियाज्ञवल्क्य द्वारा प्रदर्शित संक्षिप्त विधि से कर लेना चाहिए) यह मूल वचन के द्वितीय पद्य का अर्थ हुआ ।

नित्यकृत्यरत्नमालाटिप्पणी के अनुसार ज्ञातव्य है कि माघ आदि महीनों में किये जाने वाले काम्य प्रातःस्नान का विधान थोड़ा सूर्योदय हो जाने पर किया गया है तो नित्यस्नान का विधान सूर्योदय के पहले । यदि स्नानकर्त्ता को दोनों ही स्नान करना अभीष्ट हो तो ऐसी स्थिति में नित्यस्नान का मन्त्र पढ़ने के बाद काम्य स्नान का भी मन्त्र पढ़कर सूर्योदय के पहले एक बार ही किये गए स्नान से दोनों स्नान हो जायेंगे, ऐसा निर्णय 'द्वैतपरिशिष्ट' में विवेचन के साथ किया गया है ।

## [ मूलम् ]

विष्णुः-

**प्रातःस्नायी अरुणकरग्रस्तां प्राचीमवलोक्य स्नायात् ।**

अरुणकरग्रस्तामिति सन्ध्यापूर्वकालपरम्, सन्ध्यायां[1] निषेधादिति हरिहर-स्तदयुक्तम् । सन्ध्यापूर्वकालेऽपि रात्रित्वेन निषेधात् । तस्मादरुणकरग्रस्तामित्य-सङ्कुचितमेव । अतएव तत्र तत्र[2] सन्ध्यास्नानकीर्त्तनम् । अत्र च उदयात् प्राक् प्रातःस्नानविधानात् ।

## [ संस्कृत टीका ]

प्रातरिति । प्रातःस्नायी = प्रातःस्नानशीलः । अरुणकरग्रस्ताम् = अरुणस्य - सूर्यस्य (मिहिरारुण-पूषण इत्यमरः । सूर्यसारथेर्वा । 'सूरसूतोऽरुणोऽनूरुरि'त्यमरः । अथापराच्छ्लेषात्तन्त्राद्वा एतयोः, अरुणेन = अव्यक्तरागेण । (अव्यक्तरागस्त्वरुण इत्यमरः, अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु इति चामरः)। करेण = किरणेन । ग्रस्ताम् = व्याप्ताम् । प्राचीम् = पूर्वदिशम् । अवलोक्य = दृष्ट्वा = ज्ञात्वेत्यर्थः । स्नानं कुर्यादिति विष्णुस्मृत्यर्थः ।

अत्र पारस्करगृह्यसूत्रभाष्यकारः हरिहरस्तु -

''अरुणकरग्रस्तमिति सन्ध्यापूर्वकालपरम् = सूर्योदयात्पूर्वदण्डद्वया-त्मकसन्ध्यापूर्वशुक्लभास्करपूर्वदिगुपलक्षितकालपरम् । मूलोक्त-विष्णुवचनपूर्ववर्त्तिना '' न राहुदर्शनवर्जं रात्रौ, न सन्ध्यायामिति वचनेन संध्यायां स्नानस्य निषेधादि''ति व्याख्यातवान् । तदयुक्तम् = तत्र शोभनम् । सन्ध्यापूर्वकालेऽपि रात्रित्वेन ''न राहुदर्शनवर्जं रात्रौ'' इति विष्णुवचनेनैव, निषेधात् = निषेधापात् = अतस्तद्रीत्या तथावचनार्थकरणस्य दोषग्रस्तत्वादिति भावः । तस्मात् = तथार्थकरणे दोषापातात् । अरुणकरग्रस्तामिति वचनम् । असङ्कुचितमेव = सामान्यत उदयात्प्राक् प्रातःकालपरमेव मन्तव्यम्, न तु

---

पाठा० (१) अत्र 'स्नान' इत्यधिकः पाठः (२) एकस्य 'तत्र' इतिपदस्य च पाठाभावः ह. पुस्तके।

सन्ध्यापूर्वकालपरमपि । अतएव " तत्कालस्यापि रात्रित्वेन तेनैव विष्णुवाक्येन निषेधात् । तस्मान्निषेधोऽयं रागप्राप्तस्नानविषयः । अतएव "उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ" इति दक्षवाक्येन

**"स्नातो यः पूर्वसन्ध्यायां सदा मामभिगच्छति,"**

इत्यादिवाक्येन च सन्ध्यायामपि स्नानमभिहितमिति वीरमित्रोदयः ।

**"स्नातो यः पूर्वसन्ध्यायां सदा मामभिगच्छति "**

**"उषस्युषसि यत्स्नानं सन्ध्ययामुदिते रवौ"**

इत्यादिनानावाक्येषु सन्ध्यास्नानमुक्तमिति छन्दोगाह्निकमिति नित्यकृत्यार्णवश्च । अतएवेति । अतएव = अरुणकरग्रस्तामित्यत्र वाच्यार्थस्य स्वीकारादेव । तत्र-तत्र = दक्षादिवचनेषु । सन्ध्यास्नानकीर्तनम् = प्रातःसन्ध्यास्नानवर्णनम् । अत्र च = प्रातःस्नानविधायकविष्णुवचने च । उदयात् प्राक् = सूर्योदयात्पूर्वम् । प्रातःस्नानस्य विधानात् ।

अतएव वीरमित्रोदयेनाऽपि-"अत्र प्रातःस्नानविधायकेषु प्रातःशब्दः उदयपूर्वकालवचनः । "प्रातःस्नायी अरुणकरग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णुवचनेन सर्वत्र प्रातःस्नाने तस्यैव कालस्य प्रापितत्वादि''त्येवोच्यते ।

अतएच च "अत्र प्रातःस्नानविषये केचिदाचक्षते -

**"रात्रौ स्नानं न कुर्वीत राक्षसी कीर्त्तिता हि सा"**

**"सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः"**

इत्येवमादिवचनादुदयात्प्राक् स्नानं न कार्यमिति । तेषां चन्द्रग्रहणादावपि कथं स्नानम् । राहूपरागे स्नायादित्येवं विशेषविधेरिति चेत्तर्हीदमपि "प्रातःस्नाय्यारुणकरग्रस्तां प्रांचीमवलोक्य स्नायादि''ति विष्णुस्मृतेर्विशेषविधेरस्तु" इति छन्दोगाह्निके श्रीदत्तोपाध्यायाः प्राहुः । राक्षसीत्यस्य रक्षसां कर्माधिकाराह त्यर्थः", इति नित्यकृत्यरत्नमाला टिप्पणी ।

यदाह दक्षः -

**प्रातरुत्थाय वो विप्रः प्रातःस्नायी भवेत्सदा ।**
**सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥**

यच्च पुनः -

**उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ।**

**प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥**

इति दक्षवचनं तत् पूर्वपूर्वकालबाधे उत्तरोत्तरकाल-प्राप्त्यर्थम् ।

## [ हिन्दी टीका ]

प्रातःस्नान करने वाला अरुण (सूर्य या सूर्य सारथी) की हल्की (गुलाबी) लालिमा वाली किरण से पूर्व दिशा को अनुरञ्जित हो जाने पर स्नान करे, यह विष्णुस्मृति का अर्थ हुआ ।

यहाँ इस वचन की व्याख्या करते हुए (पारस्करगृह्यसूत्र के भाष्यव र) हरिहर का कहना है कि सूर्योदय के पूर्व दो घड़ी का समय सन्ध्या समय हं । इससे पहले ही प्रातःस्नान कर लेना चाहिए । क्योंकि सन्ध्यासमय में "न सन्ध्यायाम्" इस विष्णुवचन से प्रातः स्नान का निषेध किया गया है । परन्तु यह मत युक्तिसङ्गत नहीं । क्योंकि इस तरह देखा जाय तो सन्ध्या के पूर्व समय में रात्रि रहती है और "न राहुदर्शन वर्जं रात्रौ" इस विष्णु वचन से रात्रि में भी स्नान का निषेध किया गया है। अतः इस वचन के अर्थ करने में सङ्कोच (सूर्योदय के पूर्व वाले सन्ध्या समय से पूर्व) न कर शब्द से ही प्रतीत होनेवाला अर्थ (सूर्योदय के पूर्ववर्त्ती प्रातः काल) ही मानना सर्वथा उचित है । इस वाच्यार्थ को स्वीकार करने से ही दक्ष आदि वचनों में कहा गया प्रातः स्नान का वणनि संगत होता है । और इस विष्णुवचन से भी प्रातःस्नान का विधान किया गया है ।

ऊपर से ज्ञातव्य है कि तब यदि सन्ध्यासमय में स्नाननिषेधक वचन है - "न सन्ध्यायाम्" तो इसे रागप्राप्त स्नान का निषेधक समझना चाहिए क्योंकि दक्ष ने अपने वचनों (उषस्युषसि आदि, तथा स्नातो यः आदि) से सन्ध्या समय में भी स्नान कहा है ।

अब दक्ष का जो यह कहना है कि प्रातःकाल उठकर जो सदैव प्रातः स्नान करता है वह तीन वर्षों में सात जन्मों के पापों सें छुटकारा पा लेता है । अथवा पुनः जो यह कहना है कि उष:काल या सन्ध्या काल या सूर्योदय के बाद किया गया स्नान प्राजापत्य के समान है तथा महापतक का नाशक है । ये परिस्थिति वश पूर्व पूर्वकाल के बाध हो जाने पर उत्तरोत्तर (आगे-आगे के) समय की प्राप्ति का बोधक है ।

[ मूलम् ]

"सूर्योदयं विना नैव स्नानदानादिका:[१] क्रिया:"

इति मार्कण्डेययपुराणमितरविषयम् । तथा (विष्णु:)

अलक्ष्मी: कालकर्णी[२] च दु:स्वप्नं दुर्विचिन्तितम् ।
अम्मात्रेणा[३] भिषिक्तस्य नश्यन्त इति धारणा ॥

कालकर्णी = राक्षसी । अम्मात्रेणेति = मन्त्रादिकं विनाऽपीत्यर्थ: । धारणा = निश्चय: ।

[ संस्कृत टीका ]

सूर्योदयमिति । ननु सूर्योदयात्पूर्वमेव प्रात:स्नाने विधीयमाने इति "सूर्योदयं विना नैवे"त्यादि मार्कण्डेयपुराणवचनं कथं सङ्गच्छेत, इत्यत आह मार्कण्डेय-पुराणमिति । सूर्योदयानन्तरं स्नानदानादिका क्रिया कार्येत्यर्थकमार्कण्डेयपुराणवचनम् । इतरविषयम् = प्रात:स्नानेतरस्नानपरम्-मध्याह्नस्नानपरमिति यावत् ।

तथेति = लक्ष्मी: = सम्पत्ति: शोभाच । अलक्ष्मी: = तद्विपरीता विपत्ति:, कान्त्यभाव:, दरिद्रता च । कालकर्णी = दु:सहस्य रक्षसो दुहिता । दु:स्वप्नम् = अनिष्ट-स्वप्नम् । दुर्विचिन्तितम् = अशुभचिन्तनम् च । अम्मात्रेण = मन्त्रादिकं विनाऽपीति ग्रन्थकार- पारिजातौ । उद्धृतेन अनुद्धृतेन वेत्यर्थ इति कल्पतरु: । येन केनाप्यम्भसेत्याचारचिन्तामणि: । अभिषिक्तस्य = स्नातस्य । नश्यन्ते = स्वत एव नाशमासादयन्ति इति स्मृतिकारस्य विष्णो: धारणा = निश्चय: ।

एतदुत्तरञ्च प्रात:स्नानप्रशंसापरकं विष्णुवचनं यथा-

याम्यं हि यातनादु:खं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जना: ॥ इति ।

---

पाठा० (१) दिक-क्रम:, (२) 'करणी' इति वीरमित्रोदयपाठ: । (३) 'अस्मात्तेना' इति च ह. पु. ।

याम्यम् = यमलोकोद्भवम् ।

[ हिन्दी टीका ]

'सूर्योदय के बिना स्नान दान आदि क्रिया नहीं करनी चाहिए, इस मार्कण्डेय पुराण के कथन का तात्पर्य दिन (मध्याह्न) के स्नान से है । अतः प्रातःकालिक स्नान को इससे जोड़ना उचित नहीं ।

प्रातःकाल में मन्त्रों आदि के बिना भी जिस किसी (उद्धृत = जलाशय से निकाले गए - या अनुद्धृत ) भी जल से स्नान करनेवाले व्यक्ति की अलक्ष्मी (विपदा अशोभा और दरिद्रता), दुःसह नाम के राक्षस की पुत्री राक्षसी या कालकारणी का उपद्रव, बुरा स्वप्न तथा बुरा सोचना ये सभी नष्ट हो जाते हैं ऐसा स्मृतिकार विष्णु का निश्चय है ।

उक्त वष्णुवचन के अग्रिम पद्य द्वारा प्रातःस्नान की प्रशंसा में कहा गया है कि प्रातःस्नायी व्यक्ति यमलोक में होने वाले दुःख को नहीं भोगते और पाप करनेवाले लोग पाप से छुटकारा पाकर पवित्र हो जाते हैं ।

[ मूलम् ]

दक्षः–

प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम्[1] ।
सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ।

दृष्टम् = कर्माधिकारः । अदृष्टम् = जपादिद्वारा परलोकसिद्धिः । एतच्च सर्वमर्हतीत्यनेनैव वक्तव्यम्[2] । अदृष्टम् = पापक्षय इति केचित् ।

[ संस्कृत टीका ]

प्रातरिति । दृष्टादृष्टकरम् = दृष्टम् = कर्माधिकारः = जपादिकर्मसु प्रवृत्तियोग्यता । एवमेव " दृष्टं शौचात्मकं कर्माधिकारजनक मलापनयनादिना शुद्धिरिति लक्ष्मीधरः । अदृष्टम् = प्रत्यवायपरीहारः नित्यत्वाज्जपादिद्वारा परलोकसिद्धिरिति पारिजात इति रत्नाकर" इति नित्यकृत्यार्णवः । अदृष्टम्= जपादिद्वारा परलोकसिद्धिरिति ग्रन्थकारः । तथाच एतदुभयकरम् = उभयोः

पाठा० (१) 'हि तत्' इति ह.पु. । (२) 'व्यक्तम्' इति ह. पु. ।

सम्पादकमिति यावत् । हितम् = सर्वथा हितकरम् । प्रातःस्नानम् । प्रशंसन्ति = गुणमुखेन वर्णयन्ति मुनय इति शेषः । (यतः) प्रातःस्नायी । पूतात्मा = पवित्रात्मा भवति । (अतः) जपादिकं, सर्वं = शुभं कर्म कर्त्तुमर्हति = योग्यो भवति ।

यद्यप्यत्यत्र सर्वमर्हतीति कथनेनैव दृष्टादृष्टकरमित्यस्यापि ग्रहणं स्यादेव, तथाप्येतस्योपादानं ब्राह्मणवसिष्ठन्यायेन, स्पष्टप्रतिपत्यर्थं बोद्धव्यम् । मूलोक्तकेचित्पदेन कल्पतरुकाराः ग्राह्याः । प्रातःस्नानस्यान्यान्यपि फलानि श्रूयन्ते । यथाऽऽहतुः संवर्तदक्षौ -

**गुणा दश स्नानपरस्य साधोः रूपञ्च तेजश्च बलञ्च शौचम् ।**
**आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च तपश्च मेधा ।**

इति धर्माधर्मप्रबोधिन्यां प्रेमनिधिठक्कुराः ।

प्रातःस्नानस्यावश्यकत्वमन्यदृष्ट्याऽप्याह मूलोक्तवचनात् पूर्व-वर्त्तिवचनेभ्यो दक्षः यथा -

**अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।**
**स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥**
**क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च ।**
**अङ्गानि समतां यान्ति उत्तमान्यधमानि ॥**

तथा

**अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन ।**
**लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥**

समतां यान्ति = उत्तमाङ्गान्यपि नेत्रादीनि क्लेदसम्बन्धादधमाङ्ग-समानि भवन्तीत्यर्थः । अस्नात्वा नाचरेदित्यत्र लालास्वेदसमाकीर्ण इति हेतुनोक्तः । यत इतिशेषः ।

[ हिन्दी टीका ]

दृष्ट (जप आदि शुभ कर्म में अधिकार) और अदृष्ट (जप आदि के द्वारा परलोकसिद्धि) फल के सम्पादक तथा सभी दृष्टियों से हितकारी होने के कारण प्रातःस्नान की प्रशंसा मुनिजन करते हैं । क्योंकि प्रातःस्नायी पवित्रात्मा हो जाता है और तप आदि सभी कर्म करने योग्य होता है ।

यद्यपि यहाँ वचन में "सर्वमर्हति" मात्र कहने से काम चल ही जा सकता था तथापि विशेषतः "दृष्टादृष्टकरम्" कहने का तात्पर्य ब्राह्मणवसिष्ठन्याय (यथा सभी ब्राह्मण को निमन्त्रण देना साथ ही वसिष्ठ को भी । इसका तात्पर्य होता है कि वसिष्ठ को निमन्त्रण अवश्य ही हो । इसी तरह यहाँ भी सभी शुभ कर्मों में सामान्यतः अधिकार होगा ही । विशेषतः आवश्यक ऐहलौकिक तथा पारलौकिक कर्म करने का भी अधिकार होता है ) से अथवा स्पष्ट समझने की दृष्टि से कहा गया है ।

यहाँ कल्पतरुकार के मत से दृष्ट पद का अर्थ है शारीरिक मल को दूर होने से (शारीरिक) शुद्धि और अदृष्ट पद का अर्थ प्रातःस्नान नित्य होने के कारण पापक्षय है । मूल में कहे गये केचित् पद से इसी कल्पतरुकार के मत का सङ्केत किया गया है ।

अन्यत्र प्रातःस्नान के दृष्ट और अदृष्ट अन्य फल भी कहे गये हैं । निबन्धकार प्रेमनिधि ठाकुर निर्मित धर्माधर्मप्रबोधिनी में उद्धृत संवर्त तथा दक्ष वचन के अनुसार-प्रातःस्थायी सज्जन को सुन्दर, रूप, तेज (मासनसिक शक्ति), बल (शारीरिक शक्ति), शुद्धि, आयु वृद्धि, आरोग्य, अलोलुपता, बुरे स्वप्न का नाश, तपस्या तथा विषय ग्रहण करनेवाली बुद्धि ये दस गुण मिलते ।

अन्य दृष्टि से भी प्रातःस्नान की परमावश्यकता अन्य वचनों के द्वारा दक्ष यों कहते है-

यह शरीर मलयुक्त होने के कारण अत्यन्त अपवित्र है और नौ छिद्रों से युक्त होने के कारण दिन-रात शारीरिकमलस्रावक बना रहता हैं । सोये हुए प्राणी की इन्द्रियाँ मलस्रावक तथा गीली रहती हैं फलतः नेत्र आदि उत्तम अंग भी अधम अंगों के समान हो जाते है ।

सब से विशेष बात तो यह है कि सोकर उठा हुआ व्यक्ति मुंह की लार तथा पसीनों से व्याप्त रहता है । अतः बिना स्नान किये हुए जप होम आदि कुछ भी

आवश्यक पवित्र कर्म नहीं कर पायेगा। अतः अशुद्धि हटाने तथा कर्मोपयोगी शुद्धि प्राप्ति हेतु प्रातःस्नान का आचरण आवश्यक है।

## [ मूलम् ]

नरसिंहपुराणे–

**पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य[1] यथाविधि।**
**गायत्रीमभ्यसेत्तावद् यावदादित्यदर्शनम्॥**

अनुदितहोमीतरविषयमेतत्[2]।

## [ संस्कृत टीका ]

पूर्वामिति। सनक्षत्राम् = तारायुक्ताम्। (नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम् इत्यमरः)। पूर्वां सन्ध्याम् = प्रातःसन्ध्याम्। सन्ध्यासमयश्च मुहूर्त्तमात्रम् –यदाह–योगियाज्ञवल्क्यः–

**ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम्।**
**सन्ध्या मुहूर्त्तमात्रञ्च ह्रासे वृद्धौ च सा समा॥ इति।**

उपक्रम्य = प्रारभ्य। यावदादित्यदर्शनम् = यावत्पर्यन्तं सूर्योदयो भवेत्तावत्कालम्। गायत्रीमन्त्रम्। अभ्यसेत् = जपेत्।

ननु सूर्योदयपर्यन्तं यदि गायत्रीजप एव स्यात्तदा "अनुदिते होतव्यमि"ति विधिश्रुतेः कथं चारितार्थ्यमित्यत आह–अनुदितेति। एतत् = प्रकृतवचनम्। अनुदितहोमीतरविषयम् = अनुदितहोमिभ्यः समयाध्युषितहोमिभ्यश्च इतरे ये उदितहोमिनः तद्विषयम् = तत्परकमिति भावः।

इमे च होमा वैकल्पिकाः। यथाऽऽमनुः (२/१५)–

**उदितेऽनुदिते चैव समयाध्युषिते तथा।**
**सर्वथावर्तते यज्ञ इतीयं वैदिकी श्रुतिः॥ इति।**

---

पाठ० (१) मुपासीत। उभयविधोऽपि पाठभेदः हस्तलिखित=प्रकाशिताचारादर्शपुस्तकव्यवहृतोऽस्ति।
(२) 'परम्' इति ह.पु.।

इदञ्च साग्निकेतरपरमिति मित्रमिश्रः । अत्र

**नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।**
**तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम् ॥**

इति ब्रह्मपुराणसिद्धं प्रातःस्नानाङ्गतर्पणं सन्ध्याऽऽचरणात्पूर्वं परं वेत्यत्र दृश्यते 'विधा व्यवस्था, यथा-वीरमित्रोदये प्रातःस्नानानन्तरञ्च तदङ्गतर्पणं तदव्यवधानेनैव कार्यम् -

**''तस्मात्सर्वप्रयत्नेन प्रातःस्नानं समाचरेत्''**

इत्युपक्रम्य-

**स्नात्वा सन्तर्पयेद्देवानृषीन् पितृंगणाँस्तथा ।**
**आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः ॥**
**सम्मार्ज्य मन्त्रैरात्मानं कुशैः सोदकबिन्दुभिः ।**

इत्यादिना -

**प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ।**

इत्यन्तेन कूर्मपुराणे तथांऽभिधानात् ।... एवञ्च्च यत्र क्वचित्सन्ध्योत्तर - तर्पणाभिधानं तत् अहःकर्त्तव्यस्वतन्त्रतर्पणाभिप्रायकम् ।

मैथिलास्तु -''यथाऽहनि तथा प्रातरि'' तिवचनेन माध्याह्निकक्रमाति- तिदेशात्सन्ध्योत्तरमेव प्रातःस्नानाङ्गतर्पणम् । शिष्टाऽचारोऽप्येवमेव । कूर्मपुराणादिवचनं चोपरागादिनिमित्तकम्नानस्य सायमनुष्ठाने क्रम- बोधकमिति वदन्ती''ति ।

## [ हिन्दी टीका ]

आकाश में तारे रहते ही (सूर्योदय के दो घड़ी पूर्व समय से ही) सन्ध्यो- पासन के बाद सूर्योदय पर्यन्त गायत्री का जप करते रहें ।

यह विधान सूर्योदय के बाद हवन करनेवालों के लिए है । यहाँ वीरमित्रोदय ने प्रातःस्नान के अंगभूत तर्पण के सम्बन्ध में दो मत दिखाये हैं । जिनमें- एक (गौडों का) मत है कि '' प्रयत्नपूर्वक प्रातःस्नान कर देव, ऋषि एवं पितरों का

तर्पण करे। .......बाद में सन्ध्यावन्दन करना चाहिए'' इस कूर्मपुराण आदि के (सारांश) कथनानुसार उक्त तर्पण सन्ध्यावदन के पहले और प्रातःस्नान के बाद ही हो। जहाँ कहीं सन्ध्यावन्दन के बाद कहा गया है वह मध्याह्न (दिन) में कर्त्तव्य स्वतन्त्र तर्पण के अभिप्राय से है। किन्तु यहीं दूसरा मत मैथिलों का है कि ''यथाऽहनि तथा प्रातः'' इत्यादि कात्यायन एवं दक्ष के वचनानुसार मध्याह्न के समय होनेवाले कृत्यों के क्रमों का अतिदेश (आरोप) प्रातःकालिक स्नान आदि कृत्यों के क्रम के लिए किया गया है। अतएव प्रातःस्नान का अङ्ग तर्पण भी मध्याह्न तर्पण के जैसे सन्ध्यावन्दन के बाद ही हो। शिष्ट जनों का आचार भी ऐसा ही है। कूर्मपुराण आदि का (उक्त) कथन तो चन्द्रग्रहण आदि के कारण से शाम (या रात्रि) में होनेवाले स्नान (जिसके बाद सन्ध्यावन्दन न होना संभव नहीं है) आदि के क्रम का बोधक है। इति।

## [ मूलम् ]

दक्षः -

सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते।

तत्रा[1]नुकल्पमाह-

ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एतैरेव[2] हुतं यत्तु तद्धुतं स्वयमेव हि॥

विट्पतिः = जामाता।

## [ संस्कृत टीका ]

सन्ध्येति। सन्ध्याकर्मावसाने = सन्ध्याकर्मोत्तरविधेयतर्पणकर्मणोऽन्ते। सन्ध्यापूर्वमेव तर्पणविधायिनो मते सन्ध्योपासनानन्तरमेवार्थः। स्वयम् = स्वेनैव। होमः = हवनम्। विधीयते। स्वस्यासामर्थ्ये प्रतिबन्धे वा अनुकल्पमाह-ऋत्विगिति। अनुकल्पः = प्रथमकल्पादधमः कल्पः। ऋत्विक् = याजकः। यथा चाह मनुः (२।१४३)-

---

पाठा० (१) 'अत्रा' इति ह.पु०। (२) एभिरेव

अग्न्याधेयं पाक यज्ञानाग्निष्टोमाह्निकान् मखान् ।
यः करोति वृतो यस्य तस्य ऋत्विगिहोच्यते । इति

पुत्रः = आत्मजः । गुरुः = पित्रादिः । यथाऽऽह मनुः (२।१४२-४९)—

निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ इति ।

अल्पं वां बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया ॥ इति च ।

भ्राता = अग्रजोऽनुजोवा । भागिनेयः = भगिन्याः अपत्यम् । विट्पतिः = विषः = कन्यायाः, पतिः, जामातेति जटाधरः । एतैरेव एभिरेव । यद् । हुतम् = हवनं कृतम् । तत् । हि= यतः । स्वयमेव = स्वेनैव । हुतम्=कृतं हवनम् । मन्यते इति शेषः ।

वस्त्वनुकल्पार्थं कृत्यरत्नाकरे तु यथा आज्यार्थे तैलं प्रतिनिधिरिति पठित्वा अत्र गव्यमाज्यं प्रथमं, तदभावे माहिषं, तदभावे आजं, तदभावे आविकम्, तदभावे तैलं, तत्रापि प्रथमं तिलजं, तदभावे जर्त्तिलजं, तदभावे कौसुम्भं, तदभावे दधि पयो वा, तदभावे तण्डुलपिष्टानि यव-पिष्टानिवेति व्याख्याय—

विष्णुधर्मोत्तरे—

दध्यभावे पयः कुर्यान्मध्वभावे तथा गुडम् ।
घृतप्रतिनिधिं कुर्यात्पयो वा दधि वा नृप ॥

इति नित्यकृत्यार्णवः ।

## [ हिन्दी टीका ]

सन्ध्यातर्पण अथवा तर्पणसन्ध्या कर लेने के बाद स्वयं ही हवन करना चाहिए । किसी प्रतिबन्धवश स्वयं करने में असमर्थ हो तो याजक (यज्ञ कराने वाला), आत्मज, गुरु (पिता, आचार्य, या अन्नादि से पालक), भाई, बहन की सन्तति तथा जमाता अनुकल्प में मान्य हैं । अर्थात् इनके द्वारा किया गया हवन अपने द्वारा किया गया ही माना जाता है ।

इसी तरह कृत्यरत्नाकर में उद्धृत बौधायन वचन के अनुसार घृत में होम के लिए सर्वप्रथम गाय का घी होना चाहिए। इसके अभाव में क्रमशः भैंस, बकरी या भेड़ी का हो। इसके अभाव में तेल, तेल में भी क्रमशः तिल, स्वयंजात तिल, कुसुम्भ (केसर) या सरसो का हो। इसके अभाव में दही या दूध, इसके अभाव में चावल या जौ का आटा हो। विष्णुधर्मोत्तरवचनानुसार दही के अभाव में दूध, शहद के अभाव में गुड़ और घृत के अभाव में दूध या दही समझना चाहिए।

## [ मूलम् ]

वराहपुराणे–

उदयान्निःसृतं सूर्यं यस्तु भक्त्या नरो[1] द्विजः ।
दध्यक्षताञ्जलिभिस्तु तिसृभिः[2] पूजयेच्छुचिः ॥
तस्य भावप्रपन्नस्याशुभं[3] यत्समुपार्जितम् ।
तत्क्षणादेव निर्दग्धं भस्मीभवति तस्य तत्[4] ॥

## [ संस्कृत टीका ]

उदयेति । यः = पापक्षयकामः । द्विजः = कर्मकर्त्ता । शुचिः = पवित्रः सन् । उदयात् = उदयाचलात् । निस्सृतम् = बहिरागतम् । सूर्यम् = भास्करम् । तिसृभिः = त्रिभिः । दध्यक्षताञ्जलिभिः = दधिमिश्रिताक्षत-युतसम्मिलितकराभ्याम् । (तौ युतावञ्जलिः पुमानित्यमरः) । अञ्जलिशब्दस्य पुंस्त्वेऽपि तिसृभिरिति प्रयोग आर्षत्वात् । पूजयेत् = आराधयेत् =अर्घमुद्रया दधिमिश्रिततण्डुलान् समर्पयेदिति यावत् । तस्य भावप्रपन्नस्य = भक्त्या शरणागतस्य । यत् । समुपार्जितम् = जन्मजन्मान्तरार्जितम् । अशुभम् = पापमास्ते । तत् = सकलं पापम् । तत्क्षणादेव = तस्मिन्नेव समये । निर्दग्धम् = सद्य उत्पन्नैस्तेजोमयैः पुण्यैः निश्शेषेण दाहविषयीभूतं सत् भस्मीभवति । निश्शेषं विनश्यतीति भावः । वस्तुतस्तु प्रशंसापरकमिदं वचनं पूर्वरीत्यावऽश्यमुपासनीयः सवितेति संसूचयति ।

---

पाठा० (१) नरोत्तमः । (२) त्रिभिः सम्पूजयेच्छुचिः । (३) अशुभं यदुपार्जितम् । समार्जितम् इति ह.पु. । (४) काष्ठवत् ।

पूजेयं काम्या । वासुदेवादीनां या तु नित्या सा प्रहरद्वयोरुपरि, ततो विष्णुगृहं व्रजेदित्यभिधानादिति कृत्यप्रदीप इति छन्दोगाह्निके म.म. मुकुन्द-शर्मकृताटिप्पणी ।

## [ हिन्दी टीका ]

जो पापक्षय कामना वाला नर पवित्र होकर उदयकालिक (उदयाचल से निस्सृत) सूर्य भगवान को तीन अंजुलियों से अर्घदान के द्वारा दही से मिला (सना) हुआ चावल समर्पित करता है, भक्ति से शरणागत उस (मनुष्य) का जन्मजन्मान्तर से उपार्जित पाप तत्क्षण ही निश्शेष नष्ट हो जाता है।

यह पूजन नित्य न होकर काम्य (करना न करना अपने इच्छाधीन) है ।

## [ मूलम् ]

मनुः—

**मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।**
**पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् ॥**

पूर्वाह्ण एवेति पुरीषोत्सर्गे सति सम्भवे नियमः । केशप्रसाधने च उत्सवादिनिमित्ताभावे । दन्तधावने-भोजनोत्तरविहितेतरे । अञ्जने-भेषजेतरे सौवीराञ्जनादौ । स्नाने देवपूजने च मध्याह्नादिविहितेतरे ।

## [ संस्कृत टीका ]

मैत्रमिति । मैत्रम् =मित्रदेवताकत्वान्मैत्रं पायुः, तद्भवत्वान्मैत्रम् = पुरीषोत्सर्गम्, प्रसाधनानि च पूर्वाह्ण एव कुर्यादिति मनुस्मृतेः शाब्दिकोऽर्थः । पूर्वाह्णशब्देन रात्रिशेष–दिनपूर्वभागाविह विवक्षिताविति कुल्लूकभट्टः । "पूर्वाह्णपदञ्चाजहत्स्वार्थलक्षणया प्रत्यूषादिपूर्वाह्णपरम् । मैत्र-दन्तधावनादीनां प्रत्यूषे एव विधानात् । एवञ्च वाक्यान्तरैकवाक्यतयाऽत्र पूर्वाह्णपदं मैत्रादिनियमितपूर्वाह्णान्तर्वर्त्तितत्तत्कालपरम् । तेन न मैत्रदन्तधावन- प्रातःस्नानादेः सूर्योदयानन्तरं करणप्रसङ्गः । पूर्वाह्णश्चात्राष्टधा विभक्तस्य दिवसस्याद्यभागः देवपूजाऽनुरोधात् । "देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्" इति दक्षवचनेन तत्र देवपूजाविधानात् । "दिवसस्याद्य भागेतु सर्वमेतत्समापयेत्" इत्यनेन

तदग्रे दक्षेणोपसंहाराच्च । ततः = प्रातर्होमानन्तरम् । अथवा, पूर्वाह्णो वै देवानाम् (मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्) इत्यादि-स्वरस-सिद्ध-स्त्रिधाविभक्तस्याद्यभाग एव पूर्वाह्ण'' इति वीरमित्रोदयः ।

उक्तमनुवचने पूर्वाह्ण एवेति नियमः पुरीषोत्सर्गविषये, सति सम्भवे = निर्वाहसम्भवे एव बोद्धव्यः । अर्थाद् उक्तमनुवचने ''मैत्रं पूर्वाह्ण एव कुर्वीते''ति नियमः, उपरुद्धेतरविषयः (उपरुद्धः=स्थानच्युतमूत्रपुरीषरोधकर्त्ता । तद्भिन्नविषयकः) । तेन न एवकारार्थानुपपत्तिः । एवञ्च सति उत्सर्गयोग्ये स्वस्थानादप्रच्युते मूत्रे पुरीषे वा पूर्वाह्णो नियम्यते । स्थानच्युत-मूत्रपुरीषोत्सर्गस्य तु

''न वेगं धारयेन्नोपरुद्धः क्रियां कुर्यात्''

इति माधवाचार्यादिधृतवचनेन,

''मूत्रसन्धारणादन्धो वधिरो मलंधारणात्''

इति वैद्यकवचनेन च सर्वकालिककर्त्तव्यतायाः बोधनात् । एवमेव पूर्वाह्ण एवेति नियमसद्भावे प्रसाधनादावपि सङ्कोचो द्रष्टव्यः ।

प्रसाधनम् = देहप्रसाधनमिति कुल्लूकभट्टः । उत्सवादि-निमित्तकेतरत्केशप्रसाधनमिति ग्रन्थकारमित्रमिश्रौ । केशरचनानुलेपनादीति रत्नाकरः । ''प्रसाधनम् = केशविरचनादि । स्नानदेवपूजे काम्ये'' इत्याचारचिन्तामणिः । केशप्रसाधनम् = केशवेशविन्यासः । अञ्जनम् = भेषजेतर सौवीराञ्जनादीति ग्रन्थकारः । भेषजोत्सवादिर्निमित्तकेतराञ्जनमिति मित्रमिश्रः । सौवीरेति । ''वणिक् प्रसिद्धवस्तुविशेषाञ्जनादावि'' ति म.म. रघुनाथः । सौवीराञ्जनम् = रसाञ्जनमिति हेमचन्द्रः । सुरमा इति प्रसिद्धम् । पाषाणविशेष इति मित्रमिश्रः । अञ्जनस्य सौवीरादिषड्विधत्वं तल्लक्षणानि च जिज्ञासुभिः कालिकापुराणस्य ६८ तमेऽध्याये द्रष्टव्यानि ।

पूजनमिति । देवतानाञ्च पूजनम् = मध्याह्नादि-विहितेतरपूर्वपूजनम् । अर्थात्

''देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्'' ।

इति दक्षवचनेन,

"विधाय देवतापूजां प्रातर्होमादनन्तरम्" ।

इति मरीचिवचनेन च प्रथमेऽर्धयामे आह्निकान्तर्गता या देवपूजा विहिता, या च वायुपुराणे सन्ध्यातर्पणान्तं माध्याह्निकं स्नानममिधाय-

निष्पीड्य स्नानवस्त्रं वै समारभ्य च वाग्यतः ।
स्वैर्मन्त्रैरर्चयेद्देवान् पत्रैः पुष्पैस्तथाऽम्बुभिः ।।

इत्यनेन,

"कुर्वीत देवतापूजां जपयज्ञादन्तरम्"

इति हारीतवचनादिना च पञ्चमेऽर्धयामे देवपूजा विहिता, या च प्रदोषार्धरात्रादौ कालविशेषपुरस्कारेण पूजाविहिता, तत्तत्पूजाऽतिरिक्तं पूजनमित्यर्थः ।

"देवतानां पूजनम् = देवपूजनादि । पदार्थमात्रविधिपरत्वाच्चास्य पाठक्रमोऽपि नादरणीयः । नहि स्नानादनन्तरं दन्तधावनमि"ति कुल्लूकभट्टः ।

समयविशेषे आचरणीयस्यान्यसमये आचरणे निष्फलत्वमाह दक्षः-

पूर्वाह्निकं तु यत्कर्म यदि तत्सायमाचरेत् ।
न तत्फलमवाप्नोति वन्ध्या स्त्री मैथुनं यथा ।। इति ।

## [ हिन्दी टीका ]

पूर्वाह्ण (रात्रिशेष से लेकर दिन के पूर्व भाग तक) में ही संभव हो (वेंगी न हो तो मलत्याग, उत्सव आदि निमित्त न हो तो केश-वेश का विन्यास, भोजन के बाद विहित से अन्य प्रातः काल की दतवन, मध्याह्न आदि समय में विहित से अन्य (काम्य) स्नान, दवा (तथा उत्सव) आदि निमित्त न हो तो अञ्जन (सूरमा), तथा मध्याह्न आदि के समय विहित देवपूजन से अन्य (काम्य) देवपूजन कर लेना चाहिए ।

यहाँ पहले पूर्वाह्ण पद का अर्थ कुल्लूकभट्ट के कथनानुसार कहा गया है किन्तु वीरमित्रोदय के अनुसार प्रातःकाल से लेकर आठ भागों में विभक्त दिनमान का प्रथम भाग अथवा तीन भागों में विभक्त दिनमान का प्रथम भाग है ।

निर्धारित समय से अन्य समय में कर्माचरण प्रसंग पर दक्ष का कहना है कि यदि पूर्वाह्न में विधेय कर्म सायाह्न में किया जाय तो वह सर्वथा निष्फल होता है, उसका कुछ भी फल नहीं मिलता जैसे कि बन्ध्या स्त्री के साथ मैथुन ।

[ मूलम् ]

विष्णुपुराणे -

**आचान्तश्च ततः कुर्यात्पुमान् केशप्रसाधनम् ।**
**आदर्शाञ्जनमङ्गल्यदूर्वाद्यालम्भनानि च ॥**

[ संस्कृत टीका ]

आचान्त इति । ततः = प्रातः होमान्तकर्मकरणानन्तरम् । आचान्तः =कृताचमनः । पुमान् = कर्मकर्ता नरः । केशःप्रसाधनम् = केशवेश विन्यासम् । आदर्शः = दर्पणः । अञ्जनम् = सौवीराञ्जनादि चाक्षुष्यम् । सूरमा इति प्रसिद्धम् । मङ्गल्यम् = शुभकारकम् । दूर्वादि = ''दूर्वादधि सर्पिरथोदकुम्भमि''त्यादिना वक्ष्यमाणं दूर्वादि, तेषाम् । आलम्भनानि = स्पर्शनानि च कुर्यात् ।

[ हिन्दी टीका ]

प्रातःकाल होम करने के बाद आचमन कर केश की सजावट करना, ऐनक (काच) देखना, आँख में सूरमा (अञ्जन) आदि लगाना तथा मङ्गलकारी आगे कहे जाने वाले दूध दही घृत आदि का स्पर्श करना चाहिए ।

[ मूलम् ]

छन्दोगपरिशिष्टे:–

**श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितं तथा[1] ।**
**प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते[2] ।**

तथा,

**पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम् ।**
**प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥**

पाठा० (१) गाञ्चाग्निमग्निहोत्रिणं तथा । (२) 'प्र' मुच्यते' इति ह. पु. ।

## [ संस्कृत टीका ]

श्रोत्रियमिति । जन्मसंस्कारविद्यायुक्तं ब्राह्मणम् । सुभगाम् = सुष्ठु भगम् = भाग्यं यस्याः सा पतिप्रिया । यथाऽऽह माण्डव्यः-

**मघा ऋक्षं परित्यज्य सदा सिंहे गुरुर्भवेत् ।**
**तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत् ॥**

इति शब्दकल्पद्रुमः । ताम् । गाम् । अग्निम् । अग्निचितम् = कृताग्निचयनम् । अग्निहोत्रिणमिति यावत् । (चितवानग्निमग्निचिदित्यमरः) । च, यः पश्येत् = लोचनगोचरी करोति स्मरति वा । सः । आपद्भ्यः = विपद्भ्यः । विमुच्यते = विमुक्तो भवति । "सति सम्भवे दन्तधावनानन्तरमेतान् पश्येत् शुभफलदायकत्वादि"ति नित्यकृत्यार्णवः ।

अथादर्शनीयान्यपि तत्रैव । पापिष्ठमित्यादि । पापिष्ठम् = पापकर्मिणम् । "दुर्भगाम् = दु=र्दुष्टं भगं = भाग्यं यस्याः सा पतिस्नेहरहिते"ति शब्द-कल्पद्रुमः । ताम् । मद्यम् = मदिराम् । नग्नम् = अवश्यावच्छाद्यशरी रावयवे आच्छादनरहितम् । अथवा, नग्नः = वेदवाह्यः । तदुक्तं, विष्णुपुराणेः–

**त्रयी समस्तवर्णानां विप्र ! संवरणं यतः ।**
**नग्नो भवत्युज्झितायामतस्तस्यां न संशयः ॥ इति ।**

तम् । उत्कृत्तनासिकम् = छिन्ननासिकम् । (च) । यः पश्येत् । तस्य तत् = दर्शनम् । कलेः = कलहस्य । उपलक्षणम् = सूचकं भवतीत्यर्थः । सति सम्भवे एतान् न पश्येदिति भावः । अशुभ-दायकत्वात् ।

## [ हिन्दी टीका ]

जो व्यक्ति प्रातःकाल उठकर अर्थात् संभव हो तो दतवन के बाद वेदपाठी या वेदज्ञाता ब्राह्मण, पतिप्रिया (सुहागिन) नारी, अग्नि या अग्निहोत्री ब्राह्मण को देखता या स्मरण करता है वह आपदाओं से मुक्त हो जाता है ।

इसी तरह जो व्यक्ति प्रातःकाल उठकर पापीजन, पतिस्नेहवर्जिता नारी, शराब, नंगा व्यक्ति अथवा वेद को न मानने वाले पाखण्डी या कटी नाक वाले को देखता है तो उसका यह देखना झगड़े का सूचक समझना चाहिए ।

इति प्रातःस्नानम् ।

# अथदिनप्रथमभागकृत्यम्

## [ मूलम् ]

अष्टभागं[१] दिनं विभज्य प्रथमभागकृत्ये दक्ष :-

देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ।

गुरुः = पित्रादिः । मङ्गलम् = श्रोत्रियादिः ।

## [ संस्कृत टीका ]

अष्टेति ।

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ।
विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः ॥

इत्यादिवचनेन अष्टभागं दिनं विभज्य तत्र, प्रथमभागकृत्ये = आद्य-भागकृत्ये । दक्ष इति । ततः = प्रातर्होमानन्तरम् ।

"ततश्चावसथं प्राप्य होमं कुर्याद् विचक्षणः"

इति पूर्वार्धात् । देवकार्यम् = देवसम्बन्धिपूजनादिकम् । कृत्वा । गुरुः = पित्रादिः । यथा चाह मनुः (२/१४२-१४०)-

निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया ॥ इति ।

मङ्गलम् = श्रोत्रियादिः । "मङ्गलम् नारदोक्तम् -

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥

---

पाठ० (१) अष्टधा ।

इत्याचार-चिन्तामणिः । एतेषां, वीक्षणम् = दर्शनम् । "मङ्गलं ब्राह्मणादि । वीक्षणं सादरेणे"ति रत्नाकरः । कुर्यादिति शेषः ।

[ हिन्दी टीका ]

दक्ष ने (कहा है) दिन को आठ भागों में विभाजन कर प्रथमभागकृत्य में प्रातःकालिक होम के बाद देवसम्बन्धिपूजन आदि कर गुरु (पिता तथा आचार्य आदि) तथा मङ्गलकारी (वेदज्ञ ब्राह्मण, गाय, अग्नि, सोना, घृत, सूर्य, जल तथा आठवाँ राजा इनका दर्शन करे ।

[ मूलम् ]

मनुः-

देवता[1]मभिगच्छेत्तु[2] धार्मिकाँश्च द्विजोत्तमान् ।
ईश्वरञ्चैव रक्षार्थं[3] गुरुमेव च पर्वसु ।

[ संस्कृत टीका ]

देवतामिति । देवताम् = पाषाणादिप्रतिमाप्रतिष्ठितां देवताम् । धार्मिकान् = धर्मशीलान् । द्विजोत्तमान् = विप्रान् । रक्षार्थम् = सुरक्षानिमित्तम् । ईश्वरम् = राजादिधनिनम् । गुरुम् = पित्रादिम् । पर्वसु = अमावस्यादिपव-दिवसेषु । पर्वाणि यथा विष्णुपुराणे-

चतुर्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥ इति

गुरुमेवेत्येवकारः अभिगच्छेदित्यनन्तरं योज्यः । एवञ्च, अभिगच्छेदेव = दर्शनाद्यर्थमाभिमुख्येन गच्छेदेवेति भावः ।

[ हिन्दी टीका ]

चतुर्दशी, अष्टमी, अमावस्या, पूर्णिमा तथा रविसङ्क्रान्ति के दिनों में देवताओं की प्रतिमा, धार्मिक, ब्राह्मण, रक्षार्थ राजादि धनी या शासक तथा माता पिता आचार्य आदि गुरुजनों का पूजन या दर्शन हेतु अभिमुख हो अवश्य जाये ।

---

पाठा० (१) दैवतान्य । (२) च्च । (३) गुरुंनव ।

[ मूलम् ]

छागलेयो यमोऽपि[1] द्वितीये –

यतीनां दर्शनञ्चैव स्पर्शनं भाषणन्तथा ।
कुर्वाणः पूयते[2] नित्यं तस्मात्पश्येत्तु नित्यशः ॥
अग्निचित्, कपिला, सत्री, राजा, भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्तु[3] नित्यशः ॥

सत्री = अन्नादिसत्रशीलः । कृतसत्रयाग इत्येके । भिक्षुः = यतिः ।

[ संस्कृत टीका ]

यतीनामिति । यतीनाम् = निर्जितेन्द्रियगणानाम् ('ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः) । संन्यासिनामिति यावत् । दर्शनम् = चाक्षुष-प्रत्यक्षम् । स्पर्शनम् = प्रणामाद्यर्थं स्पर्शम् । तथा, भाषणम् = परस्परालापम् । नित्यं कुर्वाणः। पूयते = पूतो भवति । तस्माद्धेतोः । नित्यशः पश्येत्, तत्सन्नियोगशिष्टतया स्पृशेत् भाषेत च । पश्येदित्यनेन स्पर्शभाषणे अप्युपादीयेते । पश्येच्चेति पाठे तु चकारेणैव तत्समुच्चयः । अग्निचित् = कृताग्निचयनः । कपिला = कपिलवर्णा गौः । सत्री = अन्नादिसत्रशीलः । कृतसत्रयाग इत्येके। (सत्रमाच्छादने यज्ञे सदादाने वनेऽपि चेत्यमरः) । राजा = नृपः । भिक्षुः = यतिः । महोदधिः = समुद्रः । एते = पूर्वोक्ताः । दृष्टमात्राः = दृष्टा एव । पुनन्ति=पावयन्ति । तस्माद्धेतोः । नित्यशः = नित्यमेवः प्रतिदिनमिति यावत् । पश्येत् ।

मूलवचने नित्यं, नित्यशः, नित्यश इति वारत्रयं नित्यपदोपादानादवश्य-कर्त्तव्यताऽवबोधः ।

[ हिन्दी टीका ]

जितेन्द्रिय संन्यासियों का दर्शन, स्पर्शन तथा परस्पर वार्तालाप करने से पवित्रता प्राप्त होती है । अतः वैसा प्रतिदिन करे ।

---

पाठा० (१) 'यमश्चै' इति नित्यकृत्यार्णव पाठः । (२) 'प्रयतो' इति ह.पु. । (३) पश्येच्च ।

साथ ही अग्निहोत्री, कपिलवर्णा गाय, अन्नादि का सदावर्त दान करने वाला, या सत्र नाम का यज्ञविशेष करनेवाला, राजा, संन्यासी तथा समुद्र ये देखे जाने से ही पवित्र कर देनेवाले हैं अतः इनका भी दर्शन नित्य ही करना चाहिए ।

[ मूलम् ]

महाभारते -

यज्वा मिष्टान्नदः सत्री शतायुर्धार्मिकः शुचिः ।
ज्ञानसिद्धान्[1] तपःसिद्धान् दृष्ट्वा पापात्प्रमुच्यते ॥

[ संस्कृत टीका ]

यज्वेति । अत्र शुचिरित्यनन्तरमेतानिति शेषः । एवञ्च यज्वा = यज्ञकर्त्ता । मिष्टान्नदः = मधुरमिश्रितान्नदाता । सत्री = अन्नादिसत्रशीलः, कृतसत्रयागो वा । शतायुः = शतवर्षायुष्कः । धार्मिकः = धर्मशीलः । शुचिः = तीर्थसेवनादिना पूतः । एतान् । ज्ञानसिद्धान् = ज्ञानप्राप्तसिद्धीन् । ज्ञाननिष्ठानिति पाठेतु मोक्षानुकूलतत्वज्ञानरसिकानित्यर्थः। तपःसिद्धान् = तपःप्राप्तसिद्धींश्च महात्मनः । दृष्ट्वा = दर्शनोत्तरम् । पापात् = दुःखजनकादृष्टविशेषात् । प्रमुच्यते=विमुक्तो भवति ।

[ हिन्दी टीका ]

यज्ञकर्त्ता, मिष्ठान्नदाता, अन्नादि सदावर्त दानकर्त्ता या सत्र नामकयाग विशेषकर्त्ता, सौ वर्ष की आयु वाले, धार्मिक, तीर्थस्नानादि से पवित्र, ज्ञान से सिद्धि पाये हुए या तत्वज्ञानरसिक जन तथा तपस्या से सिद्धि पाये हुए महात्माओं का दर्शन करने वाला पाप से मुक्त हो जाता है ।

[ मूलम् ]

वराहपुराणे-

ब्राह्मणं वामनं दृष्ट्वा वराहञ्च जलोत्थितम् ।
नमस्येच्चैव यो भक्त्या स पापेभ्यः प्रमुच्यते ॥

---

पाठा० (१) ज्ञाननिष्ठान् ।

[ संस्कृत टीका ]

ब्राह्मणमिति । वामनम् = खर्वम् । ब्राह्मणम् = विप्रम् । जलोत्थितम् = जलान्निर्गतम्। वराहम् = सूकरम् । च । दृष्ट्वा । यो नरः । भक्त्या = भक्तिभावेन । नमस्येत् = प्रणमेत् । सः । पापेभ्यः = पापसमूहात् । प्रमुच्यते = विमुक्तो भवति।

[ हिन्दी टीका ]

वामन (हिन्दी बाउन, मैथिली भुट्ट, राजस्थानी ठिगना) ब्राह्मण, तथा पानी से तुरन्त निकले हुए सूगर को देखकर जो सज्जन भक्तिभाव से प्रणाम करता है वह पापों से छुटकारा पाता है ।

[ मूलम् ]

ब्रह्मपुराणे–

स्वमात्मानं घृते पश्येद् यदीच्छेच्चिरजीवितुम्[१]।

आत्मानम्[२] = शरीरम्[३] ।

[ संस्कृत टीका ]

स्वमात्मानमिति । यदि कोऽपि जनः । चिरजीवितुम् = चिरकालं प्राणान् धारयितुम् । इच्छेत् = वाञ्छेत् । (तदा) स स्वम् = स्वकीयम् । आत्मानम् = शरीरम्, स्व शरीरप्रतिबिम्बमिति यावत् । घृते = बृहत्पात्रस्थ-घृतसमूहे । पश्येत् = निरीक्षेत् । एतेन घृतभक्षणमिव घृतस्थस्वप्रतिबिम्बदर्शनं चिरायुष्करमिति सिद्धम् । एतदग्रिमोपदेशो यथा -

अश्वत्थसेवा तिलपात्रदानं गोस्पर्शनं ब्राह्मणतर्पणञ्च ।
एतानि सद्यः शमयन्ति पापं गङ्गाजलं भारतकीर्तनञ्च ॥

पाठा० (१) चिरजीवितम् । (२) स्वमात्मानम् (३) स्वशरीरम् । त्रयोऽमीनित्यकृत्यार्णवे दृश्यन्ते । स्वमात्मानम्-स्वशरीरमित्याचारादर्शः ।

[ हिन्दी टीका ]

यदि कोई ज्यादे दिन जीना चाहता है तो वह (प्रतिदिन) घृत में अपने शरीर के प्रतिविम्ब को देखे । (यदि 'आयुर्वै घृतम्' इस श्रुतिवाक्यानुसार घृतभक्षण विलक्षण रीति तथा अव्यभिचार से आयुवर्धक माना गया है तो उक्त कथन भी उपयुक्त है) ।

इसं मूलोक्त वचन के अग्रिम वचन का अर्थ ऊपर से ज्ञातव्य हो कि अश्वत्थ वृक्ष (जो विष्णुस्वरूप माना गया है) की सेवा, तिलपात्र का दान, गाय का स्पर्श, ब्राह्मण की तृप्ति, गङ्गाजल का दर्शन-स्पर्शन तथा महाभारत ग्रन्थ का वाचन या भारत देश का उत्कर्षवर्णन तुरत पापों का शमन करते हैं ।

[ मूलम् ]

नारदः-

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥
एतानि[2] सततं पश्येन्नमस्येच्चार्चयेच्च यः ।
प्रदक्षिणञ्च[3] कुर्वीत तथाऽस्यायुर्न हीयते ॥

[ संस्कृत टीका ]

लोक इति । अस्मिन् लोके = भूलोके । ब्राह्मणः = विप्रः । गौः = सास्नादिमत्पिण्डः । हुनाशनः = अग्निः । हिरण्यम् = सुवर्णम् । सर्पिः = घृतम् । आदित्यः = सूर्यः । आपः = जलम् । तथा अष्टमः । राजा = प्रजाऽनुरञ्जको नृपः । एतानि = पूर्वनिर्दिष्टानि अष्टौ = अष्टसंख्याकानि । मङ्गलानि = अभिप्रेतार्थसिद्धिकरणानि सन्ति । "अभिप्रेतार्थ-सिद्धिर्मङ्गलम् । तद्धेतुतया ब्राह्मणाद्यपी" ति शब्दकल्पद्रुमः ।

एतानीत्यत्र सामान्यविवक्षया, विधेय(मङ्गल)गतलिङ्गमनुसृत्य वा नपुंसकत्वम् ।

---

पाठा० (१) सम्पूर्णोऽयं श्लोकः मूल एवं सभिविष्टोऽस्ति ह.पु. । (२) एतान् यः सततं पश्येन्नमस्येदर्चयेच्च यः । (३) 'प्र' करोति' इति ह.पु. ।

एतानि ब्राह्मणादीनि मङ्गलानि यः सततं पश्येत् । नमस्येच्च = दर्शनोत्तरं प्रणमेच्च । अर्चयेच्च = प्रणामोत्तरं पूजयेच्च । पूजनोत्तरं प्रदक्षिणं कुर्वीत च । तथाऽस्य = एवमाचरतो जनस्य । आयुः । न । हीयत्ते = क्षीयते, अपितु वर्धत एवेत्यर्थः ।

प्रथमक्रियापदं विहाय प्रति-क्रियापदं चकारोपादानं च सर्वं समुच्चय-बोधनार्थं बोद्धव्यम् ।

अतएव "एतानि ब्राह्मणादीनां मङ्गलानां दर्शननमस्कारार्चनप्रदक्षिणकरणा-नि समुदितान्यायुःकामस्य तृतीयभाग एव कर्त्तव्यत्वेन विहितानि दिवस-द्यभागे मङ्गलाद्यालम्भनं केवलमिति लक्ष्मीधर इति रत्नाकर इति नित्य कृत्यार्णवः।

एतेन प्रथमतृतीयभागयोः कर्त्तव्यत्वेन विहितेषु लक्ष्मीधरश्रीदत्तोपाध्याययो र्मतभेदः स्फुटं दृश्यते ।

## [ हिन्दी टीका ]

भूलोक में ये आठों - ब्राह्मण, गाय, अग्नि, सुवर्ण, घृत, सूर्य, जल तथा राजा-मङ्गलकारक हैं । अतः इन्हें सतत देखें, प्रणाम करें, पूजा करें, तथा प्रदाक्षिण करें। ऐसे करनेवालों की आयु क्षीण नहीं होती अपितु बढ़ती ही है । दिन के प्रथम व तृतीय भाग के कर्त्तव्यों में लक्ष्मीधर एवं श्रीदत्त का मतभेद अग्रिम हिन्दी टिप्पणी में देखा जा सकता है ।

## [ मूलम् ]

वामनपुराणे -

कृत्वा शिरःस्नानमथाह्निकञ्च[1]
सम्पूज्य तोयेन पितॄन् सदेवान् ।
होमञ्च कृत्वाऽऽलभनं[2] शुभानां
ततो बहिर्निर्गमनं प्रशस्तम् ॥

---

पाठा० (१) ह्निकानि । (२) गृहान्निर्गमनं ।

दूर्वा[३]दधि सर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम् ।
मृद्[४] गोमयं स्वस्तिकमक्षतानि लाजा-मधु-ब्राह्मणकन्यकाश्च ॥
श्वेतानि पुष्पाणि तथा शमीञ्च हुताशनञ्चन्दनमर्कविम्बम् ।
अश्वत्थवृक्षञ्च समालभेत ततस्तु[५]कुर्यान्निजजातिधर्मम्[६] ॥
देशानुशिष्टं कुलधर्ममग्र्यं [७]स्वगोत्रधर्मं नहि सन्त्यजेच्च ।

आह्निकम् = अहःस्नानम् । एतच्चाभ्युदयादौ, "अरुग्दिवा चरेत्स्नानं मध्याह्नात्प्राग्[८] विशेषतः" इति वसिष्ठवचनात् ।

यदितत्वाह्निकं सर्वमहःकृत्यमुच्येत्[९] तदा 'सम्पूज्ये'त्यादि व्यर्थं स्यात् । 'सम्पूज्य तोयेने'ति तर्पणपरम् ।

आलम्भनम्[१०] = स्पर्शनम् । शुभानाम् = वक्ष्यमाणदूर्वादीनाम् । स्वस्तिकः = भवनप्रभेदः । अर्कबिम्बसमालभनं निरीक्षणे[१०]पर्यवसितम् ।

## [ संस्कृत टीका ]

कृत्वेति । शिरःस्नानम् = प्रातःकालिकशिरःप्लावितस्नानम् । आह्निकञ्च = अह्नि = दिने भवं = दिवा जायमानं स्नानञ्चेत्यर्थः । एतच्च = एतदहःस्नानञ्च । अभ्युदयादौ = अभ्युदयः = विवाहादिः इति श्राद्धतत्वमि"ति आभ्युदयिकशब्दप्रसङ्गे शब्दकल्पद्रुमः । एवञ्चैतदभ्युदयादिनिमित्तकं मध्याह्नात्पूर्वभावि स्नानम् " अरुग्दिवा चरे" दिति वसिष्ठवचनात् = वचनप्रामाण्यात् । कृत्वा = सम्पाद्य । "अभ्युदयादेर्विशेषात्पूर्वाह्णेऽपि स्नानम् । तदुक्तं वसिष्ठेन-

"अरुग्दिवा चरेत्स्नानं मध्याह्नात्प्राग् विशेषतः" ।

इत्याचाराचिन्तामणिः ।

"विशेषतः = अभ्युदयादेर्निमित्तात् । तेन पूर्वाह्णे पुत्राद्युपनयनाद्यर्थिना प्रातरादौ स्नातव्यमित्यर्थः । एवञ्च गुरुराजाऽऽज्ञावशतया ग्रामगमन-सभोपवेशनादिकार्यान्तरासक्तौ कस्मिँश्चिदहर्भागे स्नानादिकमविरुद्धम् ।

---

पाठा० (३) दूर्वां तथा । (४) महीमयम् । (५) ततश्च । (६) धर्मान् । (७) मुख्यं । (८) मध्याह्ने वा इति (९) 'च्यते' इति च ह.पु. । (१०)'लम्भ' इति ह.पु. ।

सुखोषितास्तां रजनीं प्रातरेव कृताह्निकाः ।
विविशुस्तां सभां दिव्यां कितवैरनुमोदिताम् ॥

इति सभापर्वीयभारतीयवचनस्याप्रत्याख्येयकर्मानुरोधेनानन्यगतीनामाह्निकानां प्रागनुष्ठानपरत्वादि''त्याचारविवेकः । एवमेवाचारद्वैतविवेक''. इति नित्यकृत्यार्णवः । अहःस्नानमिति । यद्यत्राह्निकपदेन अह्निभवमाह्निकमिति व्युत्पत्त्या सकलमेव दैनिककृत्यं कथ्येत तदा सम्पूज्य तोयेनेत्यादिप्रातः पितृतर्पणबोधकमपीदं वचनमेव निष्प्रयोजनं सिद्ध्येतेति भावः ।

'आह्निकम् = सन्ध्योपासनमिति तु युक्त'मिति, 'सम्पूज्य तोयेन पितॄन्', इत्यनेन प्रातःस्नानेऽपि पितृतर्पणं कर्त्तव्यमित्युक्तमिति कल्पतरुरि''ति च वीरमित्रोदयः । कल्पतरुरिवाचारचिन्तामणिरपि । एवमेव च सम्पूज्य तोयेनेति तर्पणपरमिति संक्षेपेण ग्रन्थकारोऽपि ।

एवञ्च आह्निकपदस्य युक्त ' सन्ध्योपासनार्थकरणेन स्वप्रदर्शितकल्पतरु-विवेचनेन च स्पष्टमाभाति यद् मैथिलनिबन्धसम्मतं सन्ध्यावन्दनोत्तर-भावि-स्नानाङ्गतर्पणकरणमतमेव वीरमित्रोदयकारस्याप्यभिमतं वर्ततइति । तोयेन = जलेन । सदेवान् = देवर्षिसहितान् । पितॄन् = पितृगणान् । सम्पूज्य = सन्तर्प्य । तत्तदुद्देश्येन तर्पणं विधायेत्यर्थः । होमञ्च कृत्वा । शुभानाम् = अस्मिन्नेव वचनेऽधोनिर्दिष्टानां दूर्वादीनाम् । आलभनम् = स्पर्शनम् । च । कृत्वा । स्वस्तिकः = भवनप्रभेदः - आढ्यानां गृहविशेष इति यावत् ।

स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ।
विच्छन्दकप्रभेदा हि भवन्तीश्वरसद्मनाम् ॥

इत्यमरः । अधिकमपराजितपृच्छायां द्रष्टव्यम् ।

अर्कविम्बसमालभनञ्च चक्षुषा निरीक्षणे पर्यवस्यति । पूर्ववचने तत इति । ततः = स्पर्शानतरम् । बहिर्निर्गमनम् = गृहाद्बहिःप्रयाणम् । प्रशस्तम् = श्रेष्ठम्, शुभमिति यावत् । उत्तरवचने ततः = बहिर्निर्गमनानन्तरम् । निजजातिधर्मम् = स्वस्वजातिविहितमर्थार्जनरूपं धर्मम् । कुर्यात् । देशानुशिष्टमित्यादि । ''यस्मिन् देशे, यस्याञ्च जातौ यस्मिन् कुले यस्मिन्

गोत्रे च योऽर्थार्जनोपायो विहितः, अथवाऽनिन्दितः स एव तत्र तत्र तेन कर्त्तव्य इत्यर्थ'' इति कल्पतरुकारादय इति नित्यकृत्यार्णवः ।

अत्रवीरमित्रोदयः –वामनपुराणे चार्थार्जनात्पूर्वं मङ्गलालम्भनादिकमुक्तम् । वचनान्तरेषु तु अन्येषामुक्तानां कर्मणां कालो न प्रतीयते । ततश्च तृतीयभागकर्त्तव्यार्थार्जनात्पूर्वं प्रथमभागादावेतेषां यथासम्भवं कर्त्तव्यता प्रतीयते । कल्पतरौ तु देवपूजा-गुरुमङ्गलवीक्षण-सूर्यार्घदान-तत्स्तुति-केशप्रसाधनादर्श-दर्शनाञ्जनदूर्वादिसन्मङ्गलालम्भनात्मदर्शनानि प्रथमभागप्रकरणे लिखितानि । अन्यानि तृतीयभागकर्त्तव्यप्रकरणे लिखितानि । श्रीदत्तादिनिबन्धेषु तु सर्वाण्येतानि प्रथमभागक-र्तव्यप्रकरणे लिखितानी''ति; ''एतेषां ब्राह्मणादीनामष्टानां मङ्गलानां दिवसाद्यभागे वीक्षणमात्रं दर्शननमस्कारार्चनप्रदक्षिणीकरणानि समुदितानि आयुष्कामस्य तृतीय-भागकर्त्तव्यत्वेन विहितानीति कल्पतरुरि'' ति च ।

## [ हिन्दी टीका ]

नीरुज व्यक्ति प्रातःकालिक शिर से स्नान, आह्निक (ग्रन्थकार के मत से विवाह, पुत्र-उपनयन आदि अभ्युदय के उपलक्ष्य में होने वाले मध्याह्न से पहले के प्रातःसमय आदि का स्नान, किन्तु वीरमित्रोदय के अनुसार सन्ध्योपासन अर्थ है। अतः इनके इस व्याख्यान से कहा जा सकता है कि वीरमित्रोदयकार की निजी अभिमति मैथिलनिबन्धसम्मतसन्ध्योपासन के बाद होने वाले प्रातःस्नानाङ्ग तर्पण के पक्ष में हैं, क्योंकि इसी वचन के अग्रिम ''सम्पूज्य तोयेन पितॄन् सदेवान्'' पदों का अर्थ प्रामाणिक निबन्धों के अनुसार प्रातःसमय के स्नान में भी देव ऋषि एवं पितरों का तर्पण होना कहा गया है ।) तथा तर्पण के बाद नीचे लिखे दूभ आदि शुभ वस्तुओं का स्पर्श करे । अनन्तर घर से बाहर की यात्रा करे और अपनी-अपनी जाति के अनुसार विहित अर्थोपार्जन करे । उसमें भी जिस देश में जिस जाति में, जिस कुल में, जिस गोत्र में जो अर्थोपार्जन का उपाय शास्त्र से विहित या अनिन्दित हो उसी का उपयोग करना चाहिए ।

पूर्वसंकेतित शुभ वस्तुओं का नाम निम्न प्रकार है- दूर्वा (दूभ, दूभि, दोभ), दही, घृत, जलपूर्ण घट, सवत्सा धेनु, बैल, सोना, मिट्टी, गोवर, स्वस्तिक (राजगृहविशेष), अक्षत (चावल), लाजा (धान का लावा, खील), ब्राह्मण,

ब्राह्मणकुमारी या सामान्यतः कुमारी, उजला फूल, शमी (शैनी लकड़ी), आग, चन्दन, सूर्य क़ा बिम्ब तथा पिप्पल का वृक्ष ।

सूर्यबिम्ब का स्पर्श होना असंभव है अतः यहाँ स्पर्श का अर्थ 'देखना' समझें ।

यहाँ वीरमित्रोदय के लेखानुसार ऊपर से ज्ञातव्य है कि "वामनपुराण में अर्थोपार्जन के पहले दूर्वा आदि मंगल-वस्तुओं का स्पर्श कहा गया है तो अन्य वचनों में कहे गए अन्य कर्मो का कोई काल प्रतीत नहीं होता । फिर भी दिन के तृतीय भाग में कर्त्तव्य अर्थोपार्जन के पहले दिन के प्रथम भाग आदि में इनका यथा सम्भव होना प्रतीत होता है । कल्पतरु में देवपूजा, पिता आदि गुरु एवं वेदज्ञ ब्राह्मण आदि (उक्त आठ) मंगल वस्तुओं का देखना, दूर्वा आदि उत्तम मंगल वस्तुओं का स्पर्श तथा घृत में अपने शरीर का देखना ये सभी प्रथम भाग प्रकरण में लिखे गये हैं । इससे अन्य तृतीय भाग में दिखाये गए हैं । किन्तु श्रीदत्त आदि के निबन्धों में तो उक्त ये सभी प्रथम भाग के कर्त्तव्य प्रकरण में लिखे गये है ।

स्वयं कल्पतरु की कुछ पंक्तियों का अर्थ है- आयु चाहनेवालों के लिए इन मंगलकारी ब्राह्मण आदि आठों का केवल दर्शन तो दिन के प्रथम भाग में विहित है और मिले-जुले दर्शन नमस्कार पूजन प्रदक्षिण करना, ये सभी तृतीय भाग में कर्त्तव्य रूप से विहित हैं ।

अब श्रीदत्त के अनुयायियों का कहना हो सकता है कि आगे कहे जाने वले दक्ष के वचनों के अनुसार दिन का दूसरा भाग वेदाभ्यास तो तीसरा भाग पोष्य वर्ग के लिए अर्थोपार्जन निमित्त निर्धारित किया गया है, तब उन कर्त्तव्यों का समय शेष बचा दिन का पहला भाग ही हो सकता है जो उषाकाल से ही शुरू हो जाता है, अतः उसी (पहले) भाग में कर लेना उचित है ।

इति दिन-प्रथम-भाग- कृत्यम् ।

# दिन-द्वितीयभाग-कृत्यम्

## [मूलम्]

अथ दिनद्वितीयभागकृत्यम् । [तत्र] दक्षः

द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हिं पञ्चधा ।
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥

स्वीकरणम् = अध्ययनम् । एतच्च ब्रह्मचारिणः । गृहस्थस्याप्यनधीतवेदादि[१]भागे । तथा च आपस्तम्बः-

**यया विद्यया[२] च विरोध्यते[३] तां पुनराचार्यमुपेत्य साधयेदिति ।**

## [संस्कृत टीका]

द्वितीय इति । तथा द्वितीयेच भागे= अष्टभागेषु विभक्तेषु दिनमानेषु प्रायः प्रथमयामस्य द्वितीयार्ध-भागे । वेदाभ्यासः=वेदानां पुनःपुनरनुशीलनम् । विधीयते । तद्यथा । हि=यतः । पूर्वम् = सर्वतः पूर्वम् । (१) वेदस्वीकरणम् = वेदाध्ययनम् । (२) विचारः =तदर्थस्य मननम् । (३) अभ्यसनम् = तच्छब्दानां पुनःपुनरावृत्तिः । (४) जपः=तदर्थानामधिककालं संस्मरणम् । (५) शिष्येभ्यस्तद्दानञ्च=अधीतवेदानामध्येतृभ्योऽध्यापनञ्चेति कृत्वा वेदाभ्यासः । पञ्चधा=पञ्चप्रकारः । मुनिभिः स्मृत इति शेषः ।

समिदिति । स कालः=अयमेव दिनस्य द्वितीयभागात्मकः कालः । समित्पुष्पकुशादीनामित्यनन्तरमाहरणस्येति शेषः । एवञ्च समिधाम् = हवनेन्धनानाम् । पुष्पाणां कुशानाञ्च । आदिपदात्तुलसीबिल्वपत्रादयो ग्राह्याः। एषाम् आहरणस्य =सञ्चयनस्य (कालः) समुदाहृतः=मुनिभिः कथितः।

यद्यपि उक्तपञ्चविधवेदाभ्यासेषु वेदस्वीकरणम् = ब्रह्मचारिविषयम्= प्रथमाश्रमिपरकमेव, तथापि गृहस्थस्यापि अनधीतवेदादिभागविषयकं बोध्यम् । तदुक्तमापस्तम्बेन यया विद्ययेत्यादि । यया विद्यया । विरुध्येत=

---

पाठा० (१) 'वेदादि' इति नास्ति ह.पु० । (२) कुत्रचित् 'च' इति नास्ति । (३) न विरोचेत, वा, विरोचयेत् । विरोचेत् इति ।

अनधीतिविस्मृतिभ्यां स्वात्मन्यसन्तोष उत्पद्येत । न विरोचेत, न विरोचयेदिति पाठे तु "नोज्ज्वलज्ञानो भवेदि" ति कल्पतरुः । ताम् = वेदादिविद्याम् । आचार्यम् =

उपनीय तुः यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥

इति मनूक्तलक्षणलक्षितं ज्ञानदं गुरुम् । उपेत्य=प्राप्य । साधयेत् = जानीयादित्यर्थः ।

श्रीदत्तोपाध्यायरत्नाकरमते त्वयं विशेषः– ब्रह्मचारिणामेव वेदाभ्यासः, अन्यशास्त्रावेक्षणं गृहस्थानामिति । कृतदारेणाऽपि प्रतिसंवत्सरं मासद्वयं गुरुमुपसृत्य पूर्वाभ्यस्तञ्चिन्तनीयमनेनापि यावता शास्त्रेणानुपपत्तिस्तदपि पठनीयम् । ब्राह्मणेन स्वयं समित्पुष्पकुशाद्याहरणं कर्तव्यं, स्वार्थं शूद्रेणानीतन्न ग्राह्यमिति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

आठ भागों में विभक्त दिन के दूसरे (प्रायः प्रथम प्रहर के द्वितीय अर्ध) भाग में पाँच प्रकार से वेदाभ्यास करना चाहिए । यथा, (१) सर्वप्रथम वेद पढ़ना । (२) उसके अर्थ का मनन करना । (३) पढ़े पाठ का अभ्यास करना । (४) समझे अर्थों का बार-बार संस्मरण करना । (५) तथा छात्रों को पढ़ाना ।

यही दिन का सदूसरा भाग हवन के लिए लक[illegible] फ़ल, कुश, बिल्व, तुलसी-पत्र आदि लाने का भी समय है ।

यद्यपि उक्त पाँच प्रकार के वेदाभ्यास में प्रथम वेदाध्ययन ब्रह्मचारियों के लिए ही विहित है तथापि विवाहित गृहस्थ भी अनधीत, विस्मृत या संदिग्ध वेदादिभाग को अपने आचार्य के पास जाकर पढ़ ले ।

[ मूलम् ]

याज्ञवल्क्यः–

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ।

[ संस्कृत टीका ]

वेदेति । वेदार्थान्=होममन्त्रजपानन्तरं निरुक्तव्याकरणादिश्रवणेन वेदबोध्यार्थान् । अधिगच्छेत् = जानीयात् । चकारादधीतञ्चाभ्यसेत् । विविधानि = धर्मार्थारोग्यप्रतिपादकानि मीमांसाप्रभृतीनि च अधिगच्छेत् ।

यथा च मनुरपि–

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमाँश्चैव वैदिकान्॥
यथायथा हि पुरुषः शास्त्रं समधिगच्छति।
तथा तथा विजानाति विज्ञानञ्चास्य रोचते॥

बुद्धिवृद्धिकराणि=वेदाविरुद्धानि शीघ्रं बुद्धिवृद्धिजनकानि व्याकरण-मीमांसा-स्मृति-पुराण-न्यायादीनि शास्त्राणि, तथा, धन्यानि = धनाय हितानि अर्थशास्त्राणि बार्हस्पत्यौशनसादीनि, तथा, हितानि = दृष्टोपकारकाणि वैद्यकज्यौतिषादीनि, तथा, पर्यायकथनेन वेदार्थावबोधकान्निगमाँश्च ग्रन्थान्नित्यं पर्यालोचयेत्। यस्माद् यथा यथा पुरुषः शास्त्रं सम्यगभ्यसति तथा तथा विशेषेण जानाति। शास्त्रान्तरविषयमपि चास्य विज्ञाने रोचते उज्ज्वलं भवतीति तन्मन्वर्थमुक्तावली। एवमेव वीरमित्रोदयोऽपि। रोचते = दीप्तं भवति, श्रेष्ठमिति यावदिति रत्नकारादय इति नित्यकृत्यार्णवः।

[ हिन्दी टीका ]

होम एवं मन्त्रजप के बाद निरुक्त एवं व्याकरण आदि के श्रवण से बेद के अर्थ को जाने और पढ़े हुए वेद का अभ्यास भी करे। फिर धर्म, अर्थ और आरोग्य के बोधक मीमांसा आदि अनेक शास्त्रों को जाने, यह हुआ मूलोक्त स्मृति का अर्थ।

ऊपर से मनुस्मृति का कथन ज्ञातव्य हो कि बुद्धि को शीघ्र बढ़ाने वाले वेद के अविरोधी व्याकरण, मीमांसा, स्मृति, पुराण, न्याय आदि शास्त्र, धन देने वाले बृहस्पति तथा शुक्राचार्य आदि के द्वारा रचित अर्थशास्त्र, प्रत्यक्ष उपकारक वैदयक एवं ज्योतिष आदि, तथा पदार्थ निर्णय हेतु निघण्टु आदि निगमग्रन्थों का नित्य ही पर्यालोचन करे।

पुरुष जैसे जैसे शास्त्र का विशेष रूप से अध्ययन करता है वैसे-वैसे उसका ज्ञान बढ़ता जाता है। साथ ही उसे दूसरे दूसरे शास्त्र के विषय का भी ज्ञान दीप्त-उज्ज्वल होने लगता है।

[ मूलम् ]

यमः–

दानेन तपसा यज्ञैरुपवासव्रतैस्तथा।
न तां गतिमवाप्नोति विद्यया यामवाप्नुयात्॥

विद्यया=ब्रह्मविद्येति व्याख्यानमशुद्धम् शास्त्रानुक्रमेणाभिधानत् ।

[ संस्कृत टीका ]

दानेनेति । दानेन = दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनं तेन । तपसा=तपस्यया । यज्ञैः= यागैः । उपवासव्रतैः = उपवासः= अहोरात्रभोजनाभावः । अस्य प्रमाणम्–

**उपावृत्तस्य पापेभ्यो[1] यस्तु वासो गुणैः सह ।**
**उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥**

अस्यार्थः=उपावृत्तस्य=निवृत्तस्य । पापेभ्यः =पापकर्मभ्यः । गुणाः सर्वभूतेषु दया, क्षान्तिः, अनसूया, शौचम्, अनायासः, मङ्गलम्, अकार्पण्यम्, अस्पृहा च । सर्वभोगविर्जितः=शास्त्राननुमतनृत्यगीतादिसुखरहितः इति । व्रतम्= पुण्यजनकोपवासादीति शब्दकल्पद्रुमः । भविष्यपुराणीयवचनेऽस्मिन् 'पापेभ्यो' इत्यत्र 'दोषेभ्यो' इतिपाठमुल्लिख्य पण्डितप्रवररत्नपाणिझा-प्रणीतेन कृत्यसागरेणेत्थं व्याख्यायि उपावृत्तस्य। दोषेभ्यो=रोगादिभ्यः । गुणैः= क्षमासत्यादिभिः । सहवसो=ऽवस्थानं जनस्य उपवास इत्यर्थः । 'नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्' इत्यमरकोशः । संयम इति शब्दरत्नावली ।

व्रतविषये अर्थसंग्रहे यथा–"तथाहि व्रतशब्दस्य कर्तव्यार्थे रूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेनोपक्रमात् किंतत्कर्तव्यमित्याकांक्षायां नेक्षेतोद्यन्तमादित्यमित्यादिना कर्तव्यार्थ एव प्रतिपादनीयः । अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यादिति ।" तैरुपवासव्रतैः । तां गतिम्=तं धर्मम्, स्वर्गादिलोकं वा नावाप्नोति । याम् । विद्यया=शास्त्रज्ञानेन । अवाप्नुयात्=लभेत ।

अत्र विद्यया = ब्रह्मविद्यया–ब्रह्मज्ञानेनेति केषाञ्चिदस्ति व्याख्यानम् परं, तदशुद्धम् = असङ्गतम् उक्तयमवचनस्य शास्त्रानुक्रमेण= शास्त्रचर्चाप्रसङ्गेन । अभिधानात्=कथनात्।

---

पाठा० (१) दोषेभ्यो ।

[ हिन्दी टीका ]

दान, तपस्या, उपवास-(दिनरात निराहार रहना, यथा-एकादशी शिवरात्रि-चतुर्दशी आदि में) तथा, व्रत-पुण्य के साधन उपवास आदि नियमविशेष, संयम, या शास्त्र निर्दिष्ट विधि-निषेध(यथा चान्द्रमाव्रत, प्रदोष ब्रह्मचारियों के लिए उगते या अस्त होते हुए सूर्य विम्ब का न देखना आदि इसी तरह गृहस्थों के लिए एकपत्नी व्रत, तथैव विवाहिताओं के लिए पातिव्रत्यव्रत आदि ) से वह धर्म स्वर्गादिलोक नहीं प्राय होता जो शास्त्रज्ञान से प्राप्त होता है ।

[ टिप्पणी ]

इतोऽधिकमत्रैव यथा भोगविशेषे शातातपः –

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमंञ्जनम् । इति

तथा च एतद्भोगविशेषे दोषाभावः । दन्तधावनमप्यत्र तृणादिना, काष्ठस्य निषेधात् । यथा–

उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥ इति

देवलः–

उपवासः प्रणश्येत्तु दिवास्वप्नाच्च मैथुनैः ।
अत्यये चाम्बुपाने च उपवासः प्रणश्यति ॥ इति

मत्स्यपुराणे–

तस्मात्कृतोपवासेन स्नानमभ्यङ्गपूर्वकम् ।
वर्जनीयं प्रयत्नेन रूपघ्नं तत्परं नृप ॥ इति

वृद्धशातातपः

उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् ।
कारयेत्तेन सगुण उपवासो हि जायते ॥ इति

सगुणः= प्रकृष्टफल इत्यर्थः । द्विज इति व्रतकर्तृमात्रोपलक्षणम् । विशेषानभिधाने व्रतमात्रे सर्वेषामधिकारः । अत्र तु तथैव प्रतिपादनात् । नित्यमपि व्रतं स्त्रिया पतिपार्थक्येन न कर्तव्यम् । तथाहि विष्णुः–

**पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।**

**आयुः सा हरते पत्युः नरकञ्चैव गच्छति ।। इति**

पत्यनुज्ञया व्रतकरणे दोषाभावः । 'कामं भर्त्तुरनुज्ञातया व्रतोपवासनियमेष्वभ्यास' इति शंखलिखितवाक्यात् । मार्कण्डेयोऽप्याह–

**या नारी त्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।**

**निष्फलं तद्भवेत्तस्या यत्करोति व्रतादिकम् ।। इति**

गृहीतव्रताकरणे दोषमाह छागलेयः –

**पूर्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः ।**

**जीवन् भवति चाण्डालो मृतः श्वा चैव जायते ।। इति**

व्रतच्युतिप्रयुक्तपापक्षयकामो गोदानरूपं प्रायश्चित्तं कुर्यात् । यथा

**समारब्धे व्रते पश्चाद् व्रतभङ्गो भवेद् यदि ।**

**गोदानञ्च ततः कृत्वा पुनर्व्रतमथाचरेत् ।। इति**

प्रमादादिना व्रतपरित्यागे दोषाभावमाह देवलः–

**सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् ।**

**अव्रतघ्नानि कीर्त्यन्ते सकृदेतानि शास्त्रतः ।। इति**

सर्वभूतभयं = व्याघ्रादिजन्तुभ्यो भयम् । व्याधिः =व्रतप्रतिबन्धकक्षयः । प्रमादो=विस्मरणम् । गुरुशासनम्=गुरोराज्ञा । सकृदित्यभिधानात्, एतैरपि एकदा परित्यागे दोषाभावः । पुनःपुनः परित्यागे तु दोष एवेत्युन्नीयते । व्रतकरणे शुक्लं वस्त्रं प्रशस्तम्, उपवासाग्रिमदिने पूर्वाह्ण एव पारणं कुर्यादिति ।

[ हिन्दी टीका ]

उपवास एवं व्रत के संबन्ध में कृत्यसागर निबन्ध के अनुसार समझें कि उपवास के दिनों में गन्ध (इत्र, कस्तूरी आदि), भूषण, नवीन वस्त्र, पुष्पमाला, अनुलेपन (घिसा चन्दन आदि तरलपदार्थ) तथा दँतवन वर्जित हैं । (उपवास तथा श्राद्ध के दिनों में काठों के दतवन का निषेध रहने से तृण आदि के द्वारा की जानेवाली दतवन में तथा आँख में काजल लगाने के उपभोगों में कोई दोष नहीं )।

हाँ , इन उपवास के दिनों में दिन का सोना, जूआ खेलना, मैथुन, अनेक बार पानी पीना, तथा तेल उपटन आदि लगाकर नहाना वर्जनीय है ।

उपवास के अन्त में ब्राह्मण भोजन करा लेने से वह (उपवास) उत्कृष्ट फल देने वाला हो जाता है ।

सधवा स्त्रियों को चाहिए कि अपने पतिदेव की आज्ञा लेकर ही नित्य (जिसके न करने से प्रत्यवाय होता है) उपवास एवं व्रत करें, अन्यथा वह पति की आयु क्षीण करती है और (स्वयं नरकगामिनी होती है । अतः पति, पिता या पुत्र की अनुमति होनी ही चाहिए, अन्यथा उसका किया हुआ वह व्रत आदि निष्फल हो जाता है ।

यदि कोई व्यक्ति पहले से किये जाते रहे व्रत का आचरण सांसारिक विषयवासनावश छोड़ देता है तो वह जीते जी चाण्डाल के समान है और मरने के बाद कुत्ते की योनि पाता है ।

यदि किसी प्रतिबन्धवश व्रतभंग हो जाता है तो एक गोदान कर पुनः व्रतारम्भ किया जा सकता है ।

यदि व्याघ्रादि जन्तुओं के भय, व्याधि, विस्मृति या गुरु की आज्ञा से एक बार व्रत करना छूट भी जाय तो कोई दोष नहीं, परन्तु पुनःपुनः छोड़ना तो दोषावह ही होगा ।

उपवास एवं व्रत के दिनों में सफेद वस्त्र धारण करें और उपवास के अगले दिन पूर्वाह्न में पारण करें ।

यहाँ किसी ने विद्या शब्द का अर्थ ब्रह्मविद्या अर्थात् ब्रह्मज्ञान किया है । परन्तु यह व्याख्या इस लिए अशुद्ध है कि यह यमवचन शास्त्र की चर्चा के प्रसंग में कहा गया है ।

❀ इति दिन-द्वितीय-भाग-कृत्यम् ❀

# दिनतृतीयभागकृत्यम्

## [मूलम्]

अथ दिनतृतीयभागकृत्यम् । तत्र दक्षः–

**तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।**

## [संस्कृत टीका]

तृतीये इति । यथा तृतीये च भागे=अष्टधाविभक्तदिनमानस्य तृतीयभागे, द्वितीयप्रहरस्य प्रायः प्रथमार्धभागे इति यावत् । पोष्यवर्गार्थसाधनम्=पोष्यवर्गस्य कृते अर्थार्जनम् । कुर्यादिति शेषः । पोष्यवर्गमाह एतदुत्तरवचनेन यथा–

**माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः ।**
**अभ्यागतोऽतिथिश्चाऽपि पोष्यवर्ग उदाहृतः ॥**

अभ्यागतः = सम्बन्धी ग्रामान्तरादागतः । एकरात्रिको ग्रामान्तरादागतोऽसम्बन्धी अतिथिः । पोष्यवर्गं प्रति कर्तव्यमाह उत्तरवचनेन–

**भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।**
**नरकं[1] पीडनाद् यस्मात्तस्माद् यत्नेन तं भरेत् ॥**

पुनः विशेषेण पोष्यवर्गं कर्तव्यञ्चाह–

**अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ।**
**ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः ।**
**सार्वभौतिकमन्नाद्यं कर्तव्यं गृहमेधिना ॥**
**ज्ञानवद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥**

**जीवत्येकः स लोकेषु बहुभिर्योऽनुजीव्यते ।**
**जीवन्तोऽपि मृताश्चान्ये य आत्मम्भरयो नराः ॥**

ज्ञातिरत्र पितृमातृबन्धुरपि । अनाथः पित्रादिपोषकशून्यः । तथा

---

पाठा० (१) नरके पीडनं चास्य ।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिनेदिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥ इति

वक्रोक्तिमुद्रया व्यासस्तु–

दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।
अदाता पुरुषस्त्यागी सर्वं संत्यज्य गच्छति ॥ इति

विष्णुपुराणे तु–

ततः स्ववर्णधर्मेण वृत्त्यर्थञ्च धनार्जनम् ।
श्राद्धकर्माऽपि पितॄणां यतेत पृथिवीपते ॥ इति

नारदोऽपि–

धनमूलाः क्रियाः सर्वा यत्नस्तस्यार्जने मतः । इति

[ हिन्दी टीका ]

आठ भागों में विभक्त दिनमान के तीसरे भाग (द्वितीय प्रहर के प्रथमार्ध) में पोष्यवर्ग के लिए अर्थोपार्जन करें । आगे के वचनानुसार पोष्यबर्ग ये हैं –

माता, पिता, गुरु, पत्नी, सन्तान, उपस्थित दीन व्यक्ति, अभ्यागत (दूसरे गाँव से आया हुआ अपना संबन्धी), अतिथि (दूसरे गाँव से आनेवाला विशेषतः एक रात टिकनेवाला और अपना सम्बन्धी न हो) ।

इसके भी आगे के वचन से पोष्यवर्ग के प्रति कर्तव्य कहा गया है कि पोष्यवर्ग का भरणपोषण श्रेष्ठ तथा स्वर्ग देने वाला है । अन्यथा वह गृहपति नरक का भागी होता है । अतः यत्न से हैं इनका भरणपोषण करे ।

पुनः विशेषरूप से पोष्यवर्ग और कर्तव्य कहा गया है । यथा, धनी व्यक्ति के पोष्यवर्ग में मातापिता का बन्धु, अपना निर्धन बन्धुजन तथा आश्रय में आया हुआ अनाथ–(जिसके अपने पिता आदि संरक्षक न हो) । धनी गृहस्थ का कर्तव्य है कि वह सभी प्राणियों के लिए अन्न आदि दे । विषेष कर ज्ञानियों को । अन्यथा वह नरकगामी होता है ।

समाज में या इस भूलोक में वह जीवित है जिसके आश्रय में बहुत से लोग उपजीवित होते हैं, किन्तु वे तो जीवित भी मृत ही हैं जो केवल अपना उदरमात्र भरते हैं ।

स्मृतिकार दक्ष लोगों को सम्बोधित करते हुए कहते हैं कि "तू विशिष्ट (ज्ञानी) जन को जो देता है तथा प्रतिदिन भोजन करता है, उसे ही मैं तेरे पास वित्त मानता हूँ और शेष किसी अन्य के वित्त की रखवाली करता है ।

यहीं वक्रोक्तिमुद्रा से व्यास का कहना है कि सच समझिये तो मैं दाता व्यक्ति को ही कंजूस मानता हूँ क्योंकि वह मरने के बाद भी अपने धन को यहाँ छोड़ना नहीं चाहता है । अर्थात् शास्त्र का सिद्धान्त है–'नादत्तमुपतिष्ठते' बिना दान की हुई कोई भी वस्तु आगे के जन्मों में नहीं मिलती है–अतः वह जीते जी ही रिजर्व बैंक के अपने खाते में अपनी पूंजी (पुण्य) जमा कर लेता है जिससे उसे वह आगे मिल जाय ।

हाँ, सच्चा त्यागी तो वह अदाता पुरुष (प्राणी) है, जो मरने के समय सारी पूंजी इसी वसुधातल पर त्याग (छोड़) कर स्वयं हाथ डुलाते महायात्रा कर देता है । अर्थात् पति पुत्र कलत्रादि की ममता में अपेन हित के कर्मों को भी त्याग देता है । अतः यह सच्चा त्यागी है ।

विष्णुपुराण के अनुसार तो अपने वर्ण एवं धर्म के अनुकूल जीवनवृत्ति चलाने के लिए भी धनोपार्जन करें जिससे पितरों का श्राद्धकर्म भी सम्पन्न हो सके ।

नारद का कहना तो यहाँ तक है कि सारी दुनियादारी धन के आधार पर ही चलती है अतः धन के उपर्जन में यत्न अवश्य रखना चाहिए ।

[ मूलम् ]

गौतमः–

योगक्षेमार्थमीश्वरमधिगच्छेत्[१] ।

[ संस्कृत टीका ]

योगेति । अलब्धस्य लाभो योगः । लब्धस्य परिपालनं (रक्षणम्) क्षेमः । तदर्थम् ईश्वरम् = अभिषेकादिगुणयुक्तमन्यं वा श्रीमन्तमकुत्सितम् । अधिगच्छेत् = उपेयात् ।

गौतमसूत्रभाष्यकर्ता हरिहरस्तु अधिगच्छेदिति अधिशब्दप्रयोगादधिरैश्वर्ये इत्यस्मादकार्पण्येन स्वतन्त्रो गच्छेदित्याह । याज्ञल्क्योऽपि –

---

पाठा० (१) मीश्वरं चिन्तयेत् ।

**उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये । इति**

उपेयादित्यनेन सेवां प्रतिषेधयति । वेतनग्रहणेन आज्ञाकरणं सेवा, तस्याः श्ववृत्तित्वेन निषेधात् । "सेवाश्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत्" इति मनुस्मरणादिति तन्मिताक्षरा ।

**[ हिन्दी टीका ]**

अप्राप्त वस्तु की प्राप्ति को योग कहते हैं । प्राप्त वस्तु के पालन को क्षेम कहते हैं । इस योगक्षेम के लिए अभिषेक (राजतिलक) आदि गुणों से युक्त राजा या अनिन्दित किसी अन्य श्रीमान् के समीप बिना किसी सङ्कोच के स्वतन्त्रतापूर्वक जाना चाहिए । इसीतरह के याज्ञवल्क्य के वचन का आशय वर्णन करते हुए मिताक्षराकार का कहना है कि इस तरह राजा के पास जाने का तात्पर्य सेवावृत्ति के निषेध से है । क्योंकि वेतन ग्रहण कर आज्ञापालन करना सेवा है और वह (सेवा) कुत्ते की वृत्ति होने के कारण निषिद्ध है । अतः इसे निन्दित होने के कारण छोड़ देना चाहिए ऐसा मनुने कहा है ।

**❁ इति दिन-तृतीय-भाग-कृत्यम् ❁**

# दिनचतुर्थभागकृत्यम्

## स्नानविधिः

[ मूलम् ]

अथ दिनचतुर्थभागकृत्ये स्नानविधिः । तत्र दक्षः—

**चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ।**

[ संस्कृत टीका ]

तत्रेति । तत्र=दिनचतुर्थभागीयस्नानविधौ । चतुर्थे चेति । चतुर्थे च तथा भागे = अष्टधाविभक्तस्य दिनमानस्य चतुर्थे भागे द्वितीय-प्रहरस्य प्रायः द्वितीयार्धभागे इति भावः । स्नानार्थम् माध्याह्निकस्नानकरणार्थम् । मृदम्=मृत्तिकाम् । आहरेत्=आनयेत् । एतदुत्तरार्धवचनञ्च– ''तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले '' इति । आदिशब्देन गोमयदूर्वाद्युपादानम् । स्नानं कुर्यादितिशेषः । अकृत्रिमे=नद्यादौ ।

[ हिन्दी टीका ]

आठ भागों में विभक्त दिनमान के चौथे भाग (द्वितीय प्रहर के द्वितीयार्ध) में स्नान के लिए मिट्टी लायें । उत्तरार्धवचनानुसार तिल, पुष्प, कुश, गोवर, दूब आदि लें और नदी में स्नान करें ।

[ मूलम् ]

शातातपः—

**शुचौ देशे तु सा ग्राह्या शर्कराऽश्मादिवर्जिता ।**
**रक्ता गौरी तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥**
**न मृदं नोदकं वापि न निशायान्तु गोमयम् ।**
**न गोमूत्रं प्रदोषे तु गृह्णीयाद् बुद्धिमान्नरः ॥**

निशायामिति न मृदं नोदकमित्यत्रापि सम्बद्ध्यते । तथा

**''वल्मीकाखूत्करााल्लेपाज्जलाच्च पथि वृक्षयोः ।**
**कृतशौचावशिष्टा च न ग्राह्या सप्त मृत्तिकाः ॥**

आखूत्करः = मूषिकोत्कीर्णमृत्तिकास्थानम् । लेपः अकुड्यादीनाम्।

## [ संस्कृत टीका ]

शुचौ देशे इति । शुचौ देशे । स्थिता इति शेषः । सा=मृत्तिका ग्राह्या (या) शर्कराऽश्मादिवर्जिता=शर्कराः =कपालखण्डानि (शर्करा कर्परांशेऽपीत्यमरः) । अश्मानि= प्रस्तर- खण्डानि । तैर्वर्जिता=रहिता । आदिशब्देन कण्टककेशकीटाद्युपादानम् । तथा या च रक्ता=रक्तवर्णा । गौरी=गौरवर्णा । तथा श्वेता=श्वेता वर्णा वा । त्रिविधा=त्रिप्रकारा । स्मृता=मुनिभिः कथिता ।

यद्यप्यत्र रक्तत्वादिनियमात् तत्सम्भवे कृष्णादिमृत्तिका स्नाने नाङ्गमिति सिद्ध्यति तथाऽपि एतदसम्भवे तु कृष्णादिकाऽपि ग्राह्या । यथा च देवलः–

येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यत्तोयं याश्च यत्रैव मृत्तिकाः ॥
येषु स्थलेषु यच्छौचं धर्माचारश्च यादृशः ।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः ॥ इति ॥

न मृदमिति । बुद्धिमान्नरः निशायाम् = रात्रौ न मृदं, नोदकं न वा गोमयम्=गोः पुरीषम् । प्रदोषे=रजन्याः प्रारम्भिके काले । (प्रदोषो रजनीमुखमित्यमरः)।

शिवरात्रिव्रतमुपक्रम्य कृत्यसारसमुच्चयः प्रदोषोऽत्र त्रिमुहूर्त्तः, "त्रिमुहूर्त्तः प्रदोषः स्याद् भानावस्तङ्गते संति" इति व्यासोक्तेरिति ठक्कुराः । प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते इत्युक्त्वा अत्र घटिका-दण्ड-द्वयरूपेति गौडाः । इति ।

गोमूत्रं न गृह्णीयात् ।अत्र निशायामिति न मृदं नोदकमित्यत्रापि सम्बध्यते । अर्थात् मृदुदकगोमयैः प्रत्येकमभिसम्बध्यते । अयञ्च निषेधोऽदृष्टार्थकर्मणीति कल्पतरुप्रभृतयः इति वीरमित्रोदयः । निशायामिति मृदुदकगोमयैः प्रत्येकं सम्बध्यते । एतेन मृदाद्यदृष्टार्थकर्मणि निशायान्न ग्राह्यम् । एवं प्रदोषे गोमूत्रनि-षेधोऽपीति रत्नाकरादय इति नि० कृत्या० ।

वल्मीकेति । वल्मीकात् = क्षेत्रादौ कृमिविशेष(वामलूर)सञ्चितमृत्तिकास्थानात् । लेपात्-कुड्यादीनामिति शेषः । जलात् = अन्तर्जलात् । पथिवृक्षयोः सम्बन्धिनीति शेषः । अतएव पथिवृक्षयोरित्यत्र सामीप्ये लक्षणेत्याचारचिन्तामणिः । कृतशौचावशिष्टा च= अन्येन कृताच्छौचात्। स्ना शौचे इति धात्वनुसारा त्, स्नानान् सामान्यतः शौचाद्वा अवशिष्टा च । एताः सप्तविधा मृत्तिकाः । वैधे कर्मणि न ग्राह्याः । त्याज्या इत्यर्थः ।

[ हिन्दी टीका ]

पवित्र स्थान में स्थित किन्तु कपाल खण्ड (कंकड का टुकड़ा हि० भा० झिटुका मै० भा०), पत्थर के बहुत छोटे टुकड़े, काँटे, केश, तथा कीट आदि से रहित हो तथा लाल या गौरवर्ण की हो ऐसी मिट्टी स्नान के लिए ग्राह्य है ।

यदि कहीं उक्त मिट्टी मिलना संभव न हो तो काली मिट्टी आदि का भी लेना देवलसम्मत है । क्योंकि देवल का कहना है कि "जिन जिन देशों में जो, जो देव, द्विज, मिट्टी शौच और जैसा धर्माचार हो वहाँ उसी को धर्मका साधन मान लेना चाहिए और उसकी निन्दा न करें ।

बुद्धिमान् मनुष्य अदृष्ट प्रयोजनवाले कर्म के लिए रात में मिट्टी, जल तथा गोवर एवं प्रदोष (सूर्यास्त के बाद गौड़मतानुसार चार दण्ड किन्तु मैथिलनिबन्धानुसार छह दण्ड तक) समय में गो मूत्र न लें ।

स्नान के लिए बल्मीक (दीमक की मिट्टी), चूहों से फेकी गई मिट्टी वाले स्थान, घर की भीत आदि में लेपी गई मिट्टी, जल के नीचे की, रास्ते की, वृक्ष के आसपास की तथा दूसरे के शौच से बची, इस तरह सात प्रकार की मिट्टी न लें।

[ मूलम् ]

दक्षः—

मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषकोत्करे[१] ।
अन्तर्जले श्मशाने च वृक्षमूले सुरालये ॥

[ संस्कृत टीका ]

मृत्तिका इति । वल्मीकादौ स्थितेतिशेषः । पूर्ववचनापेक्षया अस्मिन् वचने उपात्तेषु सप्तसु नवीनयोः श्मशानसुरालययोरुपादानम् । एतदपेक्षया

पाठा० (१) 'मूषिकास्थले' इति ह. पु० ।

पूर्ववचने नवीनयोः लेपपथयोरुपादानम् । अन्यदुभयं समानमेव । व्याख्याऽपि पूर्ववदेव ।

[ हिन्दी टीका ]

कल्याण चाहने वाले विद्वान् दक्षवचनानुसार निषिद्ध, वल्मीक, चूहों से फेकी गई मिट्टी वलो स्थान, जल के नीचे, श्मशान, वृक्ष की जड़ एवं देवालय में स्थित तथा दूसरे के स्नान से बची मिट्टी कभी न लें ।

यहाँ पूर्ववचन की अपेक्षा सात संख्या में श्मशान तथा देवालय कहा गया है और इस वचन की अपेक्षा पूर्ववचन में नये लेप और रास्ते का नाम कहा गया है । फलितार्थ में ये नौ ही निषिद्ध ज्ञातव्य हैं ।

यद्यपि पूर्ववचन में शौच पद तो अगले वचन में स्नान पदके उपादान से पद भेद अवश्य प्रतीत होता है किन्तु 'स्ना शौचे' धात्वनुसार दोनों ही एकार्थक हो जाते हैं । फिर भी शौच पद से सामान्यतः शौच साधन लेना अभीष्ट माना जाय तो मूत्रपुरीषादिनिमित्तक शौचावशिष्ट मृत्तिका भी स्नानकर्म के लिए ग्राह्य नहीं होगी । इस तरह अब दशविध मिट्टी निषिद्ध हो गई ।

[ मूलम् ]

व्यासः–

स्नानं मध्यदिने कुर्यात् सुजीर्णेऽन्ने निरामयः ।
स्वप्नमध्ययनं स्नानमुच्चारं भोजनं हुतिम्[1]।
उभयोःसन्ध्ययोर्नित्यं मध्याह्ने च विवर्जयेत् ॥

इति देवलीयो[2]निषेधो रागप्राप्तस्नाने । मध्याह्नोऽत्राभिजिद्वेला, पञ्चमभागे भोजनस्य वक्ष्यमाणत्वात् ।

[ संस्कृत टीका ]

स्नानमिति । निरामयः=नीरुजो जनः । अन्ने=अद्यत इति अन्नमिति तस्मिन् भुक्तवस्तुनि । सुजीर्णे=जठराग्निना पाचिते सति । मध्यदिने=प्रातःस्नानानन्तरं दिनमध्यसमये । स्नानम्=मज्जनम् कुर्यात् ।

ननु "स्वप्नमध्ययनं स्नानमि" त्यादि मूलोक्त-देवलीय-वचनेन मध्याह्ने स्नान-निषेधात्कथं मध्याह्नस्नानं विधिशास्त्रविहितमिति तु न शङ्कनीयम् ।

पाठा० (१) 'ग' इति ह. पु. । (२) 'निषेधो' इति नास्ति ह.पु. ।

रागः (प्रीतिः=यदृच्छा) तेन प्राप्ते मध्याह्नादिस्नाने देवलीयनिषेधस्य तात्पर्यात् । एवमेव "अयं देवलीयो निषेधो रागप्राप्तविषयः, 'स्नानं मध्यदिने' इत्यादि-व्यासवचनादित्याचारचिन्तामाणिरपि । राग इति । रागः प्रीतिरिति "वीतरागभय-क्रोधः स्थितधीः मुनिरुच्चते" इति भगवद्गीताटीकायां श्रीधरस्वामी । तस्य लक्षणं यथा

**सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ।**
**यतस्तु प्रणयोत्कर्षात् स राग इति कीर्त्यते ॥**

इत्युज्ज्वलनीलमणिरिति शब्दकल्पद्रुमः ।

अत्र=देवल-वचने । मध्याह्नः=अभिजिद्वेला । सा च पञ्चदशधा विभक्तस्य दिनमानस्याष्टमांशोऽभिजिन्मुहूर्त्तः । अयञ्च कुतुपकाल एव । तत्प्रमाणमाह कृत्यसारसमुच्चयधृतरत्नावल्याम्–

**अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।**
**तत्राष्टमो मुहूर्त्तो यः स कालः कुतुपः स्मृतः ॥ इति**

अतएव अभिजिद् दिवसस्याष्टममुहूर्त्तम् कुतुपकाल इति प्रसिद्धम् । यथा

**अपराह्णे तु सम्प्राप्ते अभिजिद् रौहिणोदये ।**
**यदत्र दीयते जन्तोस्तदक्षयमुदाहृतम्**

इति शब्दकल्पद्रुमोऽपि । पञ्चमभागे=अष्टधाविभक्तदिनमानस्य पञ्चमे भागे । भोजनविधानस्य

**पञ्चमे च तथा भागे संविभागो यथाऽर्हतः ।**
**संविभागन्तथा कृत्वा गृहस्थः शेषभुग् भवेत् ॥**

इत्यादिदक्षवचनैः वक्ष्यमाणत्वत् ।

[ हिन्दी टीका ]

रात में खाये हुए अंन्न आदि को पच जाने पर स्वस्थ व्यक्ति मध्याह्न के समय (प्रातःस्नान के बाद) दूसरा स्नान करे । यहाँ यह प्रश्न उठता है कि "सोना, पढ़ना, स्नान, मलत्याग, भोजन तथा हवन प्रातः, सायं तथा मध्याह्न के समय में नहीं करना चाहिए" इस देवल के कथनानुसार मध्याह्नस्नान तो सर्व (शास्त्र) सम्म्त नहीं है ? इसका उत्तर है कि देवल के निषेध का तात्पर्य अनुराग (जब

जैसी इच्छा हुई) मात्र से होने वाले तीनों समय के स्नान आदि से ही है, नकि विशेषतः स्नानविधान के निषेध से ।

यहाँ देवलवचन में आये मध्याह्न शब्द का अर्थ "अभिजित्" समय है जो पन्द्रह भागों में विभक्त दिनमान का आठवाँ भाग (दो दण्ड स्वरूप) होता है । क्योंकि आठ भागों में विभक्त दिनमान के पञ्चम भाग में भोजन का विधान कहा जायगा । अतएव इस समय में प्राप्त भोजनविधि का भी निषेधक न होकर अनुराग प्राप्त भोजन व स्नान आदि का ही निषेधक हो पाता है ।

## [ मूलम् ]

योगियाज्ञवल्क्यः—

उभे सन्ध्ये च स्नातव्यं ब्राह्मणैः[१] गृहमाश्रितैः ।
तिसृष्वपि च सन्ध्यासु स्नातव्यञ्च तपस्विना ॥

उभे सन्ध्ये च=प्रातर्मध्याह्ने च । तपस्विना=वानप्रस्थेन यतिना च ।

## [ संस्कृत टीका ]

उभे इति ! गृहमाश्रितैः = गृहस्थैः । ब्राह्मणैः = कर्मकर्तृभिः । उभे सन्ध्ये = प्रातः मध्याह्ने च । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । स्नातव्यम् । तिसृष्वपि च सन्ध्यासु=प्रातर्मध्याह्नसायंसन्ध्यासु तपस्विना=वान-प्रस्थेन यतिना च । स्नातव्यम्=स्नानमाचरणीयम् ।

अत्रापि उक्तप्रकृतग्रन्थाचारचिन्तामण्योर्विवेचनानुसारमुक्तदेवलीयो निषेधो रागप्राप्तविषयक एव मन्तव्यः ।

## [ हिन्दी टीका ]

गृहस्थ कर्मकर्त्ता प्रातःकाल तथा मध्याह्न में स्नान करे । किन्तु वानप्रस्थ तथा संन्यासी तो तीनो शाम (प्रातः मध्याह्न तथा सन्ध्या समय) में स्नान करे ।

## [ मूलम् ]

बौधायनः—

अ[१]म्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्[२]।

---

पाठा० (१) णैश्च गृह्यश्रितैः इति ह. पु. ।
(१) अपोऽवगाहनम् । (२) सार्व-कालिकम् ।

[ संस्कृत टीका ]

अम्भ इति । स्नानप्रोक्षणयोर्व्यवस्थामाह–अम्भोऽवगाहन- मित्यादिना ।

**मन्त्रवत्प्रोक्षणञ्चापि द्विजातीनां विशिष्यते ।**

इत्यस्योत्तरार्द्धम् । "अपोऽवगाहनमिति वारुणस्नानमाह । वच्च सार्ववर्णिकम्=सर्ववर्णसाधारणम् । मन्त्रवत्प्रोक्षणम्=पूर्वोक्तैः (दधिक्राब्णो इत्यादि, आपोहिष्ठेत्यादिभिः) मन्त्रैर्मार्जनम्, तच्च ब्राह्मणादित्रैवर्णिकानां विशिष्टं स्नानम् । एवञ्चाऽद्विजस्य वारुणमेव । द्विजातीनां पुनरुभयोः समुच्चयस्सति सम्भवे । असम्भवेऽपि तेषां मार्जनमवश्यम्भावि इत्युक्तवचनव्याख्यायां श्रीगोविन्दस्वामिनः ।

अम्भसि=नद्यादिजले । अवगाहनपूर्वकम्=प्रवेशपूर्वकम् यत् स्नानम्=मन्त्रैर्विना निमज्जनम् तत्सार्ववर्णिकम्=सर्ववर्णसाधारणं विहितमित्युक्तवचनस्य सामान्योऽर्थः ।

[ हिन्दी टीका ]

जलमें प्रवेश कर मन्त्रों के विना स्नान सर्ववर्णसाधारनण होता है । परन्तु 'दधिक्राव्णः' इत्यादि तथा 'आपोहिष्ठा' आदि मन्त्रों से मार्जन करने के बाद ही द्विजों का विशिष्ट (मुख्य) स्नान होता है । केवल जलस्नान तो द्विज से इतर-शूद्रों-के लिए मुख्य स्नान है । द्विजों के लिए आवश्यक स्नान तथा मार्जन इन दोनों के न होने की स्थिति में भी मार्जन तो अत्यावश्यक है । मार्जन शब्द का अर्थ है मन्त्रपूर्वक कुशों से शिर पर जलविन्दु का छिड़कना ।

[ मूलम् ]

विष्णुः—

**उद्धृताद् भूमिष्ठमुदकं पुण्यम् । स्थावरात्प्रस्रवत्, तस्मान्नादेयम् । तस्मादपि साधुपरिगृहीतं, सर्वत एव गाङ्गम् ।**

[ संस्कृत टीका ]

उद्धृतादिति । उद्धृतात्=कूपादितः कलशादिभिरानीतादुदकात् । भूमिष्ठम्=भूमिस्थितम् । उदकम्= जलम् । पुण्यम्=पावनम् । स्थावरात्=तडागादौ

स्थिरीभूतादुदकात् । प्रसवत् = निर्झरादेः प्रस्रवणशीलमुदकं पुण्यम् । तस्मात्= एतदपेक्षया । नादेयम् = नदीसम्बन्धि । तस्मादपि = एतदपेक्षयाऽपि । साधुगृहीतम् = शुद्धिश्रद्धापूर्वकं साधुजनेनानीतञ्च । यथा रामपरिगृहीतं चित्रकूटादौ मन्दाकिन्यादीति वीरमित्रोदयः । साधुपरिगृहीतम् = तीर्थजलमिति म० म० रघुननाथः । सर्वत एव=सर्वस्मादेवोदकात् । गाङ्गम्=गङ्गाजलं पावनमस्तीति भावः । वह्निपुराणे तु-

निपानादुद्धृतं पुण्यं ततः प्रस्रवणोदकम् ।
ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते ॥
तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम् । इति

पद्मपुराणे तु—

उद्धृतन्तु शुभं तोयमपर्युषितमेव हि ।
भागीरथ्यास्तु यत्तोयं न तत्पर्युषितं भवेत् ॥ इति ।

[ हिन्दी टीका ]

कुएँ आदि से निकाले गए जल की अपेक्षा भूमिस्थित जल, इसकी अपेक्षा झरने का, इसकी अपेक्षा नदी क, इसकी अपेक्षा शुचिश्रद्धापूर्वक साधुजनों के द्वारा लाया गया और इसकी अपेक्षा गाङ्गा का जल पवित्र है (पुण्यदायक है) ।

किन्तु वह्निपुराण का क्रम इस प्रकार है : कुएँ के जल से झरने का, झरने से तालाब का' तालाव से नदी का, नदी से तीर्थ का और तीर्थ से भी गंगा का जल पवित्र है । यही पद्मपुराण के अनुसार—लाया गया जल वही पवित्र है जो वासीन हो किन्तु गङ्गाजल कभी भी बासी नहीं होता ।

[ मूलम् ]

शङ्खः—

अद्भिर्गात्राणि शुद्ध्यन्ति तीर्थस्नानाद् भवेत्फलम् ।

[ संस्कृत टीका ]

अद्भिरिति । अत्र तीर्थसद्भावे उष्णोदकपरोदकाभ्यां स्नानं नादृष्टफलकमित्याशयेनोक्तमितः पूर्ववचनेन यथा :

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।

शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ॥ इति

परवारिणा=परकारितजलाशयस्थेन पराहृतेन च । स्नानफलम् स्वर्गादिरूपमिति छन्दोगाह्निकम् । परकारितजलाशयस्थेनेत्यपि पञ्चपिण्डाद्युद्धारपूर्वकमेव बोद्धयम् । "पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिणि" इति याज्ञवल्क्यादिवचनात् ।

मूलवचने तीर्थशब्दः तीर्थभूतवापीतडागादिपरः, "सरस्सु देवखातेषु तीर्थेषु च नदीषु च" इत्यग्रिमवचनेन देवखातादीनां पृथगुपादानात् । एवञ्च, अद्भिः=वह्नितप्तेन, परकारितजलाशयस्थेन पराहृतेन वा जलेन । गात्राणि= निमज्जितहस्तपादाद्यवयवसमुदायः । (गात्रमङ्गमिति मेदिनी) । शुध्यन्ति=पूयन्ते । तीर्थस्नानात् फलम्=स्वर्गादिरूपं फलं भवति ।

## [ हिन्दी टीका ]

वह्नितप्त या दूसरे के खुदाये जलाशय के विना पाँच लौंदे मिट्टी (आदि) के फेंके ही जल से या दूसरे के द्वारा लाये गए जल से स्नान करने पर केवल शरीर की शुद्धि होती है किन्तु सरोवर नदी देवखात से भिन्न तीर्थमूल बउली, तालाब आदि के जल से स्नान करने पर स्वर्गादि रूप फल भी होता है ।

तीर्थ में भी अन्य जल से स्नान करने पर सभी अंग केवल शुद्ध होते हैं किन्तु तीर्थ के जल से स्नान करने पर पुण्य भी होता है ।

## [ मूलम् ]

मनुः—

नदीषु देवखातेषु तडागेषु सरस्सु च ।

स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥

देवखातेषु=सूर्यादिदेवसमीपखातेषु । प्रस्रवणेषु = निर्झरेषु । नित्यमित्युक्तेर्जीवद-धिकारः, "संवस्त्रोऽहरहराप्लवे[१]दि" ति साङ्ख्यायन-गृह्यात् । "अथातो नित्यस्नान" मिति कात्यायनाच्च । एवञ्च नित्यस्नाने नद्यादीनामङ्गत्वम् ।"

---

पाठा० (१) राप्लुप्य ।

"त्रिरात्रफलदा नद्य" इति नित्यस्नानप्रकरणस्थवचनाद् गुणफलताऽपि । प्रकरणान्तरोक्ततीर्थस्नानं स्वर्गादिफलकं साधिकारमेवेति ।

[ संस्कृत टीका ]

नदीषु । नदीषु=अशोष्यसलिलासु । स्रवन्तीषु शोष्यसलिलासु सरित्सु स्नाननिषेधात् । देवैः खातमिति यत्स्मर्यते तद्देवखातम् । सहस्रद्वयहस्ता- धिकपरिमाणः कृत्रिमो जलाशयस्तडागः, हस्तसहस्राधिकपरिमाणं तडागाच्च न्यूनं सर इति हेमाद्रिः । कल्पतरौ तु देवखातेषु तडागेषु=देवसम्बन्धित्वेन प्रसिद्धेषु तडागेषु पुष्करादिषु, सरः=स्वल्पगर्त इति व्याख्यातमिति वीरमित्रोदयः । देवखातेषु=सूर्यादिदेवसमीपखातेषु इति ग्रन्थकारः ।

**शिवलिङ्गसमीपस्थं यत्तोयं पुरतःस्थितम् ।**
**शिवगङ्गेति विज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥**

इति भविष्यपुराणात् शिवलिङ्गाद्यग्रस्थः खातः = देवखातः । देवसम्बन्धितया प्रसिद्धः खातो देवखातः । यथा, देवह्रदादिरिति केचिदिति छन्दोगाह्निके पुनः ग्रन्थकारः । अत्र "देवखातो मनुष्यकर्तृकः। खातः आकस्मिक इत्यप्यर्थमाहुरिति म. म. रघुनाथः । गर्तेषु अनुपदं वक्ष्यमाणधनुस्सहस्राण्यष्टौचेत्यादि लक्षणेषु । प्रस्रवणेषु= पर्वताद्युच्च-प्रदेशात्प्रच्युतमुदकं प्रस्रवणम् । तेषु, निर्झरेष्विति यावत् । नित्यम्=सर्वदा, यावज्जीवनमिति. यावत् । स्नानं समाचरेदिति मन्वर्थः ।

उद्धृतकूपादिजलेनापि स्नानकर्तव्ययतामाह विष्णुपुराणे-

**नदीनदतडागेषु देवखातजलेषु च ।**
**नित्यं क्रियार्थं स्नायीद् गिरिप्रस्रवणेषु च ॥**

**कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि ।**
**स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे॥ इति**

मूलवचने नित्यमिति पदोपादानात् जीवदधिकारः=जीवनपर्यन्तं प्रत्यहं स्नानेऽधिकारो बोध्यते, सवस्त्रेऽहरहराप्लवेदिति सांख्यायन-गृह्य-वचनात् अहरहः

= प्रतिदिनम् । आप्लवेत् = स्नायादित्यर्थः । (आप्लावः आप्लवः स्नानमित्यमरः)।

उक्तसूत्रव्याख्यायां सवस्त्र इति द्वितीयवस्त्रप्राप्त्यर्थम् । एकवस्त्रत्वस्य नग्नत्वप्रतिषेधेनैव प्राप्तत्वादिति ब्रह्मदत्त-भाष्यमिति कल्पतरुरिति वीरमित्रोदयः। अथातो नित्यस्नानमिति कात्यायनवचनेनाऽपि प्रात्यहिक-स्नानाधिकारबोधनाच्च । तथाच स्नानविधौ वचनक्रमेण 'अहरहः' नित्येति-पदोप-दानात् जीवनपर्यन्तं प्रत्यहं स्नानमाचरणीयमिति स्पष्टमेव बोद्धयते । एवंच मनूक्तानां विष्णुपुराणाद्युक्तानाञ्च नद्यादीनां नित्यस्नाने अङ्गत्वम्=पारार्थ्यं, सहायकत्वमिति यावत् ।

नित्यस्नानस्य नित्यत्वविशेषणादेव पापक्षयातिरिक्तंफलरहितेऽपि "त्रिरात्रफलदा नद्य" इति योगियाज्ञवल्क्यवचनाद्, गुणफलताऽपि=गौण-रूपेण फलत्वमपि फलजनकत्वमपीति यावत् । समग्रवचनं यथा

**त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।**
**समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥ इति**

त्रिरात्रफलदाः=त्र्यहस्नानफलदाः प्रक्रमात् । आचाराध्याये तु त्रिरात्रोपवासफलदा इति व्याख्यातम् । एवं पक्षस्य मासस्येत्यत्रापि बोद्धव्यमिति छन्दोगाह्निकम् ।

अत्र 'त्रिरात्रफलदाः=नदीव्यतिरिक्ते यत् त्रिरात्रस्नानेन फलं तत्फलदाः स्नानप्रकरणात्' एवं पक्षस्य मासस्येत्यपि बोद्धव्यमिति कल्पतरुप्रभृतयः इति वीरमित्रोदयः । त्रिरात्रोपवासफलदा, एवं पक्षमासयोरपीति हेमाद्रिः ।

एवमत्र समुद्रे स्नानविधानात् 'न समुद्रोदकमवगाहेते'ति शङ्ख-लिखितोक्तरागप्राप्तावगाहनविषयं न तु तद्बलादुद्धृतोदकद्वारा समुद्रस्य फलदातृत्वं नद्यादिसाहचर्यविरोधादिति श्रीदत्त इति वीरमित्रोदयः ।

प्रकरणान्तरोक्तं तीर्थस्नानम् = नित्यस्नानप्रकरणभिन्नप्रकरणे कथितं तीर्थस्नानम् । स्वर्गादिफलकम्=स्वर्गपुण्यप्राप्तिपापक्षयादिफलजनकम् । साधिकारमेव=पुरुषविशेषणत्वेन श्रुतरूपाधिकारप्रतिपादकादिविधिवाक्यबो-धितमेव शास्त्रप्रामाण्यात् (सामर्थ्याद्) बोधनीयमेवेतिभावः । यथाच शास्त्राणि वाराणसीगङ्गास्नानमुपक्रम्य कृत्यसारसमुच्चयोद्धृतविष्णु-पुराणे-

स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति ।
अपूर्वपुण्यावाप्तिस्तु सद्यो मैत्रेय जायते ।। इति

पुरुषोत्तमतीर्थमुपक्रम्य तत्रैव भगवद्वचो यथा–

इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसम्भवम् ।
यत्र स्नात्वा सकृल्लोक : शक्रलोकमवाप्नुते । इति

गङ्गास्नानमाहात्म्यमुपक्रम्य तत्रैव भविष्ये–

सङ्क्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः ।
गङ्गास्नातो नरः कामाद् ब्रह्मणः सदनं व्रजेत् ।। इति ।

## [ हिन्दी टीका ]

नदी, देवखात (सूर्यादि देव के समीप का जलाशय,) कुण्ड, सूर्यकण्ड, पुष्कर आदि का तालाब या सामान्य तालाब, सरोवर (छोटा तालाब) बउली तथा झरने में प्रतिदिन स्नान करना चाहिए । विष्णुपुराण के अनुसार कुए तथा भीतर प्रवेश न होने की स्थिति में तालाब आदि से भी जल निकालकर पृथ्वी पर स्नान कर लें ।

मूल वचन में नित्य पद कहने से जीवन पर्यन्त स्नान करने का तात्पर्य अवगत होता है । मूल में उल्लिखित सांख्यायन गृह्यसूत्र के 'अहरहः' पद तथा कात्यायनवचन के नित्य पद के उपादानों से भी यह तात्पर्य और स्पष्ट हो जाता है । यहाँ नित्य स्नान के लिए नदी आदि जलाशय अङ्ग (सहायक) हैं । यद्यपि यह स्नान नित्य होने के कारण किसी धर्मादि फल का जनक नहीं होना चाहिए तथापि तीन रात के उपवास,या नदी के अतिरिक्त जलाशय में तीन दिन के स्नान से जो फल होता है वह नदी स्नान से होता है' इस योगियाज्ञवल्क्य के कथानुसार नदी आदि के स्नान को गौण रूप से शास्त्रनिर्दिष्ट फल देने वाला भी समझें ।

अन्य प्रकरण में तीर्थस्नान का जो फल–स्वर्गप्राप्ति, पुण्यप्राप्ति, पापक्षय आदि कहा गया है वह वचनों (कुछ संस्कृत टीका में उद्धत है) के बल पर मानना होगा ।

## स्नाननिषेधाः

### [ मूलम् ]

अथ स्नाननिषेधाः । छन्दोग-परिशिष्टे-

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिता : ॥

धनुः=हस्तचतुष्टयम् । तथाच देवलः-

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥
उपाकर्मणि चोत्सर्गे प्रेत[१]स्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

यव्यो-मासः ।

### [ संस्कृत टीका ]

धनुरिति । नदीगर्तलक्षणमाह धनुरित्यादिना । धनुः हस्तचतुष्टयम्-तत्परिमितदण्ड इति यावत् । तथाहि विष्णुर्मोत्तरे-

द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयन्तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः । इति ।

शयः=हस्तः । अष्टौ धनुःसहस्राणि=द्वात्रिंशत्सहस्रहस्तपरिमित-देशपर्यन्तम् । यासाम्=यत्स्थितानामपाम् । गतिः=प्रवाहः ताः । नदीशब्दवहाः=नदीपदवाच्याः न । (किन्तु) ताः गर्तः परिकीर्त्तिताः=गर्तशब्देनैव व्यवहृताः । एतेन तदधिकदेशगतिशालिनी नदीति नदीलक्षणं सूचितम् । अतएव, ''नदी चतुर्हस्तदण्डेनाष्टसहस्रदण्डान्यूनवेगं जलमि'' त्याचार-चिन्तामणिरपि ।

यव्येति । यव्यो मासः । ''यव्या मासाः स्वयेकसंवत्सर'' इति शतपथश्रुतेः । एवञ्च श्रावणादियव्यद्वयम्=श्रावणभाद्रेतिमासद्वयम् । सर्वा

पाठा० ( १ ) 'प्रातः' इति ह० पु० ।

नद्यः रजस्वलाः=रजोवत्यः अपवित्राः इतिभावः (जायन्ते, किन्तु याः) समुद्रगाः=साक्षात्प्रत्यभिज्ञायमान समुद्रगामिन्यः। तासु गङ्गा, महानदी, तापी, कृष्णा, वेणी, गोदावरी, तुङ्गभद्रा, ताम्रपर्णी, कावेरी, रेवा, सिन्धुः, गोमतीत्येकादशाहुस्ता एव शिष्टाः।

**तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।**

**रजसा च न दुष्यन्ति ये चान्ये नदसंज्ञकाः ॥**

तपनस्य सुता=यमुनेतिकृत्यसारसमुच्चयः। (एताः) वर्जयित्वा= रजोदोषाभावात् परित्यज्य । तासु=अन्यासु नदीषु स्नानं न कुर्वीत=कुर्यात्। चान्द्रसौरमासविशेषविषये राजमार्तण्डे-

**सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।**

**तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥**

सिंहो-भाद्रः। कर्कटः-श्रावणमासः।

मासश्च सौरो ग्राह्य इति द्वैतपरिशिष्टे तथैवाभिधानादित्यपि । मासश्चात्र शुक्लादिः । मासपुरस्कारेण विधिनिषेधयोरसति बाधके शुक्लादिरेव ग्राह्य इति श्रीदत्तोपाध्यायादयः। यव्यो मासः। स चौत्सर्गिकः शुक्लादिश्चान्द्र इति प्रदीपः। ब्रह्मपुराणानुसारात् कृष्णादिरिति स्मृतिसारः। सौर इति रत्नाकरादयः। आचरन्ति तु बहवः प्रामाणिकाः सौरमासमेवेति नित्यकृत्यार्णवः। कालविशेषे रजोयोगेऽपि स्नाने दोषाभावमाह देवलः-उपाकर्मणीत्यादि। यजुर्वेदिनां कृते श्रावणपूर्णिमायां सामवेदिनाञ्च कृते भाद्रशुक्लायामृषिपञ्चम्यां पञ्चगव्यप्राशनपूर्वकं स्नानाङ्गतर्पणसप्तर्षिपूजनादिकर्म उपाकर्मशब्देनोच्यते । "उपाकर्म यज्ञोपवीतसंस्कारविशेषः। स च दक्षिणदेशे प्रसिद्ध" इति तु कृत्यसारसमुच्चयः । एवं तस्मिन् 'उपाकर्मणि । उत्सर्गे=दाने । प्रेतस्नाने=शवनिमित्तकस्नाने । चन्द्रसूर्यग्रहे च=चन्द्रग्रहणे सूर्यग्रहणे च । नदीनां रजोदोषो न विद्यते । नदीतीरवासिनान्तु रजोदोषेऽपि सर्वदा नदीस्नाने दोषाभावमाह निगमः "न दुष्येत्तीरवासिनामि" त्यपि कृत्यसारसमुच्चयः ।

**[ हिन्दी टीका ]**

सोलह हजार गज की लम्बाई तक जिसका पानी नहीं बहता हो उसे नदी नहीं

कहते हैं किन्तु वह तो एक गर्त (गड्ढा या कुण्ड) ही है । इससे सिद्ध होता है कि उस लम्बाई से अधिक क्षेत्र तक बहते पानी को नदी कहते हैं । विभिन्न निबन्धो के निर्णयानुसार शुक्लादि तथा सौर (संक्रान्तिवाले) मास क्रम से सावन और भादो ये दो महीने सभी नदियाँ रजस्वला (अपवित्र) रहती है । अतः इसमें स्नान नहीं करना चाहिए । किन्तु समुद्र में पहुँचनेवाली इन ग्यारह-(१) महानदी गङ्गा, (२) तापीवा (३) कृष्णा, (४) वेणी, (५) गोदावरी, (६) तुङ्गभद्रा, (७) ताम्रकर्णी, (८) कावेरी, (९) रेखा, (१०) सिन्धु, (११) तथा गोमती, अन्य के मतानुसार यमुना भी, फलतः इन नदियों में राजस्वला दोष न होने के कारण वहाँ स्नान कर सकते हैं ।

यजुर्वेदियों के लिए श्रावण पूर्णिमा तथा सामवेदियों के लिए भाद्रशुक्ल (ऋषि)पञ्चमी को पञ्चगव्य प्राशन पूर्वक स्नानाङ्गतपर्ण, सप्तर्षि पूजन आदि कर्म उपाकर्म कहलाता है । अथवा कृत्यसारसमुच्चय के अनुसार उपाकर्म यज्ञोपवीत संस्कार विशेष, जो दक्षिण देश में प्रसिद्ध है, इस समय होने वाले, शव संस्कार के बाद होने वाले, तथा चन्द्र या सूर्य ग्रहण के समय होनेवाले स्नानमें कहीं भी रजस्वला का दोष नहीं होता ।

## [ मूलम् ]

मंनुः–

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते[१] जलाशये ॥

न भुक्त्वा न महानिशीति[२] निषेधश्चाण्डालास्पर्शनिमित्तकस्नाने नास्ति, "नाप्रयतः[३] क्षणमपि तिष्ठेदि" ति बौधायनात् । महानिशा=रात्रिमध्यस्थ[४] प्रहरद्वयम् । नातुर इति रोगस्य स्नानसंवर्धनीयत्वेन दृष्टार्थत्वात् । अविज्ञाते= अगाधतया नक्रादिरहिततया च । कृत्रिमे=प्रतिष्ठिता- प्रतिष्ठितत्वाभ्यामपि ।

## [ संस्कृत टीका ]

न स्नानेति । भुक्त्वा स्नानं नाचरेदित्यन्वयः । न स्नानमाचरेद् भुक्त्वा इति कृतभोजनस्य यदृच्छास्नाननिषेधः । नित्यस्य स्नानस्य भोजनानन्तरं प्राप्त्यभावात् । चाण्डालादिस्पर्शनिमित्तस्य तु नाशुचिः क्षणमपि तिष्ठेदिति वचनविरोधेन प्रतिषेद्धुमशक्यत्वादिति मेधातिथिरिति कल्पतरुरिति अत्र

---

पाठा० (१) न इति । (२) अत्र 'च' इत्यधिकः पाठश्च ह. पु. । (३) नाशुचिः ।
(४) 'स्थ' इंतिनास्ति ह. पु. ।

भोजनानन्तरं रागप्राप्तस्य निषेधः, नित्यस्यप्राप्तत्वात्, नैमित्तिकस्य निषेद्धुमशक्यत्वाच्चेति च नित्यकृत्यार्णवः । एवञ्च भोजने सत्यपि उपरागादिनिमित्तकं स्नानं कार्यमेव ।

**नैमित्तिकानि कर्माणि निपतन्ति यदा यदा ।**
**तदा तदैव कार्याणि न कालस्तु विधीयते ॥**

इति दक्षवचनात् । एवञ्च न भुक्त्वेतिवत् न महानिशीति निषेधोऽपि चाण्डालादिस्पर्श-निमित्तकस्नाने नास्ति, "नाप्रयतः क्षणमपि तिष्ठेदि" ति बौधायनवचनात् । आतुरः=रोगी नैमित्तिकमपि स्नानं न कुर्यात् किन्तु यथासामर्थ्यम्-

**अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।**
**आर्द्रेण वाससा वा स्यान्मार्जनं दैहिकं विदुः ॥**

इत्यादि जाबालाद्युक्तमनुसंधेयमिति कुल्लूकभट्टः ।

नातुर इति रोगस्य स्नान-संबर्धनीयत्वेन दृष्टार्थत्वादिति ग्रन्थकारः । आतुरस्य सदैव वारुणस्नाननिषेध इति नित्यकृत्यार्णवः ।

**महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।**
**तस्यां स्नानं न कुर्वीत नित्यनैमित्तिकादृते ॥ इति ।**

वासोभिः सह= बहुवासाश्च नित्यं न स्नायात् । अपितु स्नानसमये द्विवस्त्रत्वमपेक्ष्यते इत्यग्रे स्फुटीभविष्यति । किन्तु चाण्डालादिस्पर्शे सति तु स्नानं बहुवाससोऽप्यनिषिद्धम् । 'सवासा (सचैलो) जलमाविशेदि' ति-वचनात् ।

अजस्रम्=अनवरतम् । श्रद्धाजाड्यादिना प्राप्तं प्रतिषिध्यते इत्याचार-चिन्तामणिः । अजस्रम्=अनवरतम् । अत्र श्रद्धाजाड्यादिना प्राप्तं स्नानं निषिध्यते, नतु नानातीर्थप्राप्ति-निमित्तमिति वीरमिभोदयः । एकस्मिन् दिने नानातीर्थप्राप्तौ तीर्थप्राप्त्यादिविहितस्य तर्पणस्यावृत्तिः । एवञ्च स्नानमपि तत्रावर्तते इति । नाजस्रमिति निषेधो रागप्राप्तस्नानविषये दृष्टार्थः । तथा श्राद्धमपि तत्रावर्तते इति छन्दोगाह्निके ग्रन्थकारः ।

अजस्रम्=पुनःपुनः । तेन वारुण्यादिसंक्रान्त्यादिनिमित्तभेदप्राप्तमेकदा नाना स्नानं निषिद्ध्यते । किन्तु तन्त्रेण प्रसङ्गेन चैकं स्नानम् । तथा च, निगमः–

नावर्तयेत्पुनः कर्म तर्पणादिकमन्वहम् ।
काम्यनैमित्तिके हित्वा एकं ह्येकत्र वासरे ॥
विषुवद्दिवसे प्राप्ते पञ्चतीर्थविधानतः ।
स्नात्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्राञ्च भो द्विजाः ॥
नरः समस्तं यज्ञानां फलमाप्नोति दुर्लभम् ।

इति ब्रह्मपुराणोक्ते मार्कण्डेयह्रदे प्रद्युम्नसरोवरे समुद्ररूपादितीर्थादौ तन्त्रप्रसङ्गयोरभावात् पुनःपुनरेकदिनेऽपि नानास्नानमिति शब्दकल्पद्रुमः ।

अविज्ञाते=गाधागाधतया, अनिन्दितकर्तृतया चेतिकल्पतरुः । सुगमतया साधुकृततया चेत्याचारचिन्तामणिः । एवञ्च गाधागाधतया ग्राहनक्रादिरहिततया च कृत्रिमे अनिन्दितकर्तृतया प्रतिष्ठितत्वाप्रतिष्ठितत्वाभ्यांच विशेषेण अविदिते जलाशये न स्नायादिति भावः ।

[ हिन्दी टीका ]

भोजन करके स्नान न करें किन्तु चाण्डालादि का स्पर्श या चन्द्र-सूर्य ग्रहण आदि होने पर नैमित्तिक स्नान करना ही चाहिए । स्नान करने से रोग बढ़ जाने की स्थिति या आशंका में स्नान न करें किन्तु शिरस्नान को छोड़ कर सामर्थ्याऽनुसार अनुकल्प भीगे कपड़े से देह पोंछें या मार्जन आदि कर लें । रात के बिचले दो प्रहरों के भीतर यदि ग्रहण आदि निमित्त न हो या कृष्णाष्टमी, महाष्टमी आदि काम्य व्रत न हो तो स्नान न करें ।

बहुत कपड़ों के साथ दैनिक (नित्य का) स्नान न करें (स्नान के समय दो कपड़े होने चाहिए यह आगे स्पष्ट होगा) किन्तु चाण्डाल आदि के स्पर्श के बाद शरीर में लगाए गए सभी वस्त्रों के साथ स्नान करना चाहिए । वारुणी, सङ्क्रान्ति आदि निमित्त के भेद से या श्रद्धाजाड्य से बारबार स्नान न करें किन्तु एक ही स्नान करें । यदि अनेक तीर्थविषेष की प्राप्ति हो तो अनेक स्नान होंगे । साथ ही अनेक तीर्थ प्राप्ति आदि के कारण तर्पण तथा श्राद्ध भी अनेक होंगे ।

जो जलाशय भली भाँति परिचित न हो अर्थात् जहाँ गाध-अगाध (थाह-अथाह) जल तथा नक्र (मगर, घड़ियाल) आदि हिंस्रक जलीय जन्तु का ज्ञान न हो,

खुदाए हुए जलाशयका याग हुआ है या नहीं, खुदाने वाला निन्दित है या अनिन्दित इसका निश्चयात्मक ज्ञान न हो तो उस जलाशय में स्नान नहीं करना चाहिए ।

[ मूलम् ]

देवलः –

राहुदर्शनसङ्क्रान्ति–विवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥

अत्ययो=मरणम् [1]। वृद्धिः=पुत्रजन्म[2] ।

[ संस्कृत टीका ]

राह्विति । राहुदर्शनम्=चन्द्रसूर्यग्रहणम् । सङ्क्रान्तिः=एकराशितोऽपरराशौ सूर्यसङ्क्रमणम् । विवाहः=उद्वाहः । अत्ययः=सम्बन्धिनो मरणम् । (दिष्टान्तः प्रलयोऽत्यय इति विनाशपर्यायेऽमरः)। वृद्धिः=पुत्रजन्मादिः । तत्र, काम्यव्रतेषु = चतुर्दश्यादिव्रतेषु च । निशि = रात्रौ स्नानदानादिकं कुर्यात्। तथा योगियाज्ञवल्क्योऽपि–

ग्रहणोद्वाहसङ्क्रान्तियात्राऽर्त्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥ इति ।

आर्त्तिः=मरणम् ।

[ हिन्दी टीका ]

चन्द्रग्रहण, सूर्यग्रहण, सूर्यसङ्क्रान्ति, विवाह, सगे सम्बन्धी का निधन (मरण), पुत्रजन्म (आदि वृद्धि) तथा रात्रि में विहित महाष्टमी आदि काम्यव्रतों के अवसर पर रात्रि में भी स्नानदान करना चाहिए ।

[ मूलम् ]

वामनपुराणे–

स्नायाच्छिरःस्नानतया न[1] नित्यं
नाकारणं चैव सदा निशासु ।

पाठा० (१) मृतकम् । (२) पुत्रजन्मादि ।
पाठा० (१) 'स्नायाच्छिरः स्नानतया न नित्यमि'ति वायुपुराणीयमि'ति छन्दोगाह्निकम् । वामनपुराण इति शूलपाणौ पाठ इति तट्टिप्पणी च ।

ग्रहोपरागे स्वजनातिपाते[1]

भुक्त्वा च जन्मर्क्षगते शशाङ्कम् ॥

शिर:स्नानतया = शिरो[2] नैर्मल्यार्थं (स्नानम्) । वैधन्तु नित्यस्नानं कर्तव्यमेव । अकारणमित्यनेन रागप्राप्तजलक्रीडादिनिवृत्तिः ।

आपस्तम्बः—

सशिरोऽवमज्जनमप्सु वर्जयेत् । अस्तमिते च स्नानम् ।

सशिरोऽवमज्जनम्=शिरो[3]नैर्मल्यार्थस्नानम् । हरिहरेण अशिरोऽवमज्जनमिति पठितम् । गात्रप्रक्षालनमात्रम्[4] जलं प्रविश्य न कर्तव्यमिति व्याख्यातम् । अत्र चास्तमितमात्रे स्नाननिषेधाद् 'न महानिशीति' दोषातिशयार्थं दृष्टार्थं वा । तत्र[4] विष्णु :—

न सन्ध्यायाम् ।

रागप्राप्तजलक्रीडादि । निषेधोऽयं वैधस्य सन्ध्यायां विधानात् ।

[ संस्कृत टीका]

स्नायादिति । अत्र व्याख्यासौविध्यार्थम् आपस्तम्बवचनं व्याख्याय वामनपुराणीयवचनं व्याख्यास्यते । आपस्तम्बः—सशिर इति । उदकं प्रविश्य सशिरस्कं रागतो मज्जने न कुर्यादित्यर्थ इति कल्पतरुः। श्रीदत्तस्तु सशिरोऽवमज्जने शिरोनैर्मल्यार्थं स्नानं, तद् अप्सु प्रविश्य न कर्तव्यमित्यर्थः । तथा च दक्षः—

मलापकर्षणं पार्श्वे( तीरे )मन्त्रवच्च( त्तु )जले स्मृतम् ।

इत्याह । हेमाद्रिस्तु—अत्र सशिरोमज्जनस्नानप्रतिषेधः स्थावरोदक-विषयः । तथा च नन्दिपुराणम्—

मग्नो नदीजले स्नायात्प्रविश्यान्तर्जले द्विजः ।

तडागादिषु तोयेषु प्रत्यक्षं स्नानमाचरेत् ॥

इति व्याख्यातवानिति वीरमित्रोदयः । प्रकाशकारेण हरिहरेण तु—

पाठा० (१) यातम् (२) नैर्मल्यार्थम् । 'नैक्यार्थस्नानम्' इति तु ह. पु. । (३) मात्रमपि । (४) 'अत्र' इति ह. पु. ।

अशिरोवमज्जनमिति पठित्वा गात्रप्रक्षालनमात्रं जले प्रविश्य न कर्तव्यमित्यर्थं इत्युक्तम् । नित्यकृत्यरत्नमालाटिप्पण्यां म.म. मुकुन्दशर्मणा तु पुसां जलेऽशिरस्कं (शिरोवर्जं) स्नाने निषेधत्यापस्तम्बः "अशिरोऽवमज्जनमप्सु वर्जयेदिती" त्युच्चते । अस्तमिते च स्नानमित्यत्राप्सुवर्जयेदित्यनुषङ्गः । एतदपि रागप्राप्तस्नानमात्रविषयम् । अस्तमिते एव स्नाननिषेधान्मन्वादौ न महानिशीति निषेधो दोषातिशयार्थो दृष्टार्थो वेति श्रीदत्तरत्नाकरप्रभृतयः । अथवा निशि मज्जनस्नानमनेन निषिध्यते । देवलोऽपि

**दिवोद्धृतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः।**

निमित्ततः=चाण्डालादिस्पर्शनिमित्ततः । चन्द्रग्रहादिनिमित्तकं तु स्नानं निशि जलं प्रविश्याऽपि न विरुद्धम् । अतएव-

**स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ।**
**कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥**

इति भूतलस्थजलप्रशंसा । कूपे तु प्रविश्य स्नानं सर्वथैव निषिद्धमिति तत्रस्थजलप्रशंसा तस्मिन्नेव काले तदुद्धरणमित्येतदर्थम् । अतो दिवोद्धृतैर्जलैर्निशिस्नानं चन्द्रग्रहादन्यत्र निषिद्धमित श्रीदत्तादयः । गङ्गायान्तु रात्रावपि तन्ननिषिद्धमिति च वीरमित्रोदयः । अत्र चास्तमितमात्रे स्नाननिषेधान्न महानिशीत्यत्र महत्त्वं विशेषदोषभूयस्त्वप्रतिपादनार्थं दृष्टार्थं वेति रत्नाकरः । भोजननिषेधे तु महानिशा मुहूर्त्तचतुष्टयमित्याचारविवेक इति नित्यकृत्यार्णवः ।

अत्र च = आपस्तम्बवचने च अस्तमितमात्रे स्नाननिषेधात् । सूर्यास्तानन्तरमेव स्नान निधेषात् मन्वादौ=मनुस्मृत्यादौ । न महानिशीति= न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशीति स्नाननिषेधवचनम् । दोषातिशयार्थम् = दोषाधिक्य प्रतिपादनार्थम् । दृष्टार्थं वा=रात्रावुष्णरश्मेः सूर्यस्य तिरोभावात् शीतरश्मेर्हिमांशोराविर्भावाच्च महीतलमपि शीतलं जायते। तत्र स्थितं स्वाभाविकशैत्यगुणशालि जलमप्यतिशयेन शैत्यमासादयत् स्नायिनः शारीरिकत्रिदोषेषु विकृतिमुत्पादयेदिति भावः ।

[ टिप्पणी १ ]

अत्र वीरमित्रोदये श्रीदत्तादिनाम्ना उद्धृते उद्धरणसन्दर्भे 'चन्द्रग्रहादन्यत्र निषिद्धमि'त्यत्र, श्रीदत्तोपाध्यायकृतं (मुद्रिते) छन्दोगाह्निके तु 'चन्द्र ग्रहादन्यत्रेति सिद्धमिति पाठभेद उपलभ्यते । यश्चाहिनकुलमिव निषिद्धमिति सिद्धमिति पदाभ्यां परस्परं सर्वथैव विद्यते विरोधी । परमत्र 'सिद्धमि'तिपाठः साधीयान् प्रतीयते, उक्तोद्धरणेन चन्द्रग्रहणकाले एवं कूपजलोद्धरणस्य श्रीदत्तेन विवेचितत्वात् । दिवोद्धृतैजलैः स्नानं निशिकुर्यान्निमित्ततः । इति देवल-वचनमुपक्रम्य 'निमित्तत' इत्युक्तेश्चाण्डालादिस्पर्शनिमित्तकं स्नानमभिप्रेतमिति श्रीदत्तकृतव्याख्यादर्शनेन एतदनुरूपमेव 'निमित्ततः= चाण्डालादिस्पर्शनिमित्ततः' इति वीरमित्रोदयलेखदर्शनेन च दिवोद्धृतजलानां चाण्डालादिस्पर्श-निमित्तकस्नानेषु उपयोगावकाशाच्च ।

[ टिप्पणी हिन्दी ]

यहाँ वीरमित्रोदय में श्रीदत्तादि के नाम से उद्धृत ग्रन्थसन्दर्भ में 'चन्द्रग्रहादन्यत्र निषिद्धम्' के स्थान पर श्रीदत्तोपाध्यायकृत टिप्पणी के साथ मुद्रित छन्दोगाह्निक में 'चन्द्रग्रहादन्यत्रेति सिद्धम्' ऐसा पाठभेद उपलब्ध होता है, जो कि साँप नेवले के जैसे निषिद्धम् और सिद्धम् पदों में परस्पर अतीव विरोधी है । फिर भी 'निषिद्धम्' की अपेक्षा 'सिद्धम्' वाला पाठ अधिक उपयुक्त प्रतीत होता है, क्योंकि श्रीदत्तोपाध्याय ने उद्धृत उन पंक्तियों के द्वारा ही चन्द्रग्रहणकाल में (गंगाजल के समान) कूपजल को स्नान मिमित्त निकालने का विवेचन कर दिया है । तब, 'दिवोद्धतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः' (जलाशय से दिन में निकाले गए जल से निमित्तवश–चाण्डालादिस्पर्शसे होनेवाले–रात्रिस्नान करें ।) इस देवलवचन का उपयोग स्थल चन्द्रग्रहण निमित्तवाले स्नान से अन्य चाण्डालादि स्पर्श से होनेवाला रात्रि स्नान ही हो सकता है । अतः श्रीदपात्तोपध्याय का अभिप्रेत पाठ 'सिद्धम्' ही सिद्ध हो सकता है, ऐसा मेरा मन्तव्य है ।

[ टिप्पणी २ ]

अत्र प्रकृतवामनपुराणीयवचनस्थितस्य 'शिरःस्नानतया' इत्यस्य शिरोनैक्यार्थम्' एवमापस्तम्बीयवचनस्थित 'सशिरोऽवमज्जन' मित्यस्य च शिरोनैक्यार्थमिति आचारादर्शे व्याख्यादर्शनेन, वीरमित्रोदयेऽपि उक्ता-पस्तम्बीयवचनप्रदर्शनावसरे श्रीदत्तकर्त्तृकतया सशिरोऽवमज्जनमित्यस्य

शिरोनैक्यार्थस्नानमिति व्याखोल्लेखदर्शनेन, नित्यकृत्यार्णवेऽपि च शिरःस्नानतया इत्यस्थशिरोनैक्यार्थमित्येव व्याख्या दर्शनेन च आचारादर्शस्योभयत्रस्थले तथैव व्याख्यापाठः समीचीनः प्रतिभाति । यद्यपि अस्यैव ग्रन्थकारस्य आचारदर्शतोऽपि पूर्वनिर्मिते बहुप्राचीने तालपत्रलिखितमपि पुस्तकमाधारीकृत्य संशोध्य प्रकाशिते सटिप्पणछन्दोगाह्निके तु उक्तस्थलद्वये एतदतिरिक्तस्थले च शिरोनैक्यार्थमिस्य स्थाने "शिरोनैर्मल्यार्थमि" ति पाठो दृश्यते । तथापि नैक्य-नैर्मल्ययोः समपर्यायतया प्रकृते न विद्यते कोऽपि विरोधः । अतएवात्र नैक्यम् = नैर्मल्यमि'त्याचारादर्शफक्किकाव्याख्याऽपि ।

[संस्कृत टीका]

वामनपुराणे स्नायादिति । वामनपुराणीयं स्नायादित्यादि नित्यमित्यन्तं वचनं 'सशिरोऽवमज्जनमप्सु वर्जयेदित्युपर्युक्तापस्तम्बवचनसमानार्थकमेव । परं वैधन्तु नित्यस्नानं कर्तव्यमेव । "नाकारणमित्यनेन रागप्राप्तजलक्रीडाऽऽदिनिषेध" इति ग्रन्थकारः । "नाकारणञ्चैव सदेत्यनेन निमित्तं विना अजस्रस्नानं निषिध्यते" इत्येव वीरमित्रोदयोऽपि । नाकारणमिति रागप्राप्तजलक्रीडादिनिवृत्ति परमित्याचारविवेकः ।

निशासु इत्युत्तरार्धान्वयि । ग्रहोपरागम्=चन्द्रग्रहणम् । स्वजनातिपातम्=स्वजनस्य मरणम् । जन्मर्क्षगतम्= जन्मकालिकाश्विन्यादिनक्षत्रमासाद्यन्तम् । शशाङ्कम् = चन्द्रम् । मुक्त्वा =विहाय, विनेति यावत् । निशासु न स्नायादित्यर्थः, किन्तु गङ्गायां रात्रावपि स्नानं न निषिद्धं,

**दिवा रात्रौ च सन्ध्यायां गङ्गायाञ्च विशेषतः ।**
**स्नात्वाऽश्वमेधजं पुण्यं गृहेषूद्धततज्जलैः ॥**

इति ब्रह्माण्ड-पुराणात् । तत्र विष्णुः—न सन्ध्यायामिति । विष्णुवचनबोधितः न सन्ध्यायामिति निषेधः रागप्राप्तजलक्रीडादिविषयकः । "तिसृष्वपि च सन्ध्यासु स्नातव्यञ्च तपस्विना" इति योगिज्ञवल्क्यवचनेन वैधस्य=विहितस्य स्नानस्य सन्ध्याकाले विधानात् ।

## [ हिन्दी टीका ]

शिर को साफ करने के उद्देश्य से जल के अन्दर प्रवेश कर स्नान नहीं करना चाहिए, यह ग्रन्थकार की व्याख्या है । यहीं कल्पतरुकार की व्याख्या है कि अपनी जब इच्छा हुई तभी–रागप्राप्त–शिरःस्नान (शिर के साथ सभी अङ्गों का स्नान) नहीं करना चाहिए । किन्तु उभय व्याख्याऽनुसार वैध शिरःस्नान तो करना ही चाहिए । इसी प्रकार रागसे जलकीडा आदि या बहुत ज्यादा स्नान भी न करें । चन्द्रग्रहण, अपने संबन्धी की मृत्यु, जन्मकाल के (अश्विनी आदि) नक्षत्र में चन्द्रमा के आ जाने के अवसरों को छोड़कर रात्रि में स्नान नहीं करना चाहिए । इसी तरह आपस्तम्ब के वचनानुसार भी रागप्राप्तशरःस्नान नहीं करना चाहिए, किन्तु यहाँ भी वैध स्नान निपिद्ध नहीं ।

आपस्तम्बवचन की व्याख्या करते हुए हरिहर ने–"सशिरोऽवमज्जनम्" के स्थान पर 'अशिरोऽवमज्जनम्' पाठ स्वीकार कर जल में प्रवेशकर राग से अपने अंगों को न धोये, ऐसा अर्थ किया है ।

आपस्तम्ब के वचनानुसार सूर्यास्त के वाद तथा विष्णुस्मृति के वचनानुसार सन्ध्या समय में स्नान नहीं करना चाहिए । ये दोनों ही निषेध रागप्राप्त स्नान के निषेधक हैं, किन्तु इससे वैध स्नान निपिद्ध नहीं होता क्योंकि इस सन्ध्या समय में संन्यासियों के लिए स्नान कहा गया है । अब मनु का जो निषेध है "न महानिशि" (रात्रि के बीच वाले दोनों प्रहर में स्नान न करें") वह अतिशय दोष दिखाने के तात्पर्य से या उस समय के स्नान से शरीर में होने वाले अस्वास्थ्य की संभावना के उद्देश्य से कहा गया है ।

किन्तु ऊपर से ज्ञातव्य है कि ब्रह्माण्डपुराण के वचनानुसार गङ्गा में रात्रिस्नान भी निपिद्ध नहीं, क्योंकि दिन, रात, या सन्ध्या के समय विशेपतः गङ्गा में अथवा गङ्गा के उद्धृतजल से घर में भी स्नान करने वाले को अश्वमेघ से होने वाला पुण्य प्राप्त होता है ।

भोजन के लिए तो "महानिशा" शब्द से रात्रि मध्य का आठदण्ड निषिद्ध समझना चाहिए, यह आचारविवेककर्ता म. म. शूलपाणि उपाध्याय का विवेचन है ।

## [ मूलम् ]

हारीतः –

न चत्वरोपद्वारयोः स्नायात् ।

[ संस्कृत टीका ]

न चत्वरेति । चत्वरम् = नानाजनावस्थानदेशः । काकादिबलिस्थानमिति केचित् (कल्पतरुकाराः) इति मूत्रपुरीषोत्सर्गप्रकरणे ग्रन्थकारः । चत्वरे=काकादिबलिस्थाने इति छन्दोगाह्निकम् । काकादिबलिस्थाने इति श्रीदत्त इति शब्दकल्पद्रुमोऽपि । चत्वरमिह यक्षादिबलिस्थानमिति नित्यकृत्यार्णववीरमित्रोदयौ । उपद्वारम् = द्वारस्य समीपम् । उभयत्र न स्नायादित्यर्थः । अत्र "चत्वरोपद्वारयोरित्युद्धृतोदकविषयं, तत्स्थान गतमन्यजलविषयं वेत्याचारादर्शफक्किकाव्याख्या ।

[ हिन्दी टीका ]

जहाँ बहुत से लोग बैठते हों, जहाँ कौवा, यक्ष आदि के लिए बलि हरण किया जाता हो वहाँ और द्वार के समीप स्नान नहीं करना चाहिए ।

[ मूलम् ]

शङ्खलिखितौ—

न नग्नः स्नायात् ।

अत्र नग्नस्नाननिषेधात्पूर्वञ्च न वासोभिरिति वस्त्रबहुत्वनिषेधादेक[१] वस्त्रत्वं द्विवस्त्रत्वञ्चाविरोधि । नार्द्रमेकं वसीत" इति पुरुषार्थत्वान्न स्नानविधौ दोषमावहति । अथवा

**होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।**

**नैकवस्त्रः प्रवर्तेत द्विज[२] वाचनिके जपे ।**

इति विष्णुपुराणे एकवस्त्रतानिषेधाद्द्विवस्त्रतानियम एव ।

[ संस्कृत टीका ]

न नग्न इति । नग्नः=अवश्यावच्छाद्याङ्गेऽपि वस्त्ररहितः न स्नायादिति शङ्खलिखितस्मृत्यर्थः । अत्र=शङ्लिखितवचने 'नग्नस्नान-निषेधात् ।

(१) वासस्त्वं द्विवासस्त्वञ्च स्नानविध्यवबोधि, इति (२) "द्विराचमनिके जप' इति, च पाठभेदः ह. पु. ।

पूर्वञ्च=न वासोभिः सहाजस्रमिति पूर्वव्याख्यातमनुवचने च । न वासोभिः=न वासोभिरित्यंशेन । एकवस्त्रत्वं द्विवस्त्रत्वञ्च=स्नानकाले एकवस्त्रधारित्वं द्विवस्त्रधारित्वं वा । अविरोधि =शास्त्रविरुद्धं न भवति । आर्द्रम्=क्लिन्नमेकं वासो न परिदध्यादित्यर्थकं "नार्द्रमेकं वसीत ।" सम्पूर्णवचनं यथा

**न पारक्ये सदा स्नायात् न भुक्त्वा न महानिशि ।**
**नार्द्रमेकञ्च वसनं परिदध्यात्कथञ्चन ॥**

इति जावालिवचनबोध्यो निषेधश्च । पुरुषार्थत्वात् । स्नानविधौ = स्नानकर्मणि । न दोषमावहति । एतेन स्नानविधौ नग्नत्वनिवारणार्थमेकवस्त्रस्य धारणेनापि शास्त्रीयमर्यादया अविरोध इति सूचितम् ।

पुरुषार्थो हि विधिर्निषेधो वा स उच्यते, यदननुष्ठाने पुरुषस्य प्रत्यवायोत्पत्तिकल्पनं भवति । यथा च

**सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।**
**विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥**

इति वचनव्याख्यायां परिभाषातरङ्गे नित्यकृत्यार्णवः । सदेत्यनेन शिखा-बन्धनोपवीतयोः पुरुषार्थता । ततश्चाधारणे प्रत्यवायकल्पना । सदाधारणात्कर्मकालेऽपि धारणोपपत्तिः । तत्किं कर्माङ्गता नास्त्येवेत्यत उक्तं विशिख इति । विगुणत्वेन फलासाधकमित्यर्थः । केवलपुरुषार्थत्वे हि अधारणे कर्म साङ्गमेव स्यात्पुरुषः परं प्रत्यवेयात् । न त्वेवमिति कर्माङ्गतोपदेश-प्रयोजनम् । एवञ्च क्रतुपुरुषार्थत्वमुभयोरुक्तमिति।

प्रकृते चात्र वीरमित्रोदयो यथा– "नार्द्रमिति । कदाचनेति स्वरसात्पुरुषार्थोऽयं निषेधः । एवञ्च एकवस्त्रत्व-निषेधस्य पुरुषार्थत्वात् स्नानविधावेकवस्त्रत्वेऽपि कर्माविगुणमेव । पुरुषः परं प्रत्यवैतीति केचित्" इति । परमेत(त्केचि)न्मतन्न मनोहरम्,

**एकवस्त्रेण यत्स्नानं सूच्या विद्धेन चैव हि ।**
**स्नानेन न भवेच्छुद्धिः श्रिया च परिहीयते ॥**

इति वीरमित्रोदयधृतगौतमवचनात्,

**देवार्चाचमनस्नानव्रतश्राद्धक्रियादिषु ।**
**न भवेन्मुक्तकेशश्च नैकवस्त्रधरस्तथा ॥**

इति बृहन्नारदीयवचनाच्चेत्यरुचेराह-अथवेति ।

होमेति । देवार्चनाद्यासु-इत्यत्र आदिपदात्स्नानादेः परिग्रहः आचमने कर्मणि । द्विजवाचनिके=द्विजैः पुण्याहादिवाचने, ब्रह्मयज्ञे च । जपे=मन्त्रजपे । अन्यत्सुगमम्। एवञ्चैकवस्त्रत्वनिषेधस्य द्वितीयवस्त्रधारणस्य च शिखाबन्धनोपवीतधारणयोरिव पुरुषार्थक्रत्वर्थत्वे मन्तव्ये । अतएव सवस्त्रोऽहरहराप्लुत्याव्युदकोऽन्यद् वस्त्रमाच्छादयेदिति सांख्यायनगृह्यसूत्रस्थ 'सवस्त्र' इति द्वितीयवस्त्र-प्राप्त्यर्थम्, एमवस्त्रत्वस्य नग्नत्व-प्रतिषेधेनैव प्राप्तत्वादिति ब्रह्मदत्तभाष्यमिति कल्पतरुः। 'नार्द्रमित्यादि' जावालवचन-व्याख्यायां सवस्त्र इति द्वितीयवस्त्रधारणनियमात्स्नानकालेऽपि तत्परित्यागे प्रमाणं नास्तीत्यपि स एव । अतएव,

**होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।**
**नैकवस्त्रः प्रवर्त्तेत द्विजवाचनिके जपे ॥**

इति विष्णुपुराणवचनव्याख्यायामाद्यपदसंगृहीतां स्नानक्रियामभिप्रेत्य एकवस्त्रतानिषेधात्स्नाने द्विवस्त्रतानियम एवेति श्रीदत्तादयोपीति वीरमित्रोदयः । अतएव च, स्नानं तर्पणपर्यन्तं कुर्यादेकेन वाससा इति (वचनं) यदि समूलं तदा प्रेततर्पणपरमिति । अत्र एकवस्त्राः-ज्ञातयः इत्यादिना एकवस्त्रत्वविधानात् । एकेन=एकजातीयेन इति वाचस्पतिमिश्रः । येन वाससा स्नानं कृतं जलस्थस्य तेनैव तर्पणमिति कृत्यमहार्णव इति शब्दकल्पद्रुमोऽपि ।

**[ हिन्दी टीका ]**

नग्न होकर स्नान नहीं करना चाहिए, यह मूल वचन का अर्थ है ।

इस वचन के अनुसार स्नान के समय नग्न रहना तथा पूर्वव्याख्यात 'न वासोभिः सहाजस्रम्' इत्यादि मनुवचन के अनुसार बहुत वस्त्र होना दोनों ही निषिद्ध हैं । फलितार्थ में एक वस्त्र या दो वस्त्र रहना आवश्यक है । जावालि का जो निषेधवचन है कि भींगे एक वस्त्र को धारण न करे वह (निषेध) पुरुषार्थ (जिसके अननुष्ठान-अधारण या अपालन से पाप हो वह पुरुषार्थ कहलाता है) होने के कारण स्नानके समय कए वस्त्र धारण करने पर भी कर्मगत दोष का प्रतिपादक नहीं होगा । यही आचारादर्श का प्रथम पक्ष से कहा गया एकवस्त्र

धारण वाला विषय वीरमित्रोदय के उद्धृत लेख में 'केचित्' पद से कहा गया है। इस पक्ष में पुरुष प्रत्यतायभागी जो बनेगा, वह अलग बात है। किन्तु अग्रिमवचनानुसार कर्म भी विगुण होकर फल का साधक नहीं बन सकेगा, इसी अरुचि से ग्रन्थ में 'अथवा' पक्ष उठाया जाता है। यथा-''होम, देवपूजन, स्नान आदि क्रिया, आचमन, द्विजों के द्वारा होने वले पुण्याह आदि के वाचन या ब्रह्मयज्ञ तथा जप कोई भी एक वस्त्रधारी न करे'' इस विष्णु पुराण के कथनानुसार एक वस्त्रधारण का निषेध किया जाता है। अतः सिद्धान्त में दो वस्त्र के धारण का नियम स्थिर होता है। फलतः गौतम वचन, वृहन्नारदीयवचन, सांख्यायनग्रह्मसूत्र का ब्रह्मदत्त भाष्य जिसे कल्पतरुकार ने अपनी व्याख्या में उद्धृत किया है तथा उक्त जावालि वचन की कल्पतरु व्याख्या, ये सभी संस्कृत टीका में उद्धृत हैं, इसी मत के पोषक हैं। अब इस तरह से सिद्ध हो जाता है कि स्नान के समय एक वस्त्र के धारण का निषेध तथा द्वितीय वस्त्र का धारण दोनों ही शिखाबन्धन और यज्ञोपवीत धारण के जैसे पुरुषार्थ के साथ ही क्रत्वर्थ भी हैं। एतदर्थ संस्कृत टीकामें उद्धृत नित्यकृत्यार्णव भी द्रष्टव्य है। यहाँ शब्दाकल्पदुम से उद्धृत लेखानुसार ज्ञातव्य है कि स्नान के समय एक वस्त्र धारण करने का ''स्नानं तर्पण-पर्यन्तं कुर्यादेकेन वाससा'' यह वचन यदि प्रामाणिक है तो उसे प्रेत तर्पणपरक मानना चाहिए। क्योंकि प्रेततर्पण में एक वस्त्र होना विहित है। वाचस्पति मिश्र की व्याख्या के अनुसार इस वचन में आये 'एकेन' पद का अर्थ एक जातीय है। जिससे एक वस्त्रत्व वाले एक वस्त्र का धारण अर्थ हो जायेगा। कृत्यमहार्णव विवेचनानुसार जिस वस्त्र से स्नान किये हों जल में स्थित व्यक्ति को उसी वस्त्र से तर्पण करना चाहिए-अर्थ है।

[ मूलम् ]

व्यासः-

न भुक्त्वाऽलंकृतो रोगी।

शङ्खलिखितौ-

अमेध्योदकं परिहरेत्।

तथा-

न समुद्रोदकमवगाहेत।

[1]योगियाज्ञवल्क्यः-

प्रभूते विद्यमाने तु विमले तु मनोहरे[2] ।
नाल्पोदके[3] द्विजः स्नायान्नदीञ्चोत्सृज्य कृत्रिमे ॥

[ संस्कृत टीका ]

न भुक्त्वेति । भुक्त्वा=भोजनोत्तरम् । अलङ्कृतः=अलङ्कारैः विभूषितः । रोगी=स्नानसंबर्धनीयरोगवाँश्च न स्नायादित्यर्थः ।

अमेध्योदकमिति । अमेध्यम्=अपवित्रम् । उदकम् परिहरेत्=नैतेन किञ्चिदपि शुभं कर्म कुर्यात् । समुद्रोदकम् । न अवगाहेत= अन्तः प्रविश्य न स्नायात् । इदञ्च रागप्राप्तावगाहनविषयम्, श्रीदत्तोपाध्यायैस्तथैवान्यत्र (छन्दोगाह्निके) व्याख्याततत्वात् । यथा च-

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥

इति योगियाज्ञवल्क्यवचनमुपक्रम्य एवमत्र समुद्रे स्नानविधानात् न समुद्रोदकमवगाहेतेति शङ्खलिखितोक्तं रागप्राप्तावगाहनविषयं, न तु तद्बलादुद्धृतोदकद्वारा समुद्रस्य फलदातृत्वं नद्यादिसाहचर्यविरोधादिति श्रीदत्त इति वीरमित्रोदयोऽपि ।

सुमनोहरे=चित्ताकर्षके । प्रभूते=पर्याप्ते । उदके इति शेषः । विद्यमाने (सति) तु अल्पोदके—स्वल्पोदकलक्षणलक्षिते नाभिमात्रे जले इति भावः ।

स्वल्पोदकलक्षणं च यथा स्कन्दपुराणे-

नाभिमात्रञ्च यत्तोयं तत्तु स्वल्पमुदाहृतम् ।
ततः स्नानं प्रकुर्वीत जानुमात्रे न च क्वचित् ॥ इति

ततः=तस्मादुपरि जले इति शेषः । नदीम्=नदीग्रहणमत्राकृत्रिमोपलक्षणमग्रे 'कृत्रिम' इति दर्शनात् । एवञ्च अकृत्रिमजलम् । उत्सृज्य=परित्यज्य। कृत्रिमे=कूपतडागादौ न स्नायात् । यथा च छागलेयोऽपि-

नद्यां सन्निहितायान्तु नान्यत्र स्नानमाचरेत् ।
प्रचुराणामपां लाभे नतु स्वल्पोदके क्वचित् ॥ इति ।

---

पाठा० (१) 'वृद्ध' इति ह. पु० (२) उदश्यकेसमुनोहरे । (३) 'तु' इत्यत्र 'ल्पो' इत्यत्र च 'न्यो' इति पाठ भेदौ ह. पु. ।

अत्र द्विज इति स्नानकर्तृमात्रपरम् । नदीपदं कृत्रिममात्रपरम् । नावगाहेत=नान्त:प्रविश्य स्नायादित्यर्थ इत्याचारचिन्तामणि: ।

## [ हिन्दी टीका ]

[क] भोजन के बाद, अलङ्कारों से अलङ्कृत होने पर तथा स्नान से रोग यदि वर्धनीय हो तो स्नान नहीं करना चाहिए ।

[ख] अपवित्र जल से स्नान आदि कुछ न करें । तथा समुद्रजल के भीतर प्रवेशक के रागप्राप्त स्नान न करें ।

[ग] पर्याप्त मनोहर यदि जल मिले तो नाभि भर पानी में तथा नदी आदि का अकृत्रिम मिले तो कुएँ तालाब आदि के कृत्रिम पानी में स्नान नहीं करना चाहिए। ।

❀ इति स्नाननिषेधा: ❀

# जलशायेषु पिण्डोद्धारपूर्वकं स्नानम्

[ मूलम् ]

परकृत-जलाशयेषु पिण्डाद्युद्धारपूर्वकं स्नानम् । तत्र विष्णु :-

**न परनिपानेषु स्नानमाचरेत् । आचरेद्वा पञ्च पिण्डानुद्धृत्यापदि ।**

परनिपानेषु=परकृतजलाशयेषु ।

**पञ्च[1] पिण्डाननुद्धृत्य न स्नायात्परवारिणि ।**
**निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥**

इति मनुस्मरणात् । पञ्चपिण्डानिति सेतुकूपव्यतिरिक्तजलाशये ।

**निरुद्धासु च[2] न स्नायादंशभाक् तत्र सेतुकृत् ।**

तथा[3]

**निरुद्धासु[2] च मृत्पिण्डान् कूपात्तु त्रीन् घटाँस्तथा ।**

इति बौधायनदर्शनात् ।

तत्र[4] प्राञ्चः-अप्रतिष्ठितमात्रे[5] पिण्डोद्धारस्तस्यैव परकीयत्वादित्याहुस्तन्नेति हरिहरादयः । अप्रतिष्ठितजलत्वेन तत्र स्नानाभावात् । परस्वोपभोगे चौर्यापत्तेः, मन्वादौ परकृत[6] स्वरूपस्य परकीयत्वावगमाच्च ।

[ संस्कृत टीका ]

न परेति । परनिपानेषु=परकृतजलाशयेषु । पञ्च पिण्डानुद्धृत्येत्यादि (४/२०१) मनुस्मरणात् । निपानं=जलाधारः । परकृतपुष्करिण्यादिषु न कदाचित्स्नायात् । तत्र स्नात्वा पुष्करिण्यादिकर्त्तुर्यत्पापं तस्यांशेन= वक्ष्यमाणचतुर्थ- भागरूपेण सम्बद्ध्यते । कृत्रिमनद्याद्यसम्भवे परकृतेऽपि पुष्करिण्यादौ प्राक्प्रदानात् पञ्चपिण्डानुद्धृत्य स्नातव्यमिति मन्वर्थमुक्तावली ।

---

पाठा० (१) प्रकाशित-मुक्तावली-सहित-मनुस्मृतौ ''परकीयनिपानेपु न स्नायाच्च कदाचन'' इति iB% A,oeo NUhlsKÉd kb!ofi A(२) निबद्धासु । (३) तु त्रीन पिण्डान् । (४) 'अत्र' इति, (५) 'पञ्च' इत्याधित्रकः (६) परकृतरूप परकीय त्वोपग॰॰च्च 'इति च ह० पु० ।

परवारिपदमपि अत्र परकृतजलाशयस्थवारिपरम्, न तु पर-स्वत्वास्पदीभूतवारिपरम्, तदुपयोगे चौर्यापत्तेः । एवञ्च परकृतजलाशयेषु पिण्डाननुद्धृत्य स्नानं न समाचरेत् । आपदि=अकृत्रिमजले स्नानासम्भवे । पञ्च पिण्डान्=श्रीफलप्रमाणकान् पञ्च मृत्पित्पण्डान् । उद्धृत्य=जलाशयाद्बहिः प्रक्षिप्य । आचरेद्वा=परनिपानेषु स्नानं कुर्याद्वा ।

अवनेजनवत् पिण्डान् दत्वा बिल्वप्रमाणकान् ।

इति छन्दोगपरिशिष्टवचनेन पिण्डस्य बिल्वप्रमाणत्वाभिधानवत् । तद्धर्मप्राप्त्यर्थमेव पिण्डपदप्रयोगात् । कौण्डपायिनामयने अग्निहोत्रपद-प्रयोगवदिति । मृत्तिण्डाश्चात्र यावान् हस्ताभ्यामुद्धर्त्तुं शक्यते तावानिति तु रत्नाकर इति वीरमित्रोदयः । पिण्डश्चात्र योगबिल्वप्रमाणकः पिण्डपदान्निरुप-धेस्तथैवावगमादिति केशवमिश्राः । हस्तद्वयेन यावदाकृष्यते तत्प्रमाण इति शङ्करमिश्राः । ....मृत्पिण्डोद्धारे असामर्थ्यादिना स्नानाभावे मार्जनमपि कर्तव्य-मेवेति निबन्धकृदिति नित्यकृत्यरत्नमालाटिप्पण्यां म० म० मुकुन्दशर्माणः । पञ्च पिण्डानित्यपि सेतु (नद्यादिमध्ये जलावरोधकमृत्तिकाप्रस्तरादिबन्धः, बाँध इति भाषा) कूपव्यतिरिक्तजलाशय-परं बोद्धव्यम्, मूलोक्त-बौधायनवचनात् ।

पिण्डत्रयोद्धारस्य स्थलमाह निरुद्धासु इति । निरुद्धप्रवाहासु इत्यर्थः। कूपे विशेषमाह-कूपाच्चेति । सेतुकृत्=खननकृदि ति बौधायनधर्मसूत्र विवरणे श्रीगोविन्दस्वामिनः ।

सेतुः=सिनोति बध्नाति जलमिति षिञ् बन्धने सितनिगममसीति औणादिकस्तुन् । क्षेत्रादेरालिरित्यमर इति शब्दकल्पद्रुमः । एतत्कोशबलात् जलावरोधकबन्ध एवार्थः प्रतीयते । एवञ्च सेतुकृतनिरोधविशिष्टायां नद्यां स्नायादेव नहि । स्नायाच्चेत् त्रीन् पिण्डान् उद्धृत्यैव । अन्यथा स्नानकर्तुः स्नानतर्पणादिपुण्यांशभागी सेतुकृद्भवेत्। पुण्यकर्त्ता च सेतुकृत्पापांशभाग्भवति, निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते इति मनुवचनानत् ।

नद्यादिषु पिण्डोद्धारं विनैव स्नानमनुज्ञायते । यथा याज्ञवल्क्ये-

**पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिणि ।**
**स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥ इति**

साक्षात्परम्परया वा समुद्रगाः स्रवन्त्यो नद्यः, देवखातं देवनिर्मितं पुष्करादि, उदकप्रवाहा(भिघातकृतम् ।) निपात-कृत्सजलो महानिम्नप्रदेशो ह्रदः, पर्वताद्युच्चप्रदेशात्प्रसृतमुदकं प्रस्रवणम्, एतेषु पञ्चपिण्डानुद्धरणेनैव स्नायात् । एतच्च नित्यस्नानविषयमिति तन्मिताक्षरा । देवखातः=नदीषु देवखातेषु इति मनुव्याख्यायां सूर्यादिदेवसमीपखात इति ग्रन्थकारः । देवखातः= शिवलिङ्गसमीपस्थः खातः

**शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ।**
**शिवगङ्गेति विख्यातं ( सा ज्ञेया ) तत्र स्नात्वा दिवं व्रजेत् ॥**

इति भविष्यपुराणात् । देवसम्बन्धितया प्रसिद्धः खातो देवखातः, यथा देवह्रदादिरिति केचिदित्यपि छन्दोगाह्निके ग्रन्थकारः । देवनिर्मितं खातं देव खातमिति तु वीरमित्रोदयः ।

तत्र प्राञ्च इति । तत्र=परकीयजलाशयतः पञ्चपिडोद्धारप्रसङ्गे । अत्र 'प्राञ्चः' इति पदेन रत्नकरण्डिका(निबन्ध)कारो द्रोणः, मिताक्षराकारो विज्ञानेश्वरश्च गृह्यते । रत्नकरण्डिकायाः पाण्डुलिपेः तिथिः-११३२-३३ ई० वर्तते । तत्र प्रतिपादितं मतं तत्खंडनं च यथा-''रत्नकरण्डिकायान्तु प्रतिष्ठितस्य सर्वसत्वोपयोगेन त्यागात् परस्वत्वनिवृत्तेर्न तत्र पिण्डोद्धारः किन्त्वप्रतिष्ठितमात्रपरमित्युक्तं, तन्न,

**( परकीयनिपानेषु न स्नायाद्धि कदाचन ।**
**निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन युज्यते ॥**

इतिमनुविरोधात् । अप्रष्ठितपानीयेष्वपेयं सलिलं विदुः ( भवेत्) इति विष्णु-निषेधादिति श्रीदत्तोपाध्यायकृतछन्दोगाह्निके । पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु (आ० १५९) इति याज्ञवल्क्यव्याख्यायां मिताक्षरा यथा-परवारिषु=परसम्बन्धिषु सर्वसत्वोद्देश्येनात्यक्तेषु तडागादिषु पञ्च पिण्डाननुद्धृत्य न स्नायात् । अनेन आत्मीयोत्सृष्टाभ्यनुज्ञातेषु पिण्डोद्धारमन्तराऽपि स्नानमभ्यनुज्ञातमिति ।

प्राञ्चस्तु–व्यवस्थामेवं कुर्वते यत्, अप्रतिष्ठितमात्रे=यज्ञादिसंस्काररहिते एव तड़ागादिजलाशये पिण्डोद्धारः=मृत्तिकायाः जलस्य वा प्रक्षेपः (करणीयः), तस्यैव=तादृशस्यैव परकीयत्वात्=सकलजीवनिमित्तमुत्सर्गाभावेन निपानकर्त्तुरेव स्वत्वस्य सत्वादिति; तन्न युक्तियुक्तमिति हरिहरादयः, अप्रतिष्ठित-तड़ागादेरपामशुद्धत्वेन मूत्रसमकत्वेन वा ताभिः स्नानस्यैवायोग्यत्वात् । परकीय धनस्य जलरूपस्योपयोगचौर्यकर्मजन्यप्रत्यवायापत्तेश्च । मन्वादिभिः परकृततड़ागकूपादेरेव परकीयत्वेन बोधनाच्च । अतएव परकीयनिपानेषु स्नायान्नैव कदाचन इति मनु (४।२०१) वचनमुपक्रम्य परकीयम्=परकृत-मात्रम् । तच्च प्रतिष्ठितमप्रतिष्ठितञ्च अविशेषेण परकृतानिति पैठीनसि-बौधायन-वचनानुसारादिति कल्पतरुरपि ।

एतेन प्रतिष्ठितेषु परकृतेषु निपानेषु पञ्चपिण्डाद्युद्धारः, स्वकृतेषु न, अप्रतिष्ठितन्तु स्वकीयं परकीयञ्च वर्ज्यमैवेति सिद्धम् ।

अत्र छन्दोगाह्निके ग्रन्थकारो यथा—तत्र चाकृत्रिमालाभे कृत्रिमजलाशये पञ्च पिण्डानुद्धृत्य स्नायात् । बद्धे तु त्रीन् पिण्डानुद्धृत्य स्नायात् । तदसम्भवे नद्याद्युद्धृतजलैः स्नायात् । तदसम्भवे तु त्रीन् घटानुद्धृत्य कूपाद्युद्धृते र्जलैः स्नायात् । स्वकारितेषु मृत्पिण्डोद्धारो नास्ति इति ।

## [ हिन्दी टीका ]

प्रथम तो दूसरे के खुदाये जलाशय (तालाब आदि) में स्नान नहीं करना चाहिए। यदि नदी आदि के अकृत्रिम जल में स्नान करना संभव न हो सके तो बेल के बराबर या दोनों हाथों से जितनी कि निकल सके मिट्टी के पाँच पिण्ड (लौंदे) बाहर फेककर स्नान करें । मनु ने भी कहा है कि मिट्टी के पाँच लौंदे निकाल कर ही दूसरे के जलाशय में स्नान करे । अन्यथा वैसे ही स्नान करने पर जलाशय खुदाने वाले के (चतुर्थांश) पाप से लिप्त होता है ।

उपर्युक्त पाँच पिण्ड फेकने का नियम सेतु (बाँध) और कुएँ से अन्य जलाशयों में है; क्योंकि बौधायन का कहना है कि नदी को बाँध देने पर रुके जल में स्नान नहीं करना चाहिए क्योंकि स्नान करने वाले के पुण्य का भागी बाँध बाँधनेवाला हो जाता है । अतः प्रथम तो वहाँ स्नान ही न करें । यदि कारण वश करें तो मिट्टी का तीन पिण्ड फेककर ही । इसी तरह दूसरे के कुएं से स्नानके

पाठ (१) भिघातकृतः । (२) गर्तः ।

पक्षमें तीन घड़ा पानी फेककर ही स्नान करें। याज्ञवल्क्य के वचनानुसार नदी, देवखात (देवनिर्मित खात-प्रकृतिजात-तालाब, या सूर्यादि देव के समीप खुदा तालाब, अथवा शिवलिङ्ग आदि के आगे में स्थित तालाब, कुएँ आदि का जल जिसे शास्त्रानुसार शिवगङ्गा कहते हैं और जहाँ स्नान करने से स्वर्गप्राप्ति होती है) कुण्ड तथा झरनों में यह मिट्टी का पिण्ड फेकना आवशक नहीं। यह पिण्डोद्धार का नियम नित्य स्नान के विषय में ही है, न कि शौच स्नान में भी।

यहाँ प्राचीनों (रत्नकरण्डिका-निबन्धकार द्रोण तथा याज्ञवल्क्यस्मृतिटीका मिताक्षराकार विज्ञानेश्वर आदि) का कहना है कि मिट्टी के पाँच पिण्डों के फेकने का नियम यज्ञादि संस्कारों से रहित (अप्रतिष्ठित) तालाब आदि जलाशय के लिए ही है क्योंकि सकल जीव के निमित्त उत्सर्ग न होने के कारण खुदवाने वाले का ही उस पर अधिकार होता है। अतः वास्तव में वही परकीय (दूसरे का) होता है। परन्तु यह मत ठीक इसलिए नहीं कि यागसंस्कार से रहित तालाब आदि जलाशय का जल स्वतः अशुद्ध (मूत्रसमान) होने के कारण उससे स्नान होने का प्रश्न ही नहीं। दूसरी बात, वेसे यज्ञसंस्कारहीन तालाब आदि जल के उपभोग करने में दूसरे का धन होने के कारण चोरी करने से होने वाला पाप भी होगा।

तीसरी बात, मनु आदि की स्मृतियों में दूसरे से खुदाए गये जलाशय को ही परकीय माना गया है। निष्कर्ष में सिद्ध यह होता है कि याग से सम्पन्न दूसरे के जलाशयों से मिट्टी के पाँच लौं दे फेक दें और अपने द्वारा खुदाए गए जलाशय से नहीं किन्तु विना योग का जलाशय अपना हो चाहे दूसरे का वह स्नान आदि क्रियाओं के लिए त्याज्य ही है।

इसी तरह सारांश में इसी ग्रन्थकार के अपने ग्रन्थ छन्दोगाह्निक के अनुसार ज्ञात है कि अकृत्रिम (नदी आदि) का जल नहीं मिले तो खुदाये गये तालाब आदि में पाँच पिण्ड फेककर, बाँध बँधे हुए में स्नान करना पड़े तो तीन पिण्ड फेककर, इनमें भी संभव नं हो तो नदी के निकाले हुए जल से, यह भी सम्भव न हो तो तीन घड़ा पानी कुएँ से फेककर कुएँ के निकाले हुए जल से (क्योंकि कुएँ में प्रवेश कर स्नान करना अतीव निषिद्ध है) स्नान करना चाहिए। अपने द्वारा खुदाये जलाशय से पिण्डोद्धार की आवश्यकता नहीं।

[ मूलम् ]

योगियाज्ञवल्क्यः-

अग्राह्या आगता[1] आपो नद्याः प्रथमवेगिकाः।
प्रक्षोभिताश्च केनापि याश्च तीर्थाद् विनिस्सृताः॥

तीर्थाद् विनिस्सृताः=गङ्गादिप्रवाहाद्[2] विच्छिन्नाः।

पाठ० (१) स्त्वागताः। (२ पु०) प्रवाह इति ह० पु०।

तथा—

पादेन पाणिना वाऽपि यष्ट्या[1] वस्त्रेण[2] चोदकम् ।
[3]नापहन्यान्नाप[4]वदेन्न च प्रक्षोभयेद् बुधः ॥

## [ संस्कृत टीका ]

अग्राह्या इति । नद्या इति । प्राक्शुष्काया इति कल्पतरुः। प्रथमवेगिकाः =शुष्कनद्यां प्रथमप्रवाहरूपाः । केनापि प्रक्षोभिताः=आविलीभूता इत्याचारचिन्तामणिः। प्रक्षोभिताः =महिषादिना कलुषीकृताः । तीर्थाद् विनिस्सृताः=तीर्थं परित्यज्य गताः तीर्थत्वेनाप्रत्यभिज्ञायमानाः इति कल्पतरुः। गङ्गाप्रवाहाद् विच्छिन्ना इत्यन्ये इत्याचार-विवेकः । गंगादिप्रवाहविच्छन्ना इति ग्रन्थकारः । अत्र प्रथमवेगिका इति शुष्कनद्यभिप्रायकम् । प्रथमवेगस्यापवित्र- द्रव्यसम्बलनसम्भवाद् दृष्टार्थोऽयं निषेध इति म. म. रघुनाथः । याः आपः=जलानि । ताः अग्राह्याः=स्नानादौ न व्यवहार्याः ।

तथेति । बुधः=विद्वान् । पादेन=चरणेन । पाणिना=हस्तेन । यष्ट्या=वेण्वादिदण्डेन वस्त्रेण च उदकम् न अपहन्यात्=न वृथाताडनं कुर्यात् । न अपवदेत=न निन्देत् । नच प्रक्षोभयेत्=नाच्छाद्य मलिनीकुर्यात् । प्रक्षोभणमाच्छाद्य मलिनीकरणमिति नित्यकृत्यार्णवः ।

## [ हिन्दी टीका ]

सूखी नदी में पहली बार प्रवाह रूप से आया हुआ किसी भैस आदि के द्वारा गन्दा किया हुआ तथा गङ्गा आदि नदियों से विच्छिन्न (अलग) होकर आया हुआ जल स्नान आदि कर्म में ग्राह्य नहीं है ।

पैर, हाथ, डंडा, तथा वस्त्र से निरर्थक जलताड़न न करें, न उसके प्रति अपशब्द बोलें, और न ऐसे किसी वर्तन आदि से ढककर ही देर तक रखें जिससे उसमें गन्दगी आवे ।

---

पाठ० (१) यद्वा । (२) शस्त्रेण । (३) न हन्यात् । (४) नैव वादेच्च ।

[ मूलम् ]

शङ्खलिखितौ-

**नाप्सु मेहेत,[१] नोद्घर्षणं कुर्यात् ।**

उद्घर्षणं = गात्रमलप्रक्षालनम् ।

[ संस्कृत टीका ]

नाप्स्विति । अप्सु=जलमध्ये । न मेहेत न शुक्रमूत्रोत्सर्गं कुर्यात् । नवा उद्धर्षणम्=गात्रमलप्रक्षालनम्=अङ्गलग्नमलापकर्षणमिति यावत्। कुर्यात् ।

[ हिन्दी टीका ]

जल के मध्य में न तो वीर्यपात या पेशाब ही करें और न शरीर का मल ही धोयें ।

[ मूलम् ]

बौधायनः-

**आपो देवगृहं गोष्ठं यत्र[२] सन्ति च ब्राह्मणाः ।**
**अप्रक्षाल्य पादौ नान्तः प्रवेष्टव्यम् ।**

[ संस्कृत टीका ]

आप इति । आपः=जलानि । देवगृहम्=देवालयः । गोष्ठम्=गोशाला। गोष्ठं गोस्थानकमित्यमरः । यत्र च ब्राह्मणाः सन्ति, तत्र पादौ अप्रक्षाल्य अन्तः=मध्ये न प्रवेष्टव्यम् किन्तु पादौ प्रक्षाल्यैव प्रवेष्टव्यमिति भावः । एतच्च प्रक्षाल्यं पाणिपादं कुशोपग्रह इति कात्यायनोऽपि संवदति ।

[ हिन्दी टीका ]

जल, देवालय तथा ब्राह्मणों की सभा में पैर धोकर ही जावें ।

---

पाठा० ( १ ) मेहेन्नो । ( २ ) आपो देवगृहं गोष्ठं ब्राह्मणाः सन्ति यत्र च । तत्र पादावप्रक्षाल्य नैनान्तः प्रविशेद् बुधः'' इति नित्यकृत्यार्णवे पाठः । आपो देवगृहं गोष्ठं यत्र च ब्राह्मणास्तत्राप्रक्षाल्य पादौ नान्तः प्रवेष्टव्यम्' इत्याचारचिन्तामणौ पाठः।

[ मूलम् ]

देवलः-

न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतम् ।
नान्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वातयनेषु च ॥

[ संस्कृत टीका ]

न नदीति । नदीषु=नदीं प्रतीति भावः 'नदी' इति न ब्रूयात् किन्तु 'गङ्गा' इत्याद्येव ब्रूयात् । एवं पर्वतेष्वपि 'विन्ध्य' इत्याद्येव ब्रूयान्न पर्वत इति । तत्रस्थः = नदीपर्वतस्थः सन् । अन्यत् = नद्यन्तरं पर्वतान्तरञ्च न प्रशंसेत् = न श्लाघयेत् । आयतनं देवस्य, तीर्थादिसाहचर्यात् । एवञ्च, आयतनेषु=देवालयेषु स्थितः न देवालयान्तरम्, तीर्थेषु स्थितश्च तीर्थान्तरं न प्रशंसेत् ।

[ हिन्दी टीका ]

नदियों के प्रति "नदी" ऐसा न कहकर "गङ्गा" इत्यादि नाम से ही तथा पर्वत के प्रति भी "विन्ध्य" इत्यादि नाम से ही कहना चाहिए । नदी या पर्वत पर स्थित हो कर क्रमशः दूसरी नदी या दूसरे पर्वत की प्रशंसा भी नहीं करनी चाहिए ।

इसी तरह देवालय या तीर्थ में स्थित होकर अन्यदेवालय या अन्य तीर्थ की प्रशंसा नहीं करनी चाहिए ।

[ मूलम् ]

अङ्गिराः

विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकम् ।
असंख्यातन्तु यज्जप्तं तत्सर्वं निष्फलं[१] भवेत् ॥

हारीतः-

न स्नानवर्णकयोरग्रं प्रयच्छेतान्यत्र देवगुरुब्राह्मणेभ्यः ।

[ संस्कृत टीका ]

विना दर्भैरिति । दर्भैः=कुशैर्विना यत्स्नानम् । उदकम्=जलं विना यद्दानम् । असंख्यातम्=गणनाहीनञ्च । अत्र असंख्यातमिति लक्षादिसंख्यानियमेन

यत्रारम्भस्तदभिप्रायकमित्याहुरिति रघुनाथः । यद् जप्तम्= जपविषयीभूतो मन्त्रः । तत्सर्वम् निष्फलम्=निष्प्रयोजनं भवेत् ।

न स्नानेति । "स्नात्यनेनेति स्नानं = स्नानोपकरणं कुशादि । वर्णकम् = वर्णकरत्वादुद्वर्तनादिसुगन्धिद्रव्यमिति कल्पतरुः । वर्णकम्=अनुलेपनमिति श्रीदत्त इति वीरमित्रोदयः । "वर्णकं स्याद् विलेपनमि" त्यमरश्च । एवञ्च स्नान वर्णकयोः= स्नानोपकरणघृष्टचन्दनयोः । अग्रम्=उपरिभागः-प्रथमभाग इति यावत् । पुरोऽधिकमुपर्यग्राणीत्यमरः । देवगुरुब्राह्मणेभ्यः = देवः = विष्ण्वादिः । गुरुः=पित्रादिः । ब्राह्मणः=विप्रः । एभ्यः अन्यत्र न प्रयच्छेत्=न दद्यात् ।

कर्त्तुः स्वस्य तु कुशचन्दनधारणं विना कर्मायोग्यतया कर्मप्रयोजकत्वेन स्वकर्तृकधारणस्य दानपदवाच्यत्वाभावेन च स्वयं पूर्वं तद्धारणेऽपि न क्षतिरिति मन्तव्यम् ।

[ हिन्दी टीका ]

बिना कुश का स्नान, विना जल का दान तथा विना गिनती किया गया जप ये सभी निष्फल होते हैं । यहीं हारीत का कथन है कि स्नानोपकरण कुश आदि तथा चन्दन (आदि सुगन्धित द्रव्य) का प्रथम भाग विष्णु आदि देवता, पिता आदि गुरु एवं ब्राह्मण से अन्य को न दें । विना कुश चन्दन आदि धारण के कर्म करने योग्य न होने के कारण पूर्व में स्वयं धारण से कोई विरोध नहीं । क्योंकि अपने से अपने लिए लेना देना दान नहीं कहलाता है ।

## स्नाने वर्ज्यानि

[ मूलम् ]

**जावालिः—**

त्रयोदश्यां तृतीयायां दशम्यां च विशेषतः ।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन ॥

यथासंख्यमत्र ।

[ संस्कृत टीका ]

त्रयोदश्यामिति । त्रयोदश्यां शूद्रः, तृतीयायां वैश्यः दशम्यां क्षत्रियः । कथञ्चन=कदाचिदपि स्नानं नाचरेत् । किन्तु ब्राह्मणस्तु सदैव स्नायादिति

भावः । अयञ्च निषेधः रागप्राप्तस्नानविषयक एव । यथा चात्र निर्णये- ''यथासंख्यमत्र, रागप्राप्तस्नाननिषेधोऽयम् । वैधनिषेधे विकल्प-पर्युदासयोरन्यतरप्रसङ्गादिति श्रीदत्त इति, कतिचिद्वचनान्युद्धृत्य ''एवञ्च सकलवचनैकवाक्यतया रागप्राप्तं वारुणस्नानं दशम्यादिषु क्षत्रियादीनां निषिद्धमिति सिध्यति । कल्पतरुश्रीदत्तयोरप्येवं सति अविसंवाद एव इतीति च वीरमित्रोदयः । वैधस्नाननिषेधोऽयमिति प्राञ्च इत्याचारचिन्तामणिः । अत्र त्रयोदश्यामित्यादि वाक्यं स्नानविशेषाभिप्रयाकम्, न तु नित्यादिविषयकम्, अतएवोक्तं-'विशेषत' इतीत्याभातीति रघुनाथः । पूर्ववचनवत्-

स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषां गते ।
सप्तजन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम् ॥

इति प्रचेतोवचनम्,

दर्शे स्नानं न कुर्वीत मातापित्रोः सुजीवतोः ।

इति योगियाज्ञल्क्यवचनम्,

गयास्नानं कुहूस्नानं तिलैस्तर्पणमेव च ।
न जीवित्पितृकः कुर्यात्,.......

इत्यादि (स्मृति) वचनञ्च रागप्राप्तस्नानपरं बोध्यम् ।

[हिन्दी टीका]

त्रयोदशी तिथि में शूद्र, तृतीया में वैश्य, तथा दशमी में क्षत्रिय कभी भी स्नान न करे । यह वचन रागप्राप्त स्नान का निषेधक है, ऐसा निर्णय स्वयं ग्रन्थकार ने ही अपने अन्य ग्रन्थ (छन्दोगाह्निक) में किया है ।

## स्नानमितित्तानि

[मूलम्]

आपस्तम्बः-

अस्पृश्यस्पर्शने वान्ते[१] अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्य[२] विवर्जितम् ॥

---

पाठ० (१) वान्त (२) पैत्रं इति ह. पु. ।

दैवपित्र्यविवर्जितमिति

**नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।**
**तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम् ॥**

इति ब्रह्मपुराणवचनात्[1] सामान्यतः प्रसक्तस्य तर्पणस्य[2] व्यावृत्तिः ।

[ संस्कृत टीका ]

अस्पृश्येति । अस्पृश्यस्पर्शने = अस्पृश्यचाण्डालादीनां स्पर्शे जाते । वान्ते=पर्युषितस्य वमने जाते । अश्रुपाते=निधनादिश्रवणान्नेत्रजलनिपाते । क्षुरे = श्मश्र्वादिकचकर्तने कारिते । भगे =ऋतुकाले मैथुने कृते अर्थाद् ऋतुकालिकमैथुनशालिनः पुरुषस्य कृते ।

**ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ।**
**अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥**

इति शातातपवचनात्, स्त्रियाः स्नानानपेक्षणाच्च । दैवपित्र्यविवर्जितम्= देवर्षिपितृतर्पणरूपाङ्गरहितम् । नैमित्तिकम् = निमित्तविशेषेण जायमानम् । स्नानम्= मज्जनम् कार्यम् ।

दैवपित्र्यविवर्जितमित्यनेन प्रकृतनैमित्तिकस्नाने, ''नित्यं नैमित्तिकं काम्यमि'' ति ब्रह्मपुराणीयमूलोक्तवचनानुसारं सामान्यतः प्राप्तस्य देवर्षि-पितृतर्पणस्य व्यावृत्तिः = प्रतिषेधः सूच्यते । एतेनात्र स्नानधर्माणां कुशग्रहणादीनामावश्यकता सिद्धा ।

अत्र छन्दोगाह्निके ग्रन्थकारो यथा—नित्यम् = अहरहः क्रियमाणं, प्रातः स्नानञ्च । अहः स्नानमात्रपरत्वेऽपि नित्यपदस्य, प्रातःस्नाने तर्पणम् (अङ्गम्) यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः इतिवाक्यात्स्नानस्याहःस्नान-धर्मग्राहकत्वात् उभयपरत्वे स्नानपरत्वे सुतराम् । नैमित्तिकम्= सूर्यग्रहादावावश्यकं कर्तव्यम् । न तु चाण्डालादिस्पर्शनिमित्तं शङ्खोक्तम् । तत्र

**श्मश्रुकर्माश्रुपातञ्च मैथुनं छर्दनं तथा ।**
**अस्पृश्यस्पर्शनं कृत्वा स्नायाद् वर्ज्या जलक्रिया ॥**

---

पाठ० (१) वाक्यात्' इति च ह. पु. (२) क्वचित् तर्पणस्य चेति पाठः ।

इत्यादि ब्रह्मपुराणे तर्पण-निषेधात् । काम्यम्=स्वर्गादिफलकं तीर्थादिस्नानम् । नतु पुष्यस्नपनादि काम्यं शङ्खलिखितोक्तम् । तस्य लौकिकस्य तक्षसूत्राधिकरणन्यायेनालौकिकेतिकर्तव्यतासम्बन्धविरहादिति ।

[हिन्दी टीका]

चाण्डाल आदि अस्पृश्य के स्पर्श होने, पूर्वदिन में खाये अन्न आदि का वमन होने, मृत्यु आदि पर आँसू गिराने, दाढ़ी मूंछ आदि केश कटाने तथा ऋतुकाल में स्त्री प्रसंग करने के बाद स्नान करना चाहिए ।

यहाँ यद्यपि नित्य (प्रातः तथा मध्याह्न) स्नान, नैमित्तिक (सूर्यग्रहण आदि में होने वाला आवश्यक स्नान, न कि शंखप्रोक्त चाण्डाल निमित्तक भी) काम्य-स्वगादि फलक तीर्थादि स्नान (न कि शंख प्रोक्त पुष्य स्नानादि भी) इन तीनों ही स्नानों के बाद उसका अङ्ग तर्पण भी करना चाहिए क्योंकि उक्त ब्रह्मपुराण के कथनानुसार सामान्यतः देवर्षि एवं पितृतर्पण होना प्राप्त था किन्तु इनके निषेध के लिए ही मूलवचन में दैवपित्र्यविवर्जितम् यह स्नान का विशेषण दिया गया है ।

[मूलम्]

यमः—

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

अभ्युदिते = अशुद्धोद्[१]गारादिना अभिव्यक्ते[२] । एतच्चोत्तरकालस्नानप्राप्त्यर्थम्, अजीर्णावस्थायां निषेधात् । 'अभ्युदिते वान्ते' इति सम्बन्धे पर्युषिते[३] वान्ते इति विशेषः । दुर्जनोऽत्र चाण्डालादिः[३क] मात्रपदेन सर्वाङ्गव्यावृत्तिः[४], तस्मादप्रायत्यनिमित्ते[५] स्नाने [६]मज्जनमात्रेण शुद्धिः[७]।

[संस्कृत टीका]

अजीर्ण इति। अभ्युदिते=अशुद्धोद्गारादिना अभिव्यक्ते । "उद्गारः = उद्वमनम् इत्यमरः । शब्द इति भरतः । कण्ठगर्जनमिति जटाधरः । ढेकुर इति भाषा । तत्तु नागवायुकर्म इति श्रीधरस्वामी" इति शब्दकल्पद्रुमः ।

पाठ० (१) अशुद्धोद्भरादिना / अशुद्धोद्धारादिना । (२) व्यक्ते । (३) पर्युषितवान्त इत्यर्थः । (३क) दुर्जनश्चाण्डालादिः । (४) निवृत्तिः । (५) निमित्तके । (६) निमज्जन । (७) शुद्धिरिति ।

ढेकार इति मैथिली, डकार इति तु हिन्दी राजस्थानी च। अजीर्णे=अपरिपक्वे भुक्ताऽन्ने (सति)। एतच्चोत्तरकालस्नानप्राप्त्यर्थम्, अजीर्णाऽवस्थायां निषेधात्। नातुरो, न भुक्त्वा, नाजीर्णेऽन्ने........स्नायादिति हारीतवचनादिति भावः। अथवा 'अजीर्णे' इत्यनेन अजीर्ण(ता) मात्रस्य स्नाननिमित्तत्वमस्तु। अभ्युदिते इत्यस्य वान्ते इत्यत्र सम्बन्धः। एवञ्च अभ्युदिते वान्ते इत्यनेन पर्युषितवमनस्य स्नाननिमित्तत्वं प्रतिपादितम्। अतएव मनुः (५।१४४)—

**वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्।**

**आचामेन्नैव भुक्त्वाऽन्नं स्नानं मैथुनिनः स्मृतम्॥ इति**

भुक्त्वाऽन्नं वान्त इत्यनुषङ्गः। तेन सद्योवमने आचमनमात्रम्। एवकारेण वान्त इत्यनेन सामान्यतः प्रसक्तस्य स्नानस्य व्यावृत्तिरितिवीरमित्रोदयः। मैथुनिन इति ऋतुमतीविषयमिति कुल्लूकभट्टः।

श्मश्रुकर्मणि=श्मश्र्वादिकचकर्तने कारिते। मैथुने इति। ऋतुकाले इति शेषः। दुःस्वप्ने=अनिष्टस्वप्नदर्शने। दुर्जनस्पर्शे=चाण्डालादिस्पर्शे च स्नानमात्रं विधीयते। अत्र मात्रपदोपादानाद् वक्ष्यमाणानां स्नानधर्माणां तर्पणस्य च व्यावृत्तिर्जायते। तस्मादपवित्रतानिमित्तके स्नाने मज्जनमात्रेण शुद्धिर्ज्ञेया।

नच अस्पृश्यस्पर्शने वान्ते इत्याद्यापस्तम्बेन तत्र तर्पणमात्रनिषेधात्तदैक-वाक्यतया अजीर्ण इत्यादि यमवचनेऽपि मात्रपदेन तर्पणमेव व्यावर्त्यतामिति वाच्याम्। प्रकृतयमवचने मात्रपदेन सामान्यतः स्नानधर्मे व्यावर्तमानेऽपि "नित्यं नैतित्तिकं काम्यमि" त्यादिपुरोदीरित-ब्रह्मपुराणवाक्ये प्रसक्तस्य तर्पणस्य आपस्तम्बेन व्यावर्तनात्। एवञ्च ब्रह्मपुराणे नैमित्तिकपदं राहूपरागादिनिमित्तपरम्। आचारोऽप्येवमेवेत्यलमिति (प्रायः आचारादर्श-व्याख्यात्मको) वीरमित्रोऽपि।

## [ हिन्दी टीका ]

खट्टी खट्टी उवकाई (मैथिली में अनचुकारी, राजस्थानी में अडकार) या डकार (मैथिली में ढेकार) आने आदि से यदि खाया हुआ अन्न अजीर्ण (अपच) प्रतीत हो, या पहले दिन में खाये हुए (बासी) अन्न आदि का वमन हो जाय तो अन्न पच जाने, दाढ़ी मूंछ आदि केश कटाने, ऋतुकाल में स्त्री से सम्भोग करने,

अनिष्ट स्वप्न देखने, तथा चाण्डाल आदि का स्पर्श होने पर अपवित्रता हटाने के निमित्त केवल स्नान कर लेना चाहिए, न कि स्नान के समय आवश्यक कुश आदि का ग्रहण, मन्त्रविशेष पाठ और न पितृतर्पण ही आवश्यक होंगे ।

यदि यहाँ यह आशङ्का करें कि पूर्वोक्त अस्पृश्यस्पर्शने' इत्यादि आपस्तम्ब के वचन से केवल तर्पण का ही निषेध किया गया है तो अजीर्ण इत्यादि यमवचन में भी उस वचन के साथ एकवाक्यता कर, मात्र पाठ से केवल तर्पण का ही प्रतिषेध होना चाहिए । इसका उत्तर है कि प्रकृत यमवचन में मात्र पद के उपादान से सामान्यतः स्नानधर्म (आगे कहे जाने वाले कुशग्रहण आदि) मात्र का प्रतिषेध होने पर भी पूर्वोक्त ''नित्यं नैमित्तिकं काम्यम्'' इस ब्रह्मपुराण के कथनानुसार प्राप्त तर्पण का निषेध आपस्तम्ब वचन से हो जाता है । सारांश में केवल स्नान का विधान होता है न कि स्नान के लिए निर्दिष्ट धर्मोंका अनुष्ठान भी आवश्यक होगा। (इसीलिए ग्रन्थकार श्रीदत्तोपाध्याय ने व्याख्या लिखी है– मात्रपदेन सर्वाङ्गव्यावृत्तिः, तस्मादप्रयत्यनिमित्ते स्नाने मज्जनमात्रेण शुद्धिः) । अब ब्रह्मपुराण का नैमित्तिक पद सूर्यचन्द्रग्रहण आदि के समय होने वाले स्नान का बोधक समझना चाहिए । शिष्टजानों का आचार भी ऐसा ही है ।

# अशुचिस्पर्शे स्नानम्

[ मूलम् ]

गौतमः–

**पतित-चाण्डाल[1]-सूतिकोदक्याशवस्पृष्टि-तत्स्पृष्ट्युप[2]स्पर्शने [3]सचैलोदकोपस्पर्शनाच्छुद्धो भवति ।**

अत्र च शवस्पर्शिनस्तत्स्पर्शिनश्चस्पर्शे स्नान[4]विधानाद–

**उपस्पृश्याशुचिस्पृष्टं तृतीयं कोऽपि मानवः ।**
**हस्तौ पादौ च तोयेन प्रक्षाल्याऽऽचम्य शुद्धयति ॥**

इति देवलवचनं पतितादिस्पर्शि-स्पर्शे संकोचनीयम् । तत्स्पृष्टिपदं पतितादि-स्पर्शिनो[5] ऽप्याहेति केचित् । तदयुक्तम् । द्वन्द्व[6] गौरवात् । एकद्वन्द्वे च[7] सन्निहितपरत्वमेव भेद[8]: । उदकोपस्पर्शनम् स्नानम् ।

पाठ० (१) लादि । (२) तत्स्पृष्टि-उप । (३) स चेलो । (४) स्नानमात्र । (५) स्पर्शिनमप्याहे । (६) द्वन्द्वद्वयं गौरवापत्तेः । (७) क्वाचित् = (च) नास्ति । (८) क्वचित् भेदः इति पाठो नास्ति ।

[ संस्कृत टीका ]

पतितेति । पतितः=ब्रह्महादिः । चाण्डालः=ब्राह्मण्यां शूद्रेण जातः । सूतिका=प्रसूतिका, दशाहाभ्यन्तरे । उदक्या=रजस्वला । शवस्पृष्टी = मृतशरीरस्पर्शी । तत्स्पृष्टी=शवस्पृष्टिनः स्पर्शकर्त्ता, एतेषामितरेतरयोगद्वन्द्वे पतित-चाण्डाल-सूतिकोदक्या-शवस्पृष्टि-तत्स्पृष्टिनस्तेषामुपरस्पर्शने= स्पर्शे । द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमादुपस्पर्शनपदस्य पतितादिभिः सर्वैः सहान्वयः । सचैलोदकोपस्पर्शनात् = देहधारितवस्त्रेण सहैव स्नानात् । शुद्धो भवति = पूतो जायते । अत्र उदकोपस्पर्शनम् = स्नानम्,

**शवस्पृशमथोदक्यां सूतिकां पतितं तथा ।**
**स्पृष्ट्वा स्नानेन शुद्धिः स्यात्सचैलेन न संशयः ॥**

इत्याङ्गिरोवाक्यैकवाक्यत्वात् ।

ननु शवस्पर्शिनस्तत्पर्शिनश्च स्पर्शे उक्तगौतमवचनं स्नानं प्रतिपादयति । किन्तु-

**उपस्पृश्याशुचिस्पृष्टं तृतीयं वाऽपि मानवः ।**
**हस्तौ पादौ च तोयेन प्रक्षाल्याऽचम्य शुद्ध्यति'' ॥**

इति देवलवचनम्-''अशुचिः=पतितादिशवान्तः । तत्स्पृष्टम्= एतदन्यतमस्पृष्टम् (१ प्रथमम्), एतत्स्पृष्टम्= (२ द्वितीयम्), पतितादिशवान्यतमस्पृष्टस्पृष्टस्पर्शिनम् (३ तृतीयम्), उपस्पृश्य = स्पृष्ट्वा, स्पर्शकर्ता चतुर्थोऽयं मानवः । तोयेन हस्तौ पादौ प्रक्षाल्य आचम्य=आचमनं कृत्वा। शुद्ध्यति = उक्तस्पर्शनिमित्तकाशौचाद् विशुध्यती'' त्यर्थानुसारमाचमनकरणोत्तरमेव शुद्धिं बोधयति । एवञ्च स्नानविधायकगौतमवचनेन सह केवलाचमनविधायकं प्रकृतदेवलवचनं विरुध्यते । एतदुभय वचनाभ्यामुक्ते शवस्पर्शिनस्तत्स्पर्शिनश्च स्पर्शस्थलद्वये स्नानाचमनयोः युगपदेव प्राप्तेः । एतदन्यत्र पतितादिस्थले त्वेतत्स्पर्शे गौतमवचनात्स्नानस्य, पतितादिस्पृष्टस्पर्शस्थले देवलवचनादाचमनस्य च प्राप्त्या विरोधाभावाच्चेति चेन्न । उक्तगौतमवचनेन प्रतिपदोक्ततः शवस्पर्शिनस्तत्स्पर्शिनश्च स्नान-विधानादेकवाक्यत्वानुरोधेन देवलवचनस्था ''शुचिस्पृष्ट'' पदस्य शवस्पर्शि-

शवस्पर्शिस्पर्शि (एतदुभय) भिन्न पतितादिस्पर्शिपरत्वेन नेयतया (फलतः) देवलवचनस्यास्य पतितादिस्पर्शिस्पर्शे एव आचमनबोधकतयाऽभ्युपगन्तव्यात्। एतदभिप्रायेणैव ग्रन्थकारेणोक्तम्–"देवलवचनं पतितादिस्पर्शिनस्तत्स्पर्शिनो वा स्पर्शे, गौतमवचनात्स्नानस्य सिद्धिः। शवस्पर्शि-स्पर्शि-स्पर्शिनः स्नानार्हस्य स्पर्शे चतुर्थस्य मानवस्य कृते देवलवचनस्थ 'तृतीयं वा' इति पदादाचमनसिद्धिः। पतितप्रदिस्थले तु पतितादिस्पर्शे गौतमवचनात्स्नानं, पतितादिस्पर्शिनः स्नानार्हस्य स्पर्शे देवलवचनस्थ-'अशुचिस्पृष्टमि'ति पदादाचमनञ्च सिध्यतीति सर्वं समञ्जसम्। अतएव अत्राशुचिपदं शवतत्स्पृष्टिभिन्नाशुचिपरम्। शवस्पर्शिनस्तत्स्पर्शिनश्च स्पर्शे स्नानविधानादिति वीरमित्रोदयोऽपि।

एतत्पर्यन्तं यद् व्याख्यातं तन्मैथिलगौडादिनिबन्धनिर्णयानुसारि विद्यते। परमग्रे'केचिदि'त्यनेन वक्ष्यमाणं दाक्षिणात्यनिबन्धसम्मतमते वर्तते। यथा चात्र वीरमित्रोदयः–"इति दाक्षिणात्यनिबन्धाः। गौडमैथिलादिनिबन्धेषु तु दिवाकीर्त्तिमित्यादिमनुवाक्ये तत्स्पृष्टिनमित्यत्र तच्छन्देन शव एव परामृश्यते। पतितेत्यादि गौतमवाक्येऽपि शवस्पृष्टीत्येकं पदं शवस्पर्शकर्तृपरम्, तथा तत्स्पृष्टीत्यपि सन्निकट-शव-स्पृष्टि-स्पर्श-कर्त्तृपरम्। वक्ष्यमाणबृहस्पत्यादिवाक्यैकवाक्यत्वात्। यथाच बृहस्पतिः–

शवस्पृष्टं दिवाकीर्त्तिं चितिं यूपं रजस्वलाम्।
स्पृष्ट्वा प्रमादतो विप्रः स्नानं कृत्वा तु शुद्ध्यति॥ इति।

केचिदिति। गौतमवचने उपात्तं तत्स्पृष्टिपदं पतितादिस्पर्शिनोऽप्याह इति केचित् (स्मृतिचन्द्रिकादिदाक्षिणात्यनिबन्धकर्त्तारः)। अर्थात् पतितादि-शवान्तानामन्यतमस्य स्पर्शे अन्यतमस्पर्शिनः स्पर्शे अन्यतमस्पृष्टस्पर्शिनः स्पर्शे चेत्यर्थः। तेन तृतीयपर्यन्तस्य स्नानं सिध्यति। एतन्मते 'दिवा कीर्तिमि'त्यादिमनु'वचने च दिवाकीर्तिमित्यादिशवान्तानां तत्पदेन परामर्शो भवति।

उभयस्थलेऽपि सामीप्याच्छवस्यैव तत्पदेन परामर्शो भवत्विति तु न वक्तव्यम् एकवाक्योपात्तत्वेन सर्वेषामेव सामीप्यात्तत्पदेन परामर्श-सम्भवात्।

---

टि– (१) अत्र सम्पूर्णवचनं यथा–

"दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति॥
दिवाकीर्त्तिः = चण्डालः।"

अतएवात्रवीरमित्रोदयोऽपि यथा-"नच सन्निहितत्वाच्छवस्यैव तत्पदेन परामर्शोऽस्त्विति वाच्यम्, एकवाक्योपात्तत्वेन सर्वेषामेव सन्निहितत्वात् । स्मृतिचन्द्रिकालिखितस्मृत्यन्तरादप्ययमर्थः प्रतीयते । यथा-शवचण्डाल-पतितसूतिकोदक्या-तत्स्पृष्टिस्पर्शने स्नानमिती" ति ।

तदयुक्तम्=केचिदित्यादिना यत्प्रतिपादितं तद् युक्तिहीनम् । द्वन्द्वद्वयगौरवात् । तथाहि गौतमवचनस्य शवाद्यन्तानामन्यतमस्य स्पर्शे इत्यर्थकरणे पतितश्च चाण्डालश्च सूतिका च उदक्याशवश्चेति पतितचाण्डालसूतिकोदक्याशवाः इत्येको द्वन्द्वः । पतितादिशवान्ताश्च (तेषामन्यतमस्य) स्पृष्टी च तत्स्पृष्टी चेति षष्ठीतत्पुरुषगर्भोऽपरो द्वन्द्वः। एवं द्वन्द्वद्वयापत्त्या गौरवं स्फुटमेव । शवस्पृष्टिपदस्यैकत्वे तु एकद्वन्द्वेनैव निर्वाहो जायते, द्वितीयद्वन्द्वस्यापेक्षैव न भवति । एवं तत्स्पृष्टिपदस्थतत्पदेनापूर्वोपात्तेषु सर्वतः परस्याव्यवधानेनातीव सन्निकृष्टस्य शवस्पृष्टिनः परामर्शो जायते । अतोऽयमपि भेदः= वैशिष्ट्यमेकद्वन्द्वपक्षे भवति । अतएवात्र एकद्वन्द्वे च शवस्पृष्टिरेव सन्निहितः । कुन्द-केतकी-तत्कुसुमानि इत्यादौ कुन्दश्च केतकी च तत्कुसुमञ्चेति विगृह्य एकद्वन्द्वे तत्पदेन केतकीमात्रोपस्थितेः कुन्दकेतक्यौ च तत्कुसुमञ्चेत्येकद्वन्द्वेन द्वन्द्वान्तरविग्रहे तत्पदेनोभयोपस्थितेः। .....

इदन्तु विचार्यते-शवस्पर्शे कथं स्नानप्राप्तिः ? तत्राहुः उदक्या च शवश्च स्पृष्टी च इति विग्रहात् स्पृष्टी चा र्थात् शवस्पृष्टी । वस्तुतः शव स्पर्शे स्नानस्यानेनाप्राप्तावपि न दोषः च्यवनवाक्ये शवं स्पृष्ट्वेतिश्रवणादेव-तल्लाभसम्भवादित्याचारादर्शफक्ककाव्याख्यापि ।

केचिदिति मते "पतितादिशवान्तानामन्यतमस्य स्पृष्टौ, तस्य स्पृष्टौ, उपस्पर्शने=स्पृष्टस्पर्शिनः (उपस्पर्शने) स्पर्शे इत्यर्थस्य वीरमित्रोदये उद्धृतत्वेन एतादृशार्थंस्यैव पतितो=ब्रह्महादिः । चाण्डालसूतिकोदक्याशवाः प्रसिद्धाः । एतेषां स्पृष्टौ, तत्स्पृष्टौ = स्प्रष्टॄणाञ्च स्पृष्टौ, उपस्पर्शने= तदुपस्पर्शने-स्प्रष्टॄणां स्पर्शने च सचैलोदकस्पर्शनाच्छुध्येत् । गौतमीय (सूत्र) वृत्तौ हरदत्त-कृतमिताक्षरायामुल्लेखेन च द्वन्द्वद्वयकृतगौरवं विस्पष्टमेव सन्निहितासन्नि-हितयोरेकानेकयोः परामर्शकृते लाघवगौरवे अपि अपरिहरणीये एव । गौतमवचने तत्पदेन शवस्पर्शिनः एवं-

दिवाकीर्तिमुदंक्याञ्च पतितं सूतिकां तथा ।

शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥

इति मनु (५।८५) वचनेऽपि तत्स्पृष्टिनमित्यत्रत्यतत्पदेन सन्निहितस्य शवस्यैव परमौचित्यात् । अत एवैतन्मन्वर्थमुक्तावल्याम् चाण्डालं, रजस्वलां, ब्रह्महादिकं, प्रसूतां दशाहाभ्यन्तरे, शवं, शवस्पृष्टिनञ्च ावस्पृष्टिनञ्च स्पृष्ट्वा स्न भवति ।

केचित्तु-तत्स्पृष्टिनमितिचाण्डालोदक्यादिभिः सर्वैः सम्बन्धयन्ति । गोविन्दराजस्तु याज्ञवल्क्यवचनाच्छवस्पृष्टिनमेव तत्स्पृष्टिनमाह, नोदकादिस्पृष्टिनम्, तत्राचमनविधानात् । तदाह याज्ञवल्क्यः– (आशौच १।३०)

उदक्याऽशुचिभिःस्नायात् संस्पृष्टैस्तैरुपस्पृशेत् ॥ इति ।

उदक्याशुचिभिः स्पृष्टः स्नानं कुर्यात् । उदक्याशौचिभिः स्पृष्टैः स्पृष्टस्तूपस्पृशेत्=आचामेत् इति कुल्लूकभट्टः ।

उदक्या=रजस्वला, अशुचयः=शवचाण्डालपतितसूतिकाद्याः शवाशौचिनश्च, एतैः संस्पृष्टः स्नायात् । तैः पुनरुदक्याशुचिसंस्पृष्टादिभिः संस्पृष्टः उपस्पृशेत् = आचामेदित्युक्तयाज्ञवल्क्यमिताक्षरा च सङ्गच्छते इत्यास्तां तावत् ।

[ हिन्दी टीका ]

ब्रह्मघाती आदि पतित, चाण्डाल (ब्राह्मणी में शूद्र से उत्पन्न), दश दिनों तक की प्रसूता (स्त्री), चार दिनों तक की रजस्वला (स्त्री), शव (मुर्दा) के स्पर्शकर्ता (छूने वाला) तथा इस स्पर्शकर्त्ता के स्पर्शकर्त्ता का स्पर्श होने पर शरीर में लगाए वस्त्रों के साथ स्नान करने से शुद्ध होता है ।

ऐसा नियम मानने से तो देवलवचन का विरोध उपस्थित हो जाता है क्योंकि उसका अर्थ है–पतित, चाण्डाल, प्रसूतास्त्री, रजस्वला स्त्री, शव आदि (यहाँ ये ही अशुचिपद से व्यवहृत किये जाते हैं) में से किसी का स्पर्श करनेवाले का या इसे स्पर्श करनेवालो का स्पर्श होने पर जल से हाथ-पैर धोकर आचमन करने से शुद्ध होता है । फलतः इस देवलवचन से शवस्पर्श या इसके स्पर्शी के स्पर्श में आचमन करने को कहा जाता है तो गोतमवचन से स्नान । इस विरोध का परिहार यों है कि देवलवचन केवल पतित आदि अशुचि के स्पर्शी के स्पर्श से होनेवाले अशौचके संबन्ध में ही कहने वाला है न कि शवस्पर्शी या शवस्पर्शी के स्पर्श करने वाले के स्पर्श के विषय में भी । अतः अब दोनों वचन में कोई

विरोध नहीं । सारांश में देवलवचनानुसार पतित से लेकर रजस्वला आदि अशुचि से स्पृष्ट स्नानर्ह व्यक्तियों के स्पर्श में स्पर्शकर्त्ता को आचमन और गौतमवचन के पूर्व प्रदर्शित अर्थानुसार पतित आदि के स्पर्श होने पर स्नान करना चाहिए । एतावता शवस्थल में भी तृतीय तक को स्नान होने पर भी चतुर्थ स्पर्शकर्त्ता को देवलवचन के ''तृतीयं वाऽपि'' के आधार पर आचमन ही होगा ।

ऊपर अभी तक जो कहा गया है वह मैथिल, गौड आदि निबन्ध के मतानुसार है । किन्तु 'केचित्' वाला आगे का मत दक्षिणात्य निबन्धों का है । इस मत के अनुसार गौतमवचन का वही अर्थ होता है । अन्तर इतना ही है कि जल से हाथ पैर धोकर आचमन के स्थान पर स्नान पाठ कर लें । अव देवलवचन इन पतित आदि अशुचियों में से किसी के भी चतुर्थस्पर्शकर्त्ता को आचमन विधान करने वाला होगा । परन्तु शास्त्रीय लाघवगौरव की दृष्टिं से युक्तिसङ्गत न होने के कारण यह 'केचित्' वाला मत अमान्य है । यह शास्त्रीय लाघवगौरव संस्कृत टीका से समझें ।

[ मूलम् ]

**बौधायनः-**

**चाण्डालेन सहाध्वगमने सचैल[१]स्नानम् ।**

[ संस्कृत टीका ]

चाण्डालेनेति । चाण्डालेन=श्वपचेन (निषादश्वपचावन्तेवासि-चाण्डाल पुल्कसा इत्यमरः)।

सहाध्वगमने=सहमार्गचलने । सचैलस्नानम्=देहलग्नवस्त्रेण सह स्नानम् । कार्यमितिशेषः ।

[ हिन्दी टीका ]

चाण्डाल के साथ मार्ग में चलने पर शरीर में लगे सभी वस्त्रों के साथ स्नान करें ।

[ मूलम् ]

**पराशरः-**

**चैत्यवृक्षश्चितिर्यूप[२]श्चाण्डालः सोमविक्रयी ।**
**एस्तॉंस्तु ब्राह्मणः स्पृष्ट्वा सचैलो[१] जलमाविशेत् ।**

सचैलः यद्वस्त्रधरः सन् स्पृष्ट[२]स्तद्वस्त्रसहित इत्यर्थः । जलमाविशेदिति वारुणस्नानो[३]पलक्षणम् । तथा-

---

पाठा. (१) सचेलः इति । (२) 'वा' इति । (३) 'स्नान मात्रों' इति च ह. पु. ।
(४) 'तथा' इति नास्ति ह० पुस्तके ।

श्वकाकैरवलीढस्य नखैर्विदलितस्य च ।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूडनम् ॥

इयञ्च[१] स्नानं विनैव शुद्धिः शिरोव्यतिरिक्तगात्रोपघाते । उपचूडनम्=ज्वालया[२] स्पर्शनम् ।

### [ संस्कृत टीका ]

चैत्येति । चैत्यवृक्षः =चितिप्रदेशारोपितवृक्षश्चैत्यवृक्ष इति स्मृतिचन्द्रिका । चितिः-चिता । यूपः=यज्ञपशुबन्धनकाष्ठम् । चाण्डालः श्वपचः । सोमविक्रयी=सोमवल्लीरसविक्रेता । एतान्=पूर्वोक्तान् । ब्राह्मणः=द्विजः । स्पृष्ट्वा । सचैलः=देहलग्नवस्त्रसहितः सन् । जलमाविशेत्=जलान्तः प्रविश्य स्नायादिति भावः । अत्र अद्भिर्वारुणमुच्यते, वारुणञ्चावगाहनमिति योगियाज्ञवल्क्योक्तदिशा जलमाविशेदिति वारुणस्नानोपलक्षणम् ।

श्वकाकैरिति । श्वकाकैः=कुक्कुरकाकैः । अवलीढस्य= आस्वादितस्य आक्रान्तस्येति यावत् । नखैर्विदलितस्य=नखाग्रैःकृतभेदनस्य च, शिरोभिन्नाङ्गस्य । अद्भिः जलैः । प्रक्षालनम्=प्रोञ्छनम् । उपचूडनम्= अग्निस्पर्शनञ्च शौचम् विज्ञेयम् । विषाक्तनखादिभिः क्षताङ्गस्य अग्नि-ज्वालया सेकः वैज्ञानिकोऽपि वर्तते । एवञ्च श्वादिभिःशिरस्पर्शे स्नानम् गात्रान्तरस्पर्शे तु तदङ्गप्रक्षालनाचमनमात्रं शौचमिति व्यवस्था आस्थेया। अग्रेवक्ष्यमाणात् ।

मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ।
एभिर्यदङ्गे संस्पृष्टं शिरोवर्जं द्विजातिषु ॥
तोयेन क्षालनं कृत्वा आचान्तःशुचितामियात् ।

इत्यादिशातातपवचनात्।

### [ हिन्दी टीका ]

चितास्थल पर रोपे गए वृक्ष, चिता, यज्ञिय पशु को बाँधने का खूँटा, चाण्डाल तथा सोमवल्ली के रस को बेचने वाले का स्पर्श कर ब्राह्मण (द्विज) शरीर में लगे सभी वस्त्रों के साथ स्नान करे ।

---

पाठ (१) इदञ्च । (२) ज्वालायाः ।

तथा, कुत्ते या कौने ने यदि शिर से अतिरिक्त अङ्ग में अपघात (स्पर्श, या आक्रमण या प्रहार) किया हो अथवा इनके नखों से (वह) छिल जाय तो उस अंग को जल से धोकर अग्नि की ज्वाला से सेंक कर देना चाहिए। विषाक्त नख आदि से क्षत अंग को अग्नि से सेकना वैज्ञानिक भी है। कुत्ते आदि से शिर में स्पर्श होने से पोंछ देना और आचमन कर लेना ही शौच है। यह आगे "मुखे भगः" इत्यादि शातातपवचन की व्याख्या में स्पष्ट हो जायेगा।

[ मूलम् ]

**च्यवनः–**

**श्वानं, श्वपाकं, प्रेतधूमं, देवद्रव्योपवजीविनं, ग्रामया[1]जकं, यूपं, चितिं, चितिकाष्ठं, मद्यं, मद्यभाण्डं, सस्नेहं मानुषास्थि, शव[2]स्पृष्टं, रजस्वलां, महापातकिनं, शवं च[3] स्पृष्ट्वा सचैलमभ्मोऽवगाह्य, उत्तीर्य, अग्निमुपस्पृशेत्[4]। गायत्र्य[5]ष्टशतं जपेत्। घृतं प्राश्य पुनः स्नात्वा[6] त्रिराचामेत्[7]।**

अग्निस्पर्शनादि[8] कामकृते, स्मृत्यन्तरे स्नानमात्रविधानात्।

[ संस्कृत टीका ]

श्वानमिति। श्वानम्=कुक्कुरम्। श्वपाकम्=चाण्डालम्। प्रेतधूमम्=शवधूमम्। देवद्रव्योपजीविनम्=देवसम्बन्धिद्रव्यैः जीवननिर्वाहकम्। ग्रामयाजकम्=ग्रामपुरोहितम्। अयन्तु चतुर्थोऽब्राह्मणः। यथाह शातातपः–

**अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववेदिना।**
**आद्यो राज्यभृतस्तेषां द्वितीयः क्रयविक्रयी॥**
**तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः।**
**पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च॥**
**अनादित्यान्तु यः पूर्वां सादित्याञ्चैव पश्चिमाम्।**
**नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः॥**

---

पाठा० (१) (अ) याजिनं (आ) सोमविक्रयिणं। (२) स्पृशम् (३) क्वचित् "च" पाठो नास्ति। (४) मुपस्पृश्य। (५) गायत्रीमष्टवारम्। (६) तथा। (७) द्विराचामेत्। (८) स्पर्शादि।

एतेभ्यो दत्तं दानादिकं निष्फलं भवति । यथोक्तं महाभारते (३।१९९/१७)—

**व्यर्थन्तु पतिते दानं ब्राह्मणे तस्करे तथा ।**

**गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके ॥**

इति शब्दकल्पद्रुमः ।

यूपम्=यज्ञे पशुबन्धनकाष्ठम् । चितिम्=चिताम् । चितिकाष्ठम्==शवदाहावशेषं चिताकाष्ठम् । मद्यम्=मदिराम् । मदयभाण्डम्=मदिराभाजनम् । सस्नेहं मानुषास्थि=मज्जासहितं मनुष्यस्यास्थि । शवस्पृष्टम्=शवस्पर्शाश्रयम् । रजस्वलाम् = ऋतुमतीं (नारीम्), महापातकिनम्= महत् अतिशयितं पातकं-पापविशेषः । तत्तु पञ्चविधम्। यथाह मनुः—

**ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।**

**महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ इति**

एतदस्त्यस्येति तं महापातकिनम् । शवम्=मृतशरीरम् स्पृष्ट्वा । सचैलम्=देहलग्नवस्त्रेण सह यथा स्यात् । अम्भोऽवगाह्य=जलं प्रविश्य, स्नात्वेति यावत्। उत्तीर्य=जलादुपरि आगत्य । अग्निमुपस्पृशेत्=अग्निज्वालां स्पृशेत् । गायत्र्यष्टशतं जपेत्=अष्टोत्तरशतं गायत्रीं जपेत् । घृतं प्राश्य=किञ्चिद् घृतं पीत्वा । पुनः स्नात्वा त्रिराचामेत् ।

अत्र अग्निस्पर्शनादि कामकृते=बुद्धिपूर्वविषयम्, प्रमादकृते स्मृत्यन्तरे बृहस्पतिना स्नानमात्रविधानात् । तद् यथा—

**शवस्पृष्टं दिवाकीर्त्तिं चितिं यूपं रजस्वलाम् ।**

**स्पृष्ट्वा त्वकामतो विप्रः स्नानं कृत्वा विशुध्यति ॥ इति**

**[ हिन्दी टीका ]**

कुत्ता, चाण्डाल, मुर्दे का धूँआ, देवताओं के द्रव्य से जीवन चलानेवाला, ग्रामस्थित नाना जातियों का पुरोहित, यज्ञिय पशु को बाँधने का काठ, चिता, मुर्दा जलाने के बाद बची लकड़ी, शराब, शराब रखने का करवा या कोई भी काँच का बरतन, मनुष्य की कच्ची हड्डी, मुर्दे का स्पर्शवाला, रजस्वला स्त्री, महा पातकी (ब्रह्महत्या, सुरा-चावल के आटे या भात से बने मद्य विशेष-का पान,

चोरी, गुरुपत्नी के साथ सम्भोग, तथा इनमें से किसी महापात को करनेवाले का संसर्ग ये पाँच महापातक कहलाते हैं, इनके आचरण वाले महापातकी हैं) तथा मुर्दा इन्हें स्पर्श करने पर देह में लगे वस्त्रों के साथ स्नान करे। जल से ऊपर आकर अग्नि ज्वाला का स्पर्श करे और एक सौ आठ (बार) गायत्री का जप करे। अनन्तर थोड़ा घी पीकर पुनः स्नान कर तीन बार आचमन करे।

यह अग्निज्वाला के स्पर्श से आचमन पर्यन्त का विधान उक्त वस्तुओं के बुद्धिपूर्वक स्पर्श करनेवालों के लिए है। प्रमादवश स्पर्श होने पर बृहस्पति के वचनानुसार केवल स्नान करे।

[मूलम्]

आपस्तम्बः-

**एकां शाखां समारूढश्चाण्डालादिर्यदा भवेत्।**
**ब्राह्मणस्तत्र आसीनः स्नानेन शुचितामियात्॥**

[संस्कृत टीका]

एकामिति। एकाम् शाखाम्=लताम्। समे शाखालते इत्यमरः। चाण्डालादिः, आदिपदादत्र पतितादिर्ग्राह्यः। यदा=यस्मिन् काले। समारूढ़=आश्रितः भवेत्। तत्र=शाखायाम्। ब्राह्मणः=द्विजः। आसीनः= उपविष्टः स्यात्। तदा स्नानेन शुचिताम्=शुद्धिम्। इयात्=प्राप्नुयात्।

अत्रैकशाखापदमत्यन्तसान्निध्योपलक्षणार्थम्। अतएव एकसंस्तराद्यारोहणेऽपि अशुचित्वं वदन्तीति वीरमित्रोदयः। एकां शाखामिति एकावयव-सम्बन्धीत्यर्थः। तेन नानाकाष्ठघटितनौकादौ न दोष इत्याचारादर्श-फक्किकाव्याख्या।

[हिन्दी टीका]

यदि किसी लकड़ी या बिस्तरे आदि पर चाण्डाल, पतित आदि बैठा हो और उसी पर ब्राह्मण (द्विज) बैठे तो वह ब्राह्मण स्नान करने से शुद्ध होता है। अथवा वह लकड़ी एक ही होना यहाँ विवक्षित अर्थ है। अतः अनेक लकड़ी टुकड़ों से बने नौका आदि स्थलमें कोई दोष नहीं। ऐसा अर्थ म.म. रघुनाथ का है।

[मूलम्]

कालिकापुराणे-

**स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा ह्याप्लुतः शुचिः।**

एतदपनीतनिर्माल्ये बोद्धव्यम्।

[ संस्कृत टीका ]

स्पृष्ट्वेति । रुद्रस्य=भगवतः शङ्करस्य । निर्माल्यम् विसर्जनानन्तरं देवसमर्पितं वस्तु पुष्पादि निर्माल्यमुच्यते । स्पृष्ट्वा सवासाः=देहलग्न-वस्त्रसहितः । आप्लुतः=स्नातः सन् । शुचिः भवेत् ।

एतद्=वचनम् । अपनीतनिर्माल्ये=परित्यक्तनिर्माल्यविषये ज्ञातव्यम् ।

[ हिन्दी टीका ]

भगवान् शङ्कर के फेके गए निर्माल्य का स्पर्श करने पर देह में लगे सभी वस्त्रों के साथ स्नान करने से शुद्ध होता है ।

किसी देवता को समर्पित की हुई वस्तु, किसी देवता पर चढ़ चुकी वस्तु (विजर्सन के बाद देवार्पित वस्तु) को 'निर्माल्य' कहते हैं ।

[ मूलम् ]

व्यासः-

Hkkl [१]-वानर[२]-मार्जार-खरोष्ट्राणां शुनस्तथा ।
सूकराणाममेध्यञ्च स्पृष्ट्वा स्नायात् सचैलकम् ॥

भासेति । भासः=पक्षिविशेषः । भास्धातोः कर्तरि अच् । कुक्कुटः, गृध्र इति विश्वः । स्वनामंख्यातः पक्षिविशेषः । तत्पर्यायः शकुन्त इति हेमचन्द्र इति शब्दकल्पद्रुमः । वानरः=मर्कटः । मार्जारः=विडालः । खरः=गर्दभः । उष्ट्रः=क्रमेलकः । एषाम् शुनः=कुक्कुरस्य । सूकराणाञ्च। अमेध्यम्=मूत्रं विष्ठाञ्च स्पृष्ट्वा । सचैलकम्=सवस्त्रं यथा स्यात्तथा स्नायात् ।

[ हिन्दी टीका ]

भास (मुर्गा या गीध या भास नाम से ही प्रसिद्ध पक्षिविशेष), वानर, विडाल, गदहा, ऊँट, कुत्ता तथा सूकर के मृत्र या विष्ठा का स्पर्श करने पर देह में लगे वस्त्रों के साथ स्नान करें ।

[मूलम्]

लघुहारीतः-

श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च ।
अधोच्छिष्टन्तु संस्पृश्य सचैलो जलमाविशेत् ॥

अधोच्छिष्टम्=[३]मूत्राद्युत्सर्गेणाशुद्धम् ।

---

पाठा० (१) वृक (२) वायस (३) मूत्रोत्सर्गेण ।

[ संस्कृत टीका ]

श्वविष्ठामिति । श्वविष्ठाम्=कुक्कुरविष्ठाम् । काकविष्ठाम्=वायस विष्ठाम् । कङ्कः=लोहपृष्ठः । लोहपृष्ठस्तु कङ्कः स्यादित्यमरः । सारस पक्षी । गृध्रः=एतन्नाम्नैव प्रसिद्धः मांसाशी पक्षिविशेषः । नरः =मनुष्यः । एषां समाहारद्वन्द्वे नरस्येति षष्ठ्येकवचनान्तप्रयोगः । अधोच्छिष्टम्= मूत्राद्युत्सर्गेणाशुद्धं स्थानं पदार्थं वा संस्पृश्य सचैलः=सवस्त्रः । जलमाविशेत्=जलं प्रविश्य स्नायात् ।

[हिन्दी टीका]

कुत्ते या कौवे की विष्ठा तथा सारसपक्षी, पक्षिविशेष कङ्क, गीध या मनुष्य के मलमूत्र से अपवित्र स्थान या वस्तु का स्पर्श करने पर स्नान करें ।

[ मूलम् ]

**देवल :-**

**मानुषास्थिवसां विष्ठामार्तवं मूत्ररेतसी ।**
**मज्जानं शोणितं वापि परस्य यदि संस्पृशेत् ॥**
**स्नात्वाऽपमृज्य लेपादीनाचम्य शुचितामियात्[१] ।**
**तान्येव[२] स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ॥**

एतदनन्तरमाचमनं प्राप्तमेव । परिमार्जनात्=क्षालनात् । (एतदनन्तर- भाचनवमेव) ।[३]

[ संस्कृत टीका ]

मानुषेति । परस्य=अन्यस्य । मानुषास्थि=मनुष्यस्यास्थि । वसाम्= कायस्नेहम् । (मेदस्तु वपावसेत्यमरः) विष्ठाम् । आर्तवम्=स्त्रियाः ऋतुकालिकरक्तम्) । मूत्ररेतसी=मूत्रशुक्रे । मज्जानम्=शिरोमध्ये पिण्डितस्नेहम् । शोणितम्=रुधिरम् । यदि संस्पृशेत् (तदा) लेपादीन्= गात्रलग्नवसादीन् । अपमृज्य=मृज्जलाभ्यामपहृत्य । आचम्य स्नात्वा च शुचितामियात् = शुद्धिं लभेत । तान्येव=पूर्वोक्तान्येव । स्वानि स्वकीयानि । संस्पृश्य ।

---

पाठा० ( १ ) सशुचिर्भवेत् । ( २ ) तानि स्वानि तु । ( ३ ) नित्यकृत्यार्णवेऽत्राचारादर्शनाम्नैतत्पाठदर्शनान्मूले पाठभेदावबोधार्थं कोष्ठस्थीकृत्य पाठः मयैव स्थापितः । हस्तलिखित पुस्तकेऽप्येवमेव विद्यते पाठः ।

परिमार्जनात्=मृत्तोयाभ्यां प्रक्षालनात् । पूतः = पवित्रः स्यात् । एतदनन्तरम् । आचमनम् । प्राप्तमेव आचमनप्रकरणोक्तपैठीनसिआपस्तम्बमनुविष्णु वचनानुसारं कर्तव्यमवेति भावः । अत्र लेपादीनपमृज्याचम्य स्नात्वा चेति क्रमोऽवगन्तव्य : । अत्र वसादीनामपि मनुष्यसम्बन्धिनामेवोपादानं सन्निहितत्वात् । वसादिस्पर्शश्चात्र नाभेरुपरि स्नानहेतुः,

नाभेरूर्ध्वं करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेन विशुध्यति ॥

इत्यङ्गिरोवचनात् । अधःस्पर्शे तु क्षालनमाचमनमुभयत्रेत्याचारविवेक इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

दूसरे मनुष्य की हड्डी, चर्बी, विष्ठा, स्त्रियों के मासिक धर्म का शोणित, मूत्र, वीर्य, मज्जा (सिर की हड्डीके भीतर का गुदा) तथा शोणित से स्पृष्ट अंग को मिट्टी एवं जल से धोकर स्नान करें तथा आचमन करें तभी शुद्धि होती है । यदि ये पूर्वोक्त अपने ही हों तो इनसे स्पृष्ट अंग को धोने से ही शुद्धि हो जती है ।

यहाँ आचारविवेक (निबन्ध) के विवेचनानुसार ज्ञातव्य है कि ये पूर्वोक्त हड्डी आदि मनुष्य सम्बन्धी ही विवक्षित हैं । साथ ही नाभि से ऊपरी अंगों में स्पर्श होने पर स्नान भी हो किन्तु निचले अंगों में वे पूर्वोक्त स्वकीय हों या परकीय, स्पर्श होने पर उस अंग को धोकर आचमन करना ही शौच होगा ।

[ मूलम् ]

विष्णुः –

नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्यातन्द्रितः शुद्धो भवति । [१]अन्यत्रोपहतस्तदङ्गे मृत्तोयैः प्रक्षाल्य[२] स्नानेन शुद्धो भवति । चक्षुष्युपहते उपोष्य स्नात्वा पञ्चगव्येन शुध्यति दशनच्छदोपहतश्च ।

प्रबाहुः = हस्तः । अतन्द्रित इत्याचमनप्राप्त्यर्थम् । अन्यत्र उपहतः= उक्तेतरकाये स्पृष्टः ।

---

पाठा० ( १ ) आयन्तोपहतः = उक्तेतराङ्गेष्वपि स्पृष्ट इतिवीरमित्रोदयः । ( २ ) "प्रक्षाल्य मृत्तोयैरि"ति विपर्यस्त पाठः क्वचित् ।

[ संस्कृत टीका ]

नाभेरिति । नाभेरधस्तात् = नाभेरधोभागस्थाङ्गेषु । प्रबाहुषु = हस्तेषु च । जनसामान्यविवक्षया बहुवचनम् । प्रबाहुः = कफोणेरधोभाग इति नित्यकृत्यार्णवः । कायिकैर्मलैः=द्वादशविधैर्दैहिकमलैः–

वसा शुक्रमसृङ् मज्जा मूत्रविट् घ्राणविण्णखाः ।
श्लेष्माश्रु-दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

इति मनुस्मरणात् । सुराभिः=तण्डुलपिष्टेन भक्तेन वा कृताभिः पैष्टिभिरिति यावत् । मद्यैः गुडकृतैः मधूकपुष्पकृतैः द्राक्षारसकृतैर्वा मद्यैः । अत्र विशेषजिज्ञासुभिः "सुरां पीत्वा द्विजो मोहादि" त्यादि मनुस्मृतिः (११।९०–९५) तट्टीका च मन्वर्थमुक्तावली द्रष्टव्या । उपहतः स्पर्शद्वारा अपवित्रभूतो विप्रः, क्षत्रियवैश्ययोः पैष्टी(सुरा)व्यतिरिक्तमद्यपानेऽपि दोषानभिधानात् । अतन्द्रितः=अनलसः सन् । एतच्च आचमनप्राप्त्यर्थम् । मृत्तोयैः=मृत्तिका जलाभ्याम् । तदङ्गम्=मलादिलिप्तमङ्गम् । प्रक्षाल्य= परिमार्ज्य । आचम्येतिशेषः । शुद्धो भवति । अन्यत्रोपहतः = उक्तेतरकाये स्पृष्टः–नाभेरधोभागस्थाङ्गात् हस्ताच्चेतराङ्गेष्वपि स्पृष्ट इति यावत् । तदङ्गम् मृत्तोयैः प्रक्षाल्य स्नानेन शुद्धो भवति । चक्षुषि = नेत्रे । उपहते = मलादि-सम्बन्धेनापवित्रीकृते । दशनच्छदोपहतश्च =दशनच्छदे= ओष्ठे, उपहतः = तत्सम्बन्धेनापवित्रः सन्नपि उपोष्य = उपवासं कृत्वा । स्नात्वा । पञ्चगव्येन=गोविकारदधिदुग्धादिरचितेन (पेयेन) पीतेनैव शुध्यति = शुद्धोभवति स्पर्शकर्त्ता । अत्र "पञ्चगव्येन प्राशितेन शुध्येदिति शेष" इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

नाभि से नीचे के अंग या हाथ में अथवा केहुनी के नीचे पूर्वोक्त बारह प्रकार के शारीरिक मल या सुरा [चावल के आटे या भात से बने] (सुरा) गुड या राव से, या महुए के फूलों से या अंगूरों से बने तरल पदार्थ मद्य इसके के सम्बन्ध में विशेषजिज्ञासुजन मनुस्मृति (११। ९०-९५) उसकी टीका मन्वर्थमुक्तावली तथा हिन्दी अनूदित धर्मशास्त्र का इतिहास (पृ. १००८-९) भी देखें] का स्पर्श हो तो उस ब्राह्मण को मिट्टी तथा जल से उक्त अंग को धोकर आचमन करना चाहिए। (क्षत्रिय एवं वैश्य के लिए सुरा के अतिरिक्त मद्यपान में शास्त्रीय दोष नहीं कहा

गया है । शूद्र के लिए सुरा भी वर्जित नहीं । किन्तु ब्राह्मण के लिए तो सभी प्रकार की मदिरा प्रथमतः वर्जनीय है) ।

यदि नाभि से ऊपरी अंग और हाथ से अन्य अंगों में इनका स्पर्श हो तो मिट्टी तथा जल से धो कर स्नान करने से शुद्ध होता है ।

आँख या ओठ में इनका संबन्ध हो गया हो तो स्नान कर पञ्चगव्य (गाय के दूध दही घी गोबर तथा गोमूत्र को मिला देने से पञ्चगव्य होता है) पिये, तब शुद्ध होता है ।

[ मूलम् ]

अङ्गिराः—

इन्द्रियेषु प्रविष्टं स्यादमेध्यं यदि कर्हिचित् ।
मुखेऽपि संस्पर्शगतं स्नानं तत्र विधीयते[1] ॥

[ संस्कृत टीका ]

इन्द्रियेष्विति । यदि कर्हिचित्=कदाचित् । इन्द्रियेषु=कर्णनासादिच्छिद्रेषु । अमेध्यम् = अशुचि मद्यमलमूत्रवीर्यादि । अभक्ष्यप्रकरणे अमेध्यम् = विण्मूत्रादि इत्याचारचिन्तामणिः । मुखेऽपि = मुख्याभ्यन्तरेऽपि । संस्पर्शगतम् = अन्नादिसम्पर्केण स्वतो वाऽन्तःप्रविष्टं स्यात् । तत्र=तादृशस्थितौ । स्नानं विधीयते । तथा च ऋष्यशृङ्गोऽपि—

मद्यविण्मूत्रविप्लुड्भिः संस्पृष्टं मुखमण्डलम् ।
मृत्तिकागोमयैर्लेपात् पञ्चगव्येन शुद्ध्यति ॥

अत्र स्नानमपि मन्तव्यम्, विष्णुनैकवाक्यत्वात् । विप्लुषः = विन्दवः इत्याचारविवेकः ।

[ हिन्दी टीका ]

यदि कान, नाक आदि इन्द्रियों के छिद्रों या (अन्नादि के सम्पर्क द्वारा या स्वतः) मुख के भीतर मल, मूत्र, वीर्य आदि अति अपवित्र पदार्थ चला जाय तो स्नान करने से शुद्ध होता है ।

---

पाठा० (१) तत्र स्नानं विशोधनम् इति पाठः ह. पुस्तकेऽपि ।

[ मूलम् ]

शङ्खः—

रथ्याकर्दमतोयेन ष्ठीवनाद्येन चाप्यथ ।
नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति ॥

[ संस्कृत टीका ]

रथ्येति । रथ्याकर्दमतोयेन = प्रतोलीपङ्कस्थजलेन । ष्ठीवनाद्येन =मुखेन नासिकया वा निर्गतकठिनकफाद्येन च । नाभेरूर्ध्वम्=नाभेरूर्ध्वाङ्गे । नरः स्पृष्टः स्यात्तदा । सद्यः =तत्कालएव स्नानेन शुद्ध्यति ।

क्वचित् ''स्नानेनैव तु शुद्ध्यति'' इति पाठानुसारं कालान्तरेऽपि शुद्धिः स्नानेनैव भवेन्नान्यथेत्यर्थो बोद्धव्यः ।

[ हिन्दी टीका ]

गली की कीचड़ के जल से या नाक अथवा मुँह के द्वारा निर्गत कठिन कफ खखार आदि से यदि नाभि के ऊपरी अंग का स्पर्श हो तो वह तुरत या कुछ काल के बाद भी स्नान करने से ही शुद्ध होता है ।

[ मूलम् ]

ब्रह्माण्डपुराणे—

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ ॥
मानुषास्थि तु संस्पृश्य दग्धं सस्नेहमेव वा ।
स्नायाद् गां संस्पृशेत् सूर्यं पश्येद् विष्णुमनुस्मरेत् ॥

दग्धस्पर्शे कामकृते स्नानम् । ''आचम्यैव तु निस्स्नेहमि''ति मनुवचनात् ।

[ संस्कृत टीका ]

उच्छिष्टेनेति । उच्छिष्टेन = उच्छिष्टमुखेन । विप्रण = ब्रह्मणेन । तादृशः विप्रः=उच्छिष्टमुखो । ब्राह्मणः स्पृष्टो भवति । एतावुभौ । समाहितौ=अनन्यमनस्कौ । सद्यएव = सपद्येव । स्नानं प्रकुरुतः । एतेनोच्छिष्टमुखयोः परस्परस्पर्शो निषिद्धो बोद्धव्यः ।

मानुषास्थीति । दग्धं सस्नेहं वा = अग्निज्वालया दग्धीभूतं मज्जासहितं वा । मानुषास्थि = मनुष्यसम्बन्धि अस्थि संस्पृश्य स्नायात् । गाम्=सास्नादिमतीं,

पृथिवीं वा । गौरिला पृथिवी क्षमेत्यमरः । संस्पृशेत् । सूर्यं पश्येत् । विष्णुमनुस्मरेच्च । दग्धस्पर्शे कामकृते स्नानम् । एतच्च स्नानं ज्ञानकृते एवेति भावः । आचम्यैवेति ।

"नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति ।
आचम्यैव तु निस्स्नेहं गामालभ्यार्कमीक्ष्य वा ॥

इति मनु (५।८७) वचनात् । एतद्वचनात्तु गोस्पर्श-सूर्यदर्शनयोरन्यतरत्कर्तव्यं समायाति। क्वाचिच्च 'वा' स्थाने 'च' इति पाठदर्शनात्समुच्चयो वा बोद्धव्यः ।

अत्र कतिचिद्वचनान्युल्लिख्याचारविवेकस्तु—"तदियमत्र व्यवस्था—भक्ष्य-पञ्चनखास्थिस्पर्शे दोषाभावः । अभक्ष्यपञ्चनखास्थिस्पर्शे आचमनम् । ब्राह्मणास्थिस्पर्शेऽकामकृते स्नानमात्रम् । कामकृते स्नानसूर्यदर्शनविष्णु-स्मरणानि । ब्राह्मणेतरमनुष्यसम्बन्धिस्निग्धास्थि-स्पर्शे कामकृते त्रिरात्रमाशौचम् । अस्नेहतत्स्पर्शे अहोरात्रमि"त्याह ।

[ हिन्दी टीका ]

जूठे मुंह वाले ब्राह्मण से यदि जूठे मुंहवाले ब्राह्मण का स्पर्श हो तो ये दोनों ही अनन्यमनस्क हो तुरत स्नान करें ।

यदि मनुष्य की जली या कच्ची हड्डी का अज्ञान से स्पर्श हो जाय तो स्नान करें । यदि ज्ञानपूर्वक स्पर्श करता है तो स्नान कर गाय या पृथ्वी का स्पर्श करें, सूर्य को प्रणाम करें और विष्णु भगवान का स्मरण करें । मनुवचन के अनुसार गो (गाय या पृथ्वी) का स्पर्श और सूर्यदर्शन दोनों में एक करे । इसी वचन में कहीं कहीं अन्त में 'च' का पाठ होने से दोनों का अनुष्ठान भी शास्त्रसम्भत है ।

[ मूलम् ]

मनुः—

वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् ।
आचामेदेव भुक्त्वाऽन्नं स्नानं मैथुनिनः स्मृतम् ॥

भुक्त्वाऽन्नं वान्त इत्यर्थः । तेन सद्योवमने आचमनमात्रम् । एवकारेण स्नाननिवृत्तिः[१]। मैथुनिनः=ऋताविति शेषः ।

---

पाठा० ( १ ) निवृत्तेः । व्यावृत्तिरिति तु ह. पु. ।

[ संस्कृत टीका ]

वान्त, इति । वान्तः = कृतवमनः, पर्युषितान्नस्य वमनकर्त्तेति यावत् । विरिक्तः = कृतविरेकः, प्रकृताधिकविरेकवानिति यावत् । दश विरेकान् विरिक्त'' इति मनुटीकायां गोविन्दराजः । ''मिलितं चैतद्द्वयं निमित्तं, **'मैथुने दुःस्वप्ने वमनविरेकयोरिति विष्णूक्तेरि''** ति रत्नाकरः। स्नात्वा घृतप्राशनम् । आचरेत् = कुर्यात् । यदि भुक्त्वाऽन्नं वान्तस्तदा अर्थात्सद्योवमने । आचामेदेव=आचमनमेव कुर्यान्न च स्नानघृतप्राशने अपि । एवकारेण स्नानादेः व्यावृत्तिः । तथा चात्राचारविवेकोऽपि–''तथा च दिनान्तरे वमनविरेचनयोः सतोः स्नात्वा घृतं प्राश्य विशुद्ध्यतीत्यर्थः । तद्दिने वमने त्वाह–आचामेदेव भुक्त्वेति । तथा च भुक्त्वा सद्यो वान्ते आचामेन्नतु स्नायादित्यर्थ'' इति । मैथुनिनः स्नानं स्मृतम् = मैथुनं कृत्वा स्नायात् । मैथुनिनः इत्यत्र ऋताविति शेषः । इदम् ऋतुकालविषयमिति भावः ।

**अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ।**

इतिबृहस्पतिस्मरणात् ।

[ हिन्दी टीका ]

बासी अन्न का वमन या अनेक (दस) बार मलत्याग (पैखाना) होने पर स्नान कर घी पियें । भोजन के बाद ही वमन होने पर केवल आचमन करें । ऋतुमती के साथ रमण करने पर स्नान करना चाहिए । वृहस्पति के वचनानुसार विना ऋतुकाल में रमण करने पर तो मलमूत्रत्याग कै जैसे शौच करें ।

[ मूलम् ]

बृहस्पतिः–

**पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा तु[१] कामतः ।**
**स्नात्वा सचैलं[२] स्पृष्ट्वा[३]ऽग्निं घृतं प्राश्य विशुद्ध्यति ॥**

[ संस्कृत टीका ]

पतितमिति । पतितम् = ब्रह्महादिकम् । सूतिकाम् = प्रसूतिकाम् (प्रसवानन्तरमकृतस्नानसमयाभ्यन्तरं दशाहाभ्यन्तरे वा) अन्त्यम्=

पाठा० (१) च (२) सचैलः (३) हुत्वा ।

अन्त्यावसायिनम्, चाण्डालाज्जातं निषादमिति यावत् । यथा च मनुः (१० । ३९)

निषादस्त्रीषु चाण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥ इति

निषादश्च ब्राह्मणाच्छूद्रायां जातः। शवम्=मृतशरीरम् कामतः बुद्धिपूर्वकम् स्पृष्ट्वा, सचैलं स्नात्वा, अग्निम् = अग्निज्वालाम् स्पृष्ट्वा । घृतम् प्राश्य = पीत्वा । विशुद्ध्यति = स्पर्शनिमित्ताशौचाद् विशुद्ध्यतीत्यर्थः ।

[ हिन्दी टीका ]

पतित (ब्राह्मण की हिंसा कर ने वाला आदि), प्रसूतिका (प्रसव के बाद जिस ने स्नान न किया हो या दस दिनों के भीतर) अन्त्यावसायी (ब्राह्मण से शूद्रा में उत्पन्न निषाद कहलाता है और निषाद की स्त्री में चाण्डाल से उत्पन्न अन्त्यावसायी कहलाता है), तथा मुर्दे का ज्ञानपूर्वक स्पर्श करने पर देह में लगे वस्त्रों के साथ स्नान कर, अग्निज्वाला का स्पर्श एवं थोड़ा घी पीकर स्पर्शनिमित्तक आशौच से शुद्ध होता है ।

[ मूलम् ]

मनुः—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा[१] ।
स्नात्वासचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यति ॥

[ संस्कृत टीका ]

अन्विति । ज्ञातिम् = बान्धवम्! । अज्ञातिम्=अबान्धवं वा । प्रेतम् = मृत (शरीरम्) । स्वेच्छयाऽनुगम्य सवस्त्रः स्नात्वा अग्निज्वालां स्पृष्ट्वा किञ्चिद् घृतञ्च पीत्वा अनुगमननिमित्तकादाशौचाद् विशुद्ध्यतीति भावः ।

[ हिन्दी टीका ]

सपिण्ड या असपिण्ड मृतक के पीछे कोई अपनी इच्छा से जाय तो देह में लगे वस्त्रों के साथ स्नान के अनन्तर अग्निज्वाला का स्पर्श और घृतप्राशन करने से अनुगमननिमित्तक आशौच से शुद्ध होता है ।

---

पाठ० (१) 'च' इति ह. पु. ।

[ मूलम् ]

शुध्येदित्यनुवृत्तौ, विष्णुः-

**सर्वस्यैव[१क] प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेन, अकृते[१ख]ऽस्थिसञ्चयने सचैलस्नानेन ।**

[ संस्कृत टीका ]

सर्वस्यैवेति । सर्वस्यैव प्रेतस्य = बान्धवस्याबान्धवस्य वा मृतकस्य । बान्धवैः = स्वजनैः सह अश्रुपातम् = अश्रुमोचनम् कृत्वा स्नानेन शुध्येदित्यनुवृत्तक्रियया सम्बन्धः । तथा च स्नानकरणोत्तरं शुद्धिरितिभावः । एतच्च सपिण्डीकरणपर्यन्तमेव बोद्धव्यं, तदवध्येव प्रेतपदव्यवहारादिति प्रतिभाति । परन्तु साधारणतया तृतीयचतुर्थादिदिवसेषु, विशेषस्थितौ प्रथमदिवसेऽपि जायमाने अस्थि सञ्चयने, अकृते = अजाते, तदभ्यन्तरे पूर्ववदश्रुपाते सतीति यावत् । सचैलस्नानेन = देहलग्नवस्त्रेण सहैव स्नान-करणेन शुध्येदिति भावः ।

[ हिन्दी टीका]

किसी भी मृत व्याक्ति के बान्धवों के साथ (सपिण्डीकरण होने के दिनों तक में) आँसू गिराये तो स्नान कर तथा साधारणतः तीसरे चौथे दिन में, विशेष परिस्थिति पर प्रथम दिन में भी होने वाले अस्थि सञ्चय के भीतर पहले के जैसे आँसू गिराये तो देह में लगे वस्त्रों के साथ स्नान करने पर अश्रुपात निमित्तपक आशौच से शुद्ध होता है ।

[ मूलम् ]

देवलः -

**श्व[१ग]पाकं पतितं व्यङ्गमुन्मत्तं[२] शवहारकम्[२ख]।**
**सूतिकां सूयिकां[३] नारीं रजसा च परिप्लुताम् ॥**
**श्वकुक्कुटवराहाँञ्च ग्राम्यान् संस्पृश्य मानवः ॥**
**सचैलं[४] सशिर[५]: स्नात्वा तदानीमेव शुध्यति ॥**

---

पाठा० (१क) क्वचित् 'हि' अधिकः पाठः । (२) क्व चित्तु 'कृतेऽस्थि' इति पाठः । अकृताऽस्थित इतितु ह. पु. (१ग) चण्डालम् । (२) शवमन्त्यजम् । (२ख) शवदाहकम् । (३) साविकाम् । (४) सचेलः । (५) सशिराः ।

श्वादिभिः शिरःस्पर्शे स्नानम् । गात्रान्तरस्पर्शे[६] च क्षालना[७] चमनमात्रम्। तथा च शातातपः–

रजकश्चर्मकृच्चैव[८] व्याधजालोपजीविनौ ।
चैलनिर्णेजकश्चैव नटः शैलूषक स्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्रामकुक्कुटशूकरौ ॥
एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ॥

चक्री= तैलिकः । ध्वजी = शौण्डिकः ।

[संस्कृत टीका]

श्वपाकमिति ।श्वपाकम् = चाण्डालम् । पतितम् = ब्रह्महादिकम् । व्यङ्गम् = पाण्यादिविकलम् । उन्मत्तम् = उन्मादयुक्तम्, विकृतमस्तिष्कमिति यावत् । व्यङ्गोन्मत्तयोः सदाचारहीनत्वादस्पृश्यता । शवहारकम् = मृतशरीर-दाहकम् । सूतिकाम् = नवप्रसूतां प्रसवानन्तरमप्राप्तस्नानसमयाम् दशाहाभ्यन्तरे वा । सूयिकाम्=प्रसवकारिणीम् । साविकामिति पाठे तु प्रसवकारयित्रीमित्यर्थः अत्र "सूयिका = प्रसवकारयित्री" इति तु म. मु. रघुनाथ :। रजसाचपरिप्लुताम् = रजस्वलाम् ।

[टिप्पणी]

रजस्वलाविधिविशेषविचारे कृत्यसागरो यथा –"अथ नार्याः व्रतकरणे रजोयोगे का गतिरत्राह" भृगुः–

एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यति । इति

एकादश्यामित्युपलक्षणम् । तस्य व्रते आरब्धे इत्यर्थे तात्पर्यम् । तथाहि, वृद्धगार्गः–

सम्प्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् । इति

द्वादशीव्रतमित्यस्य आरब्धव्रतमित्यर्थः । मनुरपि–

प्रारब्धदीर्घतपसां नारीणां यद् रजो भवेत् ।

(६) क्वचित् 'च' नास्ति । (७) प्रक्षालना । (८) (क) चमकाश्चैव ।

न तत्रापि व्रतस्यास्य अवरोधः कदाचन । इति
व्रतस्यास्येति । आरब्धव्रतस्येत्यर्थः ।

मात्स्ये–

अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।
उपवासं स्वयं कुर्यान्नात्र कार्या विचारणा ॥

व्रतारम्भानन्तरमशौचमपि न प्रतिबन्धकम् । यथा ब्रह्मपुराणे–

व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । इति ।

आरम्भविचारे हारीतः–

आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ॥

अथ स्वस्य प्रतिबन्धवशादुपवासासामर्थ्ये प्रातिनिध्येन व्रतं सम्पाद्यम्, किन्तत्र मानमित्याह स्कन्दपुराणम्–

असामर्थ्यञ्चेच्छरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ।
भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः ॥ इति

एतदर्थे एवं कात्यायनोऽप्याह–

पितृमातृभ्रातृपतिपुत्रार्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं भवेत् ॥ इति

किञ्च स्मृतिः–

भार्या भर्तृव्रतं कुर्याद् भार्यायाश्च पतिस्तथा ।
असामर्थ्ये तयोरेवं व्रतभङ्गो न जायते ॥
ब्राह्मणः क्षत्रियस्यार्थे एकादश्यामुपोषितः ।
पुरोधाः क्षत्रियस्यार्थे फलमाप्नोति निश्चितम् ॥

इत्यलं बहुना ।

## [ हिन्दी टीका ]

रजस्वला नारी (आदि) की विशेष विधि के संबन्ध में 'कृत्यसागर' नामक निबन्ध कहता है :

किसी नारी ने एकादशी आदि व्रत करना शुरू कर दिया है और व्रत समाप्ति के पहले ही उसे मासिक धर्म हो आता है अर्थात् वह रजस्वला हो जाती है तो ऐसी स्थिति में वह मासिक धर्म आरम्भ किये गए उस व्रत का प्रतिबन्धक नहीं होगा। अर्थात् वह उपवास करती ही रहे, हाँ उस उपवास निमित्तक पूजन किसी अन्य व्यक्ति से करवा ले।

यदि उपवास या व्रत आरम्भ कर देने पर किसी को जन्माशौच या मरणाशौच हो जाता तो भी वह उपवासादि खण्डित नहीं होगा क्योंकि ब्रह्मपुराण का कहना है कि व्रत, यज्ञ, विवाह, श्राद्ध, होमनिमित्तक पूजन या जप यदि शुरू कर दिया गया हो तो सूतक नहीं लगेगा। अन्यथा सूतक के कारण उक्त कर्म शुरू न किये जायँ।

हारीतवचनानुसार यज्ञ में आचार्य आदि का वरण, व्रत और जप में संकल्प, विवाह आदि में नान्दी श्राद्ध, तथा आद्य, एकोद्दिष्ट, पार्वण आदि श्राद्ध में पाक क्रिया आरम्भ हो जाना ही इन कर्मों का प्रारम्भ माना जाता है।

यदि शारीरिक असमर्थता या अन्य किसी प्रतिबन्धवश व्रत करना संभव न हो रहा हो और व्रत समय उपस्थित हो गया हो तो धर्मपत्नी, विनयी पुत्र, भाई, बहन या शिष्य या दक्षिण से आदि के द्वारा किसी ब्राह्मण से व्रत करवा लेना चाहिए।

यहीं कात्यायन का कहना है कि पिता, माता, भाई, पति या पुत्र के निमित्त उपवास करने वाले को सौ गुन पुण्य मिलता है।

स्मृतिवचन के अनुसार पतिपत्नियों में किसी की असामर्थ्य स्थिति में एकके द्वारा व्रत कर लेने पर व्रतभंग नहीं होता है।

इसी तरह ब्राह्मण या पुरोहित के द्वारा क्षत्रिय के निमित्त व्रत कर लिया जा सकता है।

## [ संस्कृत टीका शेषभाग ]

रजस्वलाञ्च (नारीम्)। ग्राम्यान् = ग्रामोत्पन्नान्। श्वकुक्कुटवराहाँश्च = कुक्कुर-चरणायुध-शूकराँश्च। मानवः संस्पृश्य। सचैलम् = सवस्त्रम्।

सशिरः=शिरोमज्जनंपूर्वकम् । पदद्वयमिदं क्रियाविशेषणम् । स्नात्वा । शुध्यति= संस्पर्शनिमित्तकादाशौचाद् विशुध्यतीति भावः ।

अत्र श्वादिभिः शिरःस्पर्शे स्नानम् । गात्रान्तरस्पर्शे च तदङ्गक्षालना- चमनमात्रमिति व्यवस्था बोध्या । तथा च शातातपवचनं 'यथा रजक' इत्यादि । रजकः = वस्त्रधावकः । चर्मकृत् = चर्मकारः । व्याधः = मृगयुः। व्याधो मृगवधाजीवो मृगयुः लुब्धकोऽपि स इत्यमर : । जालोपजीवी=वागुरिकः धीवरश्च । 'द्वौ वागुरिकजालिकौ' इति 'धीवरोऽपि च जालिक' इति च अमरः। चैलनिर्णेजकः = वस्त्ररञ्जकः । नटः =जायाजीवः जातिविशेषः । वचनेऽस्मिन् "चैवेत्यत्र सौचिरिति, नट इत्यत्र टक इति प्रायश्चित्तविवेके पाठः । तत्र व्याख्यातञ्च-सौचिः=सूच्याजीवी । टको धूर्त्तः" इति वीर- मित्रोदयः । शैलूषकः=अभिनयवृत्या जीवन-निर्वाहकः । मुखेभगः=मयूरपक्षी, रतिकाले मयूरी मुखेनैव वीर्यं गृह्णातीति प्रसिद्धिः । अथवा वीर्यपान- प्रलोभनेनापि मुखमैथुनकृन्नरो नारी वा । अयोनौ= योन्यतिरिक्तदेशे, तत्राऽप्यास्यमत्यन्तनिषिद्धमिति छन्दोगाह्निके श्रीदत्तोपाध्यायकृतविवेचनाच्च । श्रूयते हि प्रकारस्यास्य प्रचलनं पाश्चात्य-जगति प्राचुर्येण विद्यते ।

"नटो नर्तकः, शैलूषो नाटकाद्यभिनेता, मुखेभगो मुखयोनिरितिप्रसिद्धः, वध्यघाती चौरादिवधे नियुक्तः । अत्राजहत्स्वार्थलक्षणया शिरःपदेन नाभेरूर्ध्वमुपलक्ष्यते" इति कृत्यसारसमुच्चयः ।

श्वा=कुक्कुरः । सर्ववर्णगा वनिता=सर्ववर्णगामिनी नारी । चक्री=तैलिकः । ध्वजी=शौण्डिकः । वध्यघाती=वध्यमारकः । ग्रामकुक्कुटशूकरौ=ग्रामीण- चरणायुधवराहौ । एभिः = पूर्वोक्तरजकादिभिः । द्विजातिषु=द्विजेषु । शिरोवर्जम् = शिरो विहाय । यदङ्गं संस्पृष्टं, तस्य तोयेन प्रक्षालनं कृत्वा । आचान्तः=कृताचमनः । शुचिताम् = शुद्धिम् । इयात् = प्राप्नुयात् । एवञ्च देवलशातातपवचनयोरेकवाक्यतायामुक्ता व्यवस्था स्वत एव सिद्धा ।

## [ हिन्दी टीका ]

चाण्डाल, पतित, विकलाङ्ग, पागल, मुर्दा ले जाने वाला, नवप्रसूता (प्रसव के बाद जब तक स्नान न किया हो, या दश दिनों के भीतर), आसन्नप्रसवा, या प्रसव कराने वाली, रजस्वला नारी, धोबी, चमार, मल्लाह, या व्याधा, रंगरेज, नट

(आल्हा आदि गानेवाला जाति विशेष) या नाचने वाला, अभिनय से जीविका चलाने वाला, मयूर पक्षी या मुखमैथुन वाला नर या नारी (सुना जाता है कि इस प्रकार का प्रचलन पाश्चात्य जगत् में अधिक है), कुक्कुर, सभी वर्ण के पुरुषों के साथ रमण करने वालीं (नारी), तेली (तेल पेल कर और इसका व्यापार कर जीविका चलाने वाला जातिविशेष), मद्य विक्रेता (शराब बेचने वला), फाँसी देने वाला जल्लाद, गाँव में उत्पन्न मुर्गा तथा सूअर–इस के द्वारा यदि द्विजके शिर में स्पर्श हो तो वे शरीर में लगाए वस्त्रों के साथ तथा शिर डुबाकर स्नान करे। यदि शिर से अन्य अंग में स्पर्श हो तो जल से उस अंग को पोंछकर आचमन करने से शुद्धि होती है।

[मूलम्]

विष्णुः–

**भक्ष्यवर्जं पञ्चनखशवं तदस्थि सस्नेहम्।**

[संस्कृत टीका]

भक्ष्यवर्जमिति। भक्ष्याः पञ्च पञ्चनखाः यथा–

**पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।**
**शशकः शल्लकी गोधा खड्गः कूर्मोऽथ पञ्चमः॥**

इति वाल्मीकिः। यथा वा मनौ (५। ११८)

**श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा।**
**भक्ष्यान् पञ्च नखेष्वाहु......**

इत्येतान् वर्जयित्वा। पञ्चनखशालिनो वानरादेः शवम् (अथवा) सस्नेहयुक्तम्। तदस्थि=भक्ष्यान्यपञ्चनखानामस्थि स्पृष्ट्वा। सर्वे वर्णाः स्नानमाचरेयुरिति पूर्वोक्तं संयोजनीयम्।

[हिन्दी टीका]

मनु आदि मुनियों द्वारा पंचनखियों में सेंध, साही, गोह, गैंडा, कछुवा और खरगोश में प्रथम को छोड़कर पाँच या तत्सहित भक्ष्य कहे गये हैं। अतः इनसे अन्य वानर आदि पंचनखियों के शव (मृतशरीर) या मज्जा आदि से युक्त हड्डी का स्पर्श हो तो सभी वर्ण का व्यक्ति स्नान कर शुद्ध होता है।

[मूलम्]

ब्रह्मपुराणे—

उदक्यां सूतिकाञ्चैव श्वानमन्त्यावसायिनम् ।
नग्नादीन् मृतहाराँश्च स्पृष्ट्वा शौचं विधीयते ॥
स्नात्वा सचैलो मृद्भिस्तु शुध्येद् द्वादशभिर्नरः ।
एतदेव भवेच्छौचं मैथुने वमने तथा ।

नग्नादयः = पाखण्डाः । मृद्भिः = उदक्यादिभिः[1] स्पृष्टमङ्गं प्रक्षालये-दिति[2] शेषः । ए[3]तदनन्तरं स्नात्वेति योज्यम् ।

[संस्कृत टीका]

उदक्यामिति । उदक्यम् = रजस्वलाम् । सूतिकाम् = प्रसवानन्तरम-प्राप्तस्नानकालां प्रसूतिकाम् । श्वानम् = कुक्कुरम् । अन्त्यावसायिनम् = निषादं चाण्डालाज्जातम् । यथा च मनुः (१० । ३८)

निषादस्त्रीषु चाण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ।

इति, निषादश्च ब्राह्मणाच्छूद्रायां जातः । नग्नादीन् = पाखण्डान् । यथाच विष्णुपुराणम्

सर्वेषामेव वर्णानां त्रयी संवरणं नृप ।
तां समुज्झति यो मोहात् स नग्नः पापकृत्तमः ॥ इति

मृतहारान् = शवहारान् । स्पृष्ट्वा मृद्भिरित्यनन्तरमुदकादिभिः स्पृष्टमङ्गं प्रक्षालयेदितिशेषः । तथाच द्वादशभिः मृद्भिः = द्वादशवारं जलसहित-मृत्तिकाभिः । उदकादिभिः स्पृष्टमङ्गम् । प्रक्षालयेत् = परिमार्जयेत । सचैलः = सवस्त्रः स्नात्वाशुध्येत् = शुद्धिमियात् । एतदेव = पूर्वोक्तमेव । शौचम् = शुद्धिः । मैथुने = ऋतौ स्त्रीसङ्गमे । तथा, वमने पर्युषितान्नस्य वमनेऽपि भवेत् । अतएवात्र "मैथुने वमने तथेति । अनयोर्विशेष-परत्वमुक्तमेवेति रघुनाथः ।

---

पाठा०-(१) 'भिः' इति पाठाभावः, (२) 'क्षाल्येति' इति पाठः (३) 'ए' इति पाठांभावश्चह.पु० ।

[ हिन्दी टीका ]

चार दिनों के भीतर रजस्वला स्त्री, प्रसूतिका स्त्री (प्रसव के बाद जब तक स्नान न किया हो या दस दिनों के भीतर, कुत्ता, अन्त्यावसायी (ब्रह्मण से शुद्धा में को ले जाने वाले को स्पर्श करने पर जिस अङ्गमें स्पर्शहुआ हो उसे बारह बार जल सहित मिट्टी से धोकर शरीर में लगाए वस्त्रों के साथ स्नान करे। यही शौच विधान ऋतुकाल में स्त्रीगमन तथा वासी अन्न की उल्टी होने पर समझना चाहिए।

[ मूलम् ]

मार्कण्डेयपुराणे-

''अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान्।
पतितापविद्धचाण्डालमृतहाराँश्च[१] धर्मवित्॥
संस्पृश्य शुद्ध्यति स्नानादुदक्या-ग्राम्यसूकरौ''।

अत्र मार्जारास्पर्शे स्नानविधानान्मार्जारश्च सदाशुचिरिति विष्णुस्मृतिः भाण्डादिविषया। अथवा मार्जारकर्मके स्पर्शे स्नानविधिः[२]। मार्जारकर्तृके[३] स्पर्शे दोषाभावः इति व्यवस्था[४]। चाण्डालादिस्पर्शे[५] तु न दोषविशेष[६] व्यवस्था, प्रमाणाभावात्, द्वैविध्याश्रयणाच्चेति[७]।

[ संस्कृत टीका ]

अभोज्येति। अभोज्याः = रजकादयः। मार्जारोऽत्र वनमार्जारः। गृह्यमार्जारस्य सदा शुचित्वात्। यथाह सुमन्तुः-

स्त्रीबालमशकमक्षिकामार्जारमूषिकच्छायायां सुविप्रुषो नित्यं मेध्याः इति।

बृहस्पतिरपि-

स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन।
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः॥

अत्र स्त्रीबाल-मशक-मक्षिका-साहचर्याद् गृहमार्जारावगतिरिति

---

पाठा० (१) मृतवाहाँश्च। (२) 'स्नानम्' विधिरि ति नास्ति। (३) केतुकेतु इति, (४) विवक्षा, (५) चाण्डालस्पर्शे इति च पाठः ह० पु०। (६) क्वचित्तु 'न विशेषव्यवस्था' इतिपाठः। क्वचित्तु' न तथा, द्वैविध्याश्रयणात्, इत्यन्त एव पाठः। (७) 'च्च' इत्येव पाठः।

शूलपाणिः । एवञ्च सुमन्तुवचने मूषिको गृहमूषिको ज्ञातव्यः । मार्कण्डेयपुमाणे आखुस्पर्शे स्नानविधानात्'' इति ''अपविद्धः = लोकबहिष्कृत'' इति च मित्रमिश्रः । किन्तु ''अपविद्ध : = पातित्यं विनापि निन्द्यकर्माचरणेन ज्ञातिबहिष्कृतः'' इति रघुनाथः ।

''उदक्याशुचिभिरि'' ति । याज्ञवल्क्यमिताक्षरा(या० आ० ३०)ऽत्र यथा-मार्जरस्पर्शनिमित्तं स्नानमुच्छिष्टसमयेऽनुष्ठानसमये च वेदितव्यं समाचारात् । अन्यदा तु मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति स्नानाभाव'' इति ।

ग्रन्थे, मार्जार इति । अत्र=मार्कण्डेयपुराणे । 'मार्जाराखुश्च कुक्कुटान्' इति वचनेन मार्जरस्पर्शे स्नानविधानाद् विरुध्यमाना ''मार्जारश्च सदाशुचिरि'' तिविष्णुस्मृतिर्भाण्डादिविषया बोध्या । एवञ्च विष्णुस्मृतेः मार्जारस्पृष्ट-भाण्डादिः सदैव शुचिरित्यर्थे तात्पर्यकल्पनेन विरोधानवकाश इति भावः।

लाक्षणिकार्थकल्पने गौरवादाह अथवेति । अथवा मार्जारकर्मके स्पर्शे स्नानविधिः । मार्जारकर्तृके स्पर्शे दोषाभाव इति व्यवस्था आस्थेया, अर्थात् केनापि जनेन मार्जारस्य स्पर्शे कृते एवं स्नानविधिः, परं मार्जारेण कस्यापि जनस्य स्पर्शे कृते सति दोषाभाव इत्यर्थ । व्यवस्थेयं मार्कण्डेयपुराणे । 'मार्जाराखु- श्चकुक्कुटानि'ति श्रवणात् परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति कर्मलक्षणाभिप्रायेण बोध्या । किन्तु चाण्डालादि-स्पर्शे तु तद्रीत्या दोषव्यवस्था नोचिता । माजरिस्थल इव चाण्डालादि-स्पर्शस्थलेऽपि प्रमाणविशेषानुपलब्धेः । चाण्डालकर्तृककर्मकयोः स्पर्शयोः द्विविधयोरपि दोषाधायकत्वेनाश्रयणाच्च ।

अभोज्यान्नविषये सुमन्तुः-'शौकाविक-व्याध-निषाद-रजक-बुरुड-चर्मकारा अभोज्यान्नाः' इति ।

[ हिन्दी टीका ]

अभोज्य (धोवी आदि असच्छूद्र), प्रसूता नारी, नपुंसक व्यक्ति, बिल्ली (म० म० शूलपाणि के अनुसार जो घरेलू न हो), चूहा, बाहरी कुत्ता, मुर्गा, पतित,

लोकबहिष्कृत, चाण्डाल, मुर्दे को ले जाने वाला, रजस्वला स्त्री तथा गमैया सूगर इन्हें स्पर्श करने पर धर्मज्ञ व्यक्ति स्नान करे तब शुद्धि होती है ।

मार्कण्डेय पुराण के उक्तवचनानुसार यदयपि बिलाव के स्पर्श में स्नान करने को कहा गया है तब यदि "मार्जार (बिलाव) सदैव शुद्ध होता है" इस विष्णुस्मृतिका कथन विरुद्ध होता है तो 'मार्जार से स्पर्श किया गया भाँडा बर्तन आदि अशुद्ध नहीं होता यह विष्णुवचन का तात्पर्य समझना चाहिए । अब कोई विरोध नहीं ।

अथवा स्वयं यदि मार्जार का स्पर्श करे तो स्नान करना चाहिए, किन्तु मार्जार ही स्पर्श कर दे तो कोई दोष नहीं । यह व्यवस्था माननी चाहिए ।

परन्तु इस तरह की व्यवस्था चाण्डालादि के स्पर्श प्रसंग में नहीं, क्योंकि वहाँ कोई विशेष प्रमाण उपलब्ध नहीं होता । अतः चाण्डाल आदि का स्पर्श करे या उससे स्पर्श हो जाय, इन दोनों ही स्थितियों में देह में लगे वस्त्रों के साथ स्नान करना चाहिए ।

यहाँ मार्जार (बिल्ली) के स्पर्श विषय में निन्धकार म० म० शूलपाणि उपाध्याय का विवेचन ऊपर से ज्ञातव्य है कि सुमन्तु और वृहस्पति के वचनों को देखते हुए मार्कण्डेय पुराण में आये मार्जारपद का अर्थ वनमार्जार (वन बिडाल) है। फलतः इसी के स्पर्श में स्नान का विधान है, न कि घरेलू बिल्ली के स्पर्श में भी।

यहीं याज्ञवल्क्यटीका मिताक्षरा का कहना है कि उच्छिष्ट (जूठे मुंह) के समय तथा अनुष्ठान के समय मार्जार का स्पर्श होने पर स्नान करना चाहिए । दूसरे समय में तो मार्जार, कडछुल तथा पवन ये सदा शुद्ध रहते हैं," इस वचनानुसार स्नान का अभाव होगा ।

[ मूलम् ]

लघ्वापस्तम्बः-

यद् विष्ठितं काकबलाकिकाभ्या-<br>
ममेध्यलिप्तन्तु[१] भवेच्छरीरम् ।<br>
श्रोत्रे मुखे न प्रविशेत[२] सम्यक्<br>
स्नानेन लेपोपहतस्य शुद्धिः ॥

---

पाठा० (१) ञ्च । (२) शेतु ।

अस्यायमर्थः[3] । काकबलाकिकाभ्या[3अ] यदुपरि विष्ठा कृता तच्छरीर-मशुचि[4] लिप्तं भवति । तच्चाशुचि[5] यदि श्रोत्रमुखयोः न प्रविशति तदा स्नानेव शुद्धयति[6]। एवं[7] मुखादिप्रवेशे प्रायश्चित्तान्तरं[8] सूचितम् ।

[संस्कृत टीका]

यदिति । बलाका = बकपंक्तिः (बलाका बकपङ्क्तिःस्यादित्यमरः)। बलाका एव बलाकिका । अन्यत्सुगमम् ।

[हिन्दी टीका]

किसी कौए, बगुले या बगुले के समूहने जिस शरीर पर विष्ठा कर दी हो वह अशुद्ध माना जाता है । यदि वह विष्ठा कान या मुंह में न आई हो तो स्नान से ही शरीर शुद्ध हो जाता है । मुंह आदि में प्रवेश कर गई हो तो दूसरा प्रायश्चित्त करना चाहिए । (जिसे प्रायश्चित्त व्यवस्थासार आदि ग्रन्थ से समझें)

[मूलम्]

व्याघ्रपादः-

चाण्डाला[1] दिना संस्पृष्टः[2] स्नानं कृत्वा विशुद्धयति ।

[संस्कृत टीका]

चाण्डालेति । चाण्डालपतितादिना संस्पर्शवान् जनः स्नानेन शुद्धयतीत्यर्थः। एवं सति स्पर्शनिमित्ताशौचाद् विशुद्धयतीति भावः ।

[हिन्दी टीका]

चाण्डाल आदि (या चाण्डाल आदि के जल) से स्पर्श होने पर स्नान करने के बाद शुद्ध होता है ।

---

(३) अस्यार्थः । (३अ) 'कि' इति नास्ति ह० पुस्तके । (४) ममेध्य (५) तच्चामेध्यं । (६) शुद्धिः । (ख) शुद्धिर्भवति । (ग) 'शुद्धिरिति' इति तु ह० पु० (७) तथा च । (८) (क) प्रायाश्चित्तं (ख) प्रायश्चितान्तरमिति ।

[ मूलम् ]

हारीतः—

श्वपच-मुष्टिक[१]-प्रेतहारकशवान् संस्पृश्य 'देवीराप' इत्ये[२]-ताभिरन्त[३] र्जले स्नातः पूतो भवति । अजीर्णवान्तश्मश्रुकर्मा[४]-योनिपशुदिवामैथुने[५] च ।

[ संस्कृत टीका ]

श्वपचेति । "श्वपचः = श्वखादकः छुहल इति प्रसिद्धः । मुष्टिकः = शवर" इति रत्नाकरः । 'देवीराप' इत्येताः-देवीरापो अपान्नपादित्यादयस्तिस्रः ऋचः । अयञ्च प्रयोगो वारंवार स्पर्शे । अन्यथा स्नानमात्रम् । अयोनिः = योनिव्यतिरिक्तम् । पशुः= गोमहिष्यादिः । दिवा = दिने । तथाचैतेषु, अजीर्णवान्त-श्मश्रुकर्मणोश्च स्नानमित्यर्थ इत्याचारविवेक इति नित्यकृत्यार्णवः। अत्रैव "देवीराप इत्यादिभिरिति कामकृतेऽपरथाऽमन्त्रकस्नानस्यैव बोधनात् । अयोनिपशुदिवेति प्रत्येकं मैथुनगमनान्वयि" इत्याचारादर्शफक्किका व्याख्याऽपि ।

प्रेतहारकः = शववाहकः । शवः = मृतशरीरम् । देवीराप इत्येताभि = अग्रे कात्यायनस्नानप्रकरणे देवीराप इत्यादिवक्ष्यमाणाभिस्तिसृभिः ऋग्भिः । अन्तर्जले= जलमध्ये (मग्नःसन्) स्नातः = कृतस्नानः । पूतः = पवित्रो भवति । पौनःपुन्येन सञ्जात-स्पर्शनिमित्तकाशौचाद् विशुद्ध्यतीति भावः । यत्र तडागादेरभावादन्तर्जले स्नानासम्भवस्तत्र कूपादित उद्धृतजलेनापि स्नानन्तु कर्त्तव्यमेव । अयोनिः = योनिर्भगस्तदन्यस्थानम् ।

[ हिन्दी टीका ]

श्वपच (छहंल नाम से प्रसिद्ध और कुत्ते का मांस खानेवाला जातिविशेष), शबर (भील), मुर्दे को ले जानेवाले का स्पर्श करने वाला कात्यायनस्नान प्रकरणमें कहे जानेवाले 'देवीराप' इत्यादि तीनों ऋचाओं को पढ़ते हुए जल मध्य

---

ग्रा. (१) मूषकः । 'मृषिका' इति तु ह० पु० । क्वचित्तु कोऽपि पाठो नास्ति । (२) इत्यादिभिः । (३) जले । (४) कमपशुयोनिगमने दिवा । (५) दिवामैथुन- गमने च । एवमेव ह० पुस्तकेऽपि ।

में मग्न होकर स्नान करने से शुद्ध होता है। यह प्रयोग बारंबार स्पर्श होने पर ही समझना चाहिए। अन्यथा केवल स्नान से ही शुद्धि हो जाती है।

अजीर्ण बासी अन्न का वमन; दाढ़ी मूछ (आदि केश) कटाने, योनि (भग) से अन्य स्थान या पशुयोनि या दिन में मैथुन करने पर स्नान करने के बाद (तन्निमित्तक आशौच से) शुद्धि होती है।

[ मूलम् ]

सुमन्तुः -

**अनुदकमूत्रपुरीषकरणे नखकेशरुधिरप्राशने च[1] सद्यः स्नानं घृतकुश-हिरण्योदक[2]प्राशनञ्च।**

[ संस्कृत टीका ]

अनुदकेति। अनुदकमूत्रपुरीषकरणे इत्येतच्चिरकालमूत्रपुरीषाशौचकरण-परमिति "उदक्याशुचिभिरि" ति (या० आ० १।३०) याज्ञवल्क्य-व्याख्या मिताक्षरा। अन्यत्सुगमम्।

[ हिन्दी टीका ]

मल मूत्र त्याग के बाद पानी से बहुत देर तक उस इन्द्रिय को साफ न करने, केश या रुधिर (खून) खा लेने पर उसी क्षण स्नान करना चाहिए और कुश एवं सुवर्ण का घृतमिश्रित जल पीना चाहिए अथवा घृत या कुशोदक या सुवर्ण का पानी पियें।

[ मूलम् ]

शातातपः—

**अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति।**
**तं स्पृष्ट्वाऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः॥**

द्रव्येषु = मद्यादिषु[3]। अशुचिनर[4] स्पृष्ट-स्पर्शिन (स्तस्पर्शिन-श्चाचमनं पूर्वोक्तम्।)

---

पाठा० (१) क्वचित् 'च' इति नास्ति। क्वचिन्तुसचैलमिति (२) कुशोदक (३) मध्वादिषु (४) अशुचिस्पृष्टिस्पर्शे चाचमनं पूर्वोक्तम्।" र्स्पशनस्तत्स्पर्शिनश्च' इति पाठो मुद्रिते पुस्तके आसीत्परमेतस्य प्रामादिकत्वकल्पनात्वदधिक पाठो मया कुण्डलीकृतः "अशुचिनर-स्पृष्ट-स्पर्शने स्त्राचमनं पूर्वोक्तम्" इति तु ह० पु०।

## [संस्कृत टीका]

अशुचिमिति । अशुचिम् = अपवित्रम्-पतित-चाण्डालादि परकीय-मल-मूत्रादि वा यः संस्पृशेत् स तु एक एव दुष्यति = अशौचभाग् भवति। तम् =. अशुचिस्पर्शिनम् । स्पृष्ट्वा अन्यो जनो न दुष्येत = नाशुचिर्भवेत्। अत्र न दुष्येतेत्यनेन स्नान-निमित्त-दोषाभाव उक्तः, नत्वाचमन-निमित्त-दोषाभाव इति वीरमित्रोदयः । अयं विधिः = एतद् विधानम् । सर्व-द्रव्येषु = मद्यादिषु बोध्यः । एवञ्च मद्यादिस्पर्शे स्नानं, मद्यादिस्पर्शकर्तृस्पर्शे चाचमनमाचरणीयमिति भावः ।

पूर्वोक्तमिति । पूर्वोक्तम् = पतित-चाण्डालेत्यादि-गौतम-वचन-विवेचनावसरे "उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः" इत्यादि देवलवचनं पतितादि-स्पर्शि - स्पर्शे सङ्कोचनीयमित्यादिना उक्तमिति भावः ।

## [हिन्दी टीका]

अपवित्र-पतित, चाण्डाल, रजस्वला स्त्री आदि अथवा अन्य के मलमूत्र आदि का स्पर्श करने पर स्पर्शक रनेवाला एक व्यक्ति दूषित (अशुचि) होता है । अतः इस अशौचनिवारण के लिए उसे स्नान करना चाहिए और उस (अशुचिस्पृष्ट) का स्पर्श करनेवाला दूषित नहीं होता । अर्थात् इसे स्नान करने की आवश्यकता नहीं । किन्तु साधारण आशौच के कारण आचमन तो करना ही चाहिए ।

इसी तरह मदिरा आदि अन्य सभी अपवित्रय द्रव्य का स्पर्श होने पर स्नान तो मदिरा आदि के स्पर्शकर्त्ता का स्पर्श होने पर आचमन करना चाहिए ।

'पतित' चाण्डाल-सूतिका आदि गौतम वचन के विवेचन के अवसर पर यह भी कह दिया गया है कि अपवित्र व्यक्ति (पूर्वोक्त पतित आदि) के स्पर्श में स्नान होगा तो इनके स्पर्शकर्त्ता को स्पर्श होने पर केवल आचमन होगा ।

## [मूलम्]

यमः-

आतुरं स्नानसम्प्रा[१] प्तौ दशकृत्व[२] स्त्वनातुरः ।
स्नात्वा स्नात्वा स्पृशेत् क्षिप्रं ततः शुद्ध्येत्स आतुरः ॥

---

पाठा० (१) स्नान उत्पन्ने । (२) कृत्वां ह्य ।

[ संस्कृत टीका ]

आतुरमिति । आतुरस्नानसम्प्राप्तौ = स्नान सम्बर्धनीय-व्याधितस्य नैमित्तिके स्नाने उपस्थिते । अनातुरः = नीरुजो जनः । दशकृत्वः = दशवारम् । स्नात्वा स्नात्वा = स्नानं कृत्वा कृत्वा । तम् = आतुरम् । क्षिप्रम् = शीघ्रम् स्पृशेत् । ततः स आतुरः । शुद्ध्येत् = शुचितामियात् ।

रजस्वला-विषये पूर्वयमवचनानन्तरमग्रिमवचनं, यथा

**स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।**
**पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥**

**सिक्तगात्रा भवेदेभिः साङ्गोपाङ्गा कथञ्चन ।**
**न वस्त्र-निष्पीडनं कुर्यान्नान्यद् वासश्च धारयेत् ॥**

ज्वराभिभूत-रजस्वला विषये उशना यथा

**ज्वराऽभिभूता या नारी रजसा च परिप्लुता ।**
**कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥**

**चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।**
**सा सचैलाऽवगाह्याऽपः स्नात्वास्नात्वा पुनः स्पृशेत् ॥**

**दश द्वादशकृत्वो वा आचमेच्च पुनः पुनः ।**
**अन्ते च वाससस्त्यागः ततः शुद्धा भवेत्तु सा ॥**

**दद्याद् भक्त्या ततो दानं पुण्याहेन विशुद्ध्यति । इति ।**

[ हिन्दी टीका ]

मरणाशौच आदि निमित्तवश यदि रोगी को स्नान करना उपस्थित हो गया हो तो ऐसी स्थिति में उसके बदले स्वस्थ व्यक्ति दस बार स्नान कर उसे छूये तो वह रोगी शुद्ध माना जाता है ।

ऊपर से ज्ञातव्य है कि यदि रजस्वला स्त्री को नैमित्तिक स्नान उपस्थित हो गया हो तो किसी पात्र में स्थित जल से स्नान कर अग्रिम नियम का पालन करे। अथवा यदि इस जल से प्रत्येक अंग में जल छिड़क ले तो तात्कालिक शुद्धि हो जायगी, किन्तु पहने वस्त्र को न निचोडे और न दूसरा वस्त्र धारणा करे ।

इसी तरह यदि कोई रजस्वला स्त्री ज्वर आदि से पीड़ित है तो किस क्रिया से उसकी शुद्धि होगी ? इसके उत्तर में कहा गया है कि चौथे दिन होने पर उसे कोई अन्य शुद्ध स्त्री स्पर्श कर उसी वस्त्र से दस या बारह बार स्नान एवम् आचमन कर प्रत्येक बार स्पर्श करे । अन्त में रोगी का वस्त्र बदलवा दे तो वह शुद्ध हो जाती है। बाद में किसी पुण्यतिथि में भक्तिपूर्वक दान करने से विशेषतः शुद्ध हो जाती है।

[ मूलम् ]

पराशरः—

अस्तङ्गते यदा सूर्ये चाण्डालं पतितं स्त्रियम् ।
सूतिकां स्पृश[१]तश्चैव कथं शुद्धिर्विधीयते ॥
जातवे[२]दःसुवर्णे च सोम[३]मार्गं तथैव च ।
ब्राह्मणानुमते चैव दृष्ट्वा स्नात्वा च शुद्ध्यति ॥
आचान्तमनुगर्तं वा निशि स्नानं न विद्यते ।
स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन च ॥

जातवेदाः = अग्निः । सोममार्गः = आकाशम् । ब्राह्मणानुमते स्नात्वा अग्न्यादिकं दृष्ट्वा शुद्ध्यतीत्यर्थः। आचान्तम् = आचमनम् । अनुगर्तम् = जलाशयं प्रविश्य । निशीत्युभयत्र[४] योज्यम्।

[ संस्कृत टीका ]

अस्तेति । सूर्ये = दिवाकरे । अस्तङ्गते = अस्ताचलमाश्रित्य लोचनागोचरीभूते सति । सूर्योस्तानन्तरमिति यावत् । चाण्डालं, पतितं, सूतिकां स्त्रियं स्पृशतो जनस्य शुद्धिः कथमिति शङ्कते अस्तङ्गते इति प्रथमपद्येन । तत्र च हेतुं दर्शयति आचान्तेति तृतीयपद्येन । निशि=रात्रौ । आचान्तम्= आचमनम्। अनुगर्त्तम्=जलाशयं, प्रविश्येति शेषः । स्नानं वा, न विद्यते = ऋषिमुनिसम्मतं नास्ति । किन्तु दिवोद्धृतजलेन=दिवसे एवानीतजलेन स्नानमाचमनञ्च। प्रोक्तम् = मुनिभिः कथितम् । समाधत्ते जातवेद इति

पाठ (१) (क) स्पृशतञ्चैव । (ख) संस्पृश्य । (२) जातवेदाः सुर्वणञ्च सोममार्गस्तथैवच । (३) मार्गम् । (४) यतो ।(अ) 'त्रापि' इति तु ह० पु० ।

द्वितीयपद्येन । ब्राह्मणानुमते = विप्रानुमोदिते जलाशये निश्यपि स्नात्वा। अतएव "ब्राह्मणानुमतेति। दिवोद्धृतजलाभावे ब्राह्मणानुमत्या निश्यप्यनुगर्तं स्नायादित्यर्थमाहुरि"ति रघुनाथोऽपि । जातवेदाः = अग्निः, सुवर्णम् = हिरण्यञ्चेति द्वन्द्वे जातवेदः सुवर्णे । तथैव सोममार्गम् = आकाशञ्च दृष्ट्वा शुद्ध्यतीत्यर्थः ।

यद्यपि आकाशस्य निरवयवत्वादात्मेतरविभुत्वाच्च प्रत्यक्षमसम्भवि तथापि दृश्धातोः ज्ञानसामान्यार्थकतयाऽत्र स्मरणात्मकं मानसं वा ज्ञानं बोध्यम् । निशीत्युभयत्र वचने उपात्तं 'निशी'ति पदमाचमन-स्नानयोरुभयोऽपि योज्यमिति भावः ।

इतोऽप्यन्यानि स्नाननिमित्तानि प्रायश्चित्तग्रन्थे शुद्धिग्रन्थे च द्रष्टव्यानि।

[ हिन्दी टीका ]

रात्रि में स्नान तथा आचमन के निषेध का और आवश्यक पक्षमें दिन में लाये हुए जल से स्नान तथा आचमन का विधान ऋषिमुनिसम्मत रहने के कारण प्रश्न उठता है कि सूर्यास्त के बाद यदि चाण्डाल, पतित तथा दस दिनों के भीतर की प्रसूतिका स्त्री का स्पर्श हो जाय तो शुद्धि कैसे होगी ? इसका उत्तर यह है कि ब्राह्मण से अनुमोदित जलाशय में रात में भी स्नान कर अग्नि, सुवर्ण तथा आकाश के दर्शन से वह स्पर्शकर्त्ता शुद्ध हो जाता है ।

❁ इति स्नान-निमित्तानि ❁

# स्नानभेदाः

[ मूलम् ]

अथ स्नानभेदाः । शङ्ख :-

नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ।
rhFkkZkko s fi[१] कर्तव्यमुष्णोदकपरोदकैः ॥

नित्यम् = प्रातः स्नान परम्[२] । नैमित्तिकम् = चाण्डालादिस्पर्शनिमित्तम्[३]। क्रियाङ्गम् = जपादिकर्माधिकारहेतुः । मलकर्षणम् = अभ्यङ्गपूर्वकम् । ज्योतिश्शास्त्रोक्त[४]-पुष्यस्नानादि काम्यम् । नद्याद्याधारकफलार्थं क्रियास्नानञ्चादाय शङ्खेन षोढा स्नानमुक्तम् ।

[ संस्कृत टीका ]

नित्यमिति । स्नानभेदेषु शङ्खेन वारुणं षड्विधं स्नानमुक्तम् । तद्यथा-

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥

इति (शङ्खस्मृति ८/१)

तत्र,

(१) नित्यं = प्रातःस्नानपरम् । यथा चाह शङ्खः (८/२)–

अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥ इति ।

(२) नैमित्तिकम् = चाण्डालादिस्पर्शनिमित्तम् । तद् यथा (८।१३)–

चाण्डालशवपूयादि स्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु यथा स्नाति स्नानं नैमित्तिकं हि तत् ॥ (इति)।

(३) काम्यम् = ज्योतिषशास्त्रोक्तपुष्यस्नानादि । तद्यथा (८/४)–

पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥ इति ।

---

पाठा०(१) 'तु' इति, (२) 'नम्' इति, (३) 'त्तकम्' इति, (४) 'के' इति च ह० पु०।

दैवज्ञविधिः=ज्योतिश्शास्त्रम् ।

(४) क्रियाङ्गम् = जपादिकर्माधिकारहेतुः । तद्यथा (८।१५)–

**जप्तुकामः पवित्राणि अर्चिष्यन् देवताः पितृन् ।**
**स्नानं समाचरेद् यस्तु क्रियाङ्गं परिकीर्त्तितम् ॥**

पवित्राणि = मन्त्रान् ।

(५) मलापकर्षणम् = अभ्यङ्गपूर्वकम् । तद्यथा (८।१६)–

**मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।**
**मलापकर्षणार्थन्तु प्रवृत्तिस्तस्य नान्यथा ॥ इति ।**

अभ्यङ्गपूर्वकमिति मलापकर्षणसाधनोपलक्षणम् । अभ्यङ्गश्च तैलमर्दनमिति शब्दकल्पद्रुमः ।. लेपन, तेल, अवटन आदि की मालिश इति संस्कृतशब्दार्थकौस्तुभः ।

(६) क्रियास्नानम् = नद्याद्याधारकफलार्थम् । तद्यथा (८।१६)–

**सरस्सु देवखातेषु तीर्थेषु च नदीषु च ।**
**क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रिया मता ॥ इति ।**

क्रियास्नानन्तु सरःप्रभृतिष्वेव कर्तव्यम् । नतु तदभावेऽप्यन्यत्रेत्याह –'सरस्सुचे' त्यादिना । तीर्थशब्दोऽत्र तीर्थभूत-वापी-तडाग-परः देवखातादी नां पृथगुपादानात् । मता = अभिमतेति नित्यकृत्यार्णववीरमित्रोदयौ । क्रियास्नानम् = क्रियारूपं स्नानम्, स्वर्गादिहेतुतया स्नानमेव प्रधानमित्यर्थ इत्याचारचिन्तामणिः ।

उक्तषड्विधस्नानेषु नित्यं नैमित्तिकं, क्रियाङ्गं, मलकर्षणमिति चतुर्विधं स्नानं देवखातादिभिन्नतीर्थभूत-वापीतडागाद्यभावे अपिशब्दाद्देवखातादीना-मभावे च उष्णोदकपरोदकैः कर्तव्यम् । एतेन अर्थादिदमुक्तं भवति यत्ततोऽवशिष्टे काम्यस्नानक्रियास्नाने उष्णोदकपरोदकाभ्यां न कर्तव्ये इति । अतएव "पुष्यस्नानाद्युक्तेतिकर्तव्यतया नित्यं नैमित्तिकमित्यादि काम्यस्नान-क्रिया-स्नाने उष्णोदकपरोदकाभ्यान्न कार्यमित्युक्तमिति रत्नाकर" इति नित्यकृत्यार्णवः ।

तीर्थादिसद्भावे तूष्णोदक-परोदकाभ्यां स्नानं नादृष्टफलकमित्याह मूलोक्त-वचनाग्रेतनवचनेन-

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ॥
अद्भिः गात्राणि शुद्ध्यन्ति तीर्थस्नानाद्भवेत्फलम् ।
सरस्सु देवखातेषु तीर्थेषु च नदीषु च ॥
स्नानमेव क्रिया यस्मात्स्नानात्पुण्यफलं स्मृतम् । इति

परवारि = परकारितोत्सृष्टजलाशयस्थम् पराहृतञ्च परं ब्रह्मपुराणीययोः-

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥ १॥
श्मश्रुकर्माश्रुपातञ्च मैथुनं छर्दनन्तथा ।
अस्पृश्यस्पर्शनं कृत्वा स्नायाद्वर्ज्या जलक्रिया ॥ २ ॥

इति वचनयोरेकवाक्यत्वे अहरहः क्रियमाणभवशेषात्प्राप्तं स्नानं मध्याह्न-स्नानञ्च नित्यस्नाने, नैमित्तिकन्तु सूर्यग्रहादिनिमित्तकमेव, न तु शङ्खोक्त-चाण्डालस्पर्श-निमित्तकं तत्र तर्पणनिषेधात् । एवमेव काम्यं स्वर्गादिफलकं शङ्खेन क्रियास्नानत्वेनोक्तं तीर्थादिस्नानं, नतु ज्योतिश्शास्त्रोक्तं शङ्खेन काम्यस्नानत्वेनोक्तं पुष्यस्नानादि, तस्य ज्योतिश्शास्त्रेणैव प्रतिपादनात् । तदितरशास्त्रप्रोक्ततर्पणरूपेतिकर्तव्यताऽनन्वयात् इति वीरमित्रोदयः । एवमेव पूर्वप्रदर्शितछन्दोगाह्निकमपि ।

## [हिन्दी टीका]

स्नान भेद प्रसंग में शंख ने छह प्रकार के वारुण (जलसाध्य) स्नान कहे हैं। वे क्रमशः इस प्रकार हैं-

(१) नित्यस्नान-जिसे प्रातःस्नान कहते हैं ।

(२) नैमित्तिक स्नान-जो चाण्डाल आदि के स्पर्श के निमित्त से किया जाता है ।

(३) काम्य स्नान-जो ज्योतिःशास्त्र से कहा गया पुष्यस्नान आदि है ।

(४) क्रियाङ्गस्नान-जो मन्त्रजप तथा देव-पितरों की पूजा के लिए किया जाय ।

(५) मलकर्षणस्नान-जो तेल या उवटन आदि की मालिश के बाद किया जाय।

(६) क्रियास्नान-जो नदी आदि में पुण्यप्राप्ति, पापक्षय आदि फलार्थ किया जाय ।

इन छह प्रकार के स्नानों में नित्य, नैमित्तिक, क्रियाङ्ग तथा मलकर्षण स्नान, नदी, देवखात, सरोवर तथा अपना कृत्रिम जलाशय-कुआ तालाब आदि न होने पर गरम जल एवं दूसरे के जलाशय के जल से करने चाहिएँ ।

इससे सिद्ध होता है कि अब बचे हुए काम्य स्नान एवं क्रिया स्नान गरम जल से तथा दूसरे के जलाशय के जल से न हो-।

किन्तु ब्रह्मपुराण के वचनों के अनुसार नित्यस्नान-प्राप्तःस्नान एवं मध्याह्नस्नान दोनों ही हैं । नैमित्तिक स्नान सूर्यग्रहण आदि निमित्तक ही है, न कि शंख द्वारा कहा गया चाण्डाल स्पर्श आदि निमित्तक भी । इसी तरह काम्य स्नान स्वर्ग आदि फल को देनेवाला शंख के द्वारा क्रिंया स्नान नाम (शब्द) से कहा गया तीर्थ आदि का स्नान ही है, न कि शंख के द्वारा कहा गया ज्योतिःशास्त्रप्रोक्त पुष्य-स्नान आदि भी ।

❁ इति स्नानभेदाः ❁

## क्रियास्नानधर्माः

[ मूलम् ]

अत्र क्रियास्नाने एव तेन[१] धर्मा विहिताः । प्रातःस्नाने "यथाऽहनि तथा प्रातरि" त्यतिदेशाद्धर्मा अहरहःस्नाने कात्यायनेनोक्ताः[२] । स्नानान्तराणि च निमज्जनमात्ररूपाणि, धर्मसम्बन्धे प्रमाणाभावात् । न चातिदेशः, सर्वेषां सधर्मकृत्यत्वे[३] विशेषोद्देशेन धर्मविधिवैफल्यात्[४] । नच गुणफले विशेषः, तदभावात् । अपिच नैमित्तिके धर्माभाव उक्त एव । काम्यपुष्यस्नानादि-मलापकर्षकयोस्तु लौकिकयोः नालौकिककर्माङ्गमिति तक्षसूत्रे[५] साधि-तत्वान्नालौकिकाङ्गसम्बन्धः । क्रियाङ्गस्नानेऽप्यद्भिरेव शुद्ध्यभिधानाद्धर्माभावः । अतएव हेत्वन्तरप्रयुक्ते निमज्जनमात्रेऽपि क्रियास्नानस्य पृथगनुष्ठानम् ।

हरिहरोऽपि क्रियास्नान[६]-प्रातःस्नानयोरेव धर्मानाह । किन्त्विदं क्रियास्नानं फलार्थितया कथितमप्यहरहः स्नानादभिन्नं, तत्रापि पापक्षयरूपस्य सत्वादिति भट्टनयेना[६]विशेषमाह । एवं स्नानानुकल्पेऽपि[७] श्रुतमात्रमनुष्ठेयम् ।

[ संस्कृत टीका ]

अत्रेति । अत्र = सभेदस्नानप्रकरणे - षड्विधस्नानेषु मध्ये क्रियास्नाने एव । तेन = शङ्खेन,

क्रियास्नानं प्रवक्ष्यामि यथावदनुपूर्वशः ।
मृद्भिरद्भिश्च कर्तव्यं शौचमादौ यथाविधि ॥

इत्यारभ्य,

उदकस्याप्रदानाद्धि स्नानशाटीं न पीडयेत् ।
अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते ॥

---

पाठा (१) 'तेन' इत्यभ 'ते' इतै (२) 'ने नो' इत्यत्र 'नाद्यु' इति च ह० पु० । (३) सधर्मकृत्ये इति मुद्रिताचारादर्शपाठः । परं प्रकरणानुरोधात् 'कृत्यत्वे' इतिपाठः मयैव स्थापितः । परं सधर्मकत्वे' इति तु ह० पु० । (४) वैकल्यान् इति, (५) सूत्र इति च ह. पु. । (६) 'नित्य क्रियास्नानयोः' इति ह. पु. । (७) कल्येष्वपि इति ह. पु ।

इत्येतत्पर्यन्तं कथितैः पञ्चदशश्लोकात्मकवचनैः विधेयतया प्रतिपादिताः स्नानधर्माः (स्नानसम्बद्धान्यक्रियाः) ।

कात्यायनेन तु मध्याह्नस्नानमुपक्रम्य "अथातो नित्यस्नानमि" त्यारभ्य "एष एव स्नानविधिरित्यन्तं पठितेन वचनेन वक्ष्यमाणाः स्नानधर्मा मध्याह्नस्नाने विधेयतया उक्ता, एव "यथाहनि तथा प्रातर्नित्यं स्नायादनातुर" इत्यादि छन्दोगपरिशिष्टवचनेन मध्याह्नस्नानधर्मातिदेशात्प्रातःस्नानेऽपि कर्तव्यतया अतिदिष्टाः । तथाच क्रियास्नान-प्रातःस्नान मध्याह्नस्नानेभ्योऽन्यस्नानानां निमज्जन (जलकरणकशरीरप्रच्छादन) मात्ररूपत्वेन तत्र स्नानधर्मसम्बन्धे प्रमाणाभावान्न सर्वत्र धर्मातिदेशः । पुष्यस्नानादिरूपकाम्यस्नाने तु ज्योतिश्शास्त्रोक्तैरेव धर्मैः निराकाङ्क्षत्वान्न तत्रापि धर्मसम्बन्धः ।

न च यथाऽहनि तथा प्रातरित्यतिदेशः (अन्यधर्मस्य अन्यत्रारोपणम्) प्रातःस्नान इव काम्यमलापकर्षणादिस्नानेष्वपि स्नानधर्मबोधनार्थमस्त्विति वाच्यम् । तथा सति यथाऽहनि तथा प्रातरित्यनेन प्रातःस्नानमात्रे स्नानधर्मातिदेशस्य वैफल्यापातात् ।

यद्यपि क्रियास्नाने शङ्खोक्ताः स्नानधर्माः, मध्याह्नस्नानप्रातः स्नानयोः, कात्यायनवचनोक्ताः स्नानधर्मा अनुष्ठातुमुचितास्तथापि आचारस्तु स्वशाखोक्तपौराणिकयोरन्यतरधर्मानुष्ठान एव बोद्धव्यः ।

नच "त्रिरात्र फलदा नद्यः" इत्यादिस्थलेषु नदीस्नानादौ त्रिरात्रोपोषणं, नदीव्यतिरिक्ते त्र्यहः स्नानान्यतरजन्यफलप्राप्तिरूपः फलविशेषो यथा स्वीक्रियते तथाऽत्रापि तत्तद्धर्मात्मकेन गुणेन कश्चित्फलविशेषो मन्तव्यः, तदर्थञ्च सर्वेषु स्नानेषु धर्मविशेषो मन्तव्य इति वाच्यम् । गुणत्वेन स्वीक्रियमाणस्य धर्मस्य स्वतन्त्रफलकत्वाभावेन फलविशेषस्य वक्तुमशक्यत्वात्। नच सधर्मतास्थलेऽपि कथनं न धर्मनैष्फल्यापत्या- ऽकर्तव्यताऽऽपत्तिरिति वाच्यम् । तत्र वचन-प्राप्तत्वेन धर्माणां क्रत्वर्थतया धर्मानाचारणे स्नान फलाभावापत्ते-र्धर्माणामवश्यकर्तव्यत्वाभ्युपगमस्यावश्यकत्वात् । प्रकृते च धर्मवि-धेरतिदेशस्य वा वचना प्राप्ततया क्रत्वङ्गत्वाभावेन धर्मानाचरणे क्रतुफलाभाव-स्यापादयितुमशक्यतया तद्रीत्या धर्माचरणस्यावश्यकर्तव्यतायाः

वक्तुमशक्यत्वात् । "त्रिरात्रफलदा नद्यः" इत्यादौ तु स्वतन्त्र एव विधिरिति न तस्य प्रकृतदृष्टान्तत्वम् । अपिच, नैमित्तिके = चाण्डालादिस्पर्शनिमित्तकस्नाने स्नानधर्माभाव उक्त एव । यथा–

**अर्जीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।**
**दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥**

इति यमवचनप्रदर्शनावसरे 'दुर्जनोऽत्र चाण्डालादिः । मात्रपदेन सर्वाङ्गव्यावृत्तिः । तस्मादप्रायत्यनिमित्ते स्नाने मज्जनमात्रेण शुद्धिरि' ति विवेचनेन, एवम् अस्पृश्यस्पर्शने वान्ते इत्याद्यापस्तम्बीयवचनप्रदर्शनावसरे

**नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।**
**तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम् ॥**

इति ब्रह्मपुराणवचनात्सामान्यतः प्रसक्तस्य तर्पणस्य (दैवपित्र्यविवर्जितमित्यापस्तम्बीयवचनस्थविशेषणात्) व्यावृत्तिरिति विवेचनेन च प्रतिपादित एव । नित्यं नैमित्तिकमित्यत्र नैमित्तिकपदं सूर्यग्रहणादिनिमित्तकपरमित्यपि तद्व्याख्यायामुक्त एव । अतोऽपि हेतोः न सर्वेषु स्नानेषु स्नानधर्मातिदेशः शक्यो वक्तुम् ।

शङ्खमते ग्रहोपरागनिमित्तकस्नानन्तु शङ्खेन षोढाविभक्तेषु स्नानेषु क्रियास्नाने एवान्तर्भवति, 'चाण्डालशवपूयेत्या'दिना चाण्डालादिस्पर्शनिमित्तकस्नानामेव तेन नैमित्तिकत्वेन परिभाषणादित्युपरिष्टाद् बोध्यम्।

काम्यपुष्यस्नानादि–मलापकर्षणयोः स्नानविशेषयोस्तु लौकिकयोः=लोके एव दृष्टप्रयोजनकयोः । नालौकिककर्माङ्गम् = अलौकिकम् तर्पणरूपं अङ्गं न भवतीति सिद्धान्तस्य । तक्षसूत्रे "अलौकिकं लौकिके नाङ्गमि" ति मीमांसाशास्त्रीयसूत्रे । अत्र "तक्षसूत्रे = गृहरथादावारे भग्न इत्यादिके विचारके" इति रघुनाथः । साधितत्वात् = कृतसिद्धित्वात् । नालौकिकाङ्गसम्बन्धः = नालौकिकस्य तर्पणरूपस्याङ्गसम्बन्धो भवतीति निष्कृष्टार्थः । अत्र चाचारचिन्तामणिरपि यथा "काम्यम् = तीर्थस्नानादि, नतु शङ्खोक्तं पुष्यस्नानादि । तस्य लौकिकस्यालौकिकतर्पणाङ्गकत्वे तक्षसूत्राधिकरण–

विरोधात् । तद्यथा-'आरे भग्ने इन्द्रबाहुर्बद्धव्यः, पायसं ब्राह्मणो भोजयितव्य' इत्यत्र गृहरथादि-कर्मणो लौकिकस्यालौकिकमिन्द्रबाहुबन्धनादि नाङ्गं, किन्त्वारभङ्गनिमित्तकम्, तथेदमपि तर्पणमलौकिकं लौकिकस्य स्नानस्य नाङ्गमिती'' ति ।

[ टिप्पणी ]

'आरे भग्ने', इत्यादि मीमांसाशास्त्रीयविवेचनस्य स्पष्टार्थावबोधनार्थं म० म० गङ्गेशोपाध्यायप्रणीततत्त्वचिन्तामणेः प्रत्यक्षखण्डे मङ्गलवादे पूर्वपक्षपोषकतया प्रदर्शितानां-''ननु मङ्गलमलौकिकं लौकिके नाङ्गं भवति, लोकावगतकारणत एव तदुपपत्तेः । अतएव गृहरथादावारे भग्ने इन्द्रबाहुर्बद्धव्यः, पायसं ब्राह्मणो भोजयितव्य इत्यत्र तदुभयं नाङ्गं, किन्तु नैमित्तिकं, तद्वदिदमप्यारम्भ-समयनिमित्तकमस्तु विश्वजिन्यायात्स्वर्गफलमिति चेन्न'' इत्यादिपङ्क्तीनामाशयवर्णनं श्रीमथुरानाथ-तर्कवागीशेन स्वीयरहस्याख्यटीकायां यदुट्टङ्कितं ततएव प्रकृतोपयोगी कियानंशः प्रस्तूयते, यतस्तत्र मङ्गल-समाप्त्योः कारणकार्यभाव (अङ्गाङ्गिभाव) स्थलमिव प्रकृते मलापकर्षणशङ्कोक्त-काम्यपुष्यस्नानादि-तर्पणयोर्विचारस्थलमपि समानमेव वरीवर्त्ति । अत्र चिन्तामणौ पूर्वपक्षस्थापने प्रदर्शितो मीमांसाविचारः प्रकृते उत्तरपक्षस्थापने निर्दिष्टोऽ स्तीति त्वन्यो विषयः । यथा चात्र रहस्याख्यटीका-

मङ्गलस्य समाप्तिजनकत्वे अलौकिकं लौकिके नाङ्गम् इति तक्षसूत्रं बाधकमाशङ्कते-नन्विति । अलौकिकं मङ्गलं लौकिकेऽङ्गं न भवति इति योजना, भवति=सम्भवति । अलौकिकं लौकिके नाङ्गं भवति इति तक्षसूत्र-विरोधापत्तेः । तत्सूत्रेणालौकिकत्वस्य लौकिकानङ्गत्वव्याप्यत्वबोधनात् । अलौकिकत्वं च ...वेदबोधितेष्टसाधनताककर्मत्वम् । लौकिकानङ्गत्वञ्च लौकिकफलाजनकत्वम् । फलनिष्ठलौकिकंत्वञ्च मानसेतरलौकिकसाक्षात्कार-विषयत्वम्, समाप्तिश्च तथा।..........

नन्वेवं कुतः समाप्तिरित्यत आह-लोकेति । ननु तत्सूत्रमप्रयोजकमित्यत आह अतएवेति, अलौकिकस्य लौकिकफलाजनकत्वादेवेत्यर्थः ।

स्नान निषेध प्रकरण के "न नग्नः स्नायात्" इस शंखलिखित वचन व्याख्या प्रसङ्गपर यज्ञोपवीत एवं शिखाबन्धन का क्रत्वर्थ तथा पुरुषार्थत्वसिद्धि प्रकार विशेष रूप से दिखाया जा चुका भी है।

बाद "उरुꣳ हि" इत्यादि "वरुणस्य पाश" एतत्पर्यन्त मन्त्र से जल का आमन्त्रण (अभिमन्त्रिण या स्पर्श) करे और "स्वर्का:" एतत्पर्यन्त 'ये ते शतम्' इस मन्त्र से उसे घुमावें।

## [ मूलम् ]

सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चेत्। कटिं वस्त्यूरुजङ्घाचरणौ करौ मृदा त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेदंविष्णुरिति।

द्वेष्यं प्रति निषिञ्चेत्=द्वेष्यं बुद्धिस्थीकृत्य यस्यां दिशि द्वेष्यस्तिष्ठति तस्यां दिशि क्षिपेदित्यर्थः। नमस्य=नमस्कृत्य। आलभेत्=स्पृशेत्।

## [ संस्कृत टीका ]

सुमित्रिया न इति। (ततः) ॐ सुमित्रिया न आप ओषधयः सन्तु इति मन्त्रेण अञ्जलिना जलमादाय "ॐ दुर्मित्रिया" इत्यादिना "वयं द्विष्म" इत्यन्तेन मन्त्रेण, द्वेष्यं प्रति निषिञ्चेत्=शत्रुं बुद्धिविषयीकृत्य यस्यां दिशि शत्रुस्तिष्ठति तस्यां क्षिपेदित्यर्थः। अतएवात्र "निरुक्षति यस्यामस्य दिशि द्विषः" इति बौधायनसंवादोऽपि सङ्गच्छते। निरुक्षति=सिञ्चति। हरिहरस्तु द्वेष्यं मनसा ध्यात्वा भूमौ निक्षिपेदित्याह। द्वेष्याभावे कामाद्यरिषड्वर्गं पाप्मानं वा ध्यायेत्। अस्मिन् पक्षे नैर्ऋत्यामपो निषिञ्चेदिति वदन्ति।

कटिम् = श्रोणिम् (कटिः श्रोणिः ककुद्मतीत्यमरः)। वस्तिम् = नाभेरधोभागम्, मूत्राशयमिति यावत्। (वस्तिर्नाभेरधो द्वयोरित्यमरः) गुदमेढ्रयोरन्तरालमिति हरिहरः। ऊरू, जङ्घे, चरणौ, करौ च मृदा त्रिः त्रिः प्रक्षाल्य। अत्र चाचारचिन्तामणि नित्यकृत्यार्णवौ यथा- "कटिम् = पायुमण्डलम्, वस्तिम् = नाभिमेढ्रान्तरालम्, ऊरू = वस्तितोऽधस्ताद्ग्रन्थिपर्यन्तौ, जङ्घे = ग्रन्थितोऽधस्ताद् गुल्फपर्यन्ते, चरणौ, गुल्फतोऽध स्तात्तलमभिव्याप्य, करौ = मणिबन्धादारभ्यान्तर्बहिरङ्गुल्यग्रावधी। मृदा सव्यहस्तगृहीतया तावत् कटिं सकृदालिप्य प्रक्षाल्य पुनरालिप्य प्रक्षाल्य पुनरालिप्य प्रक्षालयेत्। एवं

वस्त्यादिकमपि त्रिरि'' ति । आचम्य = एकं पादं जलेऽपरञ्च स्थले निधायाचामेत् । उदकम् = जलम् । नमस्य = नमस्कृत्य, नमस्येति ल्यबार्षः । इदं विष्णोरित्यादिना पांसुरे इत्यन्तेन मन्त्रेण, मृदा = मृत्तिकया, अङ्गानि = मुखमारभ्य नाभिपर्यन्तं दक्षिणेन हस्तेन, नाभितो निम्नमारभ्य पादपर्यन्तं सव्येन, आलभेत्, = स्पृशेत् = अनुलिम्पेदिति भावः । यथाचाह भृगुः ।

**धर्मविद्दक्षिणं हस्तमधःशौचे न योजयेत् ।**
**तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत् । इति**

[ हिन्दी टीका ]

'' ॐ सुमित्रिया नः'' इत्यादि मन्त्र से अपनी अञ्जलि में जल लेकर ''ॐ दुर्मित्रिया'' इत्यादि मन्त्र से शत्रु जिस दिशा में रहता हो उधर उस शत्रु का ध्यान कर उसे फेक दें । शत्रु के अभाव में काम आदि छहों शत्रु, काम आदि के भी अभाव में पाप का ध्यान कर लेना चाहिए । इस पक्ष में उस जल को नैर्ऋत्य कोण में फेकें । नितम्ब (चूतड़), गुद एवं लिंग का बिचला भाग (मूत्राशय) दोनों ऊरु, दोनों जंघा (क्रमशः दण्डाकार पैर की बिचली गांठ के ऊपरी भाग तथा निचला भाग) दोनों पाँव तथा दोनों हाथों को जल एवं मिट्टी से तीन-तीन बार धोने के बाद आचमन करे । अनन्तर ज़ल को प्रणाम कर ''पांसुरे'' पर्यन्त ''इदं विष्णो'' इत्यादि मन्त्र से मुंह से लेकर नाभि पर्यन्त दाहिने हाथ से और नाभि के नीचे से लेकर पैर तक बायें हाथ के द्वारा मिट्टी से स्पर्श (लेपन) करे ।

[ मूलम् ]

सूर्याभिमुखो[१] निमज्जेदापो अस्मानिति । स्नात्वोदिदाभ्य इति उन्मज्ज्य[२] निमज्ज्यो[३] न्मज्याचम्य गोमयेन विलिम्पेन्मानस्तोक इति ।

नद्यादावित्युपक्रम्य सूर्याभिमुख इत्यभिधानाद् ''नद्यां स्रवत्सु च स्नायात् प्रतिस्रोतः स्थितो द्विजः'' इति नरसिंहपुराणं विषयान्तरे । स्नात्वेति श्रवणात्पुनर्निमज्जनम् । निमज्योन्मज्येतिचापरमिति मज्जनत्रयसिद्धिः ।

[ संस्कृत टीका ]

सूर्येति । पूर्वतोऽनुवृत्तनद्यादौ, सूर्याभिमुखः = सूर्यसम्मुखः सन् । ''आपो अस्मानि''त्यदिना देवीरित्यन्तेन मन्त्रेण, निमज्जेत् = स्नायादिति मूल

पाठा० ( १ ) सूर्यस्याभि । ( २ ) उन्मज्य । ( ३ ) निमज्ज्यांन्मज्ज्य

वचनार्थः । एवञ्च-

नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतः स्थितो द्विजः ।

तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् ॥

इति यन्नरसिंहपुराणवचनं, तद्, विषयान्तरे = एतन्मज्जनातिरिक्तमज्जन-परमिति बोद्धव्यम् । नद्यादावित्युपक्रम्य सूर्याभिमुख इत्यभिधानात् । अतएव ''परमार्थतस्तु नद्यादावित्युपक्रम्य सूर्याभिमुखो निमज्जेदिति सूत्रकारीय-विशेषवचन महिम्ना नद्यादावपि मज्जनमेतत्कल्पे सूर्याभिमुखमेव । सामान्य-विशेषन्यायेन नरसिंह-पुराणीय-वचनानामेतत्कल्पीय-मज्जनेतर-विषयत्वादित्यवधेयम् । श्रीदत्ताह्निकपारिजातादिस्वरसोऽप्येवमित्याचारविवेक इति नित्यकृत्यार्णवः । आचारचिन्तामणिर्यथा-''सूर्याभिमुख इति तडागाद्य भिप्रायम्,

'नद्यां स्रवत्सु च स्नायात् प्रतिस्रोतः स्थितो द्विजः ।

तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् ॥

इति नरसिंहपुराणवचनादिति लक्ष्मीधरः । नद्यादावित्युपक्रम्य सूर्याभिमुख इत्यभिधान्नद्यामपि प्रथमं मज्जनं सूर्याभिमुखमभिषेकान्ते तु प्रवाहाभिमुखमिति पारिजातादयः ।

स्रोतसां सम्मुखो मज्जेद् यत्रापः प्रवहन्ति वै ।

स्थावरेषु गृहे चैव सूर्यसम्मुखमाप्लवेत् ॥ इति

वाजसनेयिगुरुवृद्धयाज्ञवल्क्यवचनादि'' ति । सूर्याभिमुखत्वञ्च स्थावरजले, प्रवहज्जले तु प्रवाहाभिमुख इति रत्नाकर इति वीरमित्रोदयः । एवञ्च लक्ष्मी-धरमतानुसारिरत्नाकरमतमिति स्फुटमवभासते । परमेतेन पूर्वप्रदर्शित ग्रन्थकार-विवेचनेन लक्ष्मीधरमतं निरस्तं जातम् ।

स्नात्वेतीति । मूले निमज्जेदित्यनन्तरं स्नात्वेति श्रवणात् = कथनात्, पुनर्निमज्जनम् = द्वितीयं स्नानम् निमज्जनम् = अद्भिरात्मनः प्रच्छादनम् । उन्मज्जनञ्च=ताभ्य आविर्भाव इति बोद्धव्यम् । एवमेव उदिदाभ्य इति

निमज्योन्मज्येति श्रवणादपरं तृतीयं स्नानमिति निष्पद्यते । एतेन स्नानत्रय-सिद्धिर्जाता । अतएव ''आपो अस्मानिति प्रथमं, तूष्णीं द्वितीयम्, उदिदाभ्य इति तृतीयं मज्जनमिति श्री दत्ताह्किमि'' त्याचारचिन्तामणिः । परं रत्नाकरस्तु आपो अस्मानित्युदिदाभ्यां इति मन्त्राभ्यां प्रथमेव मज्जनं मन्यते इति नित्य-कृत्यार्णवोद्धृताचारचिन्तामणिः ।

अतएव च ''श्रीदत्तस्तु उदिदाभ्य इत्यनन्तरम् उन्मज्ज्येत्यपठित्वा आपो अस्मानित्यादिना देवीरित्यन्तेन निमज्जेत्, अर्थादुन्मज्ज्य, स्नात्वेति वचनात् पुनर्निमिज्जनोन्मज्जने, तत उदिदाभ्य इत्यादिना पूत एमीत्यन्तेन निमज्य उन्मज्ज्य चेत्यपरं मज्जनमिति मज्जनत्रयमाह '' इति वीरमित्रोदयः ।

मूले आचम्येति । इदमाचमनञ्च द्विः । स्नानस्य ''स्नात्वा पीत्वे'' ति याज्ञवल्क्येन द्विराचमननिमित्तेषु पाठात् । ततः ''मानस्तोक'' इत्यादिना 'हवामहे' इत्यन्तेन पूर्ववदङ्गानि गोमयेन विलिम्पेत् ।

[ हिन्दी टीका ]

सूर्य का अभिमुख हो 'देवीः' पद से अन्त होने वाले ''आपो अस्मान'' इत्यादि मन्त्र से नदी, देवखात आदि में स्नान करे । यह मूलवचन का अर्थ हुआ ।

अब ग्रन्थकार का विवेचन है कि नदी आदि का उपक्रम (शुरुआत) कर सूर्याभिमुख हो स्नान करने का विधान होने के कारण ही नरसिंहपुराण का जो कहना है कि ''नदी के बहते हुए जल में प्रवाहाभिमुख हो द्विज (स्नानकर्त्ता) स्नान करे और तालाब आदि के स्थिर जल में सूर्याभिमुख हो स्नान करे'' उसे इस कात्यायन स्नानसे अन्य स्नानपरक मानना चाहिए ।

यहाँ ऊपर से ज्ञातव्य है कि इस (श्रीदत्त) मत का पोषक आचारविवेककार का विवेचन संस्कृत व्याख्या में उद्धृत कर दिया गया है । अब आचारचिन्तामणि में उद्धृत लक्ष्मीधर (कल्पतरुकार) का (एवं वीर मित्रोदय में उद्धृत रत्नाकर निबन्ध का एक जैसा ही) जो कहना है कि मूल मे कहे गए सूर्याभिमुख होने का अभिप्राय (उक्त) नरसिंहपुराण के वचन के आधार से होगा–तालाब आदि के स्थिर जल में सूर्य का अभिमुख हो, पर बहते हुए जल में प्रवाहाभिमुख हो स्नान करना चाहिए, वह (कहना) स्वतः निरस्त हो जाता है। क्योंकि कात्यायन ने अपने स्नान विधान में नदी आदि में

आकर और सूर्याभिमुख होने का स्पष्ट शब्दों में उल्लेख किया है। अतः इसका विरोध भी स्पष्ट ही हो जायगा। यही ग्रन्थकार का आन्तरिक कटाक्ष कल्पतरुकार के मत (विवेचन) पर सारांश रूप में समझना चाहिए।

यहाँ मूल में ''निमज्जेत्' कहने से एकस्नान की और उसके बाद स्नात्वा कहने से दूसरी बार के अमन्त्रक स्नान की एवम् 'उदिदाभ्य इति निमज्योन्मज्य' क होने से तीसरी बार के स्नान की सिद्धि होती है। अर्थात् 'आपोअस्मान्' इस मन्त्र से पहला, बाद में विना किसी मन्त्र के चुपचाप दूसरा, तथा उदिदाभ्य इस मन्त्र से तीसरा स्नान हो। योग में तीन स्नान यहाँ सिद्ध होते हैं। यहाँ श्रीदत्त मत का ऐसा ही विवेचन आचारचिन्तामणि तथा वीरमित्रोदय में भी है।

अनन्तर ''स्नात्वा पीत्वा'' इत्यादि याज्ञवल्क्यवचनानुसार स्नाननिमित्तक दो बार आचमन कर 'मानस्तोक' इत्यादि मन्त्र से पूर्ववत् सभी अंगो में गोवर से लेपन करे।

## [ मूलम् ]

ततोऽभिषिञ्चेत् इमं मे वरुण इति चतसृभिः माप उदुत्तमं मुञ्चन्त्ववभृथेति। अन्ते चैतत्। निमज्योन्मज्याचम्य दर्भैः पावयेत्, आपोहिष्ठेति तिसृभि-रिदमापो, हवीष्मती, र्देवीराप इति द्वाभ्यामपो देवा, द्रुपदादिव, शन्नोदेवीरपां रसमपो देवीः पुनन्तु मेति नवभिः, चित्पतिर्मेति।

अभिषिञ्चेत् = हस्तेन शिरसि जलं क्षिपेत्। अन्ते चैतत् = वक्ष्यमाण-मार्जनान्तेऽपि उक्तमन्त्रकरणकाभिषेकं कर्म कुर्यादित्यर्थः। तथैव प्रकृतत्वात्। नत्वेतन्मन्त्रजातं वक्ष्यमाणमार्जनान्ते मार्जन एवेति कल्पना। तत्राभिषेको मार्जनञ्च प्रत्यृचमेव, लिङ्गात्। चतसृभिः तिसृभिरित्यादित्वनेकत्वप्राप्त्यर्थमेव, नतु मिलितविनियोगार्थमपि।

दर्भैरिति बहुत्वं त्रित्वपर्यवसितं, कपिञ्जलन्यायात्। पावयेत् = मार्जनं कुर्यात्। मार्जनमुदकबिन्दूनां शिरसि निक्षेपः। चित्पतिर्मेति प्रति प्रतीकेन चित्पतिर्मा पुनात्वित्यस्याद्रेणेति वाक्य-सहितस्यैक स्यैव मन्त्रग्रहणं द्वित्वादि-संख्याया अश्रवणात्। कल्पसूत्रे तु चित्पतिर्मेति पावयति प्रतिमन्त्रमच्छिद्रेणेति, सर्वत्रेति दीक्षितपावने विशेषश्रवणान्मन्त्रत्रयग्रहणम्॥

**[ संस्कृत टीका ]**

(मूले) तत इति । पाठादेव च गोमयानुलेपनानन्तरमभिषेकसिद्धेस्तत इति वचनं गोमयानुलिप्तगात्रस्यैवाभिषेकप्राप्त्यर्थमिति हरिहरः । अभिषिञ्चेत् = हस्तेन शिरसि जलं क्षिपेदित्यर्थः । एष चाभिषेको लिङ्गात्प्रत्यृचं कार्यः । मध्ये चतसृभिरिति ग्रहणन्तु न मन्त्रचतुष्टयान्तेऽभिषेकप्राप्त्यर्थम्, किन्तु अनेकत्व-प्राप्त्यर्थमित्यनुपदमेव ग्रन्थकर्त्रा वक्ष्यते ।

मूले इमं मे इति । (१ ) 'इमं मे वरुण इत्यादिः 'राचके' इत्यन्तः एकः, (२) 'तत्त्वायामि' इत्यादिः 'प्रमोषीरि' त्यन्तो द्वितीयः, (३) त्वन्नो अग्ने इत्यादि मुग्ध्यस्मदित्यन्तस्तृतीयः, (४) सत्वन्नो अग्ने इत्यादिः एधीत्यन्तश्चतुर्थः इति ऋग्भिराभिश्चतसृभिः प्रत्येकम्, (५) मापो मौषधीरित्यादिः वरुण नो मुञ्चेत्यन्तः पञ्चमः (६) उदुत्तममित्यादिः अदितये स्यामेत्यन्तः षष्ठः (७) मुञ्चन्तु मेत्यादिः देवकिल्विषादित्यन्तः सप्तमः (८) अवभृथ निचुम्पुणे त्यादिः देवकृषस्या हीत्यन्तोऽष्टमः (९) इति चतसृभिश्च प्रत्येकम् । एवञ्च-एतन्मन्त्राष्टकेन प्रत्येकं हस्तेन शिरसि जलं क्षिपेदिति भावः ।

मूले, अन्ते चैतदिति । एतत् = उक्ताभिषेकाष्टकम् । अन्ते च = वक्ष्यमाणस्य मार्जनस्यान्तेऽपि भवतीति शेषः । अर्थाद् वक्ष्यमाणमार्जनान्तेऽप्युक्त-मन्त्राष्टक करणकमभिषेकं कर्म कुर्यादित्यर्थः । तथैव, प्रकृतत्वात् = प्रकरण-प्राप्तत्वात् । एतेन, एतन्मन्त्रजातम् = उक्ताष्टमन्त्र ( ऋक्) समूहः। वक्ष्यमाण-मार्जनान्ते मार्जन एव = अनुपदमेव वक्ष्यमाणं मार्जनमन्तं यस्य, तादृशे मार्जने एव, नत्वादावपीति तु कल्पना = अभिनव विचारः, न युक्तेति मन्तव्या । वस्तुतस्तु मार्जनान्ते इति पदसद्भावेनैव प्रतिपाद्यार्थ-निर्वाह-सम्भवे 'मार्जने' इति पदमधिकं प्रतिभाति, भवतु नामात्र मुद्रणदोष एव ।

तत्र = आदावन्ते च । अभिषेको मार्जनञ्च=हस्तेन शिरसि जल-प्रक्षेपरूपोऽभिषेकः, कुशत्रयेणोदकबिन्दूनां शिरसि निक्षेपरूपं मार्जनञ्च । प्रत्यृचमेव = प्रत्येक ऋगन्ते कार्ये, इति, लिङ्गात्=अभिषेकमार्जन विधायक-तत्तदृग्रूपमन्त्रप्रमाणात् । बोद्धव्यमिति शेषः । इति पदाभावे शेषस्यास्य नावश्यकता । चतसृभिरिति । मूले ''इमं मे वरुण इति चतसृभिः'' इत्यत्र

चतसृभिः, आपोहिष्ठेति तिसृभिः'' इत्यत्र तिसृभिः। इत्यादि तु=इत्यादेरुपादानन्तु। आदिपदादत्र द्वाभ्यामिति नवभिरिति च ग्राह्ये। अनेकत्व-प्राप्त्यर्थमेव = अनेकत्वबोधनार्थमेव। नतु मिलितविनियोगार्थमपि = तत्तन्मन्त्रचतुष्टयान्ते मन्त्रत्रयान्ते वा एकैकाभिषेक प्राप्त्यर्थमपि।

मूले निमज्येति। निमज्य = अद्भिरात्मानं प्रच्छाद्य। अत्र ''ततः प्रवहति जले प्रवाहामिमुखः स्थिरे सूर्याभिमुखो मौनी शरवत्रिर्निमज्जेदि''त्यग्रे प्रयोग प्रकरणे ग्रन्थकारः। अतएव ''त्रिभिरिति श्रीदत्तः। 'त्रिः कृत्वा मज्जनं तत': इति वामन-पुराणोक्तेः। कात्यायनकल्पानुक्तेः सकृदेवेति भाष्यानुसारिणः। इदञ्च मज्जनं वहति जले प्रवाहामिमुखः स्थिरे सूर्याभिमुखः कुर्यात्, पूर्वोक्तनृसिंहपुराणवचनात्। कात्यायनेन च पूर्वोक्त एव स्नाने सूर्याभिमुखत्वस्याभिधानादस्मिँश्च विशेषानुक्तेरिति श्रीदत्त'' इति वीरमित्रोदयः। एवञ्च ''एतत्तु मज्जनं सकृदेव आवृत्तौ मानाभावात्। श्रीदत्ताह्निकादावत्र त्रिर्मज्जनमुक्तं तद्रत्नाकरादि-विरुद्धन्निर्बीजञ्चेत्यनादेयमिति प्रणिगदन्नित्य-कृत्यार्णवादिर्नितरां निरस्त एव, मानभूतस्योक्तवामनपुराणवचनस्यान्यैरपि प्रामाणिकनिबन्धृभिः प्रमाणत्वेनोपन्यस्ततया निबीग्नर्बीजग्नमूल)-कथनस्याकाशकुसुमायितत्वात्। कात्यायनस्नानकल्पेऽपि ''नद्यां स्रवत्सु च स्नायादि'' त्यादि नरसिंहपुराणवचनमाधृत्य कातीयसूर्याभिमुख-पदस्य तडागाद्यभिप्रायकत्वेन कल्पतरु(कार)रत्नाकराभ्यां प्रतिपादिततया पौराणिकवचनस्यादृतत्वाच्च।

दर्भैरितीति। दर्भैरित्यत्र बहुत्वं त्रित्वपर्यवसितम्=त्रिभिर्दर्भैरित्यर्थः। कपिञ्जलन्यायात्। तद्यथा-''कपिञ्जलानालभेत'' इति विधिः। तत्र त्रित्वादिव्यापिकासु बहुत्वसंख्यासु कपिञ्जलानिति बहुवचनेन प्रथमोपस्थितत्वात्, चतुर्थे 'माहिंस्यात्सर्वा भूतानी' ति निषेधविधिना विरोधाच्च त्रित्वविशिष्टस्यैव कपिञ्जलस्यालम्भो भवति, नतु चतुष्ट्वादिविशिष्टस्य, तथैव दर्भैरित्यनेनापि त्रित्वविशिष्टस्यैव ग्रहणं बोद्धव्यम्।

पावयेत् = मार्जनं कुर्यात्। मार्जनञ्चोदकबिन्दूनां शिरसि निक्षेपः। भाष्ये तु दर्भैरेव नाभितः ऊर्ध्वं, पुनर्नाभिंयावत् पावयेदित्युक्तम्। अत्राचार-

चिन्तामणिर्यथा– ''दर्भैरित्यादि। अत्राप्यादावन्ते चेति सूत्रणात् प्रणवव्याहृतित्रय-सहितया गायत्र्या आदावन्ते च मार्जनम्। तथा चादौ सप्रणव-व्याहृतित्रय गायत्र्या, तत आपो हिष्ठेति तिसृभिः, इदमाप इति, हविष्मतीरिति, देवीराप इति, कार्षिरसीति, आपोदेवा मधुमतीरिति, द्रुपदादिवेति, शन्नो देवीरिति, अपाध्ंरसमिति, आपोदेवीरुपसृजेति। पुनन्तुमेत्याद्यास्तु नव पावमान्यः।

तथाहि–पुनन्तु मा पितर इति, पुनन्तुमा पितामहा इति, अग्न आयूँषीति, पुनन्तु मा देवजना इति, पवित्रेण पुनीहि मेति, यत्ते पवित्रमिति, पवमान इति, उभाभ्यां देवेति, वैश्वदेवीति, चित्पतिर्मेति मन्त्रत्रयमिति कल्पतरुः। दीक्षितपावने कल्पसूत्रं चित्पतिर्मेति पावयति प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेतिवामनपद्धतिः। गारुडकाशीखण्डयोरप्येवम्। पारिजातादौ त्वेकमन्त्रतैवास्योक्ता, शेषे च सप्रणवव्याहृतिगायत्र्या, एवञ्चतुर्विंशति मार्जनानि कृत्वा इमम्मे इत्यादि मन्त्राष्टकेन पूर्ववदभिषेकाष्टकं कुर्यादि''ति।

तथा च चतुर्विंशतिः पावनमन्त्राः निष्पन्नाः। यथा (१)आपोहिष्ठेत्यादिः, चक्षसे इत्यन्त एकः। (२) यो वः शिवतमः इत्यादिः, मातर इत्यन्तो द्वितीयः। (३) तस्या अरङ्गेत्यादिः, चन इत्यन्त स्तृतीयः। (४) इदमापः प्रवहतामित्यादिः पवमानश्चमुञ्चतु इत्यन्तश्चतुर्थः। (४)इदमापः प्रवहतेत्यादिः हानृतमित्यन्त श्चतुर्थ इति के चित्। (५) हविष्मतीरिमाआप इत्यादिः अस्तुसूर्य इत्यन्त: पञ्चमः।(६) देवीरापोअपान्नपा इत्यादिः, भागस्थस्वाहा इत्यन्तः षष्ठः। (७) कार्षिरसि समुद्रस्य त्वेत्यादिः रोषधीरित्यन्तः सप्तमः। (८) अपोदेवा मधुमती रित्यादिः, त्यरातीरित्यन्तोऽष्टमः। (९) द्रुपदादिवमुमुचान इत्यादिः मैनस इत्यन्तो नवमः। (१०) शन्नोदेवीरभिष्टये इत्यादिः, स्रवन्तु न इत्यन्तो दशमः। (११) अपां रसमित्यादिः, उत्तममित्यन्तः एकादशः। (१२) आपोदेवीरुपसृजेत्यादिः, सुपिप्पला इत्यन्तो द्वादशः। (१३) पुनन्तु मा पितर इत्यादिः शतायुषा इत्यन्तस्त्रयोदशः। (१४) पुनन्तु मा पितामहा इत्यादिः, व्यश्नवै इत्यन्तश्चतुर्दशः। (१५) अग्नआयूँषि इत्यादिः, स्वदुच्छुनामित्यन्तः पञ्चदशः। (१६) पुनन्तु मा देवजना इत्यादिः, पुनीहि मेत्यन्तः षोडशः। (१७) पवित्रेण पुनीहि मा इत्यादिः, क्रतूँरनु इत्यन्तः सप्तदशः। (१८) यत्ते पवित्रमित्यादिः, ब्रह्म तेन पुनातु मेत्यन्तोऽष्टादशः। (१९) पवमानः सो अद्येत्यादिः, स पुनातु मा इत्यन्त एकोनविंशः।

(२०) उभाभ्यां देवसवितरित्यादिः, पुनीहि विश्वत इत्यन्तो विंशः ।
(२१) वैश्वदेवी पुनतीत्यादिः, रयीणामित्यन्त एकविंशातितमः ।
(२२) चित्पतिर्मा पुनात्वच्छिद्रेणे त्यादिः शकेयमित्यन्तो द्वाविंशः ।
(२३) वाक्पतिर्मा पुनात्वच्छिद्रेणेत्यादिः, शकेयमित्यन्तस्त्रयोविंशः ।
(२४) देवो मा सविता पुनात्वसच्छिद्रेणेत्यादिः, शकेयमित्यन्तश्चतुर्विंशः ।

यद्यपि मूले 'चित्पतिर्मा' इति प्रतीकेन चित्पतिर्मा पुनात्वच्छिद्रेणे-त्याद्यनुपदोक्तमन्त्रत्रयं ग्रहीतुं शक्यते तथाप्यत्र द्वित्वादिसंख्याया अश्रवणा-''च्चितपतिर्मापुनातु'' इत्येकस्यैव प्रथममन्त्रस्य ग्रहणं समुचितम् । अतएव ग्रन्थकारेण एतत्स्नान प्रयोग प्रकरणे एक एवोक्तमन्त्र उल्लिखितः । एतेन चित्पतिर्मेति मन्त्रत्रयमिति कल्पतरुः कटाक्षितः ।

किन्तु कल्पसूत्रे =यज्ञविधायक-श्रौतसूत्रग्रन्थे तु दीक्षित-पावने = दीक्षितमार्जन-विषये । वामनपद्धतिरीत्याऽपि प्रदर्शिते ''चित्पतिर्मेति पावयति प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रे''ति कल्पसूत्रे विशेषश्रवणात् = प्रतिमन्त्रमिति विशेषश्रवणात् । मन्त्रत्रयग्रहणम् = इदानीमेवोक्तमन्त्रत्रयाणां ग्रहण मितिभावः । अतएव-''चित्पतिर्मापुनात्विति एकएव मन्त्रो ग्राह्यो नतु मन्त्रत्रयं, संख्याया अश्रवणात् । दीक्षितपावने तु प्रतिमन्त्रमिति विशेषश्रवणान्मन्त्रत्रय ग्रहणमिति श्रीदत्त इति वीरमित्रोदयः । तथा च मन्त्राविमावधिकावादाय चतुर्विंशोऽत्र पावनमन्त्रा निष्पन्ना : ।

**[ हिन्दी टीका ]**

अनन्तर नीचे क्रमशः संकेतित आठ मन्त्रों से अभिषेक (हाथ से शिर पर जल का छिड़कना) करना चाहिए । (सम्पूर्ण मन्त्र अन्तिम स्नान प्रयोग प्रकरण में देखें )।

(१) 'इमं मे वरुण' से लेकर 'राचके' पर्यन्त (पहला)। (२) 'तत्त्वा यामि' से लेकर 'प्रमोषीः' पर्यन्त (दूसरा) । (३) 'त्वन्नो अग्नेवरुणस्य' से 'मुग्ध्यस्मत्' पर्यन्त (तीसरा) । (४) 'सत्वन्नो अग्ने' से 'एधि' पर्यन्त (चौथा) । (५) 'मायो मोषधी' से 'वरुण नो मुञ्च' पर्यन्त (पाँचवाँ) ।(६) उदुत्तमम्' से 'आदितये स्याम' पर्यन्त (छठा) । (७) 'मुञ्चन्तुमा' से

देवकिल्विषात् ' पर्यन्त (सातवाँ) । (८) ' अवभृथ निचुम्णा ' से ' देवरिषस्या-हि ' पर्यन्त (आठवाँ) ।

इन उक्त आठों ऋचाओं से अभिषेक आगे कहेजाने वाले मार्जन के अन्त में भी करना चाहिए किन्तु ऐसी कल्पना न करें कि यह अभिषेक प्रयोग केवल आगे के मार्जन के अन्त में ही हो अपितु यहाँ भी होगा । ये होनेवाले अभिषेक तथा मार्जन प्रत्येक ऋचाके अन्त में हो ।

मूल में ' चतसृभिः ' ' तिसृभिः ' आदि संख्यावाचक जो पद आये हैं, वे चार या तीन आदि के बोधन के लिए नहीं, अपि तु अनेकत्व बोधन के लिए ही हैं । फलतः उन चार मन्त्रों तथा तीन मन्त्रों आदि के उच्चारण के बाद एक एक अभिषेक हो यह बात नहीं । अपितु एक एक मन्त्र के उच्चारण के बाद ही होगा । यहाँ आदि पद से आगे के 'द्वाभ्याम्' तथा 'नवभिः' पदों का ग्रहण कर लेना चाहिए । अनन्तर तीन बार स्नान करें । यह विवेचन ग्रन्थकार श्रीदत्तोपाध्याय का है ।

ऊपर से ज्ञातव्य है कि यहाँ उक्त विवेचन पर नित्यकृत्यार्णव आदि कुछ मान्य निबन्ध(कार) का आपत्ति उठाते हुए कहना है कि "मूलवचन में 'निमज्य' पद है जिसका अर्थ होता है–'स्नानकर' । अतः सामान्यतः स्नान एक ही बार होना चाहिए । इसे दुहराने तिहराने में कोई प्रमाण नहीं । फलतः श्रीदत्त के आह्निक (आचार) ग्रन्थों में जो तीन बार स्नान कहा गया है वह रत्नाकर आदि निबन्धों के विरुद्ध तथा निर्बीज (निर्मूल) है । अतः यह ग्राह्य नहीं ।" किन्तु यह कहना अनुपयुक्त इसलिए होगा कि उक्त श्रीदत्तमत को उद्धृत करते हुए वीरमित्रोदय का कहना है कि "यह तीन बार का कहा गया स्नान त्रिः कृत्वा मज्जनंततः (उसके बाद तीन बार स्नान कर) वामन पुराण के इस वचन के अनुसार है, पर (हरिहर) भाष्यके अनुयायी,लोग कात्यायन वचन के द्वारा विशेष न कहे जाने के कारण एक ही स्नान के पक्षपाती हैं ।" अब मान्य अन्य निबन्ध वीरमित्रोदय द्वारा भी यदि सम्मान्य पौराणिकवचन उद्धृत किया गया है तो निर्बीज कहना सर्वथा असंगत ही है । दूसरी बात, यदि इस कात्यायन (स्नान) कल्प में पौराणिकवचन मान्य न किये जाने का पक्ष अपनाया जाय तो "नद्यां स्रवत्सु च स्नायात्" (इसी स्नान प्रकरण में पहले दिखाये गए) नरसिंह पुराण के वचन के आधार से कल्पतरु(कार) तथा स्वयं रत्नाकरके द्वारा किया गया कात्यायन वचन के 'सूर्याभिमुख' पद का तडागादिपरक अर्थ असंगत हो जायगा । यह अन्य विषय है कि कात्यायनवचन में कहेगये 'नद्यादौ' पद के समवधान से कल्पतरुकार के परवर्ती निबन्धकार श्रीदत्तोपाध्याय आदि ने वह अर्थ न माना हो । फिर भी यदि इस कात्यायन कल्प में पौराणिकवचन एक जगह मान्य हो तो दूसरी जगह न मानने का कोई तुक नहीं

कहा जा सकता है । जबकि यही तीन बार का या एक बार का यहाँ का स्नान सभी निबन्धकार उसी नरसिंह पुराण वचन के आधार से बहते हुए जल में प्रवाहा भिमुख और स्थिर जल में सूर्याभिमुख होकर करने को एक स्वर से मानते हैं, क्योंकि कात्यायन ने स्वयं तो जल के संबन्ध में यहाँ कुछ भी नहीं कहा है । इत्यलम् ।

बाद में तीन कुशों से मार्जन (शिर पर जल का छिडकना) करें ।

यहाँ मूल में 'दर्भैः' पद में सामान्यतः बहुवचन का ही प्रयोग किया गया है तथापि कपिञ्जलन्याय से बहुवचन का तात्पर्य तीन (त्रित्व) संख्या से ही है । अर्थात् ''कपिञ्जलानालभेत'' (यज्ञ में तीतर पक्षियों का बलिदान या स्पर्श करे) यह विधि वाक्य है । यहाँ बहुवचन से तीन (त्रित्व) संख्या से लेकर आगे की सभी संख्या ली जा सकती है किन्तु प्रथमोपस्थित होने के कारनण तथा 'मा हिंस्यात्सर्वा भूतानि' (किसी भी प्राणी की हिंसा नहीं करनी चाहिए) इस निषेध विधिवाक्य से चौथे के ग्रहण में अवरोध (रुकावट हो जाने के कारण तीन् पिञ्जलों का ही आलम्भन होता है न कि चार आदि का भी । मीमांसाशास्त्र के इस निर्णयानुसार प्रकृत में भी 'दर्भैः' इस बहुवचनान्त पद से तीन ही कुश लिए जाते हैं ।

इस मार्जन के लिए निर्धारित 22 बाईस मन्त्र (ऋचाएँ) नीचे संकेतित किये जा रहे हैं । (सम्पूर्ण मन्त्र तो आगे कातीय स्नान प्रयोग प्रकरण में देखें) यथा–

(१) आपोहिष्ठा से लेकर चक्षसे पर्यन्त (पहला)

(२) यो वः शिवतमः से मातरःपर्यन्त (दूसरा)

(३) तस्मा अरङ्ग से चन पर्यन्त (तीसरा)

(४) इदमापः प्रवहताम् से पवमाश्च मुञ्चन्तु पर्यन्त (चौथा)

(५) हविष्मतीरिमाः से अस्तु सूर्यः पर्यन्त (पाँचवा)

(६) देवीरापो अपनपा से भागस्थ स्वाहा पर्यन्त (छठा)

(७) कार्षिरसि से रोषधी पर्यन्त (सातवाँ)

(८) द्रुपदादिव से त्यराती: पर्यन्त (आठवाँ)

(९) द्रुपदादिव से मैनसः पर्यन्त (नौवाँ)

(१०) शन्नो देवी से स्रवन्तु नः पर्यन्त (दशवाँ)

(११) अपां रसम् से उत्तमम् पर्यन्त (इग्यारवाँ)

(१२) आपो देवी से सुपिप्पला पर्यन्त (बारहवाँ)

(१३) पुनन्तु मा पितरः से शतापुषा पर्यन्त (तेरहवाँ)

(१४) पुनन्तु मा पितामहाः से व्यशमवै पर्यन्त (चौदहवाँ)

(१५) अग्न आयूँषि से स्वदुच्छुनाम् पर्यन्त (पन्द्रहवाँ)

(१६) पुनन्तु मा देवजनाः से पुनीहिमोयन्तः पर्यन्त (सोलहवाँ)

(१७) पवित्रेह पुनीहिमा से क्रतूँरनु पर्यन्त (सत्रहवाँ)

(१८) यत्तेपवित्रम् से ब्रह्मतेन पुनातु मा पर्यन्त (उन्नीसवाँ)

(१९) उभाभ्यां देव सवितः से पुनीहि विश्वतः पर्यन्त (वीसवाँ)

(२०) वैश्वदेवी पुनाति से रयीणाम् पर्यन्त (इक्कीसवाँ)

(२१) चित्पतिर्मा पुनातु से शकेयम् पर्यन्त (बाइसवाँ)

यद्यपि मूल के 'चित्पतिर्मा' इस प्रतीक से अभी ऊपर कहे गए (१) चित्पतिर्मा पुनातु से शकेयम् पर्यन्त पर्यन्त (एक) पुनात्वच्छिद्रेण से शकेयम् पर्यन्त (दूसरा) (३) देवो मा सविता पुनात्वच्छिद्रेण से शकेयम् पर्यन्त (तीसरा) इन तीनों ही मन्त्रों का ग्रहण किया जा सकता है तथापि किसी संख्याविशेष (एक दो या तीन आदि) का उल्लेख न रहने के कारण 'चित्पतिर्मा पुनातु' इस एक ही मन्त्र का ग्रहण होता है। (इससे यह सिद्ध होता है कि कल्पतरुकार ने उक्त प्रतीक से तीनों मन्त्रों का ग्रहण होना जो कहा था वह उचित नहीं) किन्तु यज्ञविधायक श्रौत सूत्रग्रन्थ में दीक्षितों के मार्जन विषय में आचारचिन्तामणि में वामन पद्धति की रीति से भी प्रदर्शित 'चित्पतिर्मेति पावयति प्रतिमन्त्रम्' इत्यादि सूत्र में 'प्रतिमन्त्रम्' ऐसा विशेष पाठ रहने के कारण अभी ऊपर दिखाये गए 'चित्पतिर्मा पुनातु' आदि तीनों मन्त्रों का ग्रहण किया जाय, ऐसा समझना चाहिए। अब इस तरह यहाँ पावन (मार्जन) मन्त्र २४ चैबीस हुए।

## [ मूलम् ]

ओंकारेण, व्याहृतिभि, र्गायत्र्याऽऽ[1] दावन्ते च। अन्तर्जलेऽघमर्षणं त्रिरावर्तयेद्, द्रुपदां वा, आयङ्गौरिति वा तृचं, प्राणायामं वा, सशिरः[2] ओमिति वा, विष्णोर्वा स्मरणम्।

पाठा० (१) त्र्याचादा। (२) सशिसरम्।

श्रुतावपि प्रत्येकमेव मन्त्रपाठाद्, व्याहृतिभिः=तिसृभिर्लाघवात्,''प्रणवो भूर्भुवः स्वरि'' त्यादौ श्रवणाच्च, गायत्र्या (च) आदौ अन्ते च।

आपोहिष्ठेत्यादिमन्त्रसाध्यमार्जनाद्यन्तयोर्गायत्र्या मार्जनमिति यद्यपि प्रतिभाति, तथाप्यादावोंकार-व्याहृत्यनुष्ठानदर्शनात्तत्सम्बन्धेऽपि कात्यायनाशय उन्नीयते।

प्राणायामः कर्तव्य इतिशेषः। 'सशिर' इति क्रियाविशेषण-त्वान्नपुंसकत्वमार्षत्वाच्च। ओमिति चावर्तयेदिति व्यवहितसम्बन्धः।''आवर्तयेद्वा प्रणवमि''ति योगियाज्ञवल्क्यदर्शनात्। विष्णोर्वा स्मरणं कर्तव्यमिति शेषः।

[ संस्कृत टीका ]

श्रुतावपीति। श्रुतौ = वेदे। अपि शब्दात्कात्यायनवचनेऽपि। प्रत्येकमेव मन्त्र पाठात् = ओंकारस्य व्याहृतित्रयाणां गायत्रीमन्त्रस्य च पृथक् पृथक्। पाठात् लाघवात् = अन्यादृशमन्त्रकल्पनाऽपेक्षया व्याहृतिपदेन लघुभूतानां ''भूः, भुवः, स्वरि''ति मन्त्राणामेव गृहीतव्यत्वात्, 'प्रणवो भूर्भुवः स्वरि' त्यादौ श्रवणाच्च =

**प्रणवो भूर्भुवः स्वश्च स्वाङ्गानि हृदयादितः।**
**त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम्॥**
**विनियोगस्तथारूपं ध्यातव्यं क्रमशस्तु वै॥**

इत्यादि योगियाज्ञवल्क्यप्रभृतिवचनेषु पृथक्तयैव चतुर्णामेषां मन्त्राणामग्रे (सन्ध्यावन्दनं प्रकरणे) श्रूयमाणत्वाच्च, ''व्याहृतयो भूराद्यास्तिस्र'' इति सम्प्रदायाच्च, व्याहृतिभिः-तिसृभिः- 'भूर्भुवःस्वरि'ति मन्त्रैरिति यावत्। गायत्र्या=गायत्रीमन्त्रेण (च)। एवञ्च 'प्रणवो व्याहृतयस्सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अरहरर्ब्राह्मणं किल्विषात्पावयन्ती'ति प्रकरणीय बौधायनवचनात्, ''यज्ञशब्देन जपो लक्ष्यते, तुल्यवत्प्रसंख्यानात् प्रणवव्याहृतीनामपि सावित्र्याः पुरस्तात्प्रयोगोऽवगम्यते'' इति गोविन्दस्वामिकृततट्टीकादर्शनाच्चापि पञ्चभिरेवमन्त्रैरेभिः प्रत्येकम्, 'आदावन्ते चे' ति मूलाऽनुसरम् ''आपो हिष्ठे''त्यादिमन्त्रेण करणीयमार्जनात्पूर्वं ''चित्पतिर्मे'' त्यादि मन्त्रत्रयैः करणीय-मार्जनान्ते च मार्जनं कार्यमिति भावार्थः।

अत्राशङ्कते–आपोहीत्यादि । आपोहिष्ठेत्यादि मन्त्रसाध्यमार्जनाद्यन्तयोः इदानीमेव पूर्वोक्तानाम् 'आपोहिष्ठे' त्यादि चतुर्विंशमन्त्रैः करणीयानां मार्जनानामादौ, अन्ते (स्नातृभेदांच्चित्पति मेंतिसम्पूर्णैकमन्त्रेण, दीक्षितपावन-पक्षे 'देवोमा सविते'ति पूर्णमन्त्रेण वा करणीयमार्जनस्यान्ते) च ।

गायत्र्या=प्रणवव्याहृतिसहितगायत्रीमन्त्रेण । मार्जनम्= मार्जन-करणमुचितं प्रतिभाति । अत्र हेतुं दर्शयति–सन्निहितेति । सन्निहित(त्व) सम्बन्धेन = सान्निध्य (सामीप्य) सम्बन्धेन । उपपत्तेः=सिद्धेः । अर्थात् आदाविति पदस्य अन्तेचेतिपदस्य च गायत्र्येतिपदेनैव सहसान्निध्यस्य विद्यमानत्वात्, गायत्र्येति-पदापेक्षया पूर्वं पठितयोः ओंकारेणेति व्याहृतिभिरिति पदयोः व्यवहितं सान्निध्येनान्वयाच्च आपोहिष्ठेत्यादिमन्त्रैराचरणीयानां चतुर्विंशमार्ज-नानामादावन्ते च प्रणवव्याहृतित्रयसहित-गायत्री-मन्त्रेणैव मार्जनं सिध्यतीति पूर्वपक्षाशयः ।

समाधत्ते-तथापीति । आदौ=प्रथमम् । ओंकारव्याहृत्यनुष्ठान-दर्शनात्=गायत्रीमन्त्रतो मार्जनात्पूर्वम् ओंकारेण व्याहृतिभि श्च शिष्टैराचरितानां मार्जनानामवलोकनात् । तत्सम्बन्धेऽपि =गायत्रीमन्त्रेणाचरणीय मार्जनात्पूर्वम् ओंकारेण व्याहृतित्रयेण चाचरणीयमार्जनसम्बन्धेऽपि । कात्यायनाशयः= कात्यायनतात्पर्यम् । उन्नीयते=ऊह्यते-निश्चीयते इति यावत् । अतएवैतद्ग्रन्थाशयानुरूपो वीरमित्रादयोऽपि, यथा–"व्याहृतयो भूरादयस्तिस्र इति सम्प्रदायः । आदावन्ते च । ओंकारो व्याहृतयो गायत्री चेति पञ्चभिः प्रत्येकम् आपोहिष्ठेत्यस्यादौ 'चित्पतिर्मे' त्यादिमन्त्रत्रयान्ते च मार्जनं कुर्यादित्यर्थः" इति । एतेन "दर्भैरित्यादि । अत्रा"प्यादावन्ते चे" ति सूत्रणात् प्रणवव्याहृतित्रयसहित गायत्र्या आदावन्ते च मार्जनमि'ति कल्पतरूक्तिः प्रत्युक्ता । कल्पतरूक्तिमेनामनुसरन्नाचारचिन्तामणिरप्येवमेवाह ।

प्रणवव्याहृतित्रयगायत्रीभिर्मार्जनानन्तरम् "अन्ते चैतत्सूत्रानुसारम् "इमम्मे" इत्यादि मन्त्राष्टकेन पूर्ववदभिषेकाष्टकं कुर्यात् ।

मूले-अन्तर्जले इति । अन्तर्जले = जलमध्ये, मग्न इति शेषः । एवञ्च ऋष्यादिकं स्मृत्वा जलमध्ये मग्नःसन्, अघमर्षणम्= एतत्संज्ञाकं सूक्त-विशेषम् । त्रिः=वारत्रयम् आवर्तयेत् = पुनः पुनः जपेत् ।

"ऋतञ्च सत्यञ्चे" त्यादि "मथो स्वरि" 'त्यन्तं सूक्तं त्रिरनुछ्वसन्नावर्तयेदि" ति हरिहरः। द्रुपदां वा=पूर्वोक्तामेनामृचं वा। आयङ्गौरिति वा="आयङ्गौः पृश्निरि" 'त्यादि "रहद्द्युभिरि" त्यन्तं वा तृचम् त्रिरावर्तयेत्। प्राणायामं वा = अग्रेवक्ष्यमाण प्रणाल्या विधीयमानं प्राणयामं वा' कुर्यादि 'ति शेषः। प्राणायामो वा कर्तव्य इति भावः। सशिरः =ओमापोज्योतिरित्यादिशिरस्तद्युक्तम् ओमिति वा। सशिर इति विधानात्क्वचिदन्यत्राशिरस्कोऽपि प्राणायाम इत्यायाति। सशिर इत्यत्र क्रियाविशेषत्वाच्च नपुंसकत्वमेवकचनञ्चेत्य-नुशासनादार्षत्वाच्च नपुंसकत्वमेकवचनञ्च बोद्धव्यम्। ओमित्येतदक्षरं वा, अत्र त्रिरावर्तयेदिति व्यवहितेन पूर्वेण सम्बन्धः, "आवर्तयेद्वा प्रणवमि" ति योगियाज्ञवल्क्यवचनात्। विष्णोर्वा स्मरणम्=परमात्मरूपस्य ध्यानं वा कर्तव्यमिति शेषः। परमात्मरूपं ध्यायेदित्याचारचिन्तामणिः। एते तु विकल्पाः शक्तिश्रद्धापेक्षया द्रष्टव्याः। उत्तमाधिकारिणं प्रत्याह-विष्णोर्वा स्मरणम्। स्मरणं ध्यानमिति वीरमित्रोदयः।

**[ हिन्दी टीका ]**

"आपोहिष्ठा" आदि मन्त्रों से होनेवाले मार्जनों के प्रारम्भ तथा 'चित्पतिर्मा' इत्यादि अन्तिम (एकमन्त्र या) तीनों मन्त्रों से होनेवाले मार्जनों के अन्त में ओंकार, व्याहृति (भूःभुवःस्वः) तथा गायत्रीमन्त्र फलितार्थ में इन पाँचों मन्त्रों से पाँच-पाँच मार्जन करने चाहिएँ। यह मूल वचन का अर्थ हुआ।

यहाँ ग्रन्थकार का कहना है कि वेद एवं कात्यायन वचन में भी, ओंकार, व्याहृतियाँ (भूः भुवः तथा स्वः) और गायत्रीमन्त्र, प्रत्येक का पृथक् रूप से उल्लेख होने, व्याहृतिपद से दूसरे तरह के मन्त्र की कल्पना की अपेक्षा 'भूः, भुवः, स्वः' इन्हीं तीनों को मानने में लाघव; "प्रणवो भूर्भुवः स्वश्च स्वाङ्गानि हृदयादितः" इत्यादि योगियाज्ञवल्क्य के वचनों में क्रमशः ऊँ, भूः, भुवः स्वः, इन चार मन्त्रों तथा आगे गायत्री (मन्त्र) का स्पष्ट श्रवण होने तथा परम्परा से भी इन्हें ही मान्य होने के कारण (तथा ओंकार, व्याहृति तथा गायत्री ये पाँच ब्रह्मयज्ञ हैं जो द्विज को प्रतिदिन अनुष्ठान के बाद पाप से छुटाकारा देते हैं– इस बौधायन कथन एवं गोविन्द स्वामी कृत इसकी टीका के अनुसार भी) इन पाँचों (१) ॐ, (२) भूः, (३) भुवः, (४) स्वः, (५) तथा गायत्रीमन्त्र) प्रत्येक मन्त्र से उक्त दोनों मार्जनों के पहले तथा बाद में क्रमशः पाँच-पाँच मार्जन करें। न कि (कल्पतरुकार कथित) ऊँकार तथा व्याहृति सहित गायत्रीमन्त्र से एक-एक ही मार्जन हो।

यहाँ शंका होती है कि यद्यपि ''ओंकारेण व्याहृतिभि:गायत्र्या-आदावन्ते च'' इस मूलवचन में 'गायत्र्या' पद के साथ ही 'आदावन्ते च' इन पदों का परस्पर सान्निध्य है, न कि 'ओंकारेण व्याहृतिभि:' इन पदों के साथ भी। अत: 'आपोहिष्ठा' इत्यादि मन्त्रों से होनेवाले चौवीस मार्जनों के आदि तथा अन्त में प्रणव व्याहृति सहित गायत्री मन्त्र से एक ही मार्जन होना प्रतीत होता है, उत्तर तथापि इन मार्जन स्थलों में भी शिष्टजनों के द्वारा प्रथमत: ओंकार तथा व्याहृतियों से भी मार्जन का अनुष्ठान होते देखे जाने के कारण इस (ओंकार तथा व्याहृतियों से भी मार्जन के) सम्बन्ध में भी कात्यापन का आशय (तात्पर्य, ऊहद्वारा) जाना जाता है।

अनन्तर ऋष्यादि का स्मरण करने के बाद पानी में निमग्न हो (डूब) कर किन्तु भाष्यकार हरिहर के मतानुसार विना श्वास लिए 'अघमर्षण' सूक्त का तीन बार जाप करे अथवा तीन बार पूर्वोक्त द्रुपदामन्त्र अथवा 'आयङ्गौ: पृश्नि:' से लेकर 'रहद्यु:' पर्यन्त तीनों ऋचाओं का जप करे। अथवा तीन बार प्राणायाम करे। अथवा 'ओं आपोज्योति' इत्यादि गायत्री शिर सहित ओङ्कार का (यह भी न हो सके तो केवल 'ओं' इस मन्त्र का ही तीन बार जप करे। यह भी न हो सके तो विष्णु का स्मरण कर लें। यहाँ वीरमित्रोदय का कहना है कि ''यह अन्तिम कल्प उत्तम अधिकारी के लिए कहा गया है।'' वैसे ये सभी विकल्प शक्ति एवं श्रद्धा की स्थिति से समझने चाहिएँ।

[ मूलम् ]

गौतम:–

**अन्तर्जले वाऽघमर्षणं त्रिरावर्त्य[१] सर्वस्मादेनसो मुच्यते।**

[ संस्कृत टीका ]

अन्तरिति। अन्तर्जले = पानीयमध्ये। मग्न इतिशेष:। अघमर्षणम् = अघमर्षेण ऋषिणा दृष्ट ''मृतञ्च सत्यञ्चे'' त्याद्यघमर्षणसूक्तम्। त्रिरावर्त्य=त्रिरभ्यस्य। सर्वस्मात् =ज्ञानाज्ञानकृतात्। एनस:= पापात्। मुच्यते=विमुक्तो भवति।

[ हिन्दी टीका ]

जल के भीतर डूब कर तीन बार अघमर्षण सूक्त का जप करने से समस्त (ज्ञानकृत तथा अज्ञानकृत) पापों से मुक्त हो जाता है।

---

पाठा० (१) त्रिरावर्तयन्।

[ मूलम् ]

मनुशङ्खयोगियाज्ञवल्क्याः–

यथाऽश्वमेधः क्रतुराट् सर्वपाप[1] प्रणोदनः ।
तथाऽघमर्षणं सूक्तं सर्वपाप[2] प्रणोदनम् ॥

[ संस्कृत टीका ]

यथेति । यथा, क्रतुराट्=सर्वयागश्रेष्ठः । अश्वमेधः=एतन्नामा यागविशेषः । सर्वपापप्रणोदनः =सर्वपापनाशकः । तथा, अघमर्षणं सूक्तमपि, सर्वपापप्रणोदनम्=सर्वपापक्षयहेतुः । एतच्चाघमर्षणसूक्तस्योत्पकर्षः ।

[ हिन्दी टीका ]

जैसे यज्ञों में सम्राट् अश्वमेध सब (ज्ञानकृत हो अज्ञानकृत) पापों का नाश करने वाला है, उसी तरह यह मन्त्रश्रेष्ठ अघमर्षण सूक्त सब पापों का संहारकारक है ।

[ मूलम् ]

बृहस्पतिः–

द्रुपदादिव यो मन्त्रो वेदे वाजसनेयके ।
अन्तर्जले त्रिरावृत्य सर्वपापैः प्रमुच्यते ॥

अन्तर्जले ऋष्यादिकं स्मर्तव्यम्–

अविदित्वा तु यः कुर्याद् याजनाध्यापनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

इति योगियाज्ञवल्क्यदर्शनात् ।

[ संस्कृत टीका ]

द्रुपदेति । वाज़सनेयके वेदे=माध्यन्दिनशुक्लयजुर्वेदे । द्रुपदादिव यो मन्त्रः=द्रुपदादिवेत्यादि यत्सूक्तम्, तम् अन्तर्जले मग्नः सन् त्रिरावृत्य =

पाठा० (१) सर्वपापनोदनः (२) सर्वपापापनोदनम् ।

त्रिर्जपित्वा सर्वपापेभ्य: = ज्ञानाज्ञानकृतसमग्रपापै: । प्रमुच्यते=विमुक्तो भवतीति बृहस्पति वचनार्थ: ।

अत्र 'अविदित्वा तु य: कुर्यादि' त्यादियोगियाज्ञवल्क्य वचनाद् जलमध्ये निमग्नेन सता ऋष्यादिकम्=ऋषिच्छन्दोदेवताविनियोगा: । स्मर्तव्यम्=ध्यातव्यम् ।

[ हिन्दी टीका ]

यजुर्वेद में कथित ''द्रुपदादिव मुमुचान:'' इत्यादि मन्त्र को जो जल के मध्य में डूबकर तीन बार पढ़ता है वह ज्ञानकृत या अज्ञानकृत सभी पापों से मुक्त हो जाता है ।

किन्तु जल के मध्य ही ऋषि छन्द देवता तथा विनियोग का भी स्मरण करना चाहिए, जैसा कि योगियाज्ञवल्क्य ने कहा है कि ''ऋष्यादि को विना स्मरण कर जो याजन (यज्ञ कराना), अध्यापन, जप, होम, एवम् जल के बीच मन्त्रपाठ करता है वह अल्पफलभागी होता है ।

❁ इति कातीयस्नानविधि: ❁

# कातीयस्नानप्रयोग :

## [ मूलम् ]

अथ कातीयस्नानप्रयोगः । यथोक्तमृत्तिकामार्द्रगोमयं कुशान् कृष्णतिलान् सुरभिपुष्पाणि सुमनाः नद्यादिकं गत्वा तत्तीरे शुचौ देशे पृथक् स्थापयेत् । तत्र पाणिपादं प्रक्षाल्य कुशहस्तो बद्धशिखी उपवीत्याचामेत् ।

## [ संस्कृत टीका ]

यथोक्तेति । 'आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तथा' इत्यादिना प्रतिपादितपवित्रस्थानसम्बन्धि-सिकतादिविशिष्टां मृत्तिकाम् । आर्द्रगोमयं=क्लिन्नगोमयम् । कुशान्=दर्भान् । कृष्णतिलान् । सुरभिपुष्पाणि= सुगन्धीनि कुसुमानि । आदाय =गृहीत्वा । सुमनाः=प्रसन्नचेताः । नद्यादिकं गत्वा=नदीदेवखातादिकं गत्वा । तत्तीरे=तत्तटे । शुचौ देशे=पवित्रस्थाने । पृथक् स्थापयेत्=असंलग्नतया स्थापयेत् । ततः=तदनन्तरम् । पाणिपादं प्रक्षाल्य = पादौ हस्तौ च प्रक्षाल्य । पाणेरभ्यर्हितत्वादेव पूर्वप्रयोगः नतु प्रक्षालन-दृष्ट्येति बोद्धव्यम् । तथा च मृज्जलाभ्यां सकृद्दक्षिणं ततो वामं पादं ततः पाणिद्वयं प्रक्षालयेदितिभावः । कुशहस्तः=कुशाः हस्तयोर्यस्य स कुशहस्तः । तथा च सव्ये बहवः कुशाः, दक्षिणे अनन्तर्गर्भि-साग्र-प्रादेश-परिमित-पत्रद्वयात्मकं पवित्रं धार्यम् । 'सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः' इति कात्यायनवचनात् । बद्धशिखी=बद्धा शिखा येन स तथा । उपवीती=सव्यरूपेण यज्ञोपवीतधारी सन् । आचामेत् ।

## [ हिन्दी टीका ]

पवित्र स्थान की बालूवाली या चिकनी मिट्टी, गीला गोबर, प्रादेश के बराबर हरा जड़ तथा अग्रभाग सहित कुश, काला तिला तथा सुगन्धित फूल लेकर प्रसन्न चित्त हो, नदी, देवखात, गर्त झरना आदि ज़लाशय के समीप जाकर उसके पवित्र, तट पर (आचार चिन्तामणि के अनुसार वहाँ भी पवित्र वस्त्र आदि पर) अलग अलग से रखे । अनन्तर मिट्टी और जल से पहले बायाँ बाद में दाहिना पैर इसके बाद दोनों हाथों को धोकर, बहुत कुश बायें हाथ में तथा दहिने हाथ में गर्भ के पत्र से रहित, अग्रभाग सहित प्रादेश प्रमाण दो पत्तेवाले कुश का पवित्र (इस संबन्ध में आगे सन्ध्यावन्दन के

पवित्र प्रकरण का विशेष विवेचना भी देखें ) धारण कर शिखा बाँध कर तथा सव्य (उपवीती) हो आचमन करे।

[ मूलम् ]

( १ ) ॐ उरु ँ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वा उ। अपदे पादा[१] प्रतिधात्तवे करुताप[२] वक्ता हृदयाविधश्चित्[३]। नमोव्वरुणायाभिष्टितो[४] वरुणस्य पाशः'' ॥ ( २३।८ )

इति तोयमामन्त्र्य

( २ ) ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभि[५]र्नो अद्य सवितोत विष्णु र्विश्वे मुञ्चन्तु मरुतः स्वर्काः''॥

इति त्रिः प्रदक्षिणं जलमावर्तयेत्।

[ संस्कृत टीका ]

ॐ उर्विति। तोयमामन्त्र्य=जलमभिमन्त्र्य। त्रिः वारत्रयम्। प्रदक्षिणम्=प्रदक्षिणक्रमेण। आवर्तयेत्=घूर्णयेत्।

[ हिन्दी टीका ]

नम्बर एक से मूल में निर्दिष्ट 'ॐ उरुँहि राजा' इस मन्त्र से जल को अभिमन्त्रित कर नम्बर दो से निर्दिष्ट 'ॐ ये ते शतम्' इत्यादि मन्त्र से प्रदक्षिण क्रम से जल को घुमावें।

[ मूलम् ]

ततः

( १ )''ॐ सुमित्रिया न आप ओषधयः सन्तु'' ( २२।६ ) इति जलाञ्जलिमादाय, ( २ ) ''ॐ दुर्मित्रियास्तंस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः'' ( २२।६ )

इति द्वेष्यं प्रति निषिञ्चेत्। ततः कटिं वस्त्यूरू जङ्घे चरणौ करौ प्रत्येकं मृत्तोयाभ्यां त्रिस्त्रिः प्रक्षाल्य एकं पादं जलेऽपरञ्च स्थले निधायाचामेत्।

[ संस्कृत टीका ]

तत इति। सर्वं सुगममेव।

---

पा०उा० ( १ ) दाप्रा। ( २ ) तपि। ( ३ ) विध। ( ४ ) ष्ठितो। ( ५ ) भिन्नो। भिन्नोऽद्य।

[ हिन्दी टीका ]

अनन्तर न० १ के 'ओं सुमित्रिया' इत्यादि मन्त्र से अञ्जलि में जल लेकर न० २ के 'ओं दुर्मित्रिया'' इत्यादिमन्त्र से शत्रु जिस दिशा में रहता हो, उस तरफ उस शत्रु का ध्यान कर फेक दे। शत्रु के अभाव में काम क्रोध आदि आत्मा के छहों शत्रुओं का, इसके भी अभाव पक्ष में पाप का ध्यान कर नैर्ऋत्यकोण में जल फेके। अनन्तर चूतड, नाभि के निचले भाग (मूत्राशय) अथवा गुद एवं लिङ्ग के निचले भाग, दोनों ऊरू व दोनों जंघा (दण्डाकार पैर की निचली गांठ के ऊपरी भाग व निचले भाग), दोनों पैर तथा दोनों हाथों में एक एक को मिट्टी एवं जल से तीन-तीन बार धोने के बाद एक पैर जल में तथा दूसरा पृथ्वी पर रखकर आचमन करे।

[ मूलम् ]

तत उदकं नमस्कृत्य,

(१) ''ॐ इदं विष्णु र्विचक्रमे त्रेधा निदधे पदं, समूढमस्य पाᳫंसुरे[१] (१५।५)

इति मृत्तिकयाऽङ्गानि संस्पृश्य नाभिमात्रं जलं प्रविश्य,

(२) ''ॐ आपो अ[२]स्मासन्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वᳫं हि रिप्रं प्रवहन्ति देवीः ॥ (२।४)

इतिमन्त्रेण सूर्याभिमुखो निमज्जन । ततः स्नात्वा,

(३) ''ॐ उदिदादिभ्यः शुचिरापूत एमि''। (२।४)

इति निमज्योन्मज्याचम्य

(४) ''ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे'' ॥

इति मन्त्रेण गोमयेनाङ्गानि विलिम्पेत्।

[ संस्कृत टीका ]

तत इति । संस्पृश्य=आलिप्येत्यर्थः सूर्याभिमुखः=सूर्यसम्मुखःसन्। परमत्राचारचिन्तामणिर्यथा '' ओं आपो अस्मान्.......प्रवहन्तिदेवी रिति मन्त्रेण

पाठा० (१) सुरेस्वाहा (२) (क) अस्स्मान् (ख) असम्मान्

प्रवाहे प्रवाहाभिमुखोऽन्यत्र सूर्याभिमुखो मज्जेत्, ततः ओं उदिदाभ्यः.......इति मन्त्रेणोज्मज्जेत् । रत्नाकरमते द्वाभ्यां मज्जनमेव क्रियते । अथ तूष्णीं पुनर्निमज्ज्योन्मज्य द्विराचम्ये''ति ।

[ हिन्दी टीका ]

इस के बाद जल को प्रणाम कर न०१ से लिखित 'ॐ इदं विष्णुः' इत्यादि मन्त्र से मिट्टी से अंगों का लेपन कर नाभिपर्यन्त जल में प्रवेश करे । अनन्तर न० २ से लिखित ''ॐ आपो अस्मान्'' इत्यादि मन्त्र पढ़कर सूर्याभिमुख हो स्नान करे । इसके बाद पुनः विना मन्त्र के ही स्नान कर न० ३ से उल्लिखित ''ॐ उदिदाभ्यः'' इत्यादि मन्त्र से तिबारा स्नान कर और जल से ऊपर आकर न० ४ से लिखित ''ॐ मानस्तोके इत्यादि मन्त्र पढ़कर गोवर से सभी अंगो का लेप करे ।

यहीं आचारचिन्तामणिकार का मत है कि न० 2 में लिखित ''ओं आपो अस्मान्'' इस मन्त्र से प्रवाह में प्रवाहामिमुख, तो स्थिर जल में सूर्याभिमुख हो स्नान करे । बाद में न० ३ में लिखित 'ॐ उदिदाभ्यः'' इत्यादि मन्त्र पढ़कर बाहर हो । किन्तु यहीं रत्नाकर का कहना है कि जल से उक्तदोनों ही मन्त्रों से स्नान करे । आगे उक्त दोनों ही निबन्धों का मत है कि दूसरा (दुबारा) स्नान तथा ऊपर आना दोनों ही बिना मन्त्र के चुप चाप ही हों । इन मतों में तीसरा स्नान नहीं है ।

और ऊपर से यह भी ज्ञातव्य है कि कात्यायन के इसस्नान में प्रदर्शित निबन्धों के आधार से देखा जाय तो ''बहते हुए जल में प्रवाहाभिमुख हो तो स्थिर में सूर्याभिमुख हो स्नानके विवेचक्-कल्पतरुकार के मत के अनुयायी यदि रत्नाकर और आचारचिन्तमणि हैं तो कात्यायन वचन के ही 'नद्यौ' पद के आधार पर किसी भी जल में सूर्याभिमुख हो स्नान होने के पक्षपाती श्रीदत्त मत के अनुयायी आचारविवेक तथा वीरमित्रोदय (निबन्ध) हैं ।

[ मूलम् ]

( १ ) ॐ इमम्मे वरुण श्रुधीहवमद्याच मृडय त्वामवस्युरा चके । ( १ ।२१ )

( २ ) ''ॐ तत्त्वा यामि ब्रह्मणा वन्दमान
स्तदा शास्ते यजमानो हविर्भिः ।

---

पाठा. ( १ ) शश्रु ।

अहेडमानो वरुणेह बोध्युरु-

शर्ठ्ठं स मान आयुः प्रमोषीः ॥ ( २।२१ )

( ३ ) ॐ त्वन्नो अग्ने वरुणस्य विद्वान्

देवस्य हेडो अवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो

विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्'' ॥ ( ३।२१ )

( ४ ) ॐ स त्वन्नो अग्ने वमो भवोती

नेदिष्ठो अस्या उषसा व्युष्टौ ।

अवयक्ष्व नो वरुणꣳरराणो

वीहिमृड़ीकꣳसुहवो न एधि ॥ ( ४ । २१ )

( ५ ) ॐ मापो मोषधी र्हिꣳसीर्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च । यदाहुररध्न्या इति वरुणेति शपामहे ततोवरुण नो मुञ्च । ( २२।६ )

( ६ ) ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय ।

अथावयमादित्यव्रते तवानागसो अदितये स्याम ॥ ( १२।१२ )

( ७ ) ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।

अथो यमस्य षड्वीशात्सर्वस्मादेव किल्विषात् ॥ ( १०।१२ )

( ८ ) ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।

अवदेवै र्देवकृतमेनो या सिषमवमर्त्यैः मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि । ( ४८ । ३ )

इत्येभिर्मन्त्रै र्हस्तेन प्रत्येकं शिरसि जलं प्रक्षिपेत् ।

[ हिन्दी टीका ]

ऊपर संकेतित आठो मन्त्रों से प्रत्येक बार हाथ से अपने शिर पर जल छिड़कें ।

[ मूलम् ]

ततो वहति जले प्रवाहाभिमुखः स्थिरे सूर्याभिमुखो मौनी शरवत् त्रिर्निमज्जेत् ।

[ संस्कृत टीका ]

तत इति । मौनी=वाक्संयतः । शरवत्–प्रक्षिप्तबाणस्य यथाऽग्रभाग एव प्रथमं पतति तथा प्रथमं शिरोऽवनमय्य स्नायादिति भावः ।

[ हिन्दी टीका ]

अनन्तर बहते जल में प्रवाहाभिमुख तो स्थिर जल में सूर्याभिमुख तथा मौनी (चुपचाप) हो बाण के जैसे शिर नवा कर तीन बार स्नान करे ।

यहाँ 'शरवत्' कहने का तात्पर्य यह है कि जैसे फेके गए बाण का अग्रभाग ही पहले गिरता है उसी तरह पहले शिर नवा कर स्नान करना चाहिए ।

[ मूलम् ]

तत आचम्य ॐकार व्याहृति–गायत्रीभिरापो हिष्ठेत्यादितिसृभिः,

(१) "ॐ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम् । आपो मा तस्मादेनसः पवमानश्च मुञ्चतु" ॥ (१७।६)

(२) ॐ हविष्मतीरिमा आपो हविष्माँ आविवासति ।
हविष्मान् देवो अध्वरो हविष्माँ अस्तु सूर्यः ॥ (२३।६)

(३) ॐ देवीरापो अपान्नपाद् यो व ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमः ।
तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भागस्थ स्वाहा । (२७/६)

(४) ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि ।
समापोऽअद्भिरम्मतमौषधीभिरोषधीः ॥ (२८।६)

(५) ॐ अपो देवा[1] मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चिताना: ।
याभिर्मित्रावरुणावभ्यषिञ्च[2]न्य भिरिन्द्रमनयन्नत्यरातीः ॥ (१।१०)

---

पाठा. (१) देवी । (२) ञ्चन्न्या ।

(६) ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।। (२०।२०)

(७) ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।
शँयोरभिस्रवन्तु नः ।। (१२।१६)

(८) ॐ अपा[३]ꣳरसमुद्वयसन ꣳ सूर्येसन्त समाहितम् ।
अपाꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तमम्[४] ।। (३।९)

(९) ॐ अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ।।(३८/११)

(१०) ॐ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः ।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ।।

(११) ॐ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै[५]।। (३७।१९)

(१२) ॐ अग्न आयूँꣳषि पवस आसुवोर्ज्जमिषञ्च नः ।
आरे बाधस्व दुच्छुनाम् ।। (३८।१९)

(१३) ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ।। (३९ । १९)

(१४) ॐ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत ।
अग्ने क्रत्वा क्रतूँरनु । (४१/१९)

(१५) ॐ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनातु मा ।। (४१/१९)

(१६) ॐ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु मा'' ।। (४२।१९)

---

(३) अपा रस समुद्वत्सꣳसूर्ये सन्तꣳ । (४) क्वचित्क्वचित्तु–'मुपयामगृहीतोसीन्द्रायत्वा जुष्ट गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम्' इत्यधिकोऽपि पाठो दृश्यते । (५) श्न। (आ) ष्ण ।

(१७) ॐ उभाभ्यां देव सवित: पवित्रेण सवेन च ।
मां पुनीहि विश्वत: ।। (४३ / १८)

(१८) ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्वस्तन्वो वीतपृष्ठा:।
तया मदन्त सधमादेषु वयꣳस्याम पतयो रयीणाम् । (४४।१९)

(१९) ॐ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि: । तस्य ते पवित्रपते पवित्रपूतस्य यत्काम: पुने तच्छकेयम् ।। (४ । ४)

इति प्रत्येकं मन्त्रै: पुनरोङ्कार-व्याहृति-गायत्रीभि: कुशत्रयेण मार्जनं कुर्यात् ।

[ संस्कृत टीका ]

तत आचम्येति । आचम्य=द्विराचम्येत्यर्थ: । स्नानस्य "स्नात्वा पीत्वे"ति याज्ञवल्क्येन द्विराचननिमित्तेषु पाठात् । ॐ चित्पतिरिति । अत्र कात्यायनस्नानविधिप्रकरणं निरूपितम्-"चित्पतिर्मे" ति चित्पतिर्मा पुनात्वित्यस्याच्छिद्रेणेतितिवाक्य सहितस्यैकस्यैव मन्त्रग्रहणं, द्वित्वादिसंख्याया अश्रवणात् । कल्पसूत्रे तु चित्पतिर्मेत्यादि न विस्मर्तव्यम् । एवञ्चात्र निष्पद्यमाना त्रयो मन्त्रा: हिन्दीव्याख्यायामधो द्रष्टव्या: ।

[ हिन्दी टीका ]

स्नान के बाद स्नाननिमित्तक दो बार आचमन कर (१) ओंकार, (२) भू: (३) भुव:, (४) स्व: इन तीनों व्याहृति (अथवा सातों व्याहृति-यथा ओं पुनातु । ओं भुव: पुनातु आदि मन्त्रों से) तथा (५) गायत्री-योग में इन पाँचों मन्त्रों से क्रमश: मार्जन करें । अनन्तर –

(१) "ॐ आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन महेरणाय चक्षसे"।। (५० /११)

(२) "ॐ यो व: शिवतमो रसस्तस्य भाजयते ह न: उशतीरिव मातर:" । (५१।११)

(३) "ॐ तस्मा अरङ्गमामव: यस्य क्षयाय जिन्वथ आपो जनयथा च न:" ।। (५२।११)

इन तीनों मन्त्रों से तथा ऊपर संस्कृत टीका में संकेतित १९ उन्नीस मन्त्रों मार्जन करे। किन्तु कल्पसूत्रानुसार दीक्षितों के मार्जन विषय में उक्त १९ उन्नीसवाँ मन्त्र तीन भागों में विभाजित हो जाता है। यथा

(१) "ॐ चित्पतिर्मा पुनात्वच्छिद्रेण सूर्यस्य रश्मिभिः।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥

(२) "ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्"॥(४।४)

(३) ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्"॥(४।४)

अब अब आपोहिष्ठ बीचवाले अठारह तथा 'ये चित्पतिः' वाले तीन योग में 24 चौबीस मार्जन मन्त्र हुए। इसके बाद पुनः ओंकार, तीनों व्याहृतियाँ तथा गायत्री इन पाँचों मन्त्रों से मार्जन करना चाहिए। तीन कुशोंके द्वारा शिर पर जल विन्दुओं का छिड़कना मार्जन कहलाता है, यह पहले भी कह दिया गया है।

[ मूलम् ]

ततः पूर्ववद् 'इमम्मे वरुण' इत्यादिमन्त्रैः शिरसि जलं निक्षिपेत्।

[ हिन्दी टीका ]

अनन्तर 'इमम्मे वरुण' इत्यादि पूर्वोक्त आठों मन्त्रों से प्रत्येक (आठ) बार पूर्ववत् हाथ से शिर पर जल छिड़के।

[ मूलम् ]

ततः ऋष्यादिकं स्मृत्वा मग्नोऽघमर्षणं द्रुपदां वा आयङ्गौरिति वा ऋचं त्रिरावर्तयेत्।

[ हिन्दी टीका ]

बाद में जल में डूबकर ऋषि छन्द देवता तथा विनियोग का स्मरण कर अघमर्षण सूक्त (ओं ऋतञ्च-से-मथो स्वः पर्यन्त) अथवा द्रुपदा (ओं द्रुपदादिव-से-मैनसः पर्यन्त, ये दोनों ही पूरे मन्त्र सन्ध्यावन्दन प्रकरण में देखें ) मन्त्र अथवा आयङ्गौः इत्यादि तीनो-

(१) "ओं आयङ्गौः पृश्निरक्रमीदसदन् मातरं पुरः । पितरञ्च प्रयन्त्स्वः" ॥

(२) "ओं अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन् महिषो दिवम्" ॥

(३) "ओ विशुद्धां विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तोरह द्युभिः" ॥

ऋचाओं का तीन बार जप करें।

[ मूलम् ]

वक्ष्यमाणमन्त्रैस्त्रिरावृत्तप्रणायामं वा कुर्यात् । ओङ्कारं वा त्रिरावर्तयेत् । विष्णुं वा स्मरेत् ।

[ संस्कृत टीका ]

वक्ष्यमाणेति । वक्ष्यमाणमन्त्रैः = ओं भूः ओं भुवः ओं स्वः ओं महः इत्यादिभिः सन्ध्यावन्दनप्रकरणे वक्ष्यमाणमन्त्रैः । त्रिरावृत्तप्राणायामम् = त्रिरभ्यस्तप्राणायामं वा कुर्यात् । "भूरित्यादि स्वरोमित्यन्तमन्त्रेण त्रिरावृत्तेन प्राणायामं वा त्रिः कुर्यातदित्याचारचिन्तामणिः । प्राणायामं वा ॐ मापो ज्योतिरित्यादि शिरस्तद् युक्तमिति वीरमित्रोदयः ।

ओंकाराम् = प्रणवं वा त्रिरावर्तयेत् = त्रिः पठेत् । विष्णुम् = नारायणम् । वा । स्मरेत् =ध्यायेत् ।

[ हिन्दी टीका ]

ॐ भूः ॐ भुवः से लेकर स्वरोम् पर्यन्त आगे (सन्ध्यावदन प्रकरण में) कहे जाने वाले मन्त्रों से तीन बार प्राणायाम करे या तीन बार 'ओम्' का जप करे या विष्णु भगवान् का स्मरण करे ।

[मूलम्]

योगियाज्ञवल्क्यः–

आचान्तः पुनराचामेन्मन्त्रवत्स्नानभोजने ।

मन्त्रमाह–

**द्रुपदां वा त्रिरावृत्य तथा चैवाघमर्षणम् ।**
**गायत्रीं वा त्रिरावर्त्य महाव्याहृतिवत्तथा ॥**
**सोपांशु प्रणवेनापि आपः पीता अघापहाः ॥**

[ संस्कृत टीका ]

आचान्त इति । स्नानभोजने = स्नाने भोजने वा कृते । आचान्तः = कृताचमनोऽपि । मन्त्रवत्पुनराचामेत् । मन्त्रपुरस्सरं द्विराचामेत् । मन्त्रवदित्यत्र मन्त्रपदेन बोध्यार्थस्य जिज्ञायामाह – मन्त्रमाह–'द्रुपदामि'त्यादि । द्रुपदामृचम् । अघमर्षणं सूक्तं वा । गायत्रीम् = सप्रणवं सव्याहृतिं गायत्रीमन्त्रं वा । यथाच पुनः योगियाज्ञवल्क्यः–

**व्याहृतिं सप्रणवां गायत्रीं त्रिर्जपेदथ ॥ इति ।**

त्रिरावृत्य = त्रिरभ्यस्य । महाव्याहृतिभिः = भूर्भुवः स्वरित्यादिभिरोंकार-पूर्विकाभिः सप्तव्याहृतिभिः ।

**भूराद्यस्तिस्र एवैता महाव्याहृतयोऽव्ययाः । महर्जनस्तपः सत्यम् ॥**

इतिच्छन्दोगपरिशिष्टात् । सोपांशु=मन्दस्वरेण यथा स्यात्तथा । प्रणवेनापि= ओंकारेणाऽपि । प्रणवपूर्विकाः सप्तव्याहृतीः केवलमोंकारं वोच्चार्येत्यर्थः। शक्त्यपेक्षयाऽत्र विकल्पो बोध्यः । पीता आपः = आचमनरूपेण पीतजलम्। अघापहाः = पापनाशिका भवन्ति ।

[ हिन्दी टीका ]

स्नान या भोजन के बाद मन्त्रपूर्वक द्विराचमन करना चाहिए । यहाँ मूल के 'मन्त्रवत्' पद में मन्त्रपद से कौन कौन मन्त्र लिया जाय इस जिज्ञासा में कहा गया है–'द्रुपदां वा' । द्रुपदा या अघमर्षण या ओंकार व्याहृति सहित गायत्री मन्त्र . तीन बार या ओंकारसहित सातो महाव्याहृतियाँ मन्दस्वर से प्रणवका एक एक बार पठन के बाद द्विराचमन के रूप में पिया गया पानी पापों का नाशक होता है । (उक्त) विकल्पों का प्रदर्शन शक्ति की अपेक्षा के अनुसार समझें ।

[ मूलम् ]

एतच्चाचमनं मज्जनानन्तरं मार्जनात्प्राक्, "आचम्याऽप्लाव्य चात्मानं त्रिरायम्य शनैरसून् । अथोपतिष्ठेदादित्यम्" इत्यग्रे 'आप्लाव्ये'त्यनेन मार्जनाभिधानात् ।

[ संस्कृत टीका ]

एतच्चेति । एतच्चाचम नम् = 'आचान्तः पुनराचामेदित्यादिना प्रदर्शितमाचमनम् । मज्जनानन्तरम् = स्नानानन्तरम् । मार्जनात् = "आपोहिष्ठे"त्यादिमन्त्रैः कुशत्रयेणोदकबिन्दूनां शिरसि प्रक्षेपात् । प्राक् = पूर्वम् कार्यमिति शेषः अग्रिमवचनात् । तद्यथा–आचम्येत्यादि । आचम्य = आचमनं विधाय । आत्मानमाप्लाव्य = स्वशरीरे कुशत्रयेण जलबिन्दून् निक्षिप्य । असून् = प्राणान् । शनैः । त्रिरायम्य = त्रिः प्राणायामान् विधायेत्यर्थः । अथ = अनन्तरम् । आदित्यम् = सूर्यम् । उपतिष्ठेत् = स्तुवीत, इत्यत्र वचने आप्लाव्येत्यनेन मार्जनाभिधानात् = आप्लाव्य इति पदेन मार्जनस्यैव कथनात् । एतच्चाचमनं निमज्जनानन्तरं मार्जनात्प्राक्काम्यमित्याचारचिन्तामणिः ।

[ हिन्दी टीका ]

'आचान्तःपुनराचामेद्' इस वचन के द्वारा कहा गया आचमन स्नान के बाद और 'आपो हिष्ठा' आदि मन्त्रों से होने वाले मार्जन के पहले करें क्योंकि "आचम्याप्लाव्य" इत्यादि वचन के अनुसार वैसा ही होना चाहिए । इस वचन का अर्थ है–आचमन के बाद मार्जन करें और इसके बाद प्राणायाम तथा सूर्योपस्थान करें । इस वचन में आये 'आप्लव' पद का अर्थ मार्जन है ।

आचारचिन्तामणिकार का कथन है कि यह आचमन काम्य है (फल विशेष के उद्देश्य से करना न करना कर्ता की इच्छा पर है) ।

[ मूलम् ]

यदि स्नानापनेयमप्रायत्यं स्यात्तदोक्तस्नानविधेः प्राङ्मलस्नानं कर्तव्यम् । यदाह योगियाज्ञवल्क्यः–

तूष्णीमेवावगाहेत यदि स्यादशुचिर्नरः ।
आचम्य च पुनः पश्चात्स्नानं विधिवदाचरेत् ॥

## [ संस्कृत टीका ]

यदीति । यदि स्नानापनेयम् = स्नानेन दूरीकरणीयम् । अप्रायत्यम् । अशुचित्वं, स्यात्तदा उक्तस्नानविधेः । उक्तकात्यायनस्नानविधेः । प्राक् = पूर्वम् । मलस्नानम् = अभ्यङ्गपूर्वकममन्त्रं स्नानं कर्तव्यम् । अतएव "यदि सिस्नाषुरप्रयतः स्यात्तदाऽऽदौ स्नानं कुर्यादि"त्याचारचिन्तामणिरपि । तूष्णीमिति । यदि, नरः, अशुचिः= अपवित्रः स्यात्, स्नान निमित्तेन चाण्डालस्पर्शा दिने ति नित्यकृत्यार्णावः । तदा, तूष्णीमेव = मौनमेव । अवगाहेत = जलस्यान्तः प्रविश्य तत्तीरे उद्धृतजलेन वा मलस्नानं कुर्यात् । पश्चादाचम्य = स्नाननिमित्तकं द्विराचमनं विधाय । पुनः विधिवत् = यथोक्तविधिना समन्त्रक स्नानमाचरेदिति । अतएव योगियाज्ञवल्क्य एवाह—

नामन्त्रवद्द्विजातीनाङ्कर्म किञ्चित्प्रवर्तते ।
मत्स्यकच्छपमण्डूकास्तोये मग्ना दिवानिशि ॥
रमन्तेऽपि च ते स्नाताः फलं नार्हन्ति कर्हिचित् ॥ इति॥

## [ हिन्दी टीका ]

यदि स्नान करने वाला व्यक्ति शरीर से अपवित्र हो तो उक कात्यायन स्नान विधान से पूर्व ही मलस्नान (अवटन, तेल की मालिश आदि के बाद विना मन्त्र का स्नान मलस्नान पहले कहा जा चुका है ) करना चाहिए । जैसा कि योगियाज्ञवल्क्य ने कहा है यदि मनुष्य अपवित्र हो तो मौन हो जल में प्रवेश कर या जलाशय के तटपर ही जल लाकर (मल) स्नान कर ले और स्नान निमित्तक द्विराचमन के बाद यथोक्त विधि से पुनः स्नान करे । अतएव अन्यत्र इन्होंने ही कहा है "द्विजातियों का स्नान आदि कोई भी कर्म विना मन्त्र का नहीं होता । फलतः मत्स्य, कछुवा, मेढक आदि दिनरात जल में ही मग्न रहते हैं । फिर भी स्नान फल भागी नहीं होते ।"

❀ इति कातीयस्नानप्रयोगः ❀

# पद्मपुराणीयस्नानविधिः

[मूलम्]

अथ पद्मपुराणीयस्नानम् । तत्र पद्मपुराणम्-

नैर्मल्यं भावशुद्धिश्च विना स्नानं न जायते ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥
अनुद्धृतैरुद्धृतै र्वा जलैः स्नानं समाचरेत्[१] ।
तीर्थं प्रकल्पयेद् विद्वान्मूलमन्त्रेण मन्त्रवित् ॥

आदौ = सन्ध्यातर्पणादीनामिति शेषः ।

[संस्कृत टीका]

तत्रेति । तत्र = नित्यस्नानप्रसङ्गे । नैर्मल्यमिति । नैर्मल्यम् = मलम्-पापम्, मनुप्रोक्तं द्वादशविधं वसादिमलश्च, तद्राहित्यम् । भावशुद्धिश्च = चित्तवृत्तिशुद्धिश्च । स्नानं विना । न जायते = नोत्पद्यते । तस्माद्धेतोः । मनोविशुद्ध्यर्थम् = मानसिकभावशोधनार्थं, नैर्मल्यार्थश्च, बाह्याभ्यन्तर-शुद्ध्यर्थमिति भावः । आदौ = सन्ध्यातर्पणादेःपूर्वम् । स्नानम् = मज्जनम् । विधीयते । अनुद्धृतैः = जलाशयस्थैः । उद्धृतैः = जलाशयाद् बहिरानीतैः । जलैः । स्नानं समाचरेत् । मन्त्रवित् = मूलमन्त्रज्ञो जनः । मूलमन्त्रेण = 'ओं नमोनारायणाय' इति मूलमन्त्रेण । जले । तीर्थम् = पवित्रस्थानम् । प्रकल्पयेत् = निर्धारयेत् ।

अत्र केशव मिश्र कृत-द्वैत (सुश्लिष्ट) परिशिष्टम् यथा-"अनुद्धृतैरुद्धृतैर्वा तोयैः स्नानं क्रियते इति प्रथमखण्डार्थः । आशयस्थ एव स्नानकरणपक्षे 'कयेतिकर्तव्यतया स्नानम्' इत्याकाङ्क्षायां द्वितीय-खण्डार्थान्वयो बोध्यः" इति । (इतोऽधिकमेतत्पद्मपुराणीय-स्नान-प्रकरणान्ते प्रदर्श्यमानायां टिप्पण्यां, 'प्रातः स्नानादि' प्रकरणीय-सर्वप्राथमिक-कात्यायन-वचनस्य यथाहनि तथा प्रातः, इत्यस्य टीकायाञ्चावलोकनीयम् ।)

---

पाठा० (१) विधीयते ।

[ हिन्दी टीका ]

स्नान के बिना निर्मलता (पाप तथा बारह प्रकार के दैहिक मल का हटना) तथा विशुद्ध चित्तवृत्ति नहीं होती। अतः इन दोनों के लाभार्थ सन्ध्या तर्पण आदि के पहले स्नान करना चाहिए। यह स्नान जलाशय स्थित जल या जलाशय से कलस आदि के द्वारा बाहर लाये गए जल से करें। (किन्तु निबन्धकार म० म० केशव मिश्र कृत द्वैत-(सुश्लिष्ट) परिशिष्ट के विवेचनानुसार मन्त्रपूर्वक होने वाला यह पद्मपुराणीय स्नान जलाशय में ही स्नान करने के पक्ष में होगा। (इससे अधिक इसी प्रकरण के अन्त की टिप्पणी तथा स्नान संबन्धी प्रकरणों में प्रथम 'प्रातः-स्नानादि प्रकरण के सर्वप्राथमिक 'यथाहनि तथा प्रातः' इस कात्यायन वचन की टीका में देखें।)

परन्तु मूलमन्त्र जानने वाला व्यक्ति मूलमन्त्र (ओं नमो नारायणाय) से तीर्थ (जल) में पुण्य स्थान की कल्पना करे।

[ मूलम् ]

'ॐ[१] नमो नारायणाये' ति मूलमन्त्र उदाहृत।
दर्भपाणिस्तु विधिना ह्याचान्तः[२] प्रयतः शुचिः॥
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः।
प्रकल्प्यावाहयेद् गङ्गामेभिर्मन्त्रैर्विचक्षणः॥
''ॐ विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता।
पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तकात्[३]॥
तिस्रःकोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत्।
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च।
वृन्दा पृथ्वी च सुभगा विश्वकाया शिवा सिता॥
विद्याधरी[४] सुप्रसन्ना तथा लोकप्रसादिनी।
क्षेमा[५] च जाह्नवी चैव शान्ता शान्तिप्रदायिनी॥

---

पाठा० (१) क्वचिद् 'ॐ' इति नास्ति। (२) आचान्तः। (३) णान्ति। (४) विद्यावती।
(५) क्षेम्या।

**एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ।**
**भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥**

[ संस्कृत टीका ]

ओं नम इति । पूर्वाकाङ्क्षित मूलमन्त्रमाह – ओं नम इत्यादि । दर्भहस्तः = कुशहस्तः । विधिना ह्याचान्तः = शास्त्रोक्तविधिना कृताचमनः । प्रयतः शुचिः= बाह्याभ्यन्तरशुचित्वसम्पन्नः सन् । चतुरस्रम्=चतुष्कोणरूपम् । समन्ततः= स्वाग्रे, सर्वदिक्षु – चतुर्दिक्ष्विति यावत् । चतुर्हस्तसमायुक्तम् = चतुर्हस्तपरिमितम् । प्रकल्प्य = आदितः 'तीर्थमि' तिशेषः । वितते नद्यादिजलेऽपि स्नान–स्थानं व्यवच्छिद्य तीर्थं प्रकल्पयेदिति भावः । तत्र तीर्थे, एभिर्मन्त्रैः = 'ओं विष्णोः पादपादप्रसूताऽसी' त्यारभ्य गङ्गा त्रिपथगामिनी'' ति पर्यन्तं पञ्च पद्यात्मकैर्मन्त्रैः । विचक्षणः = विद्वान् । गङ्गाम् = जाह्नवीम् । आवाहयेत् = आह्वयेत् ।

मन्त्रेषु ओं विष्णोरित्यादि । (हे गङ्गे त्वम्) विष्णोः पादप्रसूता = विष्णुचरणाग्रनिस्सृता । वैष्णवी = विष्णूपासिका । विष्णुपूजिता = विष्णुना आराधिता च असि । तस्माद्धेतोः । आजन्ममरणान्तकात् = आजन्ममरणावधिकात् । एनसः=पापात् । नः = अस्मान् । पाहि = रक्ष । हे जाह्नवि = जह्नुमुनिकन्ये । तीर्थानाम् = पुण्यक्षेत्राणाम् । तिस्रःकोट्यः अर्धकोटी च वायुरब्रवीत् । ते = तव । तानि = तीर्थानि । दिवि = स्वर्गे । भुवि = पृथिव्याम् । अन्तरिक्षे = आकाशे च सन्ति। देवेषु = देवमध्ये । ते = तव । प्रसिद्धं नाम नन्दिनी इत्येव, नलिनीति च विद्यते । तथा, वृन्दा, पृथ्वी, सुभगा, विश्वकाया, शिवा, सिता, विद्याधरी, सुप्रसन्ना, लोकप्रसाधिनी, क्षेमा, जाह्नवी, शान्ता, शान्तिप्रदायिनी, एतानि पञ्चदश पुण्यकारकनामानि सन्ति, तानि स्नान काले प्रकीर्तयेत् । तस्य = एतदाचरतो जनस्य । त्रिपथगामिनी = स्वर्गमर्त्यान्तरिक्षव्यापिनी । गङ्गा, सन्निहिता = चतुरस्रचर्तुहस्तावच्छिन्न–तीर्थ–रूप–पानीये सन्निधिवर्तिनी भवेत् ।

[ हिन्दी टीका ]

यहाँ मूलमन्त्र पद से 'ओं नमोनारायणाय' मन्त्र विवक्षित है ।

हाथों में कुश लेकर शास्त्रोकविधि से आचमन कर अन्तः बाह्य पवित्र हो 'ओं नमो

नारायणाय' इस मन्त्र से अपनें आगे चारो दिशाओं में घेरकर एक-एक हाथ द्वारा फलतः चार हाथ के चतुष्कोण (जल में) तीर्थ स्नान की कल्पना कर वहाँ 'ओं विष्णोः पादप्रसूताऽसि' से लेकर 'गङ्गा त्रिपथगामिनी' पर्यन्त मन्त्र से गङ्गा का आवाहन करे।

आवाहन मन्त्र का अर्थ है। हे गङ्गें, तू विष्णु भगवान के चरण से निस्सृत, विष्णु की उपासिका तथा विष्णु से उपासिता हो। अतः जन्म से भरण पर्यन्त के पापों से हमारी रक्षा करो।

वायु ने स्वर्ग, पृथ्वी तथा आकाश में रहने वाले साढ़े तीन करोड़ तीर्थ कहे हैं, वे तुम्हारे हैं। देवता के बीच नन्दिनी, नलिनी, वृन्दा, पृथ्वी, सुभगा विश्वकाया, शिवा, सिता, विद्याधरी (विद्यावती), सुप्रसन्ना, लोकप्रसाधिनी, क्षेमा, (क्षेम्या) जाह्नवी, शान्ता, शान्ति प्रदायिनी, ये तुम्हारे नाम प्रसिद्ध हैं। इन पुण्यनामों का स्नान के समय जो पढ़ेगा, उसके समीप (उस जल में) त्रिपथगा गङ्गा आ जाती है।

[मूलम्]

सप्तवाराभिजप्तेन करसम्पुटयोजितम्।
मूर्ध्नि कुर्याज्जलं भूयस्त्रिश्चतुः पञ्च सप्त वा॥
स्नानं कुर्यान्मृदा तद्वदामन्त्र्य च विधानतः॥
''अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना।
आरुह्य मम गात्राणि सर्वपापं व्यपोहय[१]॥
नमस्ते सर्वलोकानां प्रभवार(रि)णि! सुव्रते''॥

सप्तवाराभिजप्तेन पूर्वोक्त-मूलमन्त्रेण, एकवचननिर्देशात्, मूलमन्त्रत्वेन निर्देशस्य सार्थकत्वाच्च। नतु एभिर्मन्त्रैरित्युपक्रम्य कथितानां मन्त्राणां ग्राहक इति भ्रमः कार्यः। स्नानं कुर्यादिति। अग्रिममन्त्रेण मृदमामन्त्र्यतया गात्राण्यालिप्य मज्जनं[२] कुर्यादित्यर्थः।

---

पाठा० (१) प्रमोचय। क्वचित्'' आरुह्य मम गात्राणि'' इति श्लोकार्धः 'नमस्ते सर्वलोकानामि' ति श्लोकार्धानन्तरं पठितो दृश्यते। क्वचित्तु सर्वं पापमित्यत्र सर्वपापमिति पाठः। (२) निमज्जनम्।

[ संस्कृत टीका ]

सप्तेति । सप्तवाराभिजप्तेन = एकवचन निर्देशात्, मूलमन्त्रत्वेन निर्देशस्य सार्थकत्वाच्च सप्तवारपठितेन "ॐ नमोनारायणाये" ति मूलमन्त्रेणेत्यर्थः । अभिमन्त्र्येतिशेषः । एवञ्च सप्तवार पठितेन मूलमन्त्रेण जलमभिमन्त्र्य, कर-सम्पुटयोजितम् = करयुगेनानीतं तज्जलम् । सप्तकृत्वः, पञ्चकृत्वः, चतुष्कृत्वः, त्रिष्कृत्वो वा = त्रिवारादि । मूर्ध्नि कुर्यात् = शिरसि क्षिपेत् ।

अत्र 'सप्तवाराभिजप्तेन' इत्यनेन "एभिर्मन्त्रैरि" त्युपक्रम्य कथितानां "विष्णोः पादप्रसूताऽसी" त्यादिमन्त्राणां ग्रहणस्य भ्रमो नैव कार्यः, एकवचनेन निर्देशादित्यादिग्रन्थोक्तयुक्तेः ।

ततः 'अश्वक्रान्त' इत्यादि सार्धपद्यद्वयात्मकमन्त्राभ्यां, तद्वत् = मूलमन्त्रवद्जप्ताभ्यां, मृदमभिमन्त्र्य, तया मृदा , चकाराद् शिरः प्रभृत्यङ्गान्यालिप्य चेत्यर्थः । विधानतः = यथाविधि । स्नानम् = जलैः शिरः प्रभृत्यङ्गक्षा-लनमवगाहनरूप-प्रधानं वरुण-स्नानम् । कुर्यात् = समाचरेत् ।

अश्वक्रान्त इत्यादि । मृद्ग्रहणमन्त्रमाह अश्वक्रान्त इत्यादि ।

"येयं भूमिस्तामश्वाः शुद्धिहेतवः स्वपदैराक्रामन्ति, तादृशी भूमिरश्व-क्रान्ता, अग्निचयने उखानिर्माणार्थं भूखनन देशस्याक्रमण विधानादश्वपादानां मृच्छुद्धिहेतुत्वं गम्यते । तथा, रथक्रान्ता रथसञ्चरणेन क्षुण्णा सती शुद्धा भवति । तथा त्रिविक्रमावतारे विष्णुः स्वपदेन भूमिमाक्रामति ततोऽपि शुद्धत्वमिति" तैत्तिरीयारण्यके (ना० उ० १० प्र १ अनु) सायणभाष्यम् । तत्र

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
शिरसा धारिता देवी रक्षस्व मां पदे पदे ॥

इति पाठभेद उपलभ्यते । तथापि तृतीय-चतुर्थचरणयोरेतयोरपि भाष्यार्थे यथा-"हे भूमे ! वसुन्धरा = सर्वाणि वसूनि धारयन्ती सती स्नानकर्माणि एतस्मिन्, मदीय शिरसा धारिता देवी = द्योतमाना त्वं मां स्नानार्थं जलमध्ये गच्छन्तं पदे पदे रक्षस्वे" ति । "हे मृत्तिके ! यतस्त्वं भूमिरूपा सती कृष्णेन = कृष्णवर्णेन शतसंख्याकबाहुयुक्तेन वराहावतारेण पूर्वमुद्धृताऽसि, अतः मया यद्दुष्कृतम् = पापं कृतम्, तत्पापं मे = मम नाशय । मम गात्राणि आरुह्य त्वं सर्वपापं प्रमोचय = नाशयेति सायणभाष्यमि" ति मन्त्रार्थसंग्रहः ।

हे सुव्रते = हे सन्नियमपालिके ! ''सर्वलोकानां प्रभवारणि = सर्वलोकानामुत्पत्तेर्योने इत्यर्थः । क्वचित्प्रभवारिणीति पाठः । तत्र प्रभवम् । अर्त्तुम्-प्रापयितुं शीलमस्यास्तत्सम्बोन्धनिमदम् । अत्रार्त्तेर्गत्यर्थत्वात् 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा० सू० ३।२।९८) इति णिनिरि'' ति नित्यकृत्यरत्नमाला-टिप्पणी । मृद्ग्रहणमन्त्रे प्रभवारिणि - इति प्रभवम् = उत्पत्तिम् अर्त्तुम्= प्रापयितुं शीलमस्यास्तत्सम्बोधनमिदमिति शब्दकल्पद्रुमश्च ।

**अङ्गुलीभिः पिधायैव श्रोत्रदृङ्नासिकामुखम् ।**
**निमज्जेत प्रतिस्रोतस्त्रिः पठेदघमर्षणम् ॥**

इति समुद्रकरधृताद् अवगाहनन्तु चक्षुःकर्णनासिकामङ्गुलीभिराच्छाद्य कुर्यादिति स्नान-प्रकरणीय-शब्दकल्पद्रुमोक्तं,

**''नाभिमात्रे जले गत्वा कृत्वा केशान् द्विधा द्विजः ।**
**निरुध्य कर्णौ नासाञ्च त्रिःकृत्वो मज्जनन्ततः ॥**

इति वामनपुराणाद्युक्तरीत्या वीरमित्रोदयसङ्केतितञ्च विधानं गौडनिबन्ध-सम्मतमेव मन्तव्यम् । अतएव-नित्यकृत्यरत्नमालायाः टिप्पण्याम् ''आप्लवनं निमज्जनमित्यनर्थान्तरम् । तथा च वसिष्ठः-'त्रिर्निमज्जेद्दण्डवत्तत' इति । तदेतच्चक्षुःकर्णनासिकामङ्गुलीभिराच्छाद्य कार्यमिति गौडनिबन्धे व्यक्तमिति म. म. मुकुन्द झा बक्शी ।

तीर्थावाहनादिविधानेन स्नानकरणे तीर्थफल-प्राप्तिर्जायते । यथाह वसिष्ठः-

**योऽनेन विधिना स्नाति यत्रतत्राऽम्भसि द्विजः ।**
**स तीर्थफलमाप्नोति तीर्थे तु द्विगुणं फलम् ॥**

अनेन = तीर्थावाहनादिना । अतो गङ्गायामप्यावाहनं कुर्वन्ति शिष्टा इति शब्दकल्पद्रुमः । ''एभिर्मन्त्रैर्गङ्गायामप्यावाहनं कुर्वन्ति शिष्टाः । मन्त्रकरणक-सान्निध्यस्यैवादृष्टविशेषजनकत्वाद् यज्ञादौ व्याकरणप्रक्रियाज्ञानपूर्वक-साधुशब्दोच्चारणवदि'' ति नित्यकृत्यरत्नमाला टिप्पणी ।

''अत्र चायङ्क्रमः-नाभिमात्रं जलं प्रविश्य 'ओं नमो नारायण ये' ति मन्त्रेण चतुर्हस्तञ्चतुरस्रं पानीयं हस्तेनावच्छिद्य विष्णोरित्यादिना तत्र गङ्गामावाह्य

ओं नमोनारायणायेति मन्त्रेण सप्तधा पठितेन सप्तकृत्वः पञ्चकृत्वश्चतुर्वा त्रिर्वा करसम्पुटेन मूर्ध्नि जलं क्षिपेत् । ततः अश्वक्रान्त इत्यादिना मृदमामन्त्र्य गात्राण्यालभ्य प्रवाहे प्रवाहाभिमुखोऽन्यत्र सूर्याभिमुखस्त्रिर्निमज्जेदि'' ति नित्यकृत्यार्णवोद्धृताचारचिन्तामणिः ।

[ हिन्दी टीका ]

सात बार पढ़े गए 'ओं नमो नारायणाय' इस मन्त्र से अभिमन्त्रित जल को सात, पाँच, चार या तीन बार सम्पुटित दोनों हाथों से अपने मस्तक पर फेंके । सात बार पढ़े जाने वाले मन्त्र में 'विष्णोः पादप्रसूतासि' इत्यादि पाँच पद्यवाले मन्त्रों को पढ़ने का भ्रम न करें, क्योंकि वचनमें 'सप्तवाराभिजप्तेन' पद में एकवचन का निर्देश रहने तथा 'मूलमन्त्र उदाहृतः' कहकर निर्देश रहने के कारण सार्थकता की दृष्टि से भी 'ओं नमो नारायणाय' यही मन्त्र (जल में तीर्थकल्पना तथा) शिर पर जलप्रक्षेप के लिए भी समझना चाहिए ।

अनन्तर विहित मिट्टी लेकर उसे 'ओं अश्वक्रान्ते' इत्यादि 'प्रभवारणि सुव्रते' पर्यन्त के इस ढाइ पद्यों वाले मन्त्र से अभिमन्त्रित कर उससे समस्त शरीर का लेपन कर प्रवाहवाले जल में प्रवाहाभिमुख अन्यत्र सूर्याभिमुख हो (गौडनिबन्धानुसार कान आँख नाक तथा मुंह को अंगुलियों से बन्द कर) तीन डूब स्नान करे ।

अश्वक्रान्ते आदि मन्त्र का सायणभाष्यसम्मत अर्थ है– शुद्धिकारक घोड़े पैरों से दौड़ लगा कर इस पृथ्वी को कुदेर देते हैं । इसलिए यह (पृथिवी) अश्व क्रान्ता होती है । यज्ञों में अग्निचयन के निमित्त उखा (कुण्ड) निर्माण के लिए खुदने वाले भू प्रदेश पर अश्वाक्रमण का विधान होने के करण अश्व का पैर मृत्तिका की शुद्धि का कारण है, ऐसा स्पष्ट प्रतीत होता है । अतः इस भाव को लेकर सम्बोधन किया गया है - अश्वक्रान्ते । रथसञ्चरण से खुदी भूमि शुद्ध होती है, इस अभिप्राय से सम्बोधन किया गया है-रथक्रान्ते । त्रिविक्रमावतार में विष्णु भगवान ने अपने पैर से भूमि पर सञ्चरण किया था । इसलिए भी शुद्ध होने के कारण सम्बोधन किया गया है-'विष्णुक्रान्ते' । सारे जवाहरात, रत्न सुवर्ण आदि के धारण करने के कारण पृथ्वी का नाम हुआ वसुन्धरा और पवित्र भी मानी जाती है । अतएव सम्बोधन किया गया है वसुन्धरे । हे मृत्तिके । जिस कारण तू भूमिरूप होती हुई सौ बाँहवाले कृष्ण वर्ण वराहावतार के द्वारा पहले उद्धृत हुई हो । अतः मेरे शरीर में से लग्न होकर सारे पापों का नाश कर दो । अच्छे नियमों का पालन करने वाली तथा सभी लोकों एवं लोगों के उत्पादिके हे मृत्ति के तुझे मेरा प्रणाम है ।

ऊपर से ज्ञातव्य है कि तीर्थ के आवाहन आदि विधान के द्वारा किया गया स्नान तीर्थ स्नान का फल देता है। जेसा कि वसिष्ठ (स्मृति) का कहना है कि "जो निर्दिष्ट इस विधान से जिस किसी भी जल में स्नान करता है वह तीर्थस्नान का फल पाता है और तीर्थ में तो दुगुने फल का भागी होता है। अतः शिष्ट जन इन मन्त्रों से गंगा में भी गंगा का आवाहन करते हैं; क्योकि मन्त्रद्वारा आवाहित गङ्गा के सान्निध्य (नजदीक में होने के) ज्ञान में ही अधिक फल देने वाला होता है जैसे यज्ञ आदि में व्याकरण के प्रक्रिया ज्ञानपूर्वक शुद्ध शब्दों के उच्चारण से आपेक्षिक अधिक फल होता है।

नित्यकृत्यार्णव में उद्धृत आचारचिन्तामणि के अनुसार सारांश में इस पद्मपुराणीय स्नान का क्रम यह हुआ कि "नाभि तक पानी में प्रवेश कर 'ओं नमो नारायणाय' इस मन्त्र से अपने आगे चारो तरफ से चार हाथ के बराबर (चतुष्कोण) पानी को हाथ से घेर देने का चिह्न लगाकर तीर्थस्थान की कल्पना करें और वहाँ 'ओं विष्णोःपादप्रसूताऽसि' इत्यादि पाँच पद्यवाले मन्त्रसे गङ्गा का आवाहन कर सात बार पढ़े जाने वाले 'ओं नमो नारायणाय' इस मन्त्र से सात, पाँच, चार, या तीन बार अपनी अंजुली से माथे पर जल फेके। अनन्तर मिट्टी लेकर 'ओं अश्व क्रान्ते' इत्यादि ढाइ पद्योंवाले मन्त्र से अभिमन्त्रित कर उससे सभी अंगों का लेपन कर प्रवाह जल में प्रवाहाभिमुख तो अन्यत्र (स्थिर जल में) सूर्याभिमुख हो तीन बार स्नान करना चाहिए।

इस पद्मपुराणीय स्नान प्रसंग पर नित्यकृत्यरत्नमाला में स्त्री एवं शूद्ध (तथा अनुपनीत बालक) के लिए लिखी गई पद्धति में अन्तर केवल इतना ही है कि भिन्न स्थलों में दुबारा पढ़े जाने वाले 'ओं नमो नाराणाय' इस मन्त्र के आदि में लगनेवाला 'ओं' पद हटा दिया जाय और 'ओं विष्णोः वाले तथा 'ओं अश्वक्रान्ते' वाले मन्त्र में आदि में जोड़े जाने वाले 'ओं' के स्थान पर 'नमः' पद का संयोजन कर लिया जाय। शेष पहले के जैसा ही है।

## [ मूलम् ]

अयञ्च स्नानविधिः सर्वशाखिसाधारणः सर्ववर्णसाधारणश्च, संकोचे प्रमाणाभावात्। पुराणोक्तश्रवणे सर्वाधिकारश्रवणाच्च। अनधीतवेदं प्रति चायमेव स्नानविधिः प्रशस्तः, वेदमन्त्रशून्यत्वात्।

## [ संस्कृत टीका ]

अयञ्चेति। श्रवणाच्चेति। तदुक्तं भविष्यपुराणे-

चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे।
धर्मशास्त्राणि राजेन्द्र ! शृणु तानि नृपोत्तम॥

विशेषतश्च शूद्राणां पावनानि मनीषिभिः ।
अष्टादश पुराणानि चरितं राघवस्य च ॥

रामस्य कुरुशार्दूल धर्मकर्मार्थसिद्धये ।
तदुक्तं भारतं चैव पाराशर्येण धीमता ॥ इति ॥

परन्तु,

ब्रह्मक्षत्रविशाञ्चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥

इति नरसिंह-पुराण-वचनात्स्त्रीशूद्राणां नमः पदातिरिक्तमन्त्रशून्यो विधिः । 'सनमस्कारकमि'त्यनेन पौराणिकमन्त्रस्थाने नमःपदं विधीयते ।' अनुमतोऽस्य नमस्कारो मन्त्रः इति शूद्रप्रकरणस्थगौतमवचने मन्त्र-पद-सामानाधिकरण्यश्रवणादि'' ति वीरमित्रोदयः । ''पौराणिकश्च विधिः सर्वसाधारणो बाधकाभावात् । न च 'ब्रह्मक्षत्रविशाञ्चैवे' त्यादि नरसिंह पुराणाच्छूद्रस्य सर्वमन्त्ररहितं स्नानमितिवाच्यम् । 'वेदमन्त्रवर्जं शूद्रस्ये' ति स्मृतिवाक्यैकवाक्यतया तस्य वेद मन्त्रमात्र निषेधकत्वात् । सनमस्कारकम् = उदकनमस्कारसहितमिति प्राञ्चः । मन्त्रं विनैव नमः शब्दमभिधाय शूद्रःस्नानमाचरेदिति केचिदि'' ति नित्यकृत्यार्णवोद्धृताचारचिन्तामणिः ।

''तूष्णीम् = वेदमन्त्रशून्यम्' वदमन्त्र वर्जमिति स्मृत्यन्तरात् । सनमस्कारकम् = तीर्थनमस्कारसहितमुदकनमस्कारसहितं वा । इष्टदेवतानमस्कार-सहितमित्यन्ये'' इति छन्दोगाह्निकम् ।

**[ हिन्दी टीका ]**

यह पद्मपुराणीय स्नानविधि वेदों के किसी भी शाखावाले तथा किसी भी वर्ण के लिए समान है क्योंकि सङ्कोच (किसी के लिए विधि और किसी के लिए निषेध की कल्पना) करने में कोई प्रमाण नहीं है । दूसरी बात, पुराण सुनने में सभी का अधिकार भी है । जिसने वेद नहीं पढ़ा है (स्त्री शूद्र तथा अनुपनीत बालक) उसके लिए भी यही स्नानविधि प्रशस्त है; क्योंकि इस विधि में वैदिक मन्त्र नहीं है । यह कथन आचारादर्श निबन्ध का है ।

यहीं वीरमित्रोदय निबन्ध का विशेष कथन है कि "ब्राह्मण, क्षत्रिय तथा वैश्यों का उक्त मन्त्रसहित स्नान हो किन्तू शूद्र का 'नमः' मन्त्र मात्र से स्नान हो" इस नरसिंह पुराण के वचनानुसार स्त्री तथा शूद्रों का नमः मन्त्र से ही स्नान होना चाहिए। शूद्रप्रकरणस्थ गौतमवचन के अनुसार भी इनका 'नमः' मन्त्र ही है। यहाँ नित्यकृत्यार्णव में उद्धृत आचारचिन्तामणि निबन्ध का कथन है कि यह पुराण प्रतिपादित स्नानविधि सर्वसाधारण के लिए है क्योंकि इसमें कोई बाधक प्रमाण नहीं आता। यदि शंका करें कि 'ब्रह्मक्षत्रविशाञ्चैव' इत्यादि नरसिंह पुराण के अनुसार (इस वचन का अर्थ ऊपर दिखा गया है) शूद्र का क़िसी भी मन्त्र से रहित ही स्नान होना चाहिए तो इसका उत्तर होगा कि 'शूद्र की क्रियाएँ वैदिकमन्त्र वर्जित हों' इस स्मृति वचन के साथ एकवाक्यता करने पर वेदमन्त्रमात्र का ही निषेध सिद्ध होता है। अतः पौराणिक स्नानविधि सर्वसाधारण के लिए है। 'नमः' पद का उच्चारण कर शूद्र स्नान करे यह किन्हीं का मत है। इसी चिन्तामणि में उद्धृत प्राचीनों के मतानुसार तो नरसिंह पुराण में पठित-'सनमस्कारकम्' पद का अर्थ जल के नमस्कार के साथ है, अर्थात् स्त्री एवं शूद्रों के लिए किसी भी मन्त्र की आवश्यकता नहीं, केवल जल को नमस्कार (प्रणाम) कर के स्नान कर लेना चाहिए।

[ टिप्पणी ]

पद्मपुराणीये स्नानेऽस्मिन् उद्धृतानुद्धृत-जल-साध्यत्वस्य विवेचनमभिलक्ष्य द्वैत (सुशिष्ट) परिशिष्टे केशवमिश्रास्तु नरसिंहपुराणीय 'ब्रह्मक्षत्र विशाञ्चैवे'ति वचनमुपक्रम्य-"अत्र च मन्त्रं विनैव नमश्शब्दममिधाय शूद्रः स्नानमाचरेदिति वाक्यार्थे सिद्धे पद्मपुराणीय-स्नानेऽपि नाधिकार इति ऋजवः, तन्न, तूष्णीमेवेत्यनेनाविद्यस्य शूद्रस्य वैदिकमन्त्रपाठो निषिध्यते, न तु मन्त्रान्तरम् 'मन्त्रवत्स्नानमिष्यते' इत्यत्र पूर्वार्धे वैदिक-मन्त्रस्यैवोपस्थितत्वेन द्वितीयार्द्धे तस्यैव निषेधात्। अन्यथा सकल-निबन्धविरोधः स्यादि"ति।

दक्षः-

'यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्॥

अतएव प्रातरपि मन्त्रवत् कातीयकल्पादिना स्नानम् 'तथा प्रातरि' ति श्रुतेः।

**मलापकर्षणं तीरे ( पार्श्वे ) मन्त्रवत्तु जले स्मृतम् ।**

**सन्ध्यास्नानमुभाभ्यान्तु स्नान-देशाः प्रकीर्त्तिताः ॥❖**

अत्र मन्त्रस्नानं जले एव नियम्यते । तेन जले एव तत् कार्यम्, न तु स्थलेऽपि 'गेहे चेत्तदमन्त्रवदि' तिश्रुतेः ।

अत्र वदन्ति-

**'अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं विधीयते ।**

**तीर्थं प्रकल्पयेद् विद्वान् मूलमन्त्रेण मन्त्रवित् ॥**

इति पद्मपुराणदर्शनात् स्थलेऽपि मन्त्रान्वय इति, तन्न, 'अनुद्धृतैरुद्धृतैर्वा तोयैः स्नानं क्रियते' इत्यस्य प्रथमखण्डार्थत्वात् । आशयस्थ एव स्नान-करण-पक्षे 'कयेतिकर्तव्यंतया स्नानम्' इत्याकांक्षायां द्वितीयखण्डार्थान्वयात् । अन्यथा पद्मपुराणे दक्षविरोधः स्यादिति ।

गौडास्तु - मन्त्रमात्रनिषेधबलादिति कर्तव्यतान्वयः स्थलेऽपि निराबाध एवेति, तन्न, विभिद्यान्वये पर्यवसिते तदिति कर्तव्यतायास्तत्रैवान्वयात्। किञ्च, सरस्सु देवखातेषु तीर्थषु च नदीषु च । क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रिया मता इति शङ्खेन क्रियान्वयस्य दर्शितत्वादि " ति प्राहुः ।

**[ हिन्दी टिप्पणी ]**

अनुद्धृत (जलाशयस्थित) तथा उद्धृत (जलाशय से लाये गए) जल से भी पद्म पुराणीय स्नान हो या नहीं' इस प्रसंग पर पूर्वोक्त नरसिंह पुराणीय 'ब्रह्मक्षत्रविशाञ्चैव' से प्रारम्भ कर द्वैत (सुश्लिष्ट) परिशिष्ट में निबन्धकार केशव मिश्र का कहना है कि उक्त नरसिंहपुराणीय वचन के अनुसार किसी भी अन्य मन्त्र के विना ही केवल 'नमः' शब्द (मन्त्र) का उच्चारण कर शूद्र स्नान करे, ऐसा वाक्यार्थ सिद्ध हो जाने पर विभिन्न मन्त्रवाले पद्पुराणीय स्नान में भी शूद्र का अधिकार नहीं इस तरह जों सरलमति वालों का कहना है वह उपयुक्त इसलिए नहीं कि उक्त वचन में पठित 'तूष्णीम्' पद का तात्पर्य विद्यारहित शूद्र के लिए वैदिक मन्त्रपाठ के निषेध से ही है न

---

❖ मन्त्रवत्तु = मन्त्रवच्चेत्यर्थः । पार्श्वे = जलपार्श्वे । जलेन कर्तव्यमिति यावत् । अतएव पार्श्वे - न जलमध्य इति रत्नाकर : । सन्ध्यास्नानम् = प्रातः स्नानम् । उभाभ्याम् = जले स्थले चेति कल्पतरुरिति वीरमित्रोदयः ।

कि वैदिक मन्त्र से अन्य पौराणिकमन्त्रों के पाठ से भी, क्योंकि उसी वचन के पूर्वार्द्ध में पढ़े गए 'मन्त्रवत्स्नानमिष्यते (ब्राह्म,क्षत्रिय एवं वैश्य का स्नान समन्त्रक हो) से वैदिक मन्त्र का होना ही प्राप्त (उपस्थित) होता है अतः द्वितीयार्द्ध में निषेध भी उसी का होगा। यदि ऐसा न मानें तो सारे निबन्धों का विरोध उठ खड़ा हो जायगा।

दक्ष का वचन है कि "नीरुज व्यक्ति दतवन के बाद मध्याह्न के जैसे ही प्रातः काल में भी स्नान करे। यदि घर में (अर्थात् जलाशय से लाये गए जल से) स्नान करे तो वह अमन्त्रक (विना मन्त्र का) होगा" (छन्दोग परिशिष्ट में कात्यापन द्वारा यह वचन हू बहू ऐसे ही कहा गया है जिसकी विस्तृत व्याख्या 'प्रातः स्नानादि' पूर्वप्रकरण के आदि में कर दी गई है, जो वहाँ से देखी जा सकती है )। इसके अनुसार कातीय कल्प पद्पुराणीय कल्प आदिवाला मन्त्रपूर्वक स्नान प्रातः काल भी होगा क्योंकि वचन में 'तथा प्रातः' पद स्पष्टरूप से कहे गए हैं।

दक्ष के ही-"मलापकर्षण स्नान जलाशय तट पर हो तो समन्त्रक स्नान जल में हो"-इस वचनानुसार समन्त्रक स्नान जल में होना नियमित (निश्चित) किया जाता है। अतः जलाशय में ही मन्त्रस्नान करना चाहिए क्योंकि स्पष्ट शब्दों में कहा गया है "गेहे चेत्तदमन्त्रयत्"।

यहाँ किन्हीं का कहना है कि-"जलाशय या जलाशय से लाये गये जल से स्नान करना चाहिए ओर प्रथमतः मूलमन्त्र जानने वाला विद्वान मूल वचन से तीर्थ की कल्पना करे-इस पद्मपुराणीय (स्नान प्रकरण के आदि में ही इस वचन की व्याख्या हो गई है) वचन के अनुसार स्थल स्नान पक्ष में भी मन्त्रों का होना उचित है"। किन्तु यह कहना इसलिए उपयुक्त नहीं कि इस वचन के प्रथम खण्ड का अर्थ है कि 'अनुद्धृत या उद्धृत जल से स्नान करना चाहिए।' अब जलाशय में ही स्नान करने के पक्ष में आकांक्षा (जिज्ञासा) होती है कि यह स्नान किस तरह किया जाय तो द्वितीय खण्ड के तीर्थ कल्पनावाले अर्थ का अन्वय होता है। यदि ऐसा दो खण्डों में विभाजित कर के अर्थ न माना जाय तो पद्पुराण के वचनों के साथ उपर्युक्त दक्ष वचनों का स्पष्टः विरोध (टकराहट) हो जायगा।

यहाँ गौड़ों का कहना है कि "शूद्ध के लिए जब 'तूष्णीम्' पद से मन्त्रमात्र का निषेध किया जाता है तो 'यह स्नान कैसे किया जाय' इस आकांक्षा पर स्थल स्नान पक्षमें भी विना किसी बाधा के यह पद्पुराणीय स्नान होना चाहिए।" किन्तु यह कहना भी ठीक नहीं, क्योंकि जब पद्मपुराणीय वचन को दो खण्डों में विभाजित कर निर्बाध अन्वय सम्पन्न हो जाता है तो फिर 'इतिकर्तव्यता' (यह कैसे किया जाय) का भी अन्वय (सम्बन्ध) जलस्नान पक्ष में ही करना सर्वथा युक्तियुक्त होगा।

दूसरी बात-शंख ने भी -'सरोवर, देवखात, तीर्थजल तथा नदी में क्रियास्नान (क्रिया रूप स्नान) का होना कहा गया है'-कहकर मन्त्रपूर्वक होने वाला क्रिया रूप क्रिया स्नान का सम्बन्ध भी जलाशय के स्नान में ही दिखाया है।

❁इतिपद्मपुराणीयस्नानविधि :।❁

## वस्त्रपरिधानविधिः

[ मूलम् ]

अथ वस्त्रपरिधानविधिः। विष्णुः-

**स्नात एव सोष्णीषे धौते वाससी विभृयात्**

उष्णीषधारणं शिरोजलप्रच्यवार्थमाचमनात्प्राक्।

[ संस्कृत टीका ]

स्नात इति। स्नातः = कृतस्नानः। सोष्णीषे = उष्णीषम्-केशजलापनयनार्थं शिरोवेष्टनम्, तेन सहिते धौते वाससी जलप्रक्षालितमधस्तनमुत्तरीयंच वस्त्रमित्यर्थः।

**विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ।**
**श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥**

इति भृगुवचनेनोत्तरीयधारणस्यावश्यकत्वात्। उत्तरीय -धारणञ्च यज्ञोपवीतवद्,

**यथा यज्ञोपवीतन्तु धार्यते च द्विजोत्तमैः ।**
**तथा सन्धार्यते यत्नादुत्तराच्छादनं शुभम् ॥**

इति स्मृतिवचनात्। यथा द्विजोत्तमैः सव्यापसव्यत्वादिना उपवीतं धार्यते तथोत्तराच्छादनं सर्वैरेव धार्यमिति भावः। विभृयात् = धारयेत्। उष्णीषधारणन्तु यावता कालेन जलापकर्षणं भवति तावत्कालमेव। एतदपि आंचमनादौ निषेधात्ततः प्रागेव। जलक्षयनिमित्तमुष्णीषधारणं युधिष्ठिरेण कृतम्। यथा महाभारते-

**आप्लुतः साधिवासेन जलेन[1] च सुगन्धिना ।**
**राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम् ॥**
**जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि । इति**

शिथिलार्पितम् = अगाढबन्धम्। तथाच उष्णीषाकारेण वस्त्रेण शिरोजलम्, अन्येन वस्त्रेणान्यजलमपनयेदिति तात्पर्यम्।

---

पाठ - ( १ ) जलेनाथ।

[ हिन्दी टीका ]

स्नान के बाद माथे के बालों में लगे जल को हटाने के लिए पूर्व निर्धारित पगड़ी लगा लेनी चाहिए किन्तु यह तभी तक रहे जब तक कि वह जल सूख न जाय। यह विधि आचमन के पहले हो जानी चाहिए क्योंकि आचमन के समय पगड़ी लगना निषिद्ध है। फलतः अन्य अंगोछे आदि वस्त्र से अन्य अंगों को पोंछ कर धुले दो (निचला तथा उत्तरीय) वस्त्र धारण करे। ऊपर से ज्ञातव्य है कि भृगुवचनानुसार उत्तरीय के विना श्रौत-स्मार्त कर्मानुष्ठान नहीं हो सकता तथा अन्यवचनानुसार जैसे द्विज लोग सव्य एवम् अपसव्य रूप से यज्ञोपवीत धारण करते हैं वैसे सभी लोग उत्तरीय धारण करें।

[ मूलम् ]

पराशरः-

स्नात्वा निरस्य[1] वासोऽन्यज्जङ्घे प्रक्षालयेन्मृदा[2] ।
अपवित्रीकृते वै[3] तु कौपीनच्युत[4] वारिणा ॥

कौपीनम् = अधोवस्त्रम्।

[ संस्कृत टीका ]

स्नात्वेति। स्नात्वा वासो निरस्य = स्नानं कृत्वा पूर्वपरिहितं क्लिन्नं वस्त्रं परित्यज्य। अन्यद् वासः, परिधायेति शेषः। कौपीनच्युतवारिणा =अधोवस्त्र-क्षरितजलेन। कौपीनम् = अधोवस्त्रमिति ग्रन्थकारः। कौपीनम् = जघन-प्रदेशस्ततश्चयुतेन जलेनेति कल्पतरुः। कौपीनम् = गुह्यमित्याचारचिन्तामणिः। जघनादधोदेश इति निबन्धार इत्याचारविवेकः। अपवित्रीकृते = अशुचीकृते। जङ्घे। मृदा = मृज्जलाभ्याम्। प्रक्षालयेत् = परिमार्जयेत्। "इदञ्च छालनं धौतवस्त्रपरिधानानन्तरं नरसिंहपुराणीयपाठक्रमादिति नित्यकृत्यार्णवः।

[ हिन्दी टीका ]

स्नान करने के बाद भीगे कपड़ों को हटाकर तथा अन्य (सूखा) वस्त्र लगा कर कौपीन (अनेक व्याख्याताओं के अनुसार विभिन्न अर्थ हैं फिर भी ग्रन्थकार के अनुसार) अधोवस्त्र से गिरे जल से अपवित्र दोनों जंघाओं को मिट्टी एवं जल से धोये।

पाठा० (१) निवस्य। (२) प्रक्षाल्य चाम्भांसि। (३) ते तु। (४) श्चयांत।

[ मूलम् ]

योगियाज्ञवल्क्यः[१]–

स्नात्वैवं वाससी धौते अश्लीष्टे[२] परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथा[३] ॥
अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतुपं योगपट्ट[४]ञ्च द्विवासा येन वै भवेत् ॥

कुतुपः = नेपाल–कम्बलः ।

[ संस्कृत टीका ]

स्नात्वैमति । एवं स्नात्वा = शास्त्रविधिना स्नात्वा । अश्लीष्टे = अस्यूते । अक्लिष्टे इति पाठे तु अरजकक्षालिते इत्यर्थः । 'असौत्रे' (सौत्री = रजकः) इति गृह्यात् । परिधाय । मृदाद्भि । = मृत्तिकया जलेन च । ऊरू = जङ्घे । तथा हस्तौ प्रक्षाल्य । धौतवस्त्रस्याभावे तु, शाणक्षौमाविकानि = शणक्षुमा–मेषलोम–भवानि वसनानि च । इदञ्च जातिक्रमेण बोद्धयम्, "वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" इति मनु (२।४१) वाक्यैकवाक्यत्वात् । क्षौमम् = अतसीत्वक्कृतम् । कुतुपम् = नेपाल कम्बलम् । "योगपट्टम् योगस्य पट्टम् वसनविशेषः, योगार्थं पट्टमिति वा । यद्वस्त्रेण पृष्ठजानुबन्धनं भवति तत् । यथाच तल्लक्षणं पाद्मे कार्त्तिकमाहात्म्ये द्वितीयाध्याये–

पृष्ठजान्वोः समायोगे वस्त्रं वलयवद् दृढम् ।
परिवेष्ट्य यदूर्ध्वज्ञस्तिष्ठेत्तद् योगपट्टकम् ॥

कुत्रचित्तद्धारण–निषेधोऽपि, यथा–

पादुके योगपट्टञ्च तर्जन्यां रौप्यधारणम् ।
न जीवत्पितृकः कुर्याज्जेष्ठे भ्रातरि जीविते ॥

इति शब्दकल्पद्रुमः । वा । तद्धारयेदिति शेष इत्याचारचिन्तामणिः ।

---

पाठा० ( १ ) 'नरसिंह पुराणे' इति नित्यकृत्यार्णव पाठः । ( २ ) अच्छिन्ने, अक्लिष्टेवा ( ३ ) मृदाः हस्तौ प्रक्षालयेत् ततः ।

उत्तरीयासम्भवे तु परिहितवस्त्रभागेनोत्तरीयं कार्यम्, यथाचोक्तं पारस्करगृह्येण—"एवञ्चेदवासो भवति तस्यैवोत्तरं प्रच्छादयीत," इति, "वस्त्रस्योर्ध्वभागे उत्तरीयं कुर्यादि" ति योगीश्वरवचनाच्च। अन्यदप्युत्तरीयमाह कात्यायनः-

तृतीयमुपवीतं कुशरज्जुं वा" इति,

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि।

तृतीयमुत्तरीयार्थे वस्त्राभावे चतुर्थकम्।

इति गौडनिबन्धे स्मृतिवचनञ्च।

आचारमयूखादिग्रन्थेषु 'वस्त्राभावे तदिष्यते' इति पाठ इति नित्यकृत्यार्णवः।

[हिन्दी टीका]

शास्त्रविधि से स्नान कर घुले धोवी से न धुले हुए तथा बिना सिले हुए दो वस्त्र धारण करे। अनन्तर मिट्टी और जल से दोनों जंघाएँ तथा दोनों हाथ धोयें। यदि धौतवस्त्र (सूती कपड़ा) दूसरा न हो तो ब्राह्मण, क्षत्रिय एवं वैश्य क्रमशः सन का बना हुआ, अलसी की त्वचा से बना हुआ तथा भेड़ के रोमों से बना हुआ द्वितीय वस्त्र धारण करे या साधारणतः सभी लोग नेपाली कम्बल अथवा योगपट्ट (प्राचीन कालीन एक पहनावा जो पीठ पर से लाकर कमर में बाँधा जाता था और जिससे घुटनों तक का अंग ढका रहता था) का धारण करे जिससे अन्ततः नीचेके तथा उत्तरीय रूप के दो वस्त्रधारी हो। यदि उत्तरीय होना असम्भव ही हो तो पारस्कर एवं योगीश्वर के वचनानुसार एक ही वस्त्र के ऊपरी अन्तिम भाग से उत्तरीय की कल्पना कर शरीर ढक लेना चाहिए।

यदि यह भी संभव न हो तो कात्यायन का कहना है कि तीसरा यज्ञोपवीत या कुश की बनी डोरी को ही शरीर पर धारण कर ले। गौडनिबन्ध में उद्धृत स्मृति वचनानुसार श्रुति या स्मृति प्रतिपादित कर्मों के अनुष्ठान में दो यज्ञोपवीत (एकजोड़ा), उत्तरीयवस्त्र की पूर्त्ति के लिये तृतीय, और यदि वस्त्र भी न हो तो चौथे का भी धारण कर लेना चाहिए।

[संस्कृत टिप्पणी]

स्यूतविषये अरजकक्षालितविषये च प्रकृतवचनस्य,

न स्यूतेन न दग्धेन पारक्येण विशेषतः।

मूषिकोत्कीर्णजीर्णेन कर्म कुर्याद् विचक्षणः॥

इति भारतीयवचनस्य–

ईषद्धौतं स्त्रिया धौतं यद् धौतं रजकेन च ।
अधौतं तद् विजानीयाद् दैवे पित्र्ये च कर्मणि ॥

इत्याचारचिन्तामण्युद्धृतवचनस्य (ईषद्धौतम् = क्षारादिरहितजलप्रक्षालितम्),

स्वयं धौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ।
न च राजकधौतेन नाधौतेन भवेत् क्वचित् ॥

इति प्रचेतोवचनस्य चापवाद –भूतं प्रचेतोवचनं विवचनं च यथा–

पुत्रमित्रकलत्रेण स्वज्ञातिबान्धवेन च ।
दासवर्गेण यद् धौतं तत्पवित्रमिति स्थितिः ॥ इति

"अत्र भिन्न-भिन्न वस्त्र-खण्डयोः सीवनैकत्वं यत् सम्पाद्यते, तत्सीवनं दोषकरम् । एकस्मिन् वस्त्रे विदीर्णे यत्तस्य दाढ्यार्थं छिद्रनिरासार्थं सीवनं तन्न पूजादौ दूषितमिति म० म० न्यायपञ्चाननदेवनाथठक्कुरैः स्मृतिकौमुद्यां लिखितमिति कृत्यसारसमुच्चयटिप्पण्यां गङ्गाधरमिश्राः ।

'न स्यूतेने' ति वचनमुपक्रम्य-"स्यूतत्वं यत्र वाससोः सीवनेनैकत्वमापद्यते। उक्तञ्च । अन्त्यावयविनोः खण्डपटयोर्वा नानारम्भकत्वेन सीवनादेकत्वासिद्धे बहुवस्त्रत्वापातात् । यद्येकवस्त्रं विशीर्णं सूच्या तन्तु-सम्बन्धादविशीर्णत्वमापद्यते तन्न दुष्टमश्रुतत्वात्, दृष्टमूलत्वेनोपपत्तावदृष्टार्थत्वकल्पनानवकाशात् । एवमेव तत्त्वामृतस्वरस इति नित्यकृत्यार्णवोऽपि ।

**[ टिप्पणी हिन्दी ]**

सिले हुए तथा धोबी से धुले हुए कपड़ों के सम्बन्ध में प्रकृत वचन से जो कहा गया है, महाभारत के वचन द्वारा जो"सिले हुए, जले हुए, विशेषत: परकीय (दूसरे के) तथा चूहे से काटे जाने के कारण जीर्ण वस्त्र से ज्ञानी जन श्रौत स्मार्त कर्म न करे"-कहा गया है इसी तरह आचारचिन्तामणि में उद्धृत वचन से जो कहा गया है, तथा प्रचेता के वचनानुसार जो-विद्वानों को चाहिए कि स्वयं के धोये हुए कपड़ों से शास्त्रविहित क्रिया करें न कि धोबी के धुले या न धुले ही कपड़ों को लगा कर कहीं भी क्रिया हो-कहा गया है इन सभी का अपवाद स्वरूप प्रचेता वचन तथा निबन्धकारों का विवेचन क्रमशः निम्न प्रकार है । यथा, "अपने पुत्र, मित्र, भार्या, बन्धु, बान्धव

एवं नौकरों के द्वारा धुला हुआ वस्त्र पवित्र है, यह वस्तु स्थिति है।" यह प्रचेता वचन का अर्थ है।

(वास्तव में देखा जाय तो स्नान के बाद पहने जाने वाले वस्त्रों को जल कणों से सींच कर पहनने का शिष्टजनों का अद्यावधि प्रचलित व्यवहार है। इससे प्रतीत ऐसा होता है कि किसी भी तरह धुले हुए वस्त्रों को अनुकल्प में स्वयं धुले की मान्यता प्रदान करनी है। अतः सर्वदोषनिवारणार्थ ऐसा कर लेने से आधुनिक युग में भी शास्त्रीय मर्यादा की सुरक्षा के साथ शिष्टजनों के व्यवहारों की अनुसरण परिपाटी का अनुपालन भी हो सकता है, ऐसा मेरा मन्तव्य है।)

सिले हुए वस्त्रों के सम्बन्ध में सारांश में निबन्धकारों का विवेचन है कि जहाँ अलग-अलग के दो वस्त्रों या दो वस्त्र खण्डों को सिल कर एक वस्त्र बना दिया गया हो वहीं यह दोष होगा किन्तु जो एकवस्त्र कहीं से फट गया हो और मजबूती या बीच के छेद को हटा देने के निमित्त सिल दिया गया हो तो उसे धारण कर पूजन आदि करने में कोई दोष नहीं।

[मूलम्]

जावालिः-

नार्द्रमेकं च वसनं परिदध्यात् कथञ्चन[१]।

अत्र सदातननिषेधबलात् पुरुषार्थता।

[संस्कृत टीका]

नार्द्रेति। शुष्कवस्त्रावश्यकत्वमाह आर्द्रमिति।

आर्द्रम्। क्लिन्नम्। एकम् = अद्वितीयम्। वसनम् = वस्त्रम्। कथञ्चन = कदापि। न। परिदध्यात् = धारयेत्।

अत्र = आर्द्रैकवसनधारणे। सदातननिषेधबलात् = कथञ्चनेत्यनेन नित्य-निषेधसामर्थ्यत्। पुरुषार्थता = पुरुषैरवश्यमनुष्ठेयता चतुर्वर्ग-प्राप्ति-साधनता पुरुषार्थ-विधित्वं वा मन्तव्यम्। "कदाचनेतिवचनात् सर्वदा पुरुषस्य एकमार्द्रञ्च वासो निषिद्धम्। एवञ्च सर्वदा वस्त्रद्वयधारणनियमात्स्नानकालेऽपि तत्परित्यागे प्रमाणंनास्तीति कल्पतरुकारादयः। एकवासस्त्वस्य सदैव निषेधात्स्नानकालेऽपि द्विवासस्त्वे सिद्धे, 'स्नानं तर्पणपर्यन्तं कुर्यादेकेन वाससा' इति यदि समूलं

पाठा० (१) कदाचन।

तदापि एक-जातीयपरमेकपदमिति नेयम् । एतद्वाक्यं शावस्नानपर मित्यन्ये'' इत्याचारचिन्तामणिः ।

''अत्र कथञ्चनेत्यनेन पुरुषार्थताऽप्युक्ता । अतएव मनुः स्नातकस्य तु नित्यं स्यादन्तर्वासस्तथोत्तरम्' इति नित्यमित्यनेन व्यक्तमेवाहे'' ति नित्यकृत्यार्णवः । येन वाससा स्नानं कृतं तेनैव तर्पण मित्याचार्यचूडामणिरिति कृत्यशिरोमणिः ।

परमिति । अत्र ''एकवस्त्रा ज्ञातय'' इत्यादिना एकवस्त्रत्वविधानादिति शब्दकल्पद्रुमः । इतोऽधिकं पूर्वव्याख्यात ''न नग्नः स्नायादि'' ति स्नान-निषेध-प्रकरणीय-शङ्ख-लिखित-वचन-व्याख्यायां द्रष्टव्यम् । शुष्कासम्भवे तु शातातपेनोक्तम्-''सप्तवाताहतं शुष्कवद् भवती'' ति ।

**[ हिन्दी टीका ]**

''गीला और एक ही वस्त्र कभी भी धारण न करे'' यह जावालिवचन का अर्थ हुआ । इस नित्य निषेधबल से सिद्ध होता है कि उक्त नियम का पालन धर्मार्थकाम तथा मोक्ष इस चतुवर्ग की सिद्धिमें उपयोगी है । अथवा यज्ञोपवीत धारण या शिखाबन्ध न के जैसे ही एक वस्त्र धारण का निषेध होने से वस्त्रद्वय धारण भी पुरुपार्थ विधि है । यह ग्रन्थकार का यहाँ कथन है । यहीं कल्पतरु कार आदि का कथन है । कि दो वस्त्र धारण का विधान होने से स्नान के समय भी दो वस्त्र होने ही चाहिएँ ।

यहीं आचारचिन्तामणिकार के विवेचनानुसार ''स्नान से लेकर तर्पण पर्यन्त का कार्य एक वस्त्र से करना चाहिए'' यह वचन यदि प्रामाणिक हो तो वचनस्थित 'एक वस्त्र' का एक पद 'एकजातीय' परक है । अर्थात् 'वस्त्रत्व' एक जातिवाले दो वस्त्रों से तात्पर्य मानना चाहिए । किसी अन्य के मतानुसार मुर्दा जलाने आदि के निमित्त वश होने वाले स्नान को कहने वाला ही वचन मानना चाहिए । यहीं शब्दकल्पद्रुम का कहना है कि उक्त वचन को प्रेतस्नान तथा प्रेततर्पण परक मानना चाहिए क्योंकि 'प्रेत' (मरे हुए व्यक्ति) के बन्धु बान्धव एक वस्त्र धारण करें इत्यादि वचनानुसार प्रेतस्नानादि स्थल में ही एक वस्त्र धारण करने का विधान है । यहीं आचार्यचूडामणि की व्याख्या है कि जिस वस्त्र से स्नान किये हों उसी से तर्पण भी करें ।

यदि कदाचित् सूखा वस्त्र नहीं मिल सके तो ''सात बार हवा के झकोरे देने पर गीला वस्त्र सूखा जैसा हो जाता है'' शातातप के इस वचन का अनुसरण कर लेना चाहिए ।

[मूलम्]

**नरसिंह-पुराणे-**

**न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।**
**मलाक्तञ्च दशाहीनं वर्जयेदम्बरं बुधः ॥**
**ततः प्रक्षालयेत्पादौ मृत्तोयेन विचक्षणः ॥**

उल्वणम् = व्यक्तम् । एतच्च रक्तविशेषणम् । तेनात्यन्तरक्तमित्यर्थः । उल्वणम् = अञ्चलमिति केचित् ।

[संस्कृत टीका]

न रक्तेति । उल्वणम् = व्यक्तम् । एतच्च रक्तविशेषणम् । तेनात्यन्तं रक्तमिति भावः । केचित्तु उल्वणम् = अञ्चलमिति वदन्ति अञ्चलम् = वस्त्रप्रान्तत्वेन दीर्घत्वप्राप्तमुल्वणपदस्यार्थ इति केचिदित्याचारदीपिका । उल्वणमुद्भटमिति रत्नाकरः । बहुमूल्यमिति हरदत्तः । नीलञ्च = तथा नील वर्णञ्च । वासः= वस्त्रम् । न प्रशस्यते = न प्रशंसार्हं भवति । अतएव रक्ते तदुल्वणत्वस्य नीले तत्सम्बन्धमात्रस्य विवक्षेति नित्यकृत्यार्णवः । (अतो) बुधः = ज्ञानी, एतादृशम्, तथा मलाक्तम् = मलव्याप्तम् । दशाहीनम् = वर्त्तिकाहीनम् । अम्बरम् = वस्त्रम् । वर्जयेत् = त्यजेत् । ततः = वस्त्र-परिधारणानन्तरम् । विचक्षणः = बुद्धिमान्नरः । मृत्तोयेन = मृत्तिकया जलेन च कम्बले पट्टवस्त्रे च नीली रागो न दुष्यति । तथा-

**स्त्रीणां क्रीडार्थसम्भोगे शयनीये न दुष्यति ।**

भृगुः-

**स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति ।**

इत्याचार-चिन्तामणि-नित्यकृत्यार्णवादयः ।

[हिन्दी टीका]

गाढ़े लाल रंग से रंगा अर्थात् अत्यन्त लाल तथा नीलवर्ण का वस्त्र प्रशंसनीय नहीं होते, अतः ज्ञानीजन ऐसे वस्त्र एवं मैला और बिना किनारी के वस्त्र का परित्याग कर दे । साथ ही विहित वस्त्र का धारण कर मिट्टी और जल से दोनों पैर धोये ।

यद्यपि नील वस्त्र के संबंध में आपस्तम्ब कर वचन है–

नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गे निधापयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

(नीलीरक्त वस्त्र को यदि ब्राह्मण अपने अंग पर धारण करता है तो दिनरात उपवासपूर्वक पञ्चगव्यपान से शुद्ध होगा) । इसी तरह भविष्यपुराण का कथन है कि

नीलीरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः ।
स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ॥
वृथा तस्य महायज्ञा नीलीरक्तस्य धारणात् ॥

(नीलरंग से रंगा वस्त्र को धारण किए हुए द्विज से किये स्नान, दान, तपस्या, होम वेदाध्ययन तथा पितृतर्पण निष्फल हो जाते हैं )। फिर भी इसका अपवाद भी कहा गया है कि कम्बल, रेशमी वस्त्र तथा स्त्रियों के क्रीड़ा एवं संभोग के निमित्त व्यवहृत होने वाले विस्तरे में नीलीरंग का दोष नहीं माना जाता है । इसी तरह स्त्री के द्वारा विस्तरे में दी गई नील ब्राह्मण के लिए भी दोषकर नहीं है ।

[मूलम्]

हारीतः–

न शिरो विधुनुयात्, नोत्तरीयविपर्यासं कुर्यात् ।

[ संस्कृत टीका ]

न शिर इति । अत्र स्नात्वेति पूर्वग्रन्थसम्बन्धः । तेन स्नात्वा, शिरः = उत्तमाङ्गम् । न, विधुनुयात् = कम्पयेत् । न वा, उत्तरीय-विपर्यासम् = द्वितीय-वस्त्रस्य धौतवस्त्ररूपेण परिवर्तनञ्च । अतएव ''विपर्यासः = उत्तरीयस्याध-रीयत्वमित्याचारचिन्तामणिः । कुर्यात् ।

[ हिन्दी टीका ]

स्नान करने के बाद शिर नहीं कँपाना चाहिए और नाहीं उत्तरीय (चादर, अंगोछा आदि) से धोती का काम लें ।

[ मूलम् ]

विष्णुः-

स्नातः शिरो नावधुनेत् । नाङ्गेभ्यस्तोयमुद्धरेत् । न तैल वशे[1] स्पृशेत् ।

---

पाठा० ( १ ) वसं ।

**नाक्षालितं पूर्वधृतं वा वासो विभृयात् । न म्लेच्छान्त्यज-पतितैः सह सम्भाषणं कुर्यात् ।**

तैलञ्च वशा च तैलवशे ।

**[ संस्कृत टीका ]**

स्नात इति । स्नातः = कृतस्नानो जनः । शिरो नावधुनेत् । अङ्गेभ्यः = गात्रेभ्यः । तोयम् = जलम् । न उद्धरेत् = न प्रमृत्यात् । अत्र स्नानशाटी-पाणिभ्यामिति शेषः । ''स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना'' इति विष्णु-पुराणवचनात् । तैलवशे = तैलं वशाञ्च ।

अत्र प्रसङ्गे प्रसङ्गाच्छन्दोगाह्निकं यथा-''शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदपि स्पृशेत्'' इति मानवञ्च शिरःस्नानं शिरोनैर्मल्यार्थमित्येव बोद्धव्यम् । अथवा मानवं शिरःस्नानं शिरोःस्नानं शिरोमज्जनमात्रं वैधमवैधञ्चाविशेषितमेव । तैलशब्दश्च तार्किकैः बीजप्रभवस्नेहत्वेन रूपेण सर्षपस्नेहादावपि मुख्य उक्तः । योगरूढ़ितयात्वेष यौगिकस्तिलसम्बन्धिमात्रे मुख्यः । स्नेहत्वो-पाधेरन्यत्र साधुः । सर्षपस्नेहादौ गौणः । तार्किकाणामपि (मत्स्यादिस्नेहे) मत्स्यस्नेहादौ गौणतैव । ''पक्व तैलं न दुष्यतीति गौडा'' इति । ''तैलेन शिरः स्नातः तैलेन नाङ्गं स्पृशेदित्यर्थ इति बहवः । कल्पतरुस्तु यदा शिरःस्नानं कृतं तदा किञ्चिदप्यङ्गं तैलसम्बद्धं न कुर्यादित्यर्थ इत्याह !.... तैलशब्दो योगरूढ्या तिलतैले वर्तते । सर्षपादितैलेषु तु 'स्नेहे तैलजि' ति तैलच् प्रत्ययात्प्रयोग इति कल्पतरुः । अतएव प्रचेताः-

**सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।**
**अन्य-द्रव्य-युतञ्चैव न दुष्यति कदाचन ॥**

इति वीरमित्रोदयः । उक्तमनुवचनव्याख्यायामाचारचिन्तमणिर्यथा- ''तैलेन = तिलस्नेहेन, किञ्चिदप्यङ्गन्तस्मिन्नहनि सशिरः स्नातः पुमान् नोपस्पृशेदित्यर्थ'' इति । ''तिल एव तैलशब्दस्य शक्तिरन्यत्र लक्षणैवे'' ति कृत्यसागरः । अप्रक्षालितम् = अधौतम्, पूर्वधृतम् = प्राक्परिहितं, वासः=वस्त्रम् । न, विभृयात् = परिदध्यात् । म्लेच्छान्त्यजपतितैः सह = म्लेच्छः-

गोमांसखादको यस्तु विरुद्धं बहु भाषते ।
सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ।।

इति बौधायनपरिभाषितः । अन्त्यजः =

रजकश्चर्मकारश्च नटो वरुड एव च ।
कैवर्त-मेद-भिल्ला श्च सप्तैते अन्त्यजाः स्मृताः ।।

इति बृहस्पति परिभाषितः । पतितः = पातित्यविशिष्टः, तैः सह । सम्भाषणम् = परस्परालापम् । न कुर्यात् ।

[ हिन्दी टीका ]

स्नान के बाद शिर नहीं कँपाना चाहिए । स्नान-वस्त्र से या हाथ से शरीर का जल नहीं पोछना चाहिए । तेल (तिल तेल) तथा चर्वी का स्पर्श न करे । विना धुला, तथा ऐसा ही पहले का पहना हुआ वस्त्र नहीं पहने । म्लेच्छ (गोमांसभक्षी, आचार विहीन तथा अपनो में गालीगलौज करनेवाले म्लेच्छ कहलाते हैं), अन्त्यज (धोबी, चमार, नट, डोम, केवट, मेद और भील) तथा पतितों के साथ परस्पर बातचीत न करे ।

[ मूलम् ]

मार्कण्डेयपुराणे-

संप्र[१]मृज्यान्न च स्नातो गात्राण्यम्बरपाणिना ।

अम्बरम् = स्नानवस्त्रम् 'न स्नानशाट्ये' ति विष्णुपुराणपाठात् । एवञ्च ''न स्नात्वा गात्रमवमृज्यादि'' ति हारीतोऽपि स्नानशाट्या पाणिना च विशेषणीयः । एवञ्च समर्थं प्रति मार्जनमात्राभावो[२] ऽसमर्थं प्रति पाणिशाटीमार्जनाभाव इति हरिहरोक्तमश्रद्धेयम् ।

[ संस्कृत टीका ]

संप्रमृज्यादिति । स्नातः = कृतस्नानो नरः । अम्बरपाणिना = अम्बरं स्नानवस्त्रं तेन, हस्तेन च । गात्राणि = अङ्गानि । न, संप्रमृज्यात् = परिमार्जयेत् । किन्तु प्रकारान्तरेण देहजलापनयनं न निषिद्धं प्रकृतवचनेन, ''स्नातो नाङ्गानि निर्मृज्यात्स्नानशाट्या न पाणिना'' इति विष्णुपुराण-वचनेन च विशेषतो निषेधात् । एतस्मादेव च पुराणवचनाद् अम्बरपाणिनेत्यत्र

पाठा० ( १ ) अवमृज्यात्; ( १अ ) अपमृज्यात् ।

पाणिनेत्यस्य रिक्तपाणिनेति हलायुधव्याख्यानमपि भद्रमेव प्रतीयते । अतएव "अत्र (विष्णुवचने) पाणिनिषेधो वस्त्ररहितविषयः । सर्वथा तस्यापरिहार्यत्वात् । अत्र शिरःप्रोक्षणवस्त्रेण गात्रप्रोक्षणे एवमभ्यङ्गे श्रीहानिरुक्ता स्मृतिषु । तस्मात्तत्प्रक्षाल्य निष्पीड्य देहजल-प्रोक्षणं पूर्वं वा कार्यमिति नित्यकृत्यरत्नमाला-टिप्पणी । अतएव च, "तथा च देवलेनाप्युक्तम् "अतस्त्वङ्गानि वस्त्रेण पाणिना न च मार्जयेत्" इति । "अत्र वस्त्रेण = परिधानवस्त्रेण निषेधः । तद्भिन्नेन अङ्ग प्रोक्षण वस्त्रेण न दोष इति शिष्टाचार" इति कृत्यसारसमुच्चय-टिप्पण्यां गङ्गाधरमिश्राः । एवञ्च = इदानीमुक्तमार्कण्डेयविष्णुपुराण-वचनाभ्यामेकवाक्यत्वे च । "न स्नात्वा गात्रमवमृज्यादि" ति, हारीतोऽपि = हारीतवचनमपि । स्नानशाट्या पाणिना चेति, विशेषणीयः = विशेषणदानपूर्वकं व्याख्येयः ।

एवञ्च = तथोचितव्याख्यानस्य जागरूकत्वे च । समर्थम् = शक्तं, जनं प्रति । मार्जनमात्राभावः=देहजलप्रोच्छनमात्रस्याभावः । असमर्थम् = अशक्तम् । प्रति । पाणिशाटीमार्जनाभावः पाणिस्नानशाटीभ्यां प्रोञ्छनाभावः इति हरिहरेण यदुक्तं, तद् अश्रद्धेयम् = अनादेयम् । स्नानोत्तरं सर्वान् प्रति स्नानशाटीपाणिभ्यां मार्जनाभावस्यैव विहितत्वेन सङ्कोच विकासशील-कल्पनस्य (समर्थं प्रति मार्जनमात्राभावकल्पनस्यासमर्थं प्रति पाणिशाटीमार्जनाभाव कल्पनस्य च) अत्यन्तमुचितत्वात् ।

### [ हिन्दी टीका ]

स्नान के बाद स्नानवस्त्र तथा हाथ से शरीर का जल नहीं पोंछना चाहिए, यह मूलवचन का अर्थ हुआ । किन्तु इससे सिद्ध होता है कि अंगोछे आदि से देह पोंछना निषिद्ध नहीं । शिष्टाचार भी ऐसा ही है । फिर भी यदि एक ही अंगोछे आदि से शिर का तथा शरीर का भी जल पोंछना हो और शिर का जल पहले पोंछना हो तो शिर का जल पोछ कर एवं वस्त्र को निचोड़कर ही उससे शरीर का जल पोछें अथवा पहले शरीर का ही जल पोंछते हुए पीछे शिर का जल पोंछे ।

अब हारीत ने जो कहा है कि "स्नान कर शरीर को न पोंछे" इस (वचन) का भी अर्थ (तात्पर्य) यही है कि स्नानवस्त्र तथा हाथ से शरीर का जल न पोंछे ।

उक्त प्रसङ्ग पर भाष्यकार हरिहन ने व्याख्या की है कि ''समर्थ (शक्तिशाली) व्यक्ति के प्रति मार्जन (शरीरजल का पोछना) का ही अभाव तो असमर्थ व्यक्ति के प्रति हाथ एवं स्नानवस्त्र से मार्जन का अभाव होना चाहिए, किन्तु यह कहना इसलिए ठीक नहीं कि मार्जन मात्र का अभाव किसी भी शास्त्र का अभिमत नहीं अपितु स्नानवस्त्र तथा हाथ से ही मार्जन का निषेध किया जाता है और वह निषेधवचन समर्थ एवम् असमर्थ सभी के लिए एक सा लागू होता है, तब विशेपकर अपनी कल्पना के आधार से व्याख्या करना शास्त्रीय युक्ति से विरुद्ध है।

[ मूलम् ]

साङ्ख्यायनगृह्यम्-

आप्लुत्याव्युदकोऽन्यद् वस्त्रमाच्छादयेत्।

अव्युदकः = अनुद्धृतोदकः। एषोऽपि पाणिवस्त्राभ्यामुद्धरणे निषेधः, कुलविशेषनियतो वा।

[ संस्कृत टीका ]

आप्लुत्येति। आप्लुत्य = स्नात्वा। अव्युदकः = अनुद्धृतोदकः, शिरोव्यतिरिक्तगात्रेषु अनुद्धृतोदक इति रत्नाकरवीरमित्रोदयौ। एषोऽपि = एष निषेधोऽपि। पाणिवस्त्राभ्याम् = हस्तस्नानशाटीभ्याम्। उद्धरणे = शरीर-जल प्रोच्छने, बोध्यः, ''स्नातो नाङ्गानि निमृज्यात् स्नानशाट्या न पाणिना'' इति विष्णुपुराण-वाक्येन, ''संप्रमृज्यान्न च स्नातो गात्राण्यम्बरपाणिना'' इति मार्कण्डेय-पुराणवाक्येन चैकवाक्यत्वात्। पूर्व विवेचनानुसारमत्राप्यन्यवस्त्रेण देहजलापनयनमविरुद्धमेवागन्तव्यम्। अथवा गृह्योक्तत्वात्कुल-विशेष-नियतो मन्तव्यः। अन्यद् वस्त्रम् = शुष्कं वसनम्। आच्छादयेत् = धारयेत्।

[ हिन्दी टीका ]

स्नान के बाद शरीर या शिर के निचले भागों का जल विना पोछे ही दूसरा (सूखा) वस्त्र धारण करे, यह मूलवचन का अर्थ है। किन्तु पूर्वोक्त पुराण एवं मार्कण्डेय पुराण के वचनों से एकवाक्यता के आधार पर यहाँ भी स्नानवस्त्र एवं हाथ से ही शरीर जल के पोछने का निषेध समझें। साथ ही, पूर्व विवेचनानुसार अंगोछे आदि अन्य वस्त्र से

देह जल का पोछना विरुद्ध नहीं। अथवा यह निषेध गृह्योक्त होने के कारण कुल विशेष के लिए ही नियत समझें।

[ मूलम् ]

अत्र शङ्खः-

उदकस्याप्रदानाद्धि स्नानशाटीं न पीडयेत् ॥

[ संस्कृत टीका ]

अत्रेति। अत्र = स्नानानन्तरमन्यवासोधारणानन्तरम्। उदकस्येति। स्नान-विध्यनन्तरमाह उदकस्येति। उदकस्याप्रदानात् = देवर्षिपितृतर्पणपर्यन्तम्। स्नानशाटीम् = स्नानवस्त्रम्। न पीडयेत्। यथाऽह योगियाज्ञवल्क्योऽपि-

यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् ।
तावन्न पीडयेद् वस्त्रं येन स्नातो, न चोदके ॥
निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवा महर्षिभिः ॥ इति

येन स्नातः = येन वस्त्रेण स्नातः। नचोदके वस्त्रं पीडयेदित्यनुषङ्ग इति कल्पतरुः। पराशरस्तु इतोऽप्यधिकं ब्रूते, यथा–

ब्राह्मणं स्नातुमायान्तमनुगच्छन्ति देवताः ।
पितरश्च महाभागा वायुभूता जलार्थिनः ॥
निराशाः पितरो यान्ति वस्त्रनिष्पीडने कृते ।
तस्मान्निष्पीडयेद् वस्त्रं नाकृत्वा पितृतर्पणम् ॥
जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्बलः ।
निष्पीडयति तद् वस्त्रं स्नानं तस्य वृथा भवेत् ॥ इति'

[ हिन्दी टीका ]

देव ऋषि एवं पितृतर्पण पर्यन्त स्नानवस्त्र नहीं निचांडे । यह मूल वचन का अर्थ है। ऊपर से ज्ञातव्य है कि याज्ञवल्क्यवचनानुसार यदि तर्पण के पहले स्नान वस्त्र निचोडे तो देव ऋषि तथा पितर निराश होकर लौट जाते हैं । साथ ही स्नानवस्त्र को पानी में नहीं निचोड़े । यहीं पराशर का इससे भी अधिक कहना है कि स्नान करने के लिए आते हुए द्विजाति या स्नानार्थी को देखकर इसके पीछे पीछे वायु का शरीर धारण किये हुए जलार्थी होकर देवता, ऋषि और इसके पितर चल देते हैं । किन्तु यदि कोई तर्पण के पहले ही स्नानवस्त्र निचोड़ देता है तो उसके वे (देवर्षि पितर) निराश होकर लौट जाते हैं । अत: विना तपर्ण किये हुए स्नान वस्त्र को नहीं निचोडना चाहिए । स्नान किये हुए कोई भी ज्ञानहीन मनुष्य जल के ऊपर स्नानवस्त्र निचोड़ता है तो उसका वह स्नान निष्फल हो जाता है ।

❁ इति वस्त्रपरिधान-विधिः ❁

## नित्यस्नान - प्रशंसा

[ मूलम् ]

अत्र विष्णुः-

याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः ॥

[ संस्कृत टीका ]

अत्रेति । अत्र = नित्यस्नानप्रशंसायाम् । याम्यमिति । नित्यस्नायी = प्रत्यहःस्नायी नरः । हि=यतः । याम्यम् = यमसबन्धि, यमलोकभवमिति नित्यकृत्यार्णवः । यातानादुःखम् = पापिभ्यो यमेन दीयमानो दण्डः यातना (इति संस्कृत-शब्दार्थकौस्तुभः), तदुद्भवम् दुःखम्=कष्टं, न पश्यति । नित्य- स्नानकरणाद् यमद्वारं नावलोकयतीति भावः । (अतो) येऽपि, पापकृतः = अधर्माचारिणो नरास्तेऽपि नित्यस्नानेन = शास्त्रविधिपूर्वकं नित्यस्नानाचरणेन । पूयन्ते = पूता भवन्ति ।

[ हिन्दी टीका ]

प्रतिदिन सविधि स्नान करने वाला व्यक्ति यम के द्वारा दिया जाने वाला दण्ड नहीं भोगता । अर्थात् यमलोक नहीं जाता है । फलतः कैसा भी पापाचारी क्यों न हो वह विधिपूर्वक नित्यस्नान करने से पवित्र हो जाता है ।

[ मूलम् ]

योगियाज्ञवल्क्यः-

अगम्यागमनात्स्तेयात्पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात् पापान्मुच्यते स्नानमाचरन् ॥

पापेभ्यः = पतितादिभ्यः ।

[ संस्कृत टीका ]

अगम्येति । (नित्यं) स्नानमाचरन् नरः । अगम्यागमनात् = स्वधर्मपत्नीव्यतिरिक्ता अगम्याः = असम्भोग्याः, तासु, गमनात् सम्भोगात् ।

स्तेयात् = चौर्यात् । पापेभ्यः = पतितादिभ्यः । प्रतिग्रहात् = दानग्रहणात् । एतेभ्यो जायमानात्पापादित्यर्थः । रहसि = एकान्ते । आचरितात् = कृतात्, पापाच्च । मुच्यते = मुक्तो भवति ।

[ हिन्दी टीका ]

सविधि नित्यस्नायी नर अपनी धर्मपत्नी से अन्य स्त्री में मैथुन, चोरी, पतित आदि के दानग्रहण से होनेवाले तथा एकान्त में किये गए पापों से मुक्त हो जाता है ।

[ मूलम् ]

छन्दोगपरिशिष्टे-

सन्ध्यालोपस्य चाकर्त्ता स्नानशीलश्च यः सदा ।
तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥

[ संस्कृत टीका ]

सन्ध्येति । यो नरः सदा स्नानशीलोऽस्ति, अथ च सन्ध्यालोपस्य अकर्ता च = सन्ध्यावन्दनकर्मणो विलोपकश्च न भवति, तं, दोषाः = बाह्याभ्यन्तरदोषाः । गरुत्मन्तम् = गरुडम् । उरगाः=सर्पाः । इव = यथा । न उपसर्पन्ति = न सन्निधिमासादयन्ति ।

[ हिन्दी टीका ]

जो प्रतिदिन सविधि स्नान किया करता है तथा सन्ध्यावन्दन कर्म नहीं छोड़ता, गड़ड के समीप सर्पों के जैसे उसके समीप में बाह्य और आन्तरिक दोनों ही प्रकार के दोष नहीं आते हैं ।

❀ इति स्नान-प्रकरणम् ❀

## [ टिप्पणी ]

## अथ तिलकविधिः

अथेदानीं तिलक्-करणमाचारात्

ब्राह्मणस्तिलकं कृत्वा कुर्यात्सन्ध्याश्च तर्पणम्।

इति ब्रह्मवैवर्त्तीयब्रह्मखण्डवचनेन, "नातिलकी कर्म कुर्यात्" इति गौतमवचनेन चावश्यकर्तव्यतिलकविधिः नित्यकृत्यार्णव-नित्यकृत्यरत्नमालाऽनुसारं यथा-"गङ्गातीरमृत्तिकया तुलसीमूलमृत्तिकया वा गोपीचन्दनेन वाऽन्यतीर्थ-मृत्तिकया वा चन्दनेन वा एतदभावे जलेनापि दीपवर्त्तिसमानं वेणुदलसमानं वा पद्मकुड्मलसमानं वा कुमुदोत्पलसमानं वा ललाटे नासिकामूलमारभ्य केशपर्यन्तं पुष्टिकामोऽङ्गुष्ठेन, मुक्तिकामस्तु तर्जन्याऽऽयुष्कामो मध्यमया, श्रीकामोऽनामिकया सच्छिद्रमूर्ध्वपुण्ड्रं कुर्यात्। भस्मना तिर्यक् पुण्ड्रत्रयं कुर्यात्। चन्दनेन यदृच्छया वे" ति। अत्र नासिकामूलं भ्रूमध्यं 'भ्रुवोर्मध्यन्तु नासाग्रमि'ति तल्लक्षणस्मरणात्। "अप्रसूतायाः गोर्भूमिसम्बन्ध-व्यक्तिरेकेण गृहीतगोमयस्य भस्मना तदभावे आरण्यकभस्मनाऽपि तिलकं कार्यमि"ति स्मृतिसुधाकरः।

श्राद्धे होमे जपे दाने वैश्वदेवे शिवार्चने।
कृतत्रिपुण्ड्रः पूतात्मा सर्वं भवति चाक्षयम्॥

न चोर्ध्वं धारयेद् भूतिं न तिर्यग्गोपिचन्दनम्।
तिर्यगूर्ध्वञ्च वृत्तञ्च धारयेच्चन्दनादिकम्॥

भूतप्रेतपिशाचा ये दुर्वारा वैरिणो ग्रहाः।
निरर्थका भवन्त्येते तिलकं वीक्ष्य तत्क्षणात्॥

इति धर्माधर्म-प्रबोधिनीत्यपि नित्यकृत्यार्णव एव।

भस्मधारणे विशेषः देवीभागवते ११ स्कन्धे नित्यकृत्यार्णवेऽपि वा द्रष्टव्यः।

मध्याह्नात्प्राक् जलाक्तं तु परतो जलवर्जितम्।
तर्जन्यनामिकाङ्गुष्ठैस्त्रिपुण्ड्रञ्च समाचरेत्॥

इति देवीभागवते । मध्यमानामिकाभ्यां भाले वामतो दक्षिणपर्यन्तमङ्गुष्ठेन तु दक्षतो वामपर्यन्तं नेत्रद्वयव्यायामपरिमितं सान्तरालं भस्मत्रिपुण्ड्रं धार्यमिति भाव'' इतिच कृत्यसारसमुच्चयटिप्पणी । शूद्रस्य नोर्ध्वपुण्ड्रम् । किन्तु विन्दुमात्रम् । तथाहि बृहद्धर्मसंहितायां व्यासः—'तिलकं विन्दुमात्रन्तु शूद्रजातिषु शस्यते ' इति कृत्यसार-समुच्चयः ।

[ हिन्दी टिप्पणी ]

'द्विजाति तिलक लगाकर सन्ध्या तथा तर्पण करे' इस ब्रह्मवैवर्तवचन एवं ''कर्मकर्ता को विना तिलक लगाये कर्म नहीं करना चाहिए'' इस गौतमवचन के अनुसार अवश्यकर्तव्य तिलकधारण विधि संक्षेप में निम्न प्रकार से ज्ञात करें ।

गंगातट, तुलसीमूल, या अन्य तीर्थ की मिट्टी, गोपीचन्दन, या श्रीखण्ड चन्दन या इन सभी के अभाव में जल से भी (जलसन्ध्संयापक्ष में तो जल से ही क्योंकि वचन भी है—'जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धये' ।

दीपक की लौ, बाँस के पत्ते, कमलकली अथवा कुमुद या कमल के समान ऊर्ध्वपुण्ड्र जिसके बीच में छिद्र हो—दोनों भौंहों के बीच से केश पर्यन्त ललाट में पुष्टि चाहनेवाले अंगूठे से, मुक्ति चाहने वाले तर्जनी अंगुलि से, आयु चाहने वाले मध्यमा से तथा श्री चाहनेवाले अनामिका से करें ।

विना व्याई गाय के भूमि सम्बन्ध के विना ही गृहीत गोवर, इसके अभाव में जंगली गोइठी (कंडा) की भस्म (या हवन की संस्कृत भस्म), इसके अभाव में चन्दन, इसके भी अभाव में अन्ततः जल से भी त्रिपुण्ड्र तिलक करें । भस्म से ऊर्ध्वपुण्ड्र एवं गोपी चन्दन से टेढ़ा तिलक (त्रिपुण्ड्र) लगाना निषिद्ध है । किन्तु चन्दन आदि से ऊर्ध्व, टेढ़ा, या गोलाकार भी लगाया जा सकता है ।

तिलकधारण का एक यह विशेष महत्त्व है कि इसे देखकर उस क्षण से ही भूत, प्रेत, पिशाच तथा नहीं हटाने योग्य वैरी ग्रह निरर्थक (अशक्त) हो जाते हैं ।

भस्मधारण के सम्बन्ध में विशेषतः यह भी ज्ञातव्य है मध्याह्न के पहले जल से मिश्रित तथा बाद में जलवर्जित केवल भस्म से तर्जनी, अनामिका और अंगूठे के द्वारा त्रिपुण्ड्र करें । मस्तक में मध्यमा और अनामिका अंगुलियों से बायें भाग से प्रारम्भ कर दाहिने भाग तक तो अंगूठे से दाहिने भाग से प्रारम्भ कर वाये भाग तक दोनों नेत्रों के फैलाव के मध्य में अलग अलग रूप से (देखने योग्य) भस्म त्रिपुण्ड्र का धारण करें ।

साथ ही यह भी ज्ञातव्य है कि शूद्र के लिए ऊर्ध्वपुण्ड्र न होकर केवल बिन्दुधारण ही विहित है ।

❁ इति तिलकविधिः ❁

# सन्ध्योपासनम्

## [ मूलम् ]

अथ सन्ध्योपासनम् । तत्र छन्दोगपरिशिष्टे–

**अत ऊर्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम् ।**

**अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥**

सन्ध्येति वक्ष्यमाण[१] प्राणायामादिकर्मनाम । उपासनम्=सेव नम्[२]–अनुष्ठानमिति यावत् । आचारसेवीत्यादौ तथा[३] दर्शनात् । अतएव सन्ध्या कृता, सन्ध्यो[४]–पासितेति तुल्यवत् प्रयोगः ।

## [ संस्कृत टीका ]

अत ऊर्ध्वमिति । स्नानविधिं निरूप्य सन्ध्याविधिमभिधित्सुराह अत ऊर्ध्वमिति । अतऊर्ध्वम्=स्नानविधेरुत्तरम् । सन्ध्योपासनिकं विधिम् =सन्ध्योपासनसम्बन्धिविधिम् । प्रवक्ष्यामि=कथयिष्यामि । यतो हेतोः । सन्ध्याहीनः = अकृतसन्ध्यः, सन्ध्याविरहितो वा । विप्रः = द्विजः । विप्रपदमत्र द्विजपरम्, द्विजमात्रस्यैव सन्ध्योपासनेऽधिकारात् । कर्मणाम्=सन्ध्योत्तर–विहितकर्मणाम् । अनर्हः =अयोग्यः । स्मृतः=कथितः ।

सन्ध्येतीति । सन्ध्येति कस्य नामेति जिज्ञासायामाह–सन्ध्येतीति । उपासनमिति । उपासनम्, सेवनम्, अनुष्ठानमिति च समपर्यायः । आचारसेवीत्यादौ सेवनस्य उपासनेऽर्थेऽनुष्ठानार्थे च प्रयोगव्यवहारदर्शनात् । अतएव=समपर्यायत्वादेव । तुल्यवत्=एकादृक् । प्रयोगः = व्यवहारः ।

सन्ध्याशब्देन वक्ष्यमाणप्राणायामादि कर्म बोध्यते, इतीदानीमुक्तमेव मूले । क्वचित्तु कालरूपोऽर्थः । यथाच दक्षः–

**अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः ।**

**स तु सन्ध्या समाख्याता मुनिभिस्तत्त्ववेदिभिः ॥** इति

---

पाठा (१) क्वचिद् वक्ष्यमाणेति पदं नास्ति । (२) सेवा । (३) क्वचित् 'तथा' इति नास्ति ।
(४) क्वचिद् 'उपासिता' इत्येव पाठः ।

क्वचित्तु "सन्ध्येति सूर्यगं ब्रह्मे" त्यादिवचनानुसारमादित्यमण्डलगतं ब्रह्मापि सन्ध्याशब्दार्थोऽवबुध्यते ।

त्रयाणाञ्चैव देवानां ब्रह्मादीनाञ्च सङ्गमः ।
सन्धिः सर्वसुराणाञ्च सन्ध्या तेन उदाहृता ॥

इति योगियाज्ञवल्क्यस्य सन्ध्यात्रयसाधारणवचनानुसारं सन्ध्याशब्दार्थः ब्रह्मादिदेवानां सङ्गम (सन्धि) कालोऽपि । नित्यकृत्यरत्नमाला टिप्पण्यनुसारं " सा (सन्ध्या) च देवता सूर्यरूपैव । सन्धिकालोपास्यत्वात्सन्ध्येति नृसिंह" इति ।

[ हिन्दी टीका ]

स्नानविधि के बाद सन्ध्योपासन विधि कहूँगा । क्योंकि सन्ध्याहीन द्विज सन्ध्या के बाद होने वाले शास्त्रीय कर्मों का अनधिकारी माना जाता है । यह मूल वचन का अर्थ हुआ ।

सन्ध्या शब्द का अर्थ है आगे कहे जाने वाले 'प्राणायाम आदि कर्म', और उसका उपासन हुआ सेवन अर्थात् अनुष्ठान । क्योंकि 'आचारसेवी' आदि पद का अर्थ आचारोपासक या आचारानुष्ठानी आदि देखे जाने के कारण सिद्ध होता है कि उपासन, सेवन तथा अनुष्ठान ये सभी शब्द समान पर्यायवाची हैं । अब सन्ध्योपासन का तात्पर्य हुआ प्राणायाम आदि कर्म का अनुष्ठान । अतएव समान प्रयोग होता है कि सन्ध्या की गई या सन्ध्या उपासित वा अनुष्ठित हुई ।

ऊपर से ज्ञातव्य है कि सन्ध्या शब्द का अर्थ कहीं कालविशेष भी होता है । जैसा कि दक्ष ने कहा है–सूर्य एवं नक्षत्रों से रहित जो दिन रात की सन्धि का समय है उसे तत्त्वदर्शी मुनियों ने 'सन्ध्या' कहा है । कहीं तो "सन्ध्येति सूर्यगं ब्रह्म" इत्यादिवचनों के अनुसार आदित्य मण्डल में विद्यमान ब्रह्म सन्ध्या शब्द से कहा जाता है । कहीं योगियाज्ञवल्क्य के सन्ध्यात्रय साधारण वचनानुसार सन्ध्याशब्द का अर्थ ब्रह्मादि सभी देवों का संगम (सन्धि) काल है । यहीं नित्यकृत्यरत्नमाला टिप्पणी के अनुसार वह सन्ध्या एक देवता है जो सूर्यरूप है । दिनरात के सन्धि काल में उपासनीय होने के कारण 'सन्ध्या' नाम हुआ ।

[ मूलम् ]

अथवा

ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च ।
कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तमः ॥

इति योगियाज्ञवल्क्येन देवीत्वेन कीर्त्तनात् सन्ध्यारूपाया देवताया वक्ष्यमाण प्राणायामादिनोपासनं सन्ध्योपासनम् । सिद्धिरत्र मोक्षः ।

[ संस्कृत टीका ]

ब्रह्मेति । या सन्ध्या देवी, ब्रह्मणा = विधात्रा । विष्णुना=नारायणेन । शङ्करेण=शिवेन च । उपासिता=वक्ष्यमाणप्राणायामादिना आराधिता । ताम्=प्रसिद्धाम् देवीम् । सिद्धिकामः=मुक्तिकामः । कः, द्विजोत्तमः= द्विजातिश्रेष्ठः। नोपासयेत् =नाराधयेत् । अपि तु सर्व एवेति भावः । एवञ्च सन्ध्यारूपाया देव्या वक्ष्यमाण प्राणायामादिनोपासनमाराधनं सन्ध्योपासन-शब्दार्थो निष्पन्नः ।

[ हिन्दी टीका ]

ब्रह्मा, विष्णु तथा महेश ने जिसकी (आगे कहे जाने वाले प्राणायाम आदि के द्वारा) आराधना की उस देवी की उपासना मुक्ति चाहने वाला विवेकी कौन द्विज नहीं करेगा ।

अब उक्त व्याख्यान के आधार पर सन्ध्योपासन शब्द का अर्थ सन्ध्या रूपा देवी की आगे कहे जाने वाले प्राणायाम आदि के द्वारा आराधना (उपासना) हुआ ।

[ मूलम् ]

"अनर्हः कर्मणामि" त्यादिना सन्ध्योत्तरकर्मणि कृतसन्ध्यस्याधिकार[१] इत्युक्तम् । अथवा चिरन्तनसन्ध्यत्यागिनः पतितस्येव द्विजाति-कर्मानधिकारः ।

**नानुतिष्ठति[२] यः पूर्वां नोपास्ते यश्च[३] पश्चिमाम् ।**
**स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥**

इति मनुदर्शनात् । (द्विजकर्मणः= अध्ययन-यजनादेः)[४] ।

---

पाठा. (१) कर्मणि नाधिकारः । (२) नोपतिष्ठति : न तिष्ठति तु । (३) पूर्वामुपास्ते न च। (४) नित्यकृत्यार्णवेऽत्र आचारादर्शनाम्ना तथा पाठदर्शनान्मयापि कोष्ठीकृत्य तत्पाठः स्थापितोऽस्ति ।

[ संस्कृत टीका ]

अनर्ह इति । उक्त छन्दोगपरिष्टिवचने "अनर्ह: कर्मणां विप्र: सन्ध्याहीनो यत: स्मृत:" इत्युक्त्या सन्ध्योत्तरविहिततर्पण-देवपूजनपञ्चमहायज्ञादि कर्मीण विहितसन्ध्यस्याधिकारबोधनं भवति । अन्यथा तत्पूर्वविहित स्नानादिष्वप्यना-धिकार प्रसङ्ग: स्यात् ।

अथवा, चिरन्तन (दीर्घकालिक) सन्ध्याविरहितस्य पतितस्येव द्विजाति कर्माध्ययन यजनादिषु अनधिकार बांधनं भवति, 'नानुतिष्ठतीं'त्यादि मनुवचनात् ।

तथाहि, य: द्विज: प्रात:सन्ध्यां, सायंसन्ध्यां च न करोति, स शूद्र इव वेदाध्ययनयजनादिद्विजकर्मणो बहिर्निष्कासनीय: ।

अत्र "अनेनैव प्रत्यवायेन सन्ध्योपासनस्य नित्यतोक्ता । नित्यत्वेऽपि सर्वदाऽपेक्षितपापक्षयस्य फलत्वमविरुद्धमि"ति मन्वर्थमुक्तावली ।

योगियाज्ञवल्क्येन सन्ध्याया अकरणे हानिरुक्ता यथा

सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चैव जायते ॥
अनार्तश्चोत्सृजेद् यस्तु स विप्रः शूद्रसम्मितः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः ॥

अत्रैवात्रिर्यथा–

यः सन्ध्यां कालतः प्राप्तामालस्यादतिवर्तते ।
सूर्यहत्यामवाप्नोति ह्युलूकत्वमियात् स च ॥ इति ।

[ हिन्दी टीका ]

उक्त छन्दोगपरिशिष्टवचन में–

अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः।

ऐसा कहने से सन्ध्या के बाद तर्पण, देवपूजन आदि विहित कर्मों में सन्ध्या कर लेने वाले का अधिकार होता है, यह फलितार्थ होता है । (यदि ऐसा तात्पर्य न मानें तो सन्ध्या से पूर्व विहित स्नान आदि में भी अनधिकार प्रसंग हो जायगा) ।

अथवा बहुत समय से सन्ध्यात्यागी को पतित के जैसे द्विजाति के कर्मों में अधिकार नहीं है, ऐसा फलितार्थ होता है। जैसा कि मनुने भी कहा है– जो प्रातः एवं सायं सन्ध्या का अनुष्ठान नहीं करता, वह द्विज वेदाध्ययन, यजन आदि कर्मों से शूद्र की भाँति बहिष्कृत कर देने योग्य है।

यहाँ मन्वर्थमुक्तावली का मन्तव्य है कि ''इसी प्रत्यवाय से सन्ध्योपासन की नि ता कही गई है। नित्य होने पर भी सदैव अपेक्षित पापक्षय रूप फल भी होता है।

यहाँ ऊपर से योगियाज्ञवल्क्यवचनानुसार ज्ञातव्य है कि जो सन्ध्या नहीं जानता अथवा जान कर भी उसकी उपासना नहीं करता, वह जीते जी शूद्र के समान है और मरने पर कुत्ते की योनि को पाता है। पुनश्च–जो विप्र संकट प्राप्त हुए विना ही संध्या का त्याग करता है वह शूद्र के समान है ओर प्रायश्चित्त का भागी तथा लोक में निन्दित होता है।

[ मूलम् ]

विष्णुपुराणे –

**सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।**
**अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥**

विभ्रमः = चित्त विक्षेपः। मेघादिना सन्ध्याकालाज्ञानमित्यन्ये[१]।

[ संस्कृत टीका ]

सर्वकालेति। हे पार्थिव ! सूतकाशौचविभ्रमातुरभीतितः अन्यत्र = सूतकम् = जननाशौचम्, आशौचम् मरणाशौचम्, अथवा सूतकाशौचमित्येकं पदं मरणाशौचस्याप्युपलक्षकम्, विभ्रमः चित्तविक्षेपः। विनैव व्याकुलतामिति रत्नाकरः। 'भयं विना चित्तविक्षेप' इत्याचारद्रे विशेषमाहुरिति तु नित्यकृत्यार्णवः। मेघादिना सन्ध्याकालाज्ञानमित्यन्ये। आतुरः = रोगी, रोगिणो रोगो वा, भीतिः– व्याघ्रादिभयम्, एतेषां समयतोऽन्यसमये। सर्वकालम्=सर्वस्मिन् दिने सन्ध्ययोः–सन्ध्यात्रयसमये। उपस्थानम्= सूर्योपस्थानम्। इष्यते=अभिलष्यते, कर्तव्यमिति यावत्। एतेन उपस्थानान्ता सन्ध्येति गम्यते। उपस्थानान्तसन्ध्यायाः शास्त्रीयत्वादेव–

पाठा. (१) मित्येकं।

"अत्र सन्ध्यापदं दर्श पौर्णमासदिवत्तत्कालकर्तव्यस्य प्राणायामादि-सूर्योपस्थानान्तकर्मणो नामधेयम् । तत्प्रख्याधिकरण सिद्धान्तात् । तत्रोपस्थानं प्रधानमितराण्यङ्गानि । अतएव रणोद्यतैः पाण्डवैरसामर्थ्यादङ्गाननुष्ठानेऽपि सूर्य एवोपतस्थे । तथा च भारतम्–

**ते तथैव महाराज ! दंशिता रणमूर्धनि ।**

**सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ इति**

दंशिताः=कवचनद्धगात्राः । (दंशितो व्यूढकण्टकः इत्यमरः) । व्यूढकण्टकः = बद्धकवचः । तैत्तरीयब्राह्मणञ्च–

**'उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते' इति ।**

"कुर्वन्नित्यस्य 'उपस्थानमि'ति शेषः । तेन सन्ध्याख्येन कर्मणा वन्दनमुपासनं-सन्ध्यावन्दनं सन्ध्योपासनं वोच्यते" इति नित्यकृत्यरत्नमाला टिप्पण्यपि ।

परन्तु वीरमित्रोदयस्तु –"यत्तु 'तथैव ते महाराज ! दंशिता रणमूर्धनि' इत्यादि महाभारतवचनं, तदपि गायत्र्याः सूर्यप्रकाशकत्वाद् गायत्रीजप एव सन्ध्यापदं प्रयुक्तम् । एवं सति प्राणायामादीनामङ्गानां फलश्रवणमर्थवाद परतया नेयम् । अङ्गे फलश्रवणमर्थवाद इति न्यायात् । अतएव 'ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्' इति मनुनाऽपि गायत्रीजप एव सन्ध्यापदं प्रयुक्तम् । प्राणायामादीनां प्रति-नियतस्वरूपत्वेन दैर्ध्यासम्भवेन गायत्रीजपस्यैव सहस्रादि संख्यया दैर्घ्यसम्भवात्" इति ।

अत्राचारादर्शस्यतु–"अत्र च जपदीर्घत्वेन दीर्घसन्ध्याऽभिधानात् जपेन सन्ध्याकर्मसमाप्ति रिति मन्तव्यम् । 'उभे सन्ध्ये जपञ्जप्यमुपासीत यथाविधि' इत्यादिनानावाक्येषु सावित्रीजपस्य सन्ध्यान्तर्गमः स्फुटः " इति विवेचनेन सर्वं समन्वेति ।

प्रकृतमूलवचनमुपक्रम्य शब्दकल्पद्रुमो यथा–"इति विष्णुपुराणीये 'सन्ध्यायाः' इत्येकवचनान्तपाठो धर्मकोषोक्तो युक्तः । एवमेव नव्य-वर्धमानः । सर्वकालम्=प्रातर्मध्याह्नसायंरूपकालत्रये । अन्यथा तदुपादानं व्यर्थं

स्यात् । विभ्रमः=चित्तविक्षेपः । तेन क्षतादावपि सन्ध्यामाचरन्ति । अतएव योगियाज्ञवल्क्यः–

'सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्त्य[1]जन्मगतोऽपि सन् ॥

सर्वावस्थोपि=नित्यं[2] सेवकादिकर्मरतोऽपि । यथोचित शौचेऽप्यशक्तोऽपीति रत्नाकरः । अन्धाद्यवस्थापन्नोऽपीति युक्तम्'' इति । अत्र''अत्र सूतकशावाशौचयोर्विशिष्य ग्रहणाद् व्रणेपि संध्या कार्येति केचित् । तन्न, 'सव्रणः सूतकः सूती'ति वचनानुसारेणाशौचपदस्य जननाशौचप्रतिपादनात् । 'सायं सन्ध्यामुपासीरन् क्षतिनस्ते महारथा इति भारतवचनस्य शिष्टानादृतस्यानाकरत्वादि'' ति नित्यकृत्यार्णवः ।

अतएव छन्दोगाह्निकेऽपि सन्ध्यायाः इत्येकवचनान्त एव पाठ उपलभ्यते ।

किन्तु आचारादर्शानुसारं 'सन्ध्ययोरि'ति पाठपक्षेऽपि सन्ध्यात्रितय-समयेऽपीत्यर्थः कार्यः । यथाच वीरमित्रोदयोऽपि–''सन्ध्ययोरिति द्विवचनं तृतीय-सन्ध्याया उपलक्षणार्थम्, 'एतत्सन्ध्यात्रयं प्रोक्तमि'त्यादि कात्यायन-वचनात् । सन्ध्यात्रयन्तु कर्तव्यं द्विजेनात्मविदा सदा' इति योगियाज्ञवल्क्यवचनाच्चे''ति ।

छन्दोगाह्निके तु आचारादर्शानुसारमुक्तविष्णुपुराणीयवचनमुल्लिख्य विवेचनरूपेण इदमपि लिखितम्–''आपद्यध्वन्यशक्तौ च सन्ध्यां कुर्वीत मानसीम् इति स्मृतिमञ्जूषायां लिखितम् । संवदति चैतत् 'मनसा चैनं सम्यगाचारमनुपालयेदापत्कल्पे' इति गौतमोक्तेन । '' इति ।

छन्दोगाह्निकटिप्पणीकर्त्रा म.म.मुकुन्दशर्मणा स्वीयनित्यकृत्यरत्नमाला टिप्पण्यामुक्तच्छन्दोगाह्निकानुसारं (दक्षिणदेशीय) स्मृतिमञ्जूषाग्रन्थोपादानं विहाय सर्वमन्यत्समुल्लिख्य लिख्यते स्म–''अत्राशौचेऽपि सन्ध्यावन्दना-

---

पाठा (१) अन्य । (२) निन्द्य संवादिकर्मरतोऽपि । यथांचित शौचेऽप्रशक्तोऽपीत्यर्थः इति नित्यकृत्यार्णवः ।

नुकल्पमाह नित्यकृत्यार्णवे भरद्वाजः—

**सूतके मृतके वापि प्राणायाममन्त्रकम् ।**

**तथा मार्जनमन्त्राँश्च मनसोच्चार्य मार्जयेत् ॥**

**मार्जनन्तु न वा कार्यमुपस्थानं तथैव हि ॥** इति ।

अत्रामन्त्रकमित्यस्य व्यक्तमन्त्रोच्चारणवर्जं मानसमित्यर्थः । अग्रे तथा पद श्रवणात् '। गायत्र्याश्च दशधाजपमावश्यकमाह आश्वलायनः—

**'आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश ।** इति ।

अशुचिः=आशौचवान् । काले=सन्ध्यावन्दनसमये । एवमर्घोऽप्यावश्यक एव । स चाशौचादौ धूलिप्रक्षेपणेनापि निर्वाह्यः । यथा च अग्निः—

**जलाभावे महामार्गे बन्धने त्वशुचावपि ।**

**उभयोःसन्ध्ययोः काले रजसाऽप्यर्घमुत्सृजेत् ॥** इति ।

पाण्डवैरपि रणोद्यतैस्तथाऽनुष्ठानस्य भारते आम्नायात् ।"

परन्त्वत्र प्रसङ्गे छन्दोगाह्निकाचारादर्शवीरमित्रोदयादिवदाचारचिन्तामणिरपि केवलमुक्तविष्णुपुराणवचनमुल्लिख्य अन्यत्र च

**"आपद्यध्वन्यशक्तौ च सन्ध्यां कुर्वीत मानसीम् ।**

इति स्मृतिमञ्जूषालिखितवचनादध्वादौ मानसीमपि इच्छन्तीति समुल्लिख्यापि स्वीयनूतनविवेचनप्रदर्शने मौनमेव अलम्बते । अतो मानवस्य चेखिद्यमानमानसस्य कृते मरणाशौचसमये, मरणाशौचवद् व्यवहर्तव्ये जननाशौचसमये च कर्तव्यसन्ध्योपासने सर्वनिबन्ध-(मैथिल-गौड-निबन्ध) सम्मतत्वं चिन्तनीयमेव प्रतिभाति । संस्कृतटीकायामग्रे प्रदर्श्यमानस्य 'शुचित्वे सति सन्ध्योपासनकालजीवित्वरूपस्य सन्ध्योपासनस्थलीयाधिकारलक्षणस्य आशौचवति जने सत्यन्तदलस्य व्यपगमेन दुरुपपादनीयत्वात् । अधिकारस्य व्यपगमे चाशौचशालिनि नित्याधिकारस्यापि व्यपगमात् । एतदृश्यां स्थितावयि शास्त्रानुसारं मानसी सन्ध्येयमनुज्ञात ज्ञातव्या ।

[ टिप्पणी ]

अस्मिन् प्रसङ्गे विद्यावाचस्पति मधुसूदन झा शर्मणोऽवलोकनीया आशौच-पञ्जिकाऽपि यथा,

कर्तव्याकर्तव्यव्यवस्था–

मरणाशौचे जननाशौचे वा सन्ध्योपासनं पञ्चमहायज्ञान् षट्कर्माणि च वर्जयेत् । तत्र आचमनं प्राणायामाः, आचमनम् मार्जनम्, आचमनम्, सूर्यार्घ्यदानम्, सूर्योपस्थानम्, गायत्रीजपश्चेत्येतानि सन्ध्यावन्दन-स्वरूप-सम्पादकान्यष्टौ कर्माणि गृहस्थानां नित्यानि । तानि च सर्वाण्यप्याशौचकालमध्ये प्रतिषिद्धानि । पञ्चैव महायज्ञाः–भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति तेप्याशौचकालमध्ये प्रतिषिद्धाः ।। यजनं याजनमध्यापनमध्ययनं दानं प्रतिग्रहश्चेत्येतानि षट्कर्माणि गृहस्थानां नित्यानि । तान्यपि सर्वाण्याशौचकालमध्ये प्रतिषिद्धानि-इत्येके ।।

परेत्वाहुः । आशौचे सति सन्ध्योपासनार्थमाचमनं सूर्योपस्थानञ्च न कुर्यात् । प्राणायामं तु न कुर्याद्, विना मन्त्रेण कुर्याद्वा । मार्जनं गायत्रीजपं च न कुर्याद्, मानसमन्त्रेण कुर्याद्वा । सूर्यार्घ्यदानन्तु गायत्रीं सम्यगुच्चार्य कुर्यादेव । नत्वेव न कुर्यादिति दाक्षिणात्याः । गौडास्तु सूर्यार्घ्यदानमपि नैव कुर्यादित्याहुः । प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यात् । सैषा कुशवारिविवर्जिता मानसी सन्ध्या न कदाचित् परित्याज्या-इति सन्ध्यावन्दने विशेषः ।

महायज्ञेषु वेदाध्ययनं वेदाध्यापनं च ब्रह्मयज्ञः । मृताशौचे सति नैव कुर्यात् । अथ पिण्डदानमुकदानञ्च पितृयज्ञः । पिण्डदानं श्राद्धशब्देनाख्यायते । उदकदानन्तु तर्पणशब्देन । तत्राभ्युदयिकश्राद्धं जननाशौचे सत्यपि कुर्यादेव..... ....''इति ।

अस्यैव विद्वद्वर्यस्य सन्ध्योपासनरहस्य-नामकोऽपरग्रन्थस्तु–

''स्नानं सन्ध्यां त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्स्नानञ्च सन्ध्याञ्च सूतकेऽपि न संत्यजेत् ॥
सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते चरेत् ॥

प्राणायाममन्त्रा मनसापि नोच्चार्या इत्यर्थः ।

पैठीनसिस्तु-''सूतके सावित्र्याऽञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यादि'' त्यर्घ्यप्रदानान्तां सन्ध्यामाह । अन्येतु

**उच्चार्य वाचा गायत्रीं दद्यादर्घ्याञ्जलीनपि ।**

**अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥**

इति गायत्री-जपमप्याहु: । अत्र यथाचारं व्यवस्थेयम् । '' (इति)

व्यवस्थादि व्यवस्थाऽन्तस्य (कर्तव्याकर्तव्यवस्थाचारव्यवस्थात: ''अत्र यथाचारं व्यवस्थेयम्'' इत्यन्तस्य) लेखद्वयस्य उक्त ग्रन्थद्वय प्रतिपाद्यस्यपर्यालोचनेन संस्कृत टीकायां प्रदर्शितविचारेण च प्रतीयते, प्रकृते प्रसङ्गे न काचिदप्यास्थाऽनुकूला सन्ध्योपासन व्यवस्था व्यवतिष्ठते । अत: परस्परविरोधिविभिन्नपुराणस्मृतिवचनै:परस्परविरोधिनिबन्धकारनिर्णयैश्च परित: समाकृष्यमाणा सती वराकीयं व्याख्याननिर्णयाभ्यां व्याकुलीभूता सन्ध्या व्यवस्था उक्त सन्ध्यारहस्य ग्रन्थानुसारं स्व-स्व- कुलाचारानुचारिणी एव व्यवतिष्ठाताम् (?) । प्रतीयते च प्रकृत-ग्रन्थद्वयकारस्य विद्यावाचस्पति-महानुभावस्य सन्ध्योपासन रहस्योद्धृत पैठीनसिवचनानुसारमाशौच पञ्जिका प्रदर्शिते ''प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यात् । सैषा कुशवारि विवर्जिता मानसी सन्ध्या न कदाचित् परित्याज्या इति सन्ध्यावन्दने विशेष'' इति मतेऽपि सम्मति र्विद्यते इत्यलं विस्तरेण ।

**[ हिन्दी टीका ]**

'हे राजन्, जननाशौच, मरणाशौच चित्तविक्षेप (चित्त की विकलता या बेचैंनी, अथवा किसी अन्य के मत से मेघ आदि के कारण से सन्ध्या समय का ज्ञान न होने, रोगी (के रोग) तथा व्याघ्र आदि की आशंकित भयावह उपस्थिति के समय से अन्य समय में प्रतिदिन प्रात:, मध्याह्न एवं सार्य सन्ध्य समय में सूर्योपस्थान (सन्ध्योपासन) करना चाहिए, यह मूल वचन का अर्थ हुआ ।

इस विष्णुपुराणीय वचन के अनुसार प्रतीत होता है कि उपस्थानपर्यन्त ही सन्ध्या है जिसमें भी उपस्थान मुख्य है और तत्सम्बद्ध अन्य प्रणायाम आदि कर्म अङ्ग है । ऐसा ही नित्यकृत्य रत्नमाला टिप्पणी का भी, महाभारत तथा तैत्तिरीय ब्राह्मण का उद्धरण देते हुए, विवेचन है । इसके अनुसार सन्ध्यावन्दन तथा सन्ध्योपासन शब्द पर्यायवाची हैं ।

परन्तु उसी महाभारत तथा मनुवचन से वीरमित्रोदय का कहना है कि सूर्य में प्रकाश प्रदान करने वाली गायत्री का मन्त्रजप ही सन्ध्या है अन्य प्राणायाम आदि अंग

हैं। (मेरी दृष्टि से ये सब निबन्धकारों के बुद्धिवैभवविलास है। व्यवहार में तो लोग प्राणायाम आदि से लेकर गायत्री जप तक को सन्ध्या मानते हैं और वैसा आचरण भी करते हैं।)

फलत: आचारादर्श के (आगे दिखाये जानेवाले समन्वयवादी) विवेचनानुसार सावित्रीजप सन्ध्या के अन्तर्गत है और सवित्री जप पर्यन्त ही सन्ध्याकर्म है।

प्रकृत मूल वचन को उद्धृत कर शब्दकल्पद्रुम का विवेचन है कि " उक्तवचन में एकवचनान्त 'सन्ध्याया:' यह पाठ जिसे धर्मकोष ने भी कहा है, युक्त है। ऐसा ही पाठ नव्यवर्धमान ने भी माना है। इस वचन में पढ़े गए 'सर्वकालम्' पद का अर्थ प्रात:, मध्याह्न और सायंसन्ध्यारूप तीनों काल अभिप्रेत हैं। अन्यथा इसका कहना व्यर्थ हो जायगा। इस वचन के 'विभ्रम' पद का अर्थ चित्त विक्षेप–चित्त की विकलता या बेचैनी–है, किंतु किसी अंग में घाव या चोट आदि से फोड़ा आदि हो जाने पर भी शिष्टजन सन्ध्या करते हैं। इसीलिए योगियाज्ञवल्क्य का कहना है कि "सभी अवस्थाओं में (चाहे कोई द्विज नित्य ही सेवक आदि का निन्द्य) कार्य भी करता हो या यथोचित शौचाचरण में अशक्त रहा हो या अन्धा आदि हो जाय तो भी) जो विप्र सन्ध्योपासन में तत्पर रहता है वह ब्राह्मणत्व से रहित नहीं हो पाता।"

परन्तु नित्यकृत्यार्णव ने घाव, चोट से फोड़े आदि के समय सन्ध्योपासन करने का प्रमाण के साथ खण्डन कर दिया है।

उक्त व्याख्यान के अनुकूल ही छन्दोगाह्निक में भी एकवचनान्त 'सन्ध्याया:' यही पाठ उपलब्ध होता हैं। किन्तु आचारादर्श में पठित द्विवचनान्त 'सन्ध्ययो:' इस पाठ पक्ष में भी 'तीनों संध्याओं के समय' ऐसा अर्थ कर लेना चाहिए। जैसा कि वीरमित्रोदय का भी व्याख्यान है कि यहाँ 'सन्ध्ययो:' पदका द्विवचन तृतीय सन्ध्या का भी बोधक है क्योंकि कात्यायन एवं योगियाज्ञवल्क्यने तीनों सन्ध्याएँ कही हैं।

यद्यपि उक्त छन्दोगाह्निक तथा अपनी नित्यकृत्यरत्नमाला के टिप्पणीकर्त्ता म. म. मुकुन्द शर्मा ने विवेचन किया है कि नित्यकृत्यार्णव में उद्धृत भरद्वाज, आश्वलायन आदि के वचनानुसार आशौच में भी सन्ध्यावन्दन के अनुकल्पस्वरूप व्यक्त मन्त्रोच्चरण के विना ही (अमन्त्रक) मानस सन्ध्यावन्दन करना चाहिए। साथ ही दस बार गायत्रीजप तथा धूलिप्रक्षेप से भी सूर्य को अर्ध प्रदान करें। किन्तु प्रकृत (प्राचीन) ग्रन्थकार अपने प्रथम ग्रन्थ छन्दोगाह्निक में उक्त विष्णुपुराणीय वचन लिखकर आगे लिखते हैं कि " आपत्ति के समय, रास्ते में, तथा अशक्ति की स्थिति में मानसी सन्ध्या करनी चाहिए यह (दक्षिणदेशीय) 'स्मृतिमञ्जूषा' नाम के ग्रन्थ में लिखा है और इसकी संपुष्टि में 'मनसा चैनम्' इत्यादि गौतम वचन उद्धृत किया गया है।" इस

लेखन शैली से तथा इसी ग्रन्थकार के द्वितीय ग्रन्थ आचारादर्श और इसके परवर्त्ती आचार चिन्तामणि एवं इसके भी परवर्त्ती वीरमित्रोदय में उक्त विष्णुपुराण वचन के बाद कुछ भी नवीन विवेचन उपलब्ध न होने से प्रतीय होता है कि आशौच में भी सन्ध्यानुष्ठान सार्वत्रिक (सभी जगह प्रचलित) नहीं है और न सभी (मैथिल गौड प्राचीन) निबन्धों से भी अनुमोदित या मान्य ही है। क्योंकि आगे संस्कृत टीका में दिखा येजानेवाले मीमांसा शास्त्र प्रतिपादित–'शुचि (पवित्र रहते हुए सन्ध्योपासन समय में जीवित रहे' सन्ध्योपासन स्थलीय अधिकार का लक्षण अशुचि (आशौचवाले) व्यक्ति में सेंघटित नहीं हो पाता है। यदि आधिकार लक्षण की ऐसी स्थिति होती है अपवाद रूप ऐसे आशौ ची व्यक्तियों में नित्याधिकार का भी होना संभव नहीं है। ऐसी स्थिति में भी उपर्युक्त शास्त्रानुसार यह मानसी सन्ध्या मन्तव्य हो। इससे अधिक आगे की टिप्पणी में देखें।

## [ टिप्पणी हिन्दी ]

अब प्रकृत प्रसंग पर समीक्षाचक्रवर्ती विद्यावाचस्पति मधुसूदन (झा) शर्मा की आशौचपञ्जिका भी देखी जाय।

कर्तव्याकर्तव्याव्यवस्था( आशौच में क्या क्या कर्तव्य या अकर्तव्य हैं ?)

मरणाशौच या जननाशौच में सन्ध्योपासन, पञ्चमहायज्ञ, एवं षट्कर्मों (जो आगे दिखाये जा रहे हैं) का वर्जन करना चाहिए। उस संध्योपासन में आचमन (१), प्राणायाम (२), आचमन (३), मार्जन (४), आचमन (५), सूर्यार्घ्यदान (६), सूर्योपस्थान (७), और गायत्री जप (८), ये आठ कर्म संध्यावन्दन के स्वरूप सम्पादक हैं तथा गृहस्थों के नित्य (प्रतिदिन कर्तव्य) हैं किन्तु ये सभी आशौच के समय त्याज्य (प्रतिषिद्ध) हैं। महायज्ञ पाँच प्रकार के होते हैं। यथा भूतयज्ञ (१), मनुष्ययज्ञ (२), पितृयज्ञ (३), देवयज्ञ (४), और ब्रह्म यज्ञ (५)। ये सभी आशैच के समय में प्रतिषिद्ध।

यज्ञ करना, यज्ञ कराना, पढना, पढाना, दान देना और दान लेना ये षट्कर्म हैं और गृहस्थों के लिए नित्य हैं। ये भी आशौच के समय में प्रतिषिद्ध हैं। यह किन्हीं एक (मुख्य, अन्य, या एक) का मत है।

इनसे अन्य का कहना है कि आशौच होने पर संध्योपासन के अङ्गभूत आचमन और सूर्योपस्थान न करे। प्राणायाम भी न करे, या करे तो विना मन्त्र के करे। मार्जन और गायत्री जप न करे। करे तो मानस (मन ही मन उच्चारित) मन्त्र से करें। सूर्य के लिए अर्घ्यदान तो भली-भाँति गायत्री मन्त्र का उच्चारण कर करना ही चाहिए।

सूर्यार्घदान संबन्धी ऐसा ही मत दाक्षिणात्यों का भी है । यहीं गौड़ों का कहना है कि आशौचकालमें सूर्य के लिए यह अर्घ्यदान भी न करें ।

प्रदक्षिण कर ध्यान करते हुए सूर्य को प्रणाम करना चाहिए । कुश और जल से रहित मानसी सन्ध्या कभी भी वर्जनीय (त्याज्य) नहीं, यह सन्ध्यावादन में विशेष रूप से ज्ञातव्य है । उक्त महायज्ञों में वेद का पढना और पढ़ाना ब्रह्मयज्ञ है । आशौच के समय में ये भी त्याज्य हैं (नहीं ही करना चाहिए) । पिण्डदान और उदकदान (तर्पण) पितृयज्ञ है जिनमें आभ्युदयिकश्राद्ध जननाशौच होने पर भी करना ही चाहिए । इति

इन्हीं ग्रन्थकार के अपर ग्रन्थ 'सन्ध्योपासनरहस्य' में उद्धृत वचन के आधार से ज्ञातव्य है कि "एक सप्ताह से स्नान और संध्या का त्याग करनेवाला द्विज शूद्र के समान हो जाता है । इसलिए इनका त्याग आशौच में भी नहीं करना चाहिए । फलतः जननाशौच या मराणाशौच में संध्याकर्म करना चाहिए । किन्तु प्रणायाम स्थल से अन्य स्थल के मन्त्रों का मानसिक उच्चारण हो । अर्थात् प्रणायाम के मन्त्रों का मन से भी उच्चारण न हो" ।

पैठीनसिस्मृति का कहना है कि-"आशौच में गायत्री मन्त्र से जलाञ्जलि प्रदान कर प्रदक्षिण कर ध्यान करते हुए सूर्य देव को नमस्कार करें" ।

अन्य निबन्धकारों का मत है कि 'गायत्रीमन्त्र का स्पष्ट उच्चारण कर अर्ध्य की अञ्जलियाँ प्रदान कर अठाइस बार गायत्री का मानसिक जप करे' इस वचन के अनुसार गायत्रीजप भी हो ।

उक्त मत-मतान्तरों को देखते हुए आशौच में अपने अपने कुलाचार के अनुसार संध्यावन्दन की व्यवस्था रहे, अर्थात्

उक्त दोनों ग्रन्थों–'आशौचपञ्जिका' तथा 'संध्योपासनरहस्य' के व्यवस्थादि व्यवस्थान्त (अर्थात् कर्तव्याकर्तव्यव्यवस्था तथा यथाऽऽचारं व्यवस्थेयम्) लेखों के पर्यालोचन एवं संस्कृत टीका में प्रदर्शित विचारों से प्रतीत होता है कि प्रकृत प्रसंग (आशौच में सन्ध्यावन्दन करें या नहीं ?) में आस्था रखने या करने योग्य कोई भी एक व्यवस्था व्यवस्थित नहीं हो पा रही है । प्रत्युत परस्पर विरोधी विभिन्न पुराण एवं स्मृति के वचनों तथा निबन्धकारों के परस्पर विरोधी व्याख्यान व निर्णयों के द्वारा चारों तरफ से खीचातानी में फँसी व आकुलाव्याकुला होती हुई बेचारी साध्वी सन्ध्योपासन व्यवस्था को 'उक्त' सन्ध्या रहस्य ग्रन्थ के अनुसार अपने अपने कुलाचार के अनुसार अनुसरण करने वाली ही मान ली जाय तो सर्वत्रसामञ्जस्य हो जाता है । साथ ही यह भी प्रतीत होता है कि उक्त दोनों ग्रन्थों के निर्माता विद्यावाचस्पति महोदय की निजी सम्मति सन्ध्योपासन में उद्धृत पैठीनसिवचनानुसार आशौचपञ्जिका में प्रदर्शित-"प्रदक्षिणा

कर ध्यान करते हुए सूर्य को प्रणाम करना चाहिए, यह जल एवं कुश से रहित मानसी सन्ध्या कभी भी त्याज्य नहीं है। अन्य नित्यकर्मों की अपेक्षा संध्यावन्दन की विशेषता 'यही हो'' इस मत में भी है।

इससे अधिक विस्तार की क्या आवश्यकता ?

[ मूलम् ]

'यद्यप्यत्र मध्याह्नसन्ध्या नोक्ता तथापि

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते॥

इति छन्दोगपरिशिष्टात्[1],

सन्ध्यात्रयन्तु कर्तव्यं द्विजेनात्मविदा[2] सदा।

इति योगियाज्ञवल्क्याच्च साऽपि बोद्धव्या। एतेन सन्ध्यात्रये नित्याधिकारो दर्शितः[3]।

[ संस्कृत टीका ]

यद्यप्यत्रेति। अत्र=मनुवचने विष्णुपुराणवचने च। मध्याह्नसन्ध्या यद्यपि नोक्ता, तथापि 'एतत्सन्ध्यात्रयं प्रोक्तमि'त्यादिच्छन्दोगपरिशिष्टवचनात् 'सन्ध्यात्रयमि'त्यादि योगियाज्ञवल्क्यवचनाच्च, सापि=मध्याह्नसन्ध्यापि, ज्ञातव्या।

एतयोर्व्याख्या यथा–एतत्सन्ध्यात्रयम्=प्रातर्मध्याह्नसायंसन्ध्यात्रयम्। प्रोक्तम्=वर्णितम्। यदधिष्ठितम्=यदाश्रितम्। ब्राह्मण्यम् = ब्राह्मणत्वं, सन्तिष्ठते। तत्र=सन्ध्यात्रये। यस्य=ब्राह्मणस्य। आदरः= अनुष्ठानम्। न = नास्ति। प्रतिदिनं सन्ध्यात्रयं नोपास्ते इत्यर्थः। कर्मभ्रष्टत्वान्न सः ब्राह्मणः, उच्यते=कथ्यते इति छन्दोगपरिशिष्टार्थः।

आत्मविदा=शरीरेन्द्रियाद्यतिरिक्तं नित्याकरणे परलोके दुःखभागिनमात्मानं विजानता। तेन तदकरणे प्रत्यवायः सूचितः। द्विजेन=द्विजातिना। सन्ध्यात्रयम्। तु=निश्चयेन। कर्तव्यम् = अवश्यकर्तव्यमिति भावः। इति द्वितीयवचनार्थः।

---

पाठा. (१) परिशिष्टदर्शनात्। (२) नात्मवता। (३) उक्तः।

एतेन = उक्तवचनद्वयेन । सन्ध्यात्रये । नित्याधिकारः = नित्याचरण-योग्यत्ता । नित्याधिकारघटकाधिकारस्तु–"अधिकारश्च स एव यद् विधिवाक्येषु पुरुष-विशेषणत्वेन श्रूयते, यथा नित्ये सन्ध्योपासनादौ शुचि-विहित-काल-जीवित्वमि" त्यर्थसंग्रहोक्तदिशा शुचि-विहित-काल-जीवित्वरूपः । स च सन्ध्यात्रये नित्यः । एवञ्चैष नित्याधिकारः, दर्शितः=ज्ञातव्यः ।

## [ टिप्पणी ]

अत्र सन्ध्यात्रये इत्यत्र सप्तम्यर्थो निरूपितत्वम् । तेन सन्ध्यात्रये इत्यस्य सप्तम्यन्तस्य सन्ध्यात्रय-निरूपित इत्यर्थः । कस्यापि नरस्य अधिकारान-धिकारौ किञ्चिन्निरूपितावेव भवतः । यथा उपनीतस्य द्विजस्य वेदाध्ययन-निरूपितोऽधिकारः किन्तु द्विजस्त्रिया अपि वेदाध्ययननिरूपितानधिकारो भवति । नित्यता चात्र तत्तत्सन्ध्यासमये जीवित्वे शुचित्वे च सति अनधिकारित्व विरहात्मिका । अर्थात् तादृशो द्विजः कदापि सन्ध्योपासनान्मुक्तो भवितुं नार्हतीत्यर्थः ।

अयं भावः । प्रातः, मध्याह्ने, सायञ्च तत्तत्सन्ध्यावेलायां यो यो द्विजो जीवन् सन् शुचिर्वर्तते, तेन तेन तत्तत्सन्ध्यासमये शास्त्रोक्तदिशा सन्ध्योपा-सनमनिवार्यतया कर्तव्यमेव । अन्यथा तस्य तस्य तदनुपासनजनितप्रत्यवाय-भागित्वं स्यादेवेत्यलम् ।

## [ हिन्दी टीका ]

यद्यपि उक्त मनु तथा विष्णुपुराण के वचन से मध्याह्नसन्ध्या नहीं कही गई है तथापि "जिस त्रिकालसन्ध्याकर्म का वर्णन मैंने किया है उसके आचरण से ब्राह्मण में ब्राह्मणत्व सुप्रतिष्ठित (सुस्थिर) रहता है, इसमें जिसका आदर नहीं है अर्थात् जो प्रतिदिन संध्या नहीं करता है वह जन्म से ब्राह्मण होने पर भी कर्म भ्रष्ट होने के कारण ब्राह्मण नहीं कहा जा सकता है"–इस छन्दोगपरिशिष्ट (कात्यायन) के अथनानुसार तथा "अपना हित चाहनेवाला द्विज सदैव तीनों ही सन्ध्याएँ करें" इस योगियाज्ञवल्का के कथानानुसार मध्याह्नसंध्या भी कही गई ज्ञातव्य है । अभी उक्त दोनों वचनों से सिद्ध होता है कि ये तीनों सन्ध्याएँ प्रतिदिन अवश्य ही आचरणीय हैं' अन्यथा पापभागी होना पड़ेगा ।

[ मूलम् ]

पापक्षयकामाधिकारोऽप्यत्र । यदाह योगियाज्ञवल्क्यः–

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ।
त्रिकालसन्ध्याकरणात्तत्सर्वञ्च[1] प्रणश्यति ।

सततं सन्ध्यानिष्णातस्य फलान्तरमप्याह यमः–

सन्ध्यामुपासते ये तु सततं संशितव्रताः[2] ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

सन्ध्याद्वये प्रत्येकमपि पापक्षयमाह मनुः–

पूर्वां सन्ध्यां जपँस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥

[ संस्कृत टीका ]

पापक्षयेति । अत्र=सन्ध्यात्रये । पापक्षयकामाधिकारोऽपि =पापापहार फलसम्बन्धोऽप्यस्ति । अर्थात् ''अहरहः सन्ध्यामुपासीते'' त्यादिना शुचिविहितकालजीविनः सन्ध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोद्धयते '' इत्यर्थसंग्रहरीत्या पापक्षयरूपं फलमपि बोद्धयते । यदाह योगिज्ञवल्क्यः दिवेत्यादि । दिवसे रात्रौ वा यदज्ञानकृतं पापं भवेत्, तत्सर्वं त्रिकालसन्ध्याकरणात्=त्रैकालिकसन्ध्योपासनात् । प्रणश्यति = विलीयते ।

सततं सन्ध्यानिष्णातस्य = सन्ध्याचरणकुशलस्य अन्यफलमप्याह यमः–सन्ध्यामित्यादि । ये तु सततम् = प्रतिदिनम् । संशितव्रताः = निश्चितव्रताः-दृढव्रता इति यावत् । सन्ध्याम् = सन्ध्यात्रयम् । उपासते = अनुतिष्ठन्ति । ते विधूतपापाः=विगलितपातकाः । सनातनम् = नित्यम् । ब्रह्मलोकम् यान्ति = प्राप्नुवन्ति । न ते पुनरावर्तन्त इति भावः । एतदप्यज्ञानकृतपापविषयम्, 'दिवा वे'ति पूर्वोक्तयोगियाज्ञवल्क्यवाक्यैकवाक्यत्वात् ।

---

पाठा. (१) सर्वं विप्रणश्यति । (२) शांसशतव्रताः ।

सन्ध्याद्वये=प्रात:सायंसन्ध्ययो: । प्रत्येकमपि=प्रत्येकस्मादपि । पापक्षयमाह मनु: 'पूर्वामि' त्यादिना । पूर्वां सन्ध्यामित्यत्र पश्चिमामित्यत्र च कालाध्वनोरत्यन्त-संयोगे इति (पा० सू० २ । ३ । ५) सूत्रेण द्वितीया । एवञ्च प्रतिदिनमुचितसमये निरन्तरं सन्ध्या उपासनीयेति सिद्धम् । पूर्वां सन्ध्याम् = प्रात:सन्ध्याम् । तिष्ठन् = उत्तिष्ठन् उत्थायेतियावत् । जपन् = जपं कुर्वाण: । नैशम् =रात्रिसञ्चितम् । एनः = पापम् । व्यपोहति= नाशयति । पश्चिमां सन्ध्यान्तु । समासीनः = उपविष्टः सन् । (जपं कुर्वन्) । दिवाकृतम् = दिवोपार्जितम् । मलम् = पापम् । हन्ति = अपाकरोति ।

## [ हिन्दी टीका ]

१. तीनों संध्याओं के उपासन से पापक्षय भी होता है । जैसा कि योगियाज्ञवल्क्य ने कहा है– दिन या रात में अज्ञान से जो पाप किया जाता है वह तीनों कालों की सन्ध्या करने से नष्ट हो जाता है ।

२. जो सतत सन्ध्या के आचरण में कुशल हैं उनके लिए यमने दूसरा फल भी कहा है । यथा जो लोग दृढप्रतिज्ञ होकर प्रतिदिन नियमित रूप से संध्या करते हैं वे पापरहित होकर सनातन ब्रह्मलोक जाते हैं (जहाँ से पुन: लौटते नहीं) ।

३. दोनों संध्याओं में प्रत्येक से पापक्षय मनुने कहा है । यथा–प्रात: सन्ध्या के समय खड़ा होकर गायत्री जपने वाला पुरुष रात के पापों को दूर करता है तो सायं संध्या के समय बैठकर गायत्री जपने वाला दिन का किया हुआ पाप नष्ट करता है ।

## [ मूलम् ]

नन्वेवं केवलमध्याह्नसन्ध्यायां किं प्रमाणम् ? मैवम्, "उत्तीर्य धौतवाससी परिधाय मृदारू करौ प्रक्षाल्याचम्य त्रिरायम्यासूनि" त्यादिना कात्यायने मध्याह्नस्नानोत्तरं नरसिंहपुराणादौ च केवलाया अपि वक्ष्यमाणत्वात् । एवञ्च सन्ध्यात्रये प्रत्येकमपि कर्तव्यतया दर्शितत्वादेकसन्ध्यालोपे अपराऽपि न कर्तव्या, मिलितगोचरत्वादधिकारस्येति दुर्मति: ।

## [ संस्कृत टीका ]

नन्वेवमिति । ननु पूर्वोदाहृतमनुवचनेन प्रात: सायंसन्ध्ययो: प्रत्येकं फलश्रवणेन उभयोरनुष्ठाने सिद्धेऽपि मध्याह्नसन्ध्याया: केवलाया: सत्तायामनुष्ठाने

च किं प्रमाण मिति चेन्मैवम् । "उत्तीर्य धौते वाससी" इत्यादिना कात्यायनेन मध्याह्नस्नानोत्तरं नरसिंहपुराणादौ च केवलाया अपि वक्ष्यमाणत्वात् ।यथा चात्र वीरमित्रोदय :–"नृसिंह पुराणीय (प्रयोग) स्तु

दर्भेषु दर्भपाणिः सन्प्राङ्मुखः सुसमाहितः ।
प्राणायामाँस्तु कुर्वीत यथाशास्त्रमतन्द्रितः ॥
जपेदहरहः स्नात्वा सावित्रीं जपविद् द्विजः ।
अर्थ पुष्पाञ्जलिं क्षिप्त्वा भानवे चोर्ध्वबाहुकः ॥
उदुत्यञ्च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम् ॥ इति

आदिपदग्राह्यः शौनकोक्तादिसन्ध्यावन्दनप्रयोगो यथा–

मध्याह्ने तु विशेषोऽयमुपस्थानं तथाऽर्ध्यकम् ।
अपामञ्जलिना पूर्णमाकृष्णेनेति निक्षिपेत्" । इति च,

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ।
त्रिकालसन्ध्याकरणात्तत्सर्वञ्च प्रणश्यति ॥

इति योगियाज्ञवल्क्यवचनेन सह पूर्वोदाहृतमनुवचनस्यैकवाक्यतया सन्ध्यात्रयस्य प्रत्येकमेव फल-सम्बन्धाभिधानात् ; "अथ नित्यवत्सन्ध्यामुपासीतोदुत्यं चित्रमायङ्गौरपत्येतायवस्तरणिरुद्यामेषीत्यादिभिर्ऋग्भिः सर्वतुरु- पस्थानमि" ति नित्यकृत्यरत्नमालाटिप्पण्युद्धृतमध्याह्नसन्ध्यासम्बन्धि-गोभिलवचनाच्च ।

एवञ्च सन्ध्यात्रये प्रत्येकमपि अवश्यकर्तव्यतायाः पूर्वोक्तवचनैर्दर्शना-देकस्याः सन्ध्यायाः केनापि प्रतिबन्धेनाननुष्ठानेऽपि द्वितीयाऽपि = अपराऽपि, न कर्तव्या । अधिकारस्य = सन्ध्यात्रयकरणाधिकारस्य । मिलितगोचरत्वात् =मिलितविषयत्वादिति दुर्मतिः = दुर्बुद्धिः ('एवमेवाचारद्वैतविवेकस्वरस'

इति नित्यकृत्यार्णवः) । 'सन्ध्यात्रयन्तु कर्तव्यमि'ति विधिवाक्ये संख्याश्रवणात् तिस्र आहुतीर्जुहोतीतिवत् त्रीणि कर्माणि सिध्यन्ति । तेषाञ्च 'पूर्वां सन्ध्यां जपँस्तिष्ठन्नि'त्यादिमनुवाक्ये प्रत्येकं फलसम्बन्धश्रवणात् एकाकरणेऽप्यपरस्यावश्यङ्कर्तव्यत्वात् ।

[ हिन्दी टीका ]

यहाँ शंका यह होती है कि केवल मध्याह्न सन्ध्या में क्या प्रमाण है ? उत्तर है: ''मध्याह्न स्नान के बाद जल से ऊपर आकर धुले दो वस्त्र पहन कर मिट्टी तथा जल से दोनों जंघाएँ तथा हाथ धोकर आचमन कर तीन बार प्रणायाम करे'' इत्यादि कात्यायन के इस आगे कहे जानेवाले वचन के अनुसार मध्याह्नसन्ध्या स्वतः वर्णित हो जाती हे तथा नरसिंहपुराण आदि में तथा 'आदि' पद ग्राह्य शौनक आदि द्वारा कहे गए सन्ध्या प्रयोग में भी वर्णित है ।

दूसरी बात (ऊपर से ज्ञातव्य है कि) ''तीनों संध्याओं में सन्ध्या करने से अज्ञानकृत सभी पाप नष्ट हो जाते हैं'' इस पूर्वोक्त योगियाज्ञवल्क्य के वचन के साथ दो ही संध्याओं के कहने वाले मनुवचन की एकवाक्यता करने पर सभी स्मृतिकारों के अनुसार तीनों ही संध्याओं में फल संबन्ध का कथन भी हो ही जाता है ।

तीसरी बात, गृह्यसूत्रकार गोभिलने छन्दोगों के निमित्त मध्याह्नसन्ध्या के सूर्योपस्थान के लिए कात्यायन से अलग ही ऋग्मन्त्रों का निर्देश भी किया है ।

यहाँ किसी का कहना है कि करें तो तीनों ही संध्या, कदाचित् एक छूट जाने पर दूसरी भी न करें । क्योंकि तीनों ही मिलित रूपमें एक हैं । किन्तु ऐसा समझना दुर्बुद्धि है क्योंकि 'सन्ध्यात्रयन्तु कर्तव्यम्' इत्यादि वचनों से ये तीनों सन्ध्याकर्म पृथक् पृथक् हैं । अतः किसी प्रतिबन्धवश एक छूट जाने पर भी दूसरी न छोड़ें, अपितु अवश्य करें ।

[ मूलम् ]

देशमाहतुः शङ्खलिखितौ–

सव्रती बहिः सन्ध्यामुपासीत ।

सव्रती=ब्रह्मचारी, व्रतयुक्ताध्ययन-शीलत्वात्[1] । बहिः–ग्रामात् । 'नैनं

---

पाठा० (१) नित्यकृत्यार्णवेतु आचारादर्शनाम्ना 'ब्रह्मयुक्ताध्ययनशालित्वात् 'इति पाठः ।

ग्रामेऽभिनिम्लोचेत् सूर्यो नाभ्युदियात् क्वचित्' इति मनुदर्शनात् । एनम्=ब्रह्मचारिणम् । अभिनिम्लोचेत्=अस्तं यायात् ।

[ संस्कृत टीका ]

देशमिति । देशः=संस्थानम्-क्षेत्रमिति यावत् । सव्रती-सहव्रतेन यद् वर्ततेऽध्ययनादि तत् सव्रतं, तद्वान् सव्रती =ब्रह्मचारी । बहिः-ग्रामादिति शेषः । सन्ध्याम् = प्राणायामादिकर्म, सन्ध्यादेवीं वा । उपासीत्= अनुतिष्ठेत्, आराधयेद्वा । मनुरप्याह नैन मित्यादि ।

सूर्यः क्वचिदपि ग्रामे । एनम् = ब्रह्मचारिणम् । अभिनिम्लोचेत् = अस्तं यायात्-अस्तमनं गच्छेदिति यावत् । 'अभि = लक्षीकृत्य । निम्लोचेत् = अस्तं यायादि'ति तु नित्यकृत्यार्णवः । अभ्युदियात् = उदितो भवेत् । ब्रह्मचारिणा ग्रामाद् बहिः सूर्योदयास्तसमयौ सन्ध्यार्थं सम्पाद्याविति तात्पर्यार्थ इति वीरमित्रोदयः । ग्रामलक्षणं नित्यकृत्यार्णवोद्धृत'' मार्कण्डेय-पुराणे यथा-

**तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः।**
**क्षेत्रोपयोग-भूमध्ये वसतिर्ग्रामसंज्ञिका ॥ इति**

[ हिन्दी टीका ]

शंख और लिखित ने संध्या के लिए उत्तम स्थान यों कहा है कि ब्रह्मचारी गाँव से बाहर प्रशान्त वातावरण में संध्या की उपासना करे । ऐसा ही मनुका भी कहना है कि ब्रह्मचारी को गाँव में सूर्य का अस्त तथा उदय नहीं होना चाहिए । अर्थात् ब्रह्मचारी गाँव से बाहर सूर्योदय तथा सूर्यास्त का समय सन्ध्योपासन से बितावे । गाँव का लक्षण मार्कण्डेय पुराण में कहा गया है कि जहाँ शूद्रजन अधिक हो, पूर्ण समृद्ध किसान हो, एवं खेती योग्य भूमध्य में बसी बस्ती हो उसे गाँव कहते है ।

[ मूलम् ]

गुणफलमाह शातातपः-

**अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।**
**पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता ॥**

गृहेषु[1] प्राकृती सन्ध्या गोष्ठे शतगुणा[2] स्मृता ।
नदीषु शतसाहस्री[3] ह्यनन्ता[4] शिवसन्निधौ ॥

प्राकृती = एकगुणा ।

[ संस्कृत टीका ]

गुणफलमिति । अहोरात्रजनितपापक्षयस्य मुख्यफलत्वादाह-गुणफलमिति । गुण फलम् = गौणफलम् । अनृतमित्यादि । बहि:-ग्रामदिति शेष: । उपासिता अनुष्ठिता । सन्ध्या। अनृतम् = असत्यभाषणम् । मद्यगन्धम् = मदिरागन्धाघ्राणम् । दिवामैथुनम्= दिवसे कृतं मैथुनम् । वृषलस्यान्नम् -वृषलोऽत्राधार्मिक: । तदुक्तं महाभारते -

वृषो हि भगवान् धर्मस्तस्य य: कुरुते त्वलम् ।
वृषलं तं विदुर्देवा:......... इति ॥

तस्यान्नम् । पुनाति = एतेभ्यो जायमानं पापं दूरीकरोतीत्यर्थ: । अतएव "वृषलोऽत्राधार्मिक:" इति रत्नाकरोऽपि ।

गृहेष्विति । गृहेषु = साधारणगेहेषु । अनुष्ठिता सन्ध्या । प्राकृती = एकगुणा -यथोक्तफलेति यावत् । गोष्ठे = गोशालायाम् । शतगुणा=शतगुणितफला । नदीषु = नदीसमीपे, जलमध्ये गायत्रीजपनिषेधस्य वक्ष्यमाणत्वात् । शतसाहस्री = लक्ष्यगुणफला । शिवसन्निधौ=भगवतो भूतपते: प्रतिमासविधे । अनन्ता = अनन्तफला । अपरिमेयफलेत्यर्थ: । स्मृता = मुनिभि: कथिता ।

एवञ्चैषोपासनीया नित्या, अननुष्ठाने निन्दाश्रवणात् । फलश्रुते: काम्या च मन्तव्या । अतएव कृष्णजन्माष्टमीव्रतनिर्णयप्रसङ्गे कृत्यसागरो यथा-"अत्राकरणे प्रत्यवायजनकतासम्बन्धेन नित्यता । करणे फलजनकतासम्बन्धेन काम्यतेत्येकस्योभयकर्मत्वं सम्बन्धभेदेनाविरुद्धमिति सुधीभिर्विभाव्यताम्" इति ।

---

पाठा (१) गृहे प्राकृतिकी । (२) दशा । (३) साहस्रा (४) अनन्ता ।

[ हिन्दी टीका ]

गाँव से बाहर की गई सन्ध्या असत्य भाषण, मदिरा गन्ध, दिन में किए गए मैथुन, तथा अधार्मिक के अन्नभक्षण से होनेवाले पापों को दूर कर देती है।

साधारण घरमें की गई सन्ध्या एकगुना अर्थात् जैसा जो फल कहा गया है वैसा, गोशाला में सौगुना, जलके नदी समीप में (गायत्री को अग्निमुखी होने के कारण जल में गायत्री जप का निषेध आगे कहा जायगा) लाख गुना और शिवमूर्त्तिके समीप में अनन्त गुना फल देने वाली होती है।

ऊपर से ज्ञातव्य है कि यह उपासनीय सन्ध्या नित्य और काम्य विधि भी है। क्योंकि न करने के पक्ष में प्रत्यवाय कहा गया है तो करने के पक्ष में प्रत्यवायपरिहार के साथ अन्य फल भी कहा गया है।

[ मूलम् ]

व्यासः–

बहिःसन्ध्या दशगुणा गोष्ठप्रस्रवणादिषु।
खात[१]तीर्थे शतगुणा साहस्री जाह्नवीजले॥

[ संस्कृत टीका ]

बहिः सन्ध्येति। साधारण गृहेऽनुष्ठित-सन्ध्याऽपेक्षया ग्रामाद् बहिरनुष्ठिता सन्ध्या दशगुणा = दशगुणित फलप्रदा। गोष्ठ प्रस्रवणादिषु = गोशालानिर्झरादिषु। खाततीर्थे = सूर्यादिदेवसमीपे, खातजलाशयादितीर्थसमीपे च। शतगुणा = शतगुणितफला। जाह्नवीजले = गङ्गाजलसमीपे। जलमध्ये गायत्रीजपस्य निषेधात्। लक्षणायास्त्याज्यत्वे जाह्नवीजलरूपार्थस्यैव स्वीकारे तु सन्ध्या पदमत्र गायत्रीजपातिरिक्तकर्मकलापपरं बोध्यम्। केचित्तु कदाचिज्जलेऽपि जपमिच्छन्ति। यथा चात्र वीरमित्रोदयः–"एवञ्चोपस्थानपर्यन्ता सन्ध्या जलेऽप्यविरुद्धा, गायत्रीजपस्तु स्थल एव।

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्।
गायत्र्यग्निमुखी यस्मात्तस्मादुत्थाय तां जपेत्॥

इति गोभिलवाक्यात्। अत्र प्रतिप्रसववाक्यं वृद्ध-मनुनाम्ना केचित्पठन्ति,

**यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत् ।**

**अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः ।। इति**

[ हिन्दी टीका ]

गाँब की अपेक्षा गाँव से बाहर अनुष्ठित संध्या दसगुना, गोशाला, झराना, सूर्य आदि देव प्रतिमा के आगे खुदे तलाब आदि रूप तीर्थ के समीप में सौगुना तथा गंगा तट में हजार गुना फल देने वाली होती है ।

ऊपर से ज्ञातव्य है कि यद्यपि मूल वचन में 'साहस्री जाह्नवीजले' का उल्लेख है किन्तु गायत्री को अग्निमुखी होने के कारण जल में गायत्री जप का निषेध रहने से जाह्नवी-जल पद का गङ्गा तट अर्थ कर लेना चाहिए ।

यदि गौरवभय से लक्षणा स्वीकार्य न हो तो संध्यापदको गायत्रीजप से अतिरिक्त कर्मसमूहपरक मान लेना चाहिए ।

यहाँ वृद्ध मनु का वचन उद्धृत करते हुए उसके अनुसार किन्हीं का कहना है कि यदि शरीर में लगाया हुआ वस्त्र गीला हो तो गायत्री जप जल में करें । अन्यथा पवित्र स्थान में कुशासन पर अनन्यमनस्क हो (खड़ा होकर) गायत्री का जप करे ।

[ मूलम् ]

सन्ध्याकालपरिमाणमाह योगियाज्ञवल्क्यः—

**ह्रासवृद्धी हि[1] सततं दिवसानां[2] यथाक्रमम् ।**

**सन्ध्या मुहूर्त्तमात्रन्तु[3] ह्रासे वृद्धौ च[4] सा समा ।।**

सर्वर्त्तुषु प्रातःसन्ध्या सायंसन्ध्या च दण्डद्वयमेव भवतीति । तथा—

**सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ ।**

'सन्धावि'ति विधानाद् 'नास्तगे' इति सन्धिरूपमुहूर्त्तादूर्ध्वं निषेधानुवादकम् । सति सम्भवे सादित्यामारभेतेत्यवंपरं वा ।

[ संस्कृत टीका ]

सन्ध्याकालेति । सन्ध्याकालपरिमाणम् = सन्ध्याकालस्य इयत्ताम् । ह्रासेति । यथाक्रमम् = क्रममनतिक्रम्य--क्रमेणेति भावः । उत्तरायणदक्षिणायन

---

पाठा० (१) च । (२) दिवारात्र्योः । (३) मुहूर्त्तं विख्याता । (४) समा स्मृता ।

क्रमेणेत्यर्थ इति तु कृत्यसागरे रत्नपाणिशर्माणः । सततम्=सर्वदा सूर्यस्य दक्षिणायने उत्तरायणे च समये, इति यावत् । दिवसानाम् = दिनानाम् - दिवारात्र्योरिति यावत् । ह्रासवृद्धी = अपचयोपचयौ भवतः । तु = किन्तु । ह्रासे = दक्षिणायनसमये, वृद्धौ=उत्तरायणसमये च । सन्ध्या=सन्ध्यासमयः । मुहूर्तमात्रमू=नाडीद्वयमात्रं भवति । अत्र ''मुहूर्तं–दण्डद्वयं, सर्वर्त्तुषु प्रातः सायं सन्ध्ये इत्यर्थ'' इत्याचारचिन्तामणिः । सा च=सन्ध्या । समा = समाना भवति नतु दिनरात्रिमानानुसारं प्रहरादिवन्न्यूनाधिकपरिमाणा भवतीति भावः । अर्थात् सर्वेषु ऋतुकालेषु प्रातःसन्ध्या सायंसन्ध्या च दण्डद्वयमेव भवतीति तात्पर्यम् ।

तथा सन्धाविति । सन्धौ = अहोरात्रस्य सन्धिसमये । ''तत्र अहः = सम्पूर्णादित्यमण्डल–दर्शनयोग्यः कालः । तद्विपरीता–रात्रिः । यस्मिन् काले खण्डमण्डलस्योपलब्धिः स सन्धिरि'' ति याज्ञवल्क्य (आ० २४) मिताक्षरा । एवञ्च एतादृशे सन्धिसमये, सन्ध्याम्=सायं सन्ध्यां प्रातःसन्ध्याञ्च । उपासीत = अनुतिष्ठेत् । नास्तगे नोद्गते रवौ=सूर्यास्तानन्तरं सूर्योदयानन्तरञ्चेमे नारम्भणीये इति भावः ।

अत्र सन्धाविति वक्ष्यमाणमध्याह्नसन्ध्याकालस्याप्युपलक्षणम् ।'' 'सन्ध्यात्रयन्तु कर्तव्यमि'त्यनेन मध्याह्नसन्ध्याया अपि योगियाज्ञ–वल्क्याभिमतत्वात् । सन्धाविति विधानात् = अत्र सन्ध्योपासनस्य सन्धावेव विधानेन तत्पूर्वोत्तरकालयोस्तदप्रसक्तेः, 'नास्तगे' इति सन्धिरूप मुहूर्त्तादूर्ध्वं निषेधानुवादकम् = 'नास्तगे' इति वचनं सायंसन्ध्यायाः सूर्यविम्बस्या–र्धास्तमनात्परतः आरम्भनिषेधस्य बोधकं निष्पद्यते । सति सम्भवे सादित्यामारभेतेत्येवं परंवा = 'सादित्यां पश्चिमां सन्ध्यामि' ति–संवर्तवाक्यैकवाक्यत्वात्,

**प्रातःसन्ध्यां सनक्षत्रां मध्याह्ने मध्यभास्कराम् ।**
**स–सूर्यां पश्चिमां सन्ध्यां तिस्रः सन्ध्या उपासते ॥**

इति देवीभागवतवचनाच्च अस्तमनात्पूर्वं विद्यमानादित्यमण्डलकालत एव सति सम्भवे सन्ध्याकर्म आरभेतेत्येवंपरं वा ।

अत्र नित्यकृत्यार्णवस्तु–''सन्धाविति विधाना 'न्नास्तगे' इति सन्धि–रूपमुहूर्त्तादूर्ध्वं निषेधानुवादकम् । वस्तुतस्तु सादित्य–सनक्षत्र–सन्ध्याद्वयोपक्रम–

प्रशंसापरमेव । अतएवाचारादर्शे 'सति सम्भवे सादित्यामारभेतेत्येवं परं वे' ति लिखितम् । अतएव–

अतीतामप्युपासीत प्रायश्चित्तीयतेऽन्यथा ।

इति कल्पान्तर–विषय–स्मृतेरप्यबाधेन समञ्जसम्'' इत्याह ।

एवमेव मूले नोद्गते इति प्रातःसन्ध्याया उदयोत्तरं समाप्ति-निषेधार्थम् । तथा च दक्षः –

रात्र्यन्तयामनाड्यौ द्वे सन्ध्यादिः काल उच्यते ।

दर्शनाद् गतिरेखायास्तदन्तो मुनिभिः स्मृतः ॥

इति । नाडी = घटिका । 'नाड्यौ द्वे' इत्यनेन नाडीद्वयं प्रारम्भकालो विवक्षितः, तस्यैव सन्ध्यादित्व सम्भवादि''ति वीरमित्रोदयः ।

अथवा मूले 'नोद्गते' इति सति सम्भवे सनक्षत्रां प्रातः सन्ध्यामारभेतेत्येवं परं वेत्यपि बोद्धव्यम् । 'नास्तगे' इत्यत्रत्याचारादर्शीयविवेचनस्यात्रापि तुल्यत्वात् । उपरिष्टात्तत्र प्रदर्शितान्यवचनैकवाक्यत्वाच्च ।

[ हिन्दी टीका ]

सन्ध्याकाल की इयत्ता (परिमाण) योगियाज्ञवल्क्य ने यों कही है–

दक्षिणायन तथा उत्तरायण के समय क्रमशः दिन रातों की घटबढ़ होती है किन्तु इस घट–बढ़ के समय याने सभी ऋतुओं में एक जैसा दो दण्ड का ही सन्ध्या समय होता है ।

सूर्य का पूर्णबिम्ब (सम्पूर्ण मण्डल) जिस समय दर्शनयोग्य हो वह दिन कहलाता है, इससे विपरीत रात्रि है तथा जिस समय आधे सूर्य विम्ब की उपलब्धि हो वह सन्धि समय है । इस सन्धि के समय (सामान्यतः) सायंसन्ध्या तथा प्रातः सन्ध्या करनी चाहिए । किन्तु मूल वचन में 'नास्तगे' कहे जाने के कारण सूर्य विम्ब का आधे भाग के अस्त हो जाने के बाद अर्थात् सूर्यास्त के बाद सायं सन्ध्या का आरम्भ नहीं करना चाहिए । अथवा यदि संभव हो तो सूर्यास्त से पूर्व सूर्य रहते ही सायंसन्ध्या का आरम्भ कर दें ।

इसी तरह मूल में 'नोद्‌गते' पढ़े जाने के कारण प्रात:सन्ध्या का उपासन उदय से पूर्व ही समाप्त हो जाय। जैसा कि दक्ष का भी कहना है, "रात्रि के अन्तिम प्रहर की दो घड़ियों से प्रात: काल शुरू होकर सूर्य विम्ब की लालिमा दर्शन तक ही मुनियों ने माना है।" इससे सिद्ध होता है कि इन्ही दो घड़ियों में सन्ध्योपासन शुरू भी हो जाय। क्योंकि यही समय प्रात: सन्ध्या का आदिम समय संभव हो सकता है।

अथवा यहाँ भी नास्तगे पद के जैसे नोद्‌गते पद का तात्पर्य होगा कि यदि संभव हो तो तारों के रहते ही प्रात:सन्ध्योपासन प्रारम्भ कर देना चाहिए।

[ मूलम् ]

उपक्रम-कालमाह संवर्त्तः-

**प्रात:सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।**
**सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् ॥**

आदित्यपदम्-अस्तमनप्राप्त[१] पूर्ण-विम्ब-परम्।

[ संस्कृत टीका ]

उपक्रमेति। उपक्रम: = ज्ञात्वाऽऽरम्भ:। अयमस्योपाय:, अनेनैतत्सिद्ध्यतीति ज्ञात्वा प्रथमारम्भ इति शब्दकल्पद्रुमः। ज्ञात्वाऽऽरम्भ उपक्रम इत्यमरश्च। तस्य कालम् = समयमाह संवर्त:-प्रात: सन्ध्यामिति। सनक्षत्राम् = नक्षत्रस्थित्युपलक्षिताम्। प्रात:सन्ध्याम्। यथाविधि = विधिमनतिक्रम्य शास्त्रोक्तविधिने ति भाव:। उपासीत = अनुतिष्ठेत्। सनक्षत्रामित्यनेन 'रात्र्यन्तयामनाड्यावि'ति दक्षवचनैकवाक्यतया रात्र्यन्तघ[illegible]ा-द्वयादुप-क्रम्य सूर्यविम्ब-रेखादर्शनान्तं प्रात:सन्ध्यामुपासीतेत्यर्थ:। सादित्याम् = आदित्यदर्शनोपलक्षिताम्। अर्धास्तमितभास्कराम्=अस्तमितार्धसूर्य-विम्बोपलक्षिताम्। पश्चिमां सन्ध्याम् = सायंसन्ध्याम्। यथाविधि उपासीत, इति पूर्वेणान्वय:। अत्र आदित्यपदमस्तमनप्राप्त पूर्णविम्बपरम्। प्राच्येति पाठपक्षे तु सूर्यास्तमनात्, प्राच्यम् = पूर्ववर्ति यत् पूर्ण विम्बम् = पूर्णमण्डलम्, तत्परं बोद्धव्यमिति भाव:।

---

पाठा (१) प्राच्य।

"सादित्यामित्यनेनोपक्रमकालो दर्शितः । अर्धास्तमितभास्करामित्यनेन भास्करस्यास्तमनसमयः समाप्तिकालो दर्शितः सच प्रत्यगातारकोदयादिति याज्ञवल्क्यैकवाक्यत्वान्नक्षत्रोदयकालोपक्षकः । यद्वा पदद्वयेन (सादित्यामिति पदेन अर्धास्तमित-भास्करामिति पदेन च) सूर्यास्तमनाव्यवहित पूर्ववर्त्ति पूर्ण सूर्य विम्बावस्थान कालमारभ्यार्धास्तमनकाल पर्यन्तः सायं सन्ध्यायाः प्रारम्भकाल उक्त :। अतएवोपक्रमकालमाहेत्युक्त्वा निबन्धृभिः श्लोकोऽयमवतारितः । एवञ्च,

**अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः ।**
**सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥**

इति दक्षवचने सूर्यपदं नक्षत्रपदञ्चात्यन्ततेजस्विसूर्यनक्षत्रपरमि''ति वीर मित्रोदयः ।

प्रकृतवचनमुपक्रम्य–"सूर्योदयात्पूर्वं घटिकाद्वयं प्रातः सन्ध्याया मुख्यकालः । तथा सायं सूर्यास्तमना(या)त्पूर्वं घटिकाद्वयम्" इति तु विद्यावाचस्पति-मधुसूदन झ-कृतं सन्ध्योपासनरहस्यम् ।

उपक्रमकाल सम्बन्धे भगवती श्रुतिरप्याह–

**अहोरात्रस्य संयोगे सन्ध्यामुपास्ते सज्योतिषि आज्योतिषो दर्शनात् । इति।**

"अर्धास्तमितभास्करामिति पक्षान्तरम् । वा शब्दाभावेऽपि विकल्पो व्रीहि यववत् । केचित्तु सादित्यत्व विशेषणमेवेदमित्याहुः । तदसङ्गतम् । सन्ध्योद्योते हि साहित्यत्त्रमात्रविधिः । स्मृत्यन्तरे तथा दर्शनात् । अर्धास्तमितत्वं (सभास्करामिति) सन्ध्यास्वरूपानुवाद इति दर्शितमिति । सनक्षत्रां सादित्यामित्युभयत्रापि 'उपक्रम्ये' ति शेष" इति ग्रन्थकार कृच्छन्दोगाह्निकम् ।

"आदित्यपदमत्र लोहितमण्डलपरमित्याचारचिन्तामाणिः ! सादित्या मित्यस्तमनप्राच्यपूर्णमण्डलवतीम्। अर्धास्तमितेति कल्पान्तरम् । एवञ्च सति सम्भवे सादित्या अर्धास्तमितादित्या वा सायंसन्ध्या, सनक्षत्रा प्रातः सन्ध्योपासनीया। तदसम्भवे तदनन्तर दण्ड द्वयाभ्यन्तर मेव । अथ किञ्चित्तद-सम्भवे गौणकालेऽप्युपासनीया, आवश्यकत्वात् । अतीतामपीत्यादि स्मृतेश्च ।

मुख्यकाले यदाऽवश्यं कर्त्तुं कर्म न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्र विधीयते ॥

परिशिष्टादग्निहोत्रवदि''त्याचारविवेक इति नित्यकृत्यार्णवः । एवमंव नित्यकृत्यरत्नमाला-टिप्पण्यपि ।

[ हिन्दी टीका ]

संवर्त ने संध्या का प्रथमारम्भ काल कहा है– ताराओं के रहते सूर्योदय के पूर्वतक अर्थात् रात्रि की अन्तिम दो घड़ी से लेकर सूर्यविम्वरेखा के दर्शन पर्यन्त प्रातः सन्ध्या की उपासना कर लेनी चाहिए कर तथा वीरमित्रोदय की मूलवचन-विवेचना के अनुसार सूर्यास्त के अव्यवहित पूर्ववर्त्ती पूर्ण सूर्यविम्ब की स्थितिकाल से आधे सूर्यविम्ब के अस्त होने के समय पर्यन्त, आचारचिन्तामणि के अनुसार रक्तवर्ण सूर्य विम्ब हो जाने पर, मधुसूदन झा कृत सन्ध्योपसानरहस्य के अनुसार सूर्यास्त के पूर्व दो घड़ी के भीतर, किन्तु ग्रन्थकार कृत छन्दोगाह्निक तथा आचारविवेक के व्याख्यानुसार अस्त होने को प्रस्तुत सूर्य के पूर्ण विम्ब रहने पर अथवा (कल्पान्तर में) आधे सूर्य (विम्ब) के देखने योग्य हो जाने पर सायं संध्या शुरू करे ।

वेदवचन का भी यही कहना है कि दिन रात की सन्धि के समय सन्ध्योपासन करे । सायंकाल में सूर्य के रहते रहते सन्ध्या आरम्भ कर दे और प्रातःकाल में सूर्योदय के पहले से आरम्भ कर सूर्यदर्शन तक सन्ध्योपासन कर ले ।

फलितार्थ में संभव हो तो अस्तमनप्राप्त (अस्त होने को प्रस्तुत) सूर्यविम्ब के रहते हुए अथवा आधे सूर्य विम्ब के डूब जाने पर सायंसंध्या तथा नक्षत्र रहते ही प्रातः संध्या उपासनीय है । यदि यह संभव न हो तो इसके अनन्तर दो दण्ड के भीतर ही, यह भी संभव न हो सके तो अन्ततः गौणकाल में भी सन्ध्योपासन अवश्य कर लेना चाहिए क्योंकि यह आवश्यक कर्म है।

[ मूलम् ]

समाप्तिकालमाह याज्ञवल्क्यः–

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥

प्रत्यक्=पश्चिमाभिमुखः । प्राक्=पूर्वाभिमुखः । आसीतेति सायंजपे आसीनतार्थम् । तिष्ठेदिति प्रातर्जपे ऊर्ध्वतार्थम् । मध्याह्नसन्ध्याजपेऽप्यूर्ध्वतैव–

**तिष्ठेदो[१]दयनात्पूर्वां मध्यममामपि शक्तितः ।**

इतिच्छन्दोगपरिशिष्टात् ।

**[ संस्कृत टीका ]**

समाप्तिकालमिति । समाप्तिकालम्=सन्ध्योपासनस्यावसानसमयम् । जपन्निति । सावित्रीम्=गायत्रीम् । जपन्=अभ्यसन् । प्रत्यक्=पश्चिमाभिमुखः । "सावित्रीं जपन् प्रत्यक्सन्ध्यामासीत । अर्थात् 'प्रत्यङ्मुख' इति लभ्यते । आ-तारकोदयात्=आ तारकोदयावधि" इति तु तन्मिताक्षरा । सन्ध्याम्=सायङ्कालिकसन्ध्याम् । आसीत =उपासीत । 'आसीत' इति सायञ्जपे आसीनतार्थम्। सायं पश्चिमाभिमुख उपविश्य तारकोदयावधि गायत्रीं जपन् सन्ध्योपासनसमापनं कुर्यादित्यर्थः ।

एवम्=प्राणायामादिपूर्वोक्तविधिमाचरन् । प्रातः=प्रातःकाले । प्राक्= पूर्वाभिमुखः । सन्ध्याम् = प्रातःकालिकसन्ध्याम् । आ सूर्यदर्शनात् = सूर्योदयावधि । तिष्ठेत्=उत्तिष्ठेत् । उत्थाय सावित्रीं जपन् अनुतिष्ठेत् । "प्राक्सन्ध्यां प्रातः समये, एवम्-पूर्वोक्तविधिमाचरन्, प्राङ्मुखः सूर्योदयावधि तिष्ठेदि" ति तु एतन्मिताक्षरा । प्रातःकाले प्राणायामादिविधिं विधाय पूर्वाभिमुखः सन् सूर्योदयावधि सन्ध्यान्त र्गत सावित्रीजप मुत्थाय कुर्वन् प्रातः सन्ध्योपासनं समापयेदित्यर्थः । एवमेव मध्याह्नसन्ध्याजपेऽपि ऊर्ध्वतैव आवश्यकी,

**तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः ।**
**आसीतोड्डूद्गमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन् ॥**

इति छन्दोगपरिशिष्टवचनात् । अत्र=ग्रन्थकारकृतच्छन्दोगाह्निके यथा "ओदयनात् (आ-उदयनात्) सूर्योदयं यावत् । तिष्ठेदित्यनेन प्रातर्मध्याह्न-सन्धयोस्तिष्ठञ्जपेत् । आसीत जपन्नित्यनेन सायमासीनो जपेदित्युक्तम् । पाश्चिमाभिमुखत्वं त्वत्र सायन्तनसावित्रीजपे "प्रत्यगातारकोदयादि" ति याज्ञवल्कोक्तस्य प्रत्यक्पदस्य पश्चिमाभिमुखार्थत्वात्" इति ।

---

पाठा० (१) तिष्ठेदुदयनात् ।

ओडूद्‌गमाद् (आ-उडूद्‌गमात्) आतारकोदयादितिरत्नाकरः। मध्याह्नजपे तु सूर्याभिमुखत्वमपि ज्ञेयम्,

**तिष्ठँश्चेद्वीक्षमाणोऽर्कं जपं कुर्यात्समाहितः।**

इति वचनादि''ति नित्यकृत्यार्णवः। ''गौडास्तु-

**द्वादश्यां पक्षयोरन्ते संक्रान्तौ श्राद्धवासरे।**
**सायंसन्ध्या न कुर्वीत पितृहा तेन जायते॥** इति

तदनाकरमाचारविरुद्धञ्चेति स्मृतिदीपिके'' त्यपि स एव। युक्तञ्चैतत्, सन्ध्योपासनस्य नित्यविधित्वात्। ''श्रुत्युक्तसन्ध्याया निषेधः, नतु तन्त्रोक्ताया'' इति शिष्टा'' इति कृत्यशिरोमणिः। कृत्यसारसमुच्चय-टिप्पणी तु सामान्यामेव निषेधति।

**[ हिन्दी टीका ]**

अब सायंकालिक तथा प्रातःकालिक सन्ध्योपासन का समाप्तिकाल कहा जाता है। पश्चिम मुंह हो बैठकर ताराओं के उदय होने तक सन्ध्या के अन्तगर्त होने वाले गायत्री का जप सम्पन्न करते हुए सायंकालिक सन्ध्योपासन का समापन करें। इसी तरह प्राणायाम आदि का आचरण कर पूर्वमुंह तथा खड़ा होकर सूर्योदय पर्यन्त सन्ध्या के अन्तर्गत गायत्रीजप सम्पन्न करते हुए प्रातःकालिक सन्ध्योपासन का समापन करें। (इसके बाद होने वाले अन्तिम सूर्यार्घदान का विचार इसी संध्या प्रकरण में आगे देखें )।

प्रातः कालिक जप की भाँति छन्दोगपरिशिष्ट के वचनानुसार मध्याह्नकालिक जप में भी खड़ा ही रहना चाहिए। इस मध्याह्न जप में योगियाज्ञवल्क्य के वचनानुसार सूर्याभिमुख होना भी आवश्यक है। साथ ही प्रातः कालिक संध्या सूर्योदय तक तथा सायंकालिक संध्या नक्षत्रोदय तक समाप्त हो जानी चाहिए।

यहाँ स्मृतिदीपिका (निबन्ध) का विवेचन है कि ''द्वादशी तिथि, दोनो पक्षों की अन्तिम तिथि, संक्रान्ति और श्राद्ध के दिनों में सायं संध्या न करे। यदि करे तो कर्ता पितृवध दोषी होता है ( इस वचन के आधार से) यह गौडों का कहना भाष्य एवम् आचार विरुद्ध है।'' यह युक्तियुक्त भी है क्योंकि संध्यावन्दन नित्य विधि है। किन्तु यहीं कृत्याशिरोमणि (तूफानी झा) का कहना है कि उक्त निषेध श्रुति प्रतिपादित सायं संध्या के लिए है, नकि तन्त्रोक्त संध्या के लिए, ऐसा शिष्टजन कहते हैं। यहीं

कृत्यसार समुच्चय की टिप्पणी उक्त (स्मृत्यन्तर) वचन से सामान्यतः सायंसंध्याओं का निषेध मानती हैं।

[ मूलम् ]

**स्नानोत्तरत्वं मध्याह्नसन्ध्यायाः प्रागेवोक्तम् ।**

[ संस्कृत टीका ]

स्नानोत्तरत्वमिति । मध्याह्नसन्ध्यायाः = मध्याह्नकालिक-सन्ध्योपासनस्य । स्नानोत्तरत्वम् = मध्याह्नस्नानानन्तर्यम् । प्रागेवोक्तम् = कात्यायनस्नान प्रकरणे 'अथातो नित्यस्नानमि'त्यादिकात्यायनवचनप्रदर्शनावसरे, अथेति तृतीयभागानन्तर्यार्थमित्यादिविवेचनेन उत्तीर्य धौतं वाससी परिधायेति कातीय-वचनेन च कथितमेव ।

[ हिन्दी टीका ]

मध्याह्नस्नान के बाद मध्याह्नसंध्या हो, यह पीछे कात्यायन स्नान प्रकरण में "उत्तीर्य धौतं वाससी परिधाय" आदि कात्यायन वचन के द्वारा कह दिया गया है।

[ टिप्पणी ]

अत्रेदं बोध्यम् । मध्याह्नसन्ध्यायाः उपासनस्य को मुख्यःकाल इति जिज्ञासायाम् कातीयनित्यकर्मपद्धतौ (पृष्ठ सं० १८) "मध्याह्ने तु- 'अध्यध 'यामादासायं सन्ध्या माध्याह्निकीप्स्यते' इति दक्षवचनेन पञ्चधा विभक्त-दिवसस्य तृतीय-भागादारभ्य पञ्चम-भागारम्भपर्यन्तं तत्कालो मुख्य" इति । परमत्र वीरमित्रोदयस्तु "मध्याह्नसन्ध्याकालस्तु अष्टधा विभक्त (दिनमान)स्य चतुर्थभाग एव, मध्याह्नस्नानोत्तरमेव कात्यायनादिभिस्तद-भिधानादि" त्याह । अत्रैव नित्यकृत्यार्णवस्तु- "मध्याह्नसंध्याया अष्टममुहूर्त्तं

**पूर्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्तिते ।**
**समसूर्येऽपि मध्याह्ने मुहूर्त्ते सप्तमोपरि ॥**

अत्र नक्षत्रपदं सूर्यपरमिती" त्याह । मध्याह्नसन्ध्याकर्त्रा प्रातःसन्ध्यां विधायापि मध्याह्नसन्ध्यामुपास्यैव भोक्तव्यम् । यथा च स्मृति वचनम्-

**स्नानसन्ध्यातर्पणादि जपहोमसुरार्चनम् ।**
**उपवासवता कार्यं सायं सन्ध्याऽऽहुतीर्विना ॥ इति ।**

एतद्वचनानुसारं मध्याह्नसन्ध्या भोजनात्पूर्वमेव विधेयेति स्फुटमवग म्यते । एकादशीव्रतस्य पारणं द्वादश्यां कर्तव्यं भवति । यदि च द्वादशी सूर्योदयानन्तरं स्वल्पा वर्तते तदा प्रातः मध्याह्नसन्ध्ये क्रमशः उषःकाले एव कर्तव्ये,

**यदा भवति चाल्पाऽपि द्वादशी पारणादिने ।**

**उषःकाले द्वयं कुर्यात् प्रातर्मध्याह्निकं तदा ॥**

इति मत्स्य-पुराणवचनात् । परमत्र कृत्यसागरस्तु "उपवासाग्रिमदिने पूर्वाह्न एव पारणं कुर्यात् । तथाहि देवलः-

**उपवासेषु सर्वेषु पूर्वाह्ने पारणं भवेत् ।**

**अन्यथा च फलस्यार्धं धर्ममेवोपसर्पति ॥ इति**

यत्र पारणायाः सूक्ष्मकालस्तत्र पारणाकरणे सन्ध्यादिकं न स्याद्, अकरणे प्रत्यवाय इति किं कार्यमत्राह कात्यायनः-

**सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः ।**

**अद्भिस्तु पारणं कुर्याद् नैतिकान्ते भुजिक्रियाम् ॥ इति**

एतावतोपवासव्रतकरणानन्तरं पारणस्यावश्यकत्वमभिहितम्" इत्याह ।

मनुना प्रातः सायं सन्ध्ये उत्तममध्यमाधमभेदैः त्रिविधे अभिहिते । यथा-

**उत्तमा तारकोपेता मध्यमा लुप्ततारका ।**

**अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता ॥ इति**

**उत्तमा सूर्य-सहिता मध्यमा लुप्तभास्करा ।**

**अधमा तारकोपेता सायंसन्ध्या त्रिधमता ॥ इति च ।**

"गौणकालमाह वृद्धमनुः-

**न प्रात र्न प्रदोषश्च सन्ध्याकालोऽतिपद्यते ।**

**मुख्यकालोऽनुकल्पश्च सर्वस्मिन् कर्मणि स्मृतः ॥**

आसङ्गवं प्रातःसन्ध्याया गौणकालः, आप्रदोषावसानं सायंसन्ध्याया गौणकालः इति माधवः इति वीरमित्रोदयः । "सङ्गवपर्यन्तं प्रातःसन्ध्यायाः गौणकालः । आप्रदोषावसानं सायं सन्ध्याया" इति मण्डनः ।

उदयास्तमयादूर्ध्वं यावत्स्याद् घटिकात्रयम् ।
तावत्सन्ध्यामुपासीत प्रायश्चित्तमतः परम् ॥

इति स्कान्दे विशेष उक्त इति सन्ध्योपासनरहस्यम् ।

अत्रैव उत्तममध्यमभेदेन गौणकालोऽपि द्विविधः-यथा क्रमेण स्मृति-संग्रहे-

सायं कालं त्रिघटिकाऽस्तादुपरि भास्वतः ।
प्रातःकाले द्विघटिके तत्र सन्ध्यां समाचरेत् ॥ इति ,
चतस्रो घटिकाः सायं गौणः कालोऽस्तिमध्यमः ।
प्रातः कालेऽप्येवमेव सन्ध्याकालो मुनीरितः ॥

"प्रातःसायंसन्ध्ययोः मुख्ययोः प्रागुक्तगौणकालातिक्रमे वक्ष्यमाण-प्रायश्चित्तं कृत्वा सन्ध्यावन्दनं कर्तव्यम् । मध्याह्नसन्ध्यायास्तु मुख्यकालातिक्रमे एव प्रायाश्चितं, तत्र विशिष्य गौण-कालानभिघानात् । वस्तुतस्तु प्रातःसायं सन्ध्ययोरपि मुख्यकालातिक्रमे एव प्रायाश्चित्तम् । वक्ष्यमाणप्रायश्चित्ताभिधायक वाक्ये तथैव प्रतीतेः । यश्च वृद्धमनुना प्रातःसायंसन्ध्ययो विशिष्य गौणकालोऽभिहितः स तस्मिन् कालेऽसम्भवति कालान्तरे तदनुष्ठानार्थम् । तत्राप्यसम्भवे तु कालान्तरेऽपि तदनुष्ठानं कार्यम् ।

'दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
शर्वर्याः प्रथमे यामे तानि कुर्यादतन्द्रितः ॥

इति वचनेन सर्वेषामहःकृत्यानां शर्वरी-प्रथमयामान्तस्य कालस्य गौणकाल-त्वाभिधानात् । तावत्पर्यन्तमकरणे तु उपवास एव प्रायश्चित्तम् ।

दिवोदितानां नित्यानां कथञ्चित्समतिक्रमे ।
स्नातकव्रतलोपे च अहोरात्रमभोजनम् ॥

इति वचनादि" ति वीरमित्रोदयः ।

अत्र च "साङ्ख्यायनगृह्यग्-'अरणेसमित्पाणिः सन्ध्या उपास्ते.... आनक्षत्राणां दर्शनात् । अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वा एवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनादि' ति ।...

हरिताः श्राद्धे साग्राः समूलकाः'' इति वायुपुराणात्। ते च, प्रचरणीयाः = प्रचरणमनुष्ठानं तत्साधनीभूताः। दीर्घाः = अरत्न्यधिक प्रमाणाः। दर्भा इति। यतो यज्ञादौ हरितादयो विशेष विहिता अतः सन्ध्यादिषु दर्भमात्रं पवित्रम् = शुचि, नतु पवित्रलक्षणमेतत्। अत इत्यस्यानन्वयात्। न चात्रापीतिपदानन्वयः, इत्यत इत्यन्वयस्य विवक्षितत्वात् अतएव पवित्रलक्षणमाह-स एव ,अनन्तेत्यादि'' इति कृत्यमहार्णव इत्यपि प्रथम तरङ्गे नित्यकृत्यार्णवः।

अत्र''अत्र च न हरितादिवर्णविशेषादरः,'हरिता यज्ञिया दर्भाः' इत्याद्युपक्रम्य-दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मसु। इत्येतद्वचनाद् वर्णपुरस्कार-प्रतीतेरि'' त्याचारचिन्तामणिः। ''अतो हेतोः सन्ध्यादिकर्मसु दर्भमात्रं प्रशस्तमित्यर्थः इति सुश्लिष्टपरिशिष्टञ्च।

ह्रस्वकुशप्रमाणविधानं यथा शब्दकल्पद्रुमोद्धृत-वायुपुराणे-

**गोकर्णमात्रास्तु कुशाः सकृच्छिन्नाः समूलकाः। इति।**

गोकर्णमात्राः= विस्तृताङ्गुष्ठानामिका परिमाणाः। प्रस्तरार्थकुशप्रमाणमपि तत्रैव-

**रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः।**
**उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमाः॥ इति**

रत्निप्रमाणाः = बद्धमुष्टिहस्तप्रमाणाः। पुनरप्येतत्प्रसङ्गमादाय सन्ध्या (२०) तरङ्गे नित्यकृत्यार्णवो यथा-''यतः प्रचरणादौ ह्रस्वादिविधिरतः सन्ध्यादौ विशेषविध्यभावाद्दर्भमात्रमेव पवित्रमङ्गमित्यर्थः, नतु पवित्रलक्षणमेतदित्याद्युक्त्वा (लिखि[1]तं) श्रीदत्तोपाध्यायैः सन्ध्याकर्मणि कुशा इत्यनेन कुशत्रयस्यापि पवित्रत्वेन प्रतिपादानात्, अनन्तर्गर्भिणत्यादिना सर्व कर्मणि कौश-द्विदलस्या-प्युपादानात्सन्ध्यादि- कर्मणिकुशत्रयं कौश द्विदलञ्चव्यवस्थापितं, सन्ध्याप्रयोगे लिखितञ्च। एतच्च कल्पतरु पारिजातविरोधात्, अत इत्यसङ्गतेश्च न ग्राह्यमित्युक्तं तत्त्वनिर्णये पक्षधरमिश्रैः'' इति।

एवमेव चण्डेश्वरः कृत्यरत्नाकरग्रन्थे उक्तवान् यत् ''श्रीदत्तोपाध्यायैस्तु सन्ध्यादिकर्मसु कुशाः पवित्रमित्यनेन कुशपत्रत्रयस्यापि पवित्रत्वेन

---

पाठा० (१) लिखितमिति लिखितमधिकमवबुध्य मयैव कोष्ठीकृतमित्यवगन्तव्यम्।

प्रतिपादना'दनन्तर्गर्भिणं साग्रमि' त्यादिवचनेन सर्वत्र वैदिककर्मसु कौश-द्विदलस्याप्युक्तत्वात् सन्ध्यादिकर्मसु कुशत्रयं, कौशं द्विदलं पवित्रं च व्यवस्थापितं, लिखितं च सन्ध्या प्रयोगे, एतच्च कल्पतरु-पारिजात-विरोधादत इत्यसङ्गतेश्च नादेयमिति '' इति ।[१] समाधानमस्य अव्यवहितोत्तरलेखे द्रष्टव्यम् ।

ननु पवित्रमिति । न तु, एतत् = दर्भाः पवित्रमित्येतत् । पवित्रलक्षणम्=पवित्रस्य कुशविशेषस्य, लक्षणम् = लक्ष्यतेऽनेनेति लक्षणम् पवित्रसंज्ञक कुशव्यवहार-प्रयोजकम् अर्थात् असाधारणो धर्म इति यावत् । कुतः ? इत्यत आह पूर्वलक्षणेति । पूर्वलक्षणबाधात् = पूर्वलक्षणस्य-अनन्तर्गर्भिणमित्यादि पवित्रलक्षणस्य, बाधापत्तेः-आनर्थक्य प्रसङ्गादिति भावः । 'दर्भाः पवित्रमि'त्यस्य लक्षणत्वे 'अतः' इत्यस्य 'सन्ध्यादिकर्मसु' इत्यनेन सह (पूर्वापराभ्याम्) अनन्वयापत्तेः । यदि च 'दर्भाः पवित्रं भवन्ति' इति लक्षणवाक्यं भवतु, तत्पवित्रञ्च सन्ध्यादिकर्मणि आवश्यकं भवतीत्यपरं विधिवाक्यं भवतु, इति न काऽपि अनन्वयकृता क्षतिरित्यत आह-वाक्यभेदेत्यादि । वाक्यभेदापत्तेश्च = पूर्वरीत्या वाक्यद्वये सति वाक्यभेदापत्तेः वज्रलेपत्वात् । वाक्यभेदे च सति तात्पर्यभेदापत्तेः । अर्थात् क्रियाऽन्वयिताऽवच्छेदकनानात्वस्थले वाक्यभेदस्याङ्गीकारेण प्रकृते प्रथमवाक्ये भवनक्रियाऽन्वयिताऽवच्छेदकस्य दर्भगतबहुत्वस्य उत्तरवाक्ये तु पवित्र-गतैकत्वस्य विद्यमानतया वाक्यभेदापत्तिः सुस्पष्टैव । अतएव ''नित्यवदन्वये प्राप्ते वाक्यभेदाङ्गीकारायोगादिति छन्दोगाह्निके विशेष'' इत्यन्यस्थलीयः परिभाषातरङ्गप्रकरणीयो नित्यकृत्यार्णवोऽपि संगच्छते ।

[ हिन्दी टीका ]

बायें हाथ में तीन कुशा (वेणी रूप उपयमन कुशत्रय विरनी) के साथ अन्य और कुश रखे, क्योंकि आगे के कर्मों के लिए ये कुश उपयोगी होंगे । अर्थात् वायें हाथ में बहुत कुश तथा दाहिने हाथ में पवित्र (पवित्री- पवित्रक, या पैता, तथा तेकुशा) रखकर सन्ध्या के प्रारम्भ में आचमन करे । यह अर्थ 'सव्ये पाणौ' इस वचन का तथा 'सव्यः सोपग्रहः' इस वचन का हुआ ।

---

पाठा० (१) कृत्यरत्नाकर, पृष्ठ-६६ । इति श्राद्धकल्पसम्पादकस्य डॉ० अशोकचटर्जीशास्त्रिणः 'श्रीदत्तस्य कालः' इत्युपक्रम्य समीक्षणम्-पृष्ठ ९५ ।

इन दोनों वचनों में 'सव्ये पाणौ कुशान् कृत्वा' तथा 'सव्यः सोपग्रहः कार्यः' इन पठित दोनों वाक्यों से यह तात्पर्यार्थ निकलता है कि वायें हाथ में कुशत्रय (वेणी रूप उपयमन कुशत्रय) के समीप अग्रिम कर्म के उपयोगी अन्य कुश भी रखे जायँ।

पवित्र (पवित्री या पैता) का लक्षण छन्दोगपरिशिष्ट में कात्यायन ने यह कहा है कि तीन पत्ते वाले एक कुश के बीच (गर्भवाले पत्ते को हटाकर) शेष बचे दोनों पत्ते जिनका अग्रभाग छिन्न नहीं हुआ हो, प्रादेश (अंगूठे की नोंक से लेकर तर्जनी की नोंक की दूरी तक, मैथिली में ठुट्ठी) के प्रमाण (बराबर) हो तथा नीचे के भाग में ब्रह्मग्रन्थि से बाँधे गये हों तो वे एक पवित्र(क) कहलाते हैं। यही पवित्र पिञ्जली (दर्भपिञ्जली) भी कहलाता है जिसका उपयोग आज्योत्पवन आदि (कर्म) में होता है। सारांश यह हुआ कि सभी वैध कर्म में बायें हाथ में कुशत्रय तथा दहिने हाथ में पूर्वोक्त कुशपत्र स्वरूप पवित्र होना चाहिए। किन्तु जप, होम, दान, स्वाध्याय, तथा पितृतर्पण के समय दाहिने हाथ में पूर्वलिखित हारीतवचन के अनुसार कुशत्रय का धारण भी हो। मूल वचन में पठित पवित्र पद का अर्थ शुचि-प्रशस्त है। इसे पवित्रलक्षण नहीं मान सकते क्योंकि 'अतः' इस पद का अनन्वय (अन्वय न हो पाना) दोष की आपत्ति हो जायगी। यह आचारादर्शानुगामी विवेचन नित्यकृत्यार्णव में उद्धृत कृत्यमहार्णव-निबन्ध (के प्रणेता म. म. वाचस्पतिमिश्र) का है। परन्तु नित्यकृत्यार्णव में ही उद्धृत म. म. देवनाथ ठक्कुर विनिर्मित स्मृतिकौमुदी का पवित्र के सम्बन्ध में कहना है कि वास्तव में देखा जाय तो बिचला पत्ता नहीं हो यह नियम तो उचित है किन्तु कितने कुशपत्र हो इसका कोई भी नियम नहीं किया जा सकता है।

यहीं उक्त स्मृतिकौमुदीं का मत उद्धृत करते हुए नित्यकृत्यरत्नमालाटिप्पणीकार का कथन है कि " किन्ही के मत से एक (कुश) पत्र का ही पवित्र होना माना गया है। इस मत में 'पवित्रे स्थो वैष्णव्यौ" इस श्रुतिवाक्य में पवित्र पद का उसके अवयव-एक पत्ररूप अर्थ में लक्षणा करने का क्लेश भी नहीं उठाना पड़ता है। (क्योंकि पवित्र एक पत्र का ही माना गया है)। इसी हेतु वीरेश्वर आदि के द्वारा निर्मित संस्कारपद्धतियों में चूड़ाकरण प्रकरण पर इक्कीस दर्भपिञ्जलियों के लिए उतने ही कुशपत्रों का ग्रहण करना कहा गया है। हमें (उक्त टिप्पणीकार को) तो ऐसा प्रतीत होता है कि पितृकर्म में एकपत्ते का भी पवित्र हो किन्तु इससे अन्यत्र दो पत्तों का। इसीलिए आपस्तम्बने सामान्य पितृकार्यकी अपेक्षा आभ्युदयिकश्राद्ध में विशेषरूप से दो पत्तों का पवित्र होने का विधान किया है। यह बात महामहो० हर्षनाथ शर्म प्रणीत संस्कारदीपक तथा गोभिलगृह्यसूत्र की मेरी टीका में भी देखी जा सकती है। कितने निबन्धकार तो संध्यावन्दन आदि के लिए तीन कुशपत्रों का बना पवित्र होना स्वीकारते है।"

छन्दोगपरिशिष्ट में कहे गए कुशों के सम्बन्ध में 'ह्रस्वा:' आदि अग्रिम वचनों से कुछ विशेष बातें बताई जा रही हैं। ग्रन्थमें उद्धृत इस वचन के पूर्व पठित एक श्लोक स्वरूप वचनांश का भी अर्थ यह है कि–हरे वर्ण के कुश, दर्श आदि यज्ञ के लिए उपयोगी हैं तो पीतवर्णवाले कुश पञ्चयज्ञ के लिए, जड़ तथा अग्रभाग सहित कुश पितृकर्म एवं देवकर्म के लिए (किन्तु वायुपुराण के वचनानुसार श्राद्ध में गोकर्ण प्रमाण (वित्तेभर के) हरे और जड़ सहित अग्रभाग वाले कुश ही होने चाहिएँ) तथा लम्बे (निमूठ हाथके बराबर) कुश ही प्रस्तरण कार्य के लिए उपयुक्त हैं।

सारांश यह हुआ कि हरे साग्र, समूलक, गोकर्ण प्रमाण छोटे कुश ही जिस कारण प्रचरणीय (प्रचरण का अर्थ होता है–अनुष्ठान। फलत: इसके साधनीभूत अर्थात् उपयोगी) हैं। इस हेतु संध्यावन्दन आदि के लिए कुश के संबन्ध में विशेष (हरे आदि वर्ण विशेष) का विधान न होने के कारण कुशमात्र पवित्र = अङ्गरूप शुद्धिकारक प्रशस्त माने जाते हैं। एतावता स्वत: सिद्ध हो जाता है कि 'ह्रस्वा: प्रचरणीया: स्यु:' यह वचन पवित्र का लक्षणबोधक नहीं, अपितु सन्ध्योपासन समय के लिए आवश्यक कुशों की शुद्धता-प्रशस्तता-का ही बोधक है। यदि 'दर्भा: पवित्रम्' इस वाक्य को पवित्र का लक्षण का मान लें तो पूर्वपठिंत 'अनन्तर्गर्भिणम्' इत्यादि लक्षणवाक्य के बाध की आपत्ति हो जायगी। दूसरी बात, यदि ''दर्भा: पवित्रम्'' इसे लक्षण वाक्य माना जाय तो इसी वचन में कहे गए 'अत:' इसके साथ ''सन्ध्यादि कर्मणि (सु)'' इस पद का अन्वय न हो सकने के कारण अनन्वयापत्तिरूप द्वितीय आपत्ति भी हो जायगी। यदि ऐसा अन्वय करें कि दर्भ (कुश) पवित्र है– यह लक्षण वाक्य हुआ, और वह पवित्र सन्ध्यादिकर्म में आवश्यक है, तो भिन्न-भिन्न प्रकार के दो वाक्य हो जाने के कारण वाक्यभेद' की आपत्ति हो जायगी। (यदि सामान्यत: अन्वय बन रहा हो तो वाक्यभेद को स्वीकारना वस्तुत: सिद्धान्त विरुद्ध है)। अत: 'दर्भा: पवित्रम्' इसे पवित्र का लक्षण मानना कतई उचित नहीं। यह विवेचन ग्रन्थकार म. म. श्रीदत्तोपाध्याय का है।

परन्तु सन्ध्यातरङ्ग में नित्यकृत्यार्णव ने श्रीदत्तोपाध्याय के मत का उपपादन करते हुए लिखा है कि–''कुशा: पवित्रमित्युक्तमत: सन्ध्यादिकर्मसु इस वचन के अनुसार कुशत्रय की शुद्धि का प्रतिपादन किया जाता है तो 'अनन्तर्गर्भिणम्' इत्यादि वचन के अनुसार सभी वैध कर्मों में दो पत्ते पूर्वोक्त कुश (पवित्र) का उपपादन किया गया है। अत: सन्ध्या आदि कर्म में कुशत्रय (तेकुशा) और दो पत्तेवाला पवित्र (कुशविशेष) का होना सिद्धान्तित करते हुए श्री दत्तोपाध्यायने सन्ध्याप्रयोग प्रकरण में (वामे बहून् कुशान् दक्षिणे पाणौ पवित्रं कुशत्रयञ्च धृत्वा, आदि) लिख भी दिया है। परन्तु इस मत में कल्पतरु और पारिजात का विरोध होने तथा 'अत:' इस पद की असङ्गति भी हो जाने के कारण 'तत्त्वनिर्णय' नामक अपने निबन्धग्रन्थ में पक्षधर मिश्र ने स्व सहमति प्रकट नहीं की है।''

इसी तरह कृत्यरत्नाकर (पृ० सं० ६६) नामक अपने ग्रन्थ में म० म० चण्डेश्वर ठाकुर ने भी ऐसा ही मत प्रदर्शित किया है।

इसका समाधान अव्यवहित आगे के लेख में देखें।

[ मूलम् ]

अत्र चाचमनात् प्रागेव पवित्रधारणम्,

**आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः।**
**नोच्छिष्टस्तु[1] भवेत्तत्र भुक्तशेषन्तु वर्जयेत्॥**

इति लघुहारीतदर्शनात्। अन्यत्र जपोपयुक्तकुशत्रयधारणमपि दक्षिणकरे पवित्रधारणावसर एव कुर्वन्ति। अविरुद्धञ्चैतत्।

[ संस्कृत टीका ]

अत्र चेति। अत्र च= सन्ध्योपासनविधौ च। आचमनात् = आचमनकरणात्। प्रागेव = पूर्वमेव। पवित्र धारणं करणीयम् आचम्येत्याद्यग्रिम लघुहारीतवचनानुरोधात्। तथाहि पवित्रेण = पूर्व प्रतिपादित कुशविशेषेण, सहितः, द्विजोत्तमः = आचमनकर्त्ता। आचम्य = आचमनकरणोत्तरमपि। नित्यम् = सदैव, प्रयतः पवित्र एव तिष्ठति। तत्र = पवित्रसहिताचमन स्थले। अच्छिष्टस्तु न भवेत् = उपिवत्रस्तु कथमपि नैव भवेत्। (किन्तु) भुक्तशेषम् = पीतावशिष्टं जलम्। वर्जयेत् = परित्यजेत्। आचारचिन्तामण्यनुसारं "नोच्छिष्टम्भवेत्तेन" इति पाठपक्षे तु तेन = पवित्रसहिताचमनेन। उच्छिष्टम् न भवेत् = तत्पवित्रमपवित्रं नैव भवेदित्यर्थो बोध्यः। अतएव-"पवित्रमिदमाचमने नोच्छिष्टं भवतीत्याह लघुहारीतः-आचमम्य प्रयतो नित्यं.....इती" ति नित्यकृत्यरत्नमाला-टिप्पण्यपि संगच्छते। तु = किन्तु, भुक्तशेषम् = भोजनावसरे परिहितं पवित्रं भोजनानन्तरमवश्यं वर्जये दित्यत्यर्थोऽप्यवगन्तव्य :-

**सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम्।**
**नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्॥**

इति कात्यायनवाक्यैकवाक्यत्वात्।

अन्यत्रेति। धारणमपीत्यत्रापि भिन्नक्रमतया अन्यत्रेत्यत्र सम्बद्ध्यते। एवञ्च, अन्यत्रापि = सन्ध्यावन्दनादन्यस्थलेपि जपोपयुक्त कुशत्रयधारणम् =

---

पाठा० (१) नोच्छिष्टम्भवेत्तेन

= जपोपयोगिनः कुशत्रयस्य धारणम् । दक्षिण करे = वामेतरहस्ते । पवित्र-धारणावसर एव=पूर्वलक्षणक पवित्रधारणकाले एवं । कुर्वन्ति शिष्टा इति शेषः । एतत् = दक्षिण करे पवित्रेण सह कुश त्रय धारणम् । अविरोधि 'सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः' इति छन्दोगपरिशिष्ट वचनेन,

**जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।**
**अशून्यन्तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥**

इति लघुहारीत-वचनेन चोभयोरविरोधेन धारण-विधानात् । अतएव-''एकं सर्वत्र वैधे कर्मणि वामपाणौ कुशत्रयं यथोक्तकुशपत्रद्वयं धार्यम् । जपहोमदानस्वाध्यायतर्पणेषु तु दक्षिणकरे कुशत्रयधारणमपि पूर्वलिखितलघुहारीतवचनादिती''त्यनुपदमेव प्रदर्शितकृत्यमहार्णवोऽपि संगच्छते । अतएव च''एतच्च पवित्रादि दक्षिण करानामिकायांम्धार्य उक्त लघुहारीतवचनाद्, 'अनामिकायां तद्धार्यं दक्षिणस्य करस्य च' इति देवीपुराणे हेमधारण विधानात्तत्सहित-रजत-कुशानामपि तत्रैव धारणौचित्यात् । 'तर्जन्यां रजतं धार्यमि' ति निर्मूल मिति कल्पतरु प्रभृतयः । गौडास्तु-'तर्जनी रूप्यसंयुक्ते 'ति विद्याकरधृतवचनात्तर्जन्यामेव रजतं धार्यमित्याहुरिति नित्यकृत्य-रत्नमालाटिप्पण्यपि ।

मध्यामाऽनामिकाभ्यां वा कुशधारणमिति छन्दोगाह्निकाचारविवेकस्मृति-सारा इति प्र०तरङ्गे नित्यकृत्यार्णवः । जपपदं होमादि परमपि मन्तव्यम्,

**स्नाने दाने जपे होमे स्वाध्याये पितृकर्मणि ।**
**करौ सदर्भौ कुर्वीत तथा सन्ध्याऽभिवादने ॥**

इत्याह्निकसूत्रावलीधृत-स्मृतिवचनानुसारं सन्ध्योपासन समयेऽभिवादन समयेऽपि च करद्वये पूर्वोक्तरीत्या कुशानां धारणमविरोधि बोध्यम् ।

एतेन म० म० पक्षधरमिश्र म० म० चण्डेश्वर ठक्कुर प्रदर्शिता 'अतः' इत्य (इति पद) स्यासङ्गति-पुरस्सरा 'न ग्राह्यं' 'नादेयमि' तिपदाभ्यां तद-(स्वा) सहमतिरपि समाहिता, सन्ध्यादिसमये दक्षिणकरे उभयविध (कुशत्रयस्य कौशद्विदल-रूप-पवित्रस्य च) कुशयोरविरोधन धारणस्य वचनैर्बोधितत्वात् ।

पितृतर्पणस्य सन्ध्योपासनोत्तरविधेयत्वेन प्रदर्शितलघुंहरीतवचनस्यापि सन्ध्यास्थलीयाभिप्राय (बोध) कत्वात् । परवर्त्ति कृत्यमहार्णवादि (म० म० वाचस्पति मिश्रादि कृत) निबन्धैरङ्गीकृतत्वाच्च । "अत:" इत्यस्य सङ्गते: ग्रन्थकारै: श्रीदत्तोपाध्यायैरपि वचनार्थ-विवेचनवसरे प्रदर्शितत्वाच्च ।

[ हिन्दी टीका ]

यहाँ ग्रन्थकार का विवेचन है कि सन्ध्याकर्म में आचमन के पहले ही पवित्र का धारण करना चाहिए क्योंकि लघुहारीत का कहना है कि आचमनकर्त्ता पवित्र से युक्त होकर आचमन करने पर सदैव पवित्र ही रहता है, कभी भी अपवित्र नहीं होता । साथ ही इस आचमन से वह पहना गया पवित्र भी अपवित्र नहीं होता । किन्तु आचमन से बचे जल को तथा भोजन के समय पहने पवित्र को भोजन के बाद त्याग देना चाहिए ।

सन्ध्यावन्दन से अन्य स्थल में भी जपके उपयोगी कुशत्रय (तेकुशा) का धारण दाहिने हाथ में पवित्र धारण के समय ही शिष्टलोग करते हैं । क्योंकि विभिन्न वचनों के द्वारा प्रतिपादित होने के कारण दोनों का सहैव धारण अविरुद्ध है । अर्थात्-(ऊपर से ज्ञातव्य है कि) "बायें हाथ में बहुत कुश तो दाहिने हाथ में पवित्र रखा जाय" इस छन्दोगपरिशिष्ट कथन (वचन) से तथा जप, होम, दान, स्वाध्याय एवं पितृतर्पण के समय दाहिने हाथ में सोना, चाँदी, या कुश रखें इस लघु हारीत वचन से दाहिने हाथ में कुशत्रय (तेकुशा) एवं पवित्र (पवित्री) का धारण करना अविरोध भाव से विहित सिद्ध होता है । इसीलिए कृत्यमहार्णव निबन्ध का भी विवेचन है कि सन्ध्यावन्दन आदि सभी वैध कर्मों में बायें हाथ में कुशत्रय तो दाहिने हाथ में पूर्वोक्त कुश के दो पत्तों से बने पवित्र का भी धारण किया जाय, किन्तु जप, होम, दान, स्वाध्याय तथा पितृतर्पण के समय पूर्वोक्त लघुहारीत के वचनानुसार दाहिने हाथ में कुशत्रय का भी धारण हो ।

यहीं नित्यकृत्यरत्नमालाटिप्पणी का भी कहना है कि उक्त लघुहारीतवचनानुसार तथा "दाहिने हाथ की अनामिका अंगुलि में सोने (की अंगूठी) का धारण किया जाय" इस देवीपुराण के वचनानुसार यदि सोने के धारण का विधान अनामिका अंगुलि में किया जाता है तो सोने के साथ कहे गए चाँदी तथा कुश (की अंगूठियों) का भी वहीं धारण करना उचित है । 'तर्जनी अंगुलि में चाँदी (की अंगूठी) धारण की जाय' यह कथन निर्मूल है ऐसा कल्पतरु आदि का मन्तव्य है । यहीं गौडों का कहना है कि 'तर्जनीरूप्यसंयुक्ता' आदि विद्याकरधृतवचनानुसार तर्जनी अंगुलिमें ही चाँदी (की अंगूठी) धारण की जाय ।

ऊपर से यह भी ज्ञातव्य है कि ग्रन्थकार के उक्त विवेचन में कहे गए 'जपोपयुक्त' आदि वाली पङ्क्ति के जप पद का अर्थ (तात्पर्य) उक्त लघुहारीत वचन तथा अभी अभी आगे कहे जाने वाले आह्निकसूत्रावली में उद्धृत स्मृति वचन के आधार से जप, होम, दान, स्वाध्याय, पितृत र्पण, सन्ध्योपासन तथा अभिवादन भी होगा। फलतः सारांश में सिद्ध हुआ कि जप आदि तथा सन्ध्योपासन के समय भी पूर्वोक्त रीति से बायें हाथ में कुशत्रय और दाहिने हाथ में पवित्र के साथ कुशत्रय का धारण भी परस्पर अविरोधी है।

एतावता, म० म० पक्षधर मिश्र एवं म० म० चण्डेश्वर ठक्कुर ने पीछे जो कहा था कि "श्रीदत्तोपाध्याय का प्रकृत विवेचन कल्पतरु एवं पारिजात का विरोध तथा 'अतः" पदकी असङ्गति हो जाने के कारण ग्राह्य (उपादेय) नहीं है", इसका भी समाधान हो गया। क्योंकि सन्ध्योपासन आदि के समय दाहिने हाथ में पवित्र के साथ ही कुशत्रय का धारण करना अनेक वचनों से प्रतिपादित (सम्मत) है। दूसरी बात, लघुहारीत वचन में जो पितृ-तर्पण पद का उल्लेख हुआ है उसका तात्पर्य सन्ध्योपासन के बाद ही अनुष्ठेय होने के कारण समानधर्मक सन्ध्यावन्दन स्थल के लिए भी मानना होगा। तीसरी बात, आह्निकसूत्रावली में उद्धृत स्मृतिवचन के साथ उक्त लघुहारीत वचन की एकवाक्यता करने पर लघुहारीत वचन का भी स्पष्ट रूप में ही सन्ध्यावन्दन भी एक अर्थ मान्य हो जायगा। चौथी बात, इसी सब के फलस्वरुप परवर्त्ती कृत्यमहार्णव आदि निबन्धने भी श्रीदत्तोपाध्याय के विवेचन पर किसी भी प्रकार की आपत्ति (विरोध) न उठातें हुएं सहमति व्यक्त की हैं। पाँचवीं बात, "अतः" पद की संगति स्वयं ग्रन्थकार ने अपने विवेचन में दिखाई है तो साथ ही कृत्यमहार्णव (निबन्ध) प्रणेता म० म० वाचस्पति मिश्र ने भी अपने इस निबन्ध ग्रन्थ में उसी तरह संगति दिखाई है। इसी तरह 'अतो हेतोः सन्ध्यादिकर्मसु दर्भमात्रं प्रशस्तमित्यर्थः" आदि पंक्तियों के द्वारा द्वैत (सुश्लिष्ट) परिशिष्ट प्रणेता म० म० केशव मिश्र (म० म० कल्याण मिश्र) ने भी संगति के संबन्ध में स्पष्ट मत प्रतिपादन किया है। निष्कर्ष में श्रीदत्तोपाध्याय का एतत्प्रसंगी भी अन्तिम सारभूत विवेचन "अविरुद्धञ्चैत त्" (दाहिने हाथ में पवित्र के साथ कुशत्रय का धारण अविरुद्ध है) सर्वथा उपयुक्त प्रतीत होता है।

[ मूलम् ]

लघुहारीतः-

**दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम्।**
**असंख्यातञ्च यज्जप्तं तत्सर्वं निष्फलं भवेत्॥**

[ संस्कृत टीका ]

दर्भ हीनेति । सुगममेतद्वचनम् । परं नित्यकृत्यार्णवस्तु-''कुशधारणमावश्यकम् ।

**दर्भहीनञ्च यत्कर्म यच्चदानं विनोदकम् ।**
**असंख्यातञ्च यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥**

इति कूर्मपुराणीय-निन्दार्थवादात् । इदन्तु विचारमर्हति 'सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः' इत्यनेन पवित्रधारणं बोधितम् । तेन विना कुशमात्र-धारणेन कर्म कुर्वन्तीति शिष्टाचारः कथं संगच्छताम् ? कथञ्च सुवर्णरजत-कुशैर्विना पवित्रधारणमात्रेण कर्माचरणम् ? दर्भाःपवित्रमित्यत्र पवित्रपदं शुद्ध्यर्थकन्तु तल्लक्षणपरमिति श्रीदत्तोपाध्याय व्याख्याने कुशस्य पवित्रत्वाभाव इति ।

अत्रेदं प्रतिभाति-'पवित्रं तु कुशं कुर्या (त्साग्र प्रादेशसम्मितम्) दित्यादिना कुशस्य पवित्रत्वबोधनात् 'अनन्तर्गर्भिणमि'त्यादिना च कुशपत्रद्व-यस्येत्यनयोरन्यतरेण कर्म निर्वाहः । दर्भहीनञ्चेत्यादिना दर्भं विनैव निष्फलत्वबोध-नेन रजतादि विनाऽपि कर्म-सम्पत्तिरर्थात् प्रतीयत इति सकलशिष्टाचारसङ्गतिः.. इति नरहरि मिश्र द्वैत निर्णयः इति । इतोऽधिकमग्रे-''जपे होमे तथा दाने'' इति लघु हारीतवचन व्याख्यावसरे द्रष्टव्यम् । कुशाभावे आह्निकसूत्रावल्यनुसारं कातीय-भाष्यानुसारं वा कुशप्रतिनिधयो यथा

**'कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।**
**काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचिताः ॥**

**कुशाः काशाः शरा दूर्वा यवगोधूमवल्वजाः ।**
**सुवर्णं रजतं ताम्रं दश दर्भाः प्रकीर्त्तिताः ॥** इति

वल्वजः = उलप इति हेमचन्द्रः । वाव इति ख्याततृणमित्यमर इति शब्द-कल्पद्रुमः ।

[ हिन्दी टीका ]

कुश के विना की गई संध्या, जल के बिना किया गया दान, तथा विना गिने किया गया जप (इसीलिए कीर्त्तन तथा स्तुति प्रसंग से किये गए ईश्वरनामोच्चारण में यह दोष नहीं लगता) सब के सब निरर्थक हो जाते हैं । यह हुआ मूलवचन का अर्थ ।

यहाँ नित्यकृत्यार्णव में उद्धृत म० म० नरहरि मिश्र (म० म० द्वितीय वाचस्पति मिश्र के सुपुत्र) रचित द्वैत निर्णय का कहना है कि

''कुश के विना किया गया सन्ध्या आदि वैध कर्म निरर्थक हो जाते हैं-इत्यादि कूर्मपुराणीय वैध कर्मों में कुशधारण आवश्यक है । अब विचारणीय प्रश्न यह हो सकता है कि 'बायें हाथ में वेणीरूप उपयमन कुशत्रय सहित बहुत कुश तो दाहिने हाथ में पवित्र (पवित्री या पवित्रक) धारण करना चाहिए' इस छन्दोगपरिशिष्ट वचनानुसार पवित्रधारण बोधित होता है । किन्तु इस पवित्र धारण के विना भी केवल कुश धारण से भी शिष्टजन कर्म करते हैं, तब यह शिष्टाचार कैसे संगत होगा ? और सोना, चाँदी, तथा कुशत्रय के विना भी केवल पवित्री (पवित्रक) धारण से भी कर्म का आचरण होता है, यह केसे संगत होगा ? क्योंकि 'दर्भाः पवित्रमित्युक्तमतः सन्ध्यादि कर्मणि' इस (पूर्वोक्त) छन्दोगपरिशिष्ट वचन की व्याख्या में श्री दत्तोपाध्याय ने एक कुश को पवित्र (शुद्ध प्रशस्त) नहीं माना है ।

इसके उत्तर में ऐसा प्रतीत होता है कि 'अग्रभाग सहित, प्रदेश के बराबर कुश का पवित्र करना चाहिए । इस (आचार चिन्तामणि में उद्धृत हारीत) वचन के अनुसार एक कुश (पत्रत्रय) भी पवित्र माना जाता है, तथा पूर्वोक्त 'अनन्तर्गर्भिणम्' इत्यादि छन्दोग-परिशिष्ट वचनानुसार बीच के पत्ते से रहित दो कुशपत्र भी । अतः इन दोनों में किसी से भी कर्म का निर्वाह किया जा सकता है ।

'दर्भहीनञ्च' इत्यादि पूर्वोक्त कर्मपुराणीय वचन से कुश के विना कर्म मात्र को निष्फल हो जाने के कथन से कहा जा सकता हे कि सोना एवं चाँदी के अभाव में भी केवल कुश धारण से भी कर्म की पूर्णता हो सकती है ।''

इससे अधिक आगे ''जपे होमे तथा दान' इत्यादि लघुहारीतवचन के व्याख्या प्रसंग पर देखें ।

कुश के अभाव में आह्निकसूत्रावली या कातीय भाष्य के अनुसार कुश के प्रतिनिधि ये दश माने गए हैं । यथा- कुश, काश, शर (मूज), दूभ, जौ, गेहू के पौधे, वल्वज (बल्ज-बगई), सोना, चाँदी तथा ताँवा । इनमें भी प्रथमतः कुश के अभाव में काश का उपयोग करें । इसके भी अभाव में किसी का भी उप उपयोग किया जा सकता है ।

ऊपर से समझें कि सोने, चाँदी, या ताँबे की अंगूठी बनवा कर पहन लेने से वह सदैव पवित्री-पवित्रक- का काम देती है और उसे अपवित्र होने की आशंका भी नहीं होती ।

[ मूलम् ]

योगियाज्ञवल्क्यः-

ऐशान्यभिमुखो भूत्वा शुचिः प्रयतमानसः ।
आचान्तः पुनराचामेदृतमित्यभिमन्त्र्य च ॥
आन्तरं शुद्ध्यति ह्येवमन्नपानमलीकृतम् ।

[ संस्कृत टीका ]

ऐशान्येति । सन्ध्योपासनेषु *दिङ्नियमं पुनराचमनञ्चाह ऐशान्येत्यादिना । शुचिः = बाह्यशौचसम्पन्नः । प्रयतमानसः = पवित्रचित्तश्च सन् । ऐशान्यभिमुखः = ईशानकोण सम्मुखः । भूत्वा । आचान्तः कृताचमनः । ऋतमित्यभिमन्त्र्य = ऋतञ्च सत्यञ्चेत्यादिसूक्तेन करस्थितजलमभिमन्त्रितं कृत्वा । पुनराचामेच्च । "आचन्तः, पुनराचामेत् = द्विराचामेदित्याचारचिन्तामणिः । साम्प्रदायिकास्तु आचान्तः = कृतनै मित्ति काचमनः, पुनराचामेत्=ऋतमित्य भिमन्त्रितमित्यर्थ इत्याहुरि" ति नि० कृ० । एवं हि कृते । अन्नपानमलीकृतम् = अशुद्धान्नजलयोः क्रमशः भक्षणेन पानेन च मलिनीभूतम् । आन्तरम् = आभ्यन्तरं तेजः । शुद्ध्यति = निर्मलं भवतीत्यर्थः ।

प्राङ्मुखः सततं विप्रःसन्ध्योपासनमाचरेत् ।

इति वीरमित्रोद्धृतकूर्मपुराण (उत्तरार्द्ध १८।२७) वचनेन;'क्षालित-पाणिपादः शुचौ देश उपविश्य नित्यं बद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्ये करौ कृत्वाऽशूद्रानीतोदकैर्द्विजातयो यथाक्रमं हृत्कण्ठतालुगैराचामन्ती'-ति कात्यायनोक्तगृह्यपरिशिष्टशौचसूत्रेण ; "अथातः सन्ध्योपासन-विधिं व्याख्यास्यामः । सुप्रक्षालित-पाणिपादवदन उपविश्योपस्पृश्य प्रागग्रेषु दर्भेषु प्राङ्मुख उदङ्मुखो वा यज्ञोपदीती" ति गोभिलवचनेन च ईशानकोणाभिमुखत्वेन सह प्राङ्मुखत्वस्य उदङ्मुखत्वस्य वा विकल्पो बोद्धव्यः । परं मैथिलनिबन्धृणां तदनुगामिनाञ्चात्र ऐशान्यभिमुखत्वे विशेष-पक्षपातो दृश्यते ।

*टिप्पणी हिन्दी टीका-समाप्तौ द्रष्टव्या ।

अत्र "अत्र सन्ध्योपक्रमे गोभिल-कात्यायनाभ्यां यद्यपि अघमर्षसूक्त-पाठो नोक्तस्तथापि कामधेनु-सन्ध्योद्योतानुसारात्सकल-शिष्ट-समाचाराच्च स आदौ युक्त एवे" ति नित्यकृत्यरत्नमालाटिप्पणी।

[ हिन्दी टीका ]

अब तीनों सन्ध्योपासनों के सम्बन्ध में 'ऐशान्याभिमुख:' इत्यादि वचन से दिशा का नियम तथा पुनराचमन कहा जा रहा है।

स्नान द्वारा बाह्य शौच तथा प्रसन्नचित्त होकर ईशान कोण की ओर अभिमुख हो आचमन कर "ऋतञ्च सत्यञ्च" इत्यादि सूक्त पठन के द्वारा अभिमन्त्रित जल से पुन: आचमन करे अर्थात् द्विराचमन करे, क्योंकि दूषित अन्न और जल के क्रमश: खाने पीने से धूमिल आन्तरिक तेज निर्मल हो उठता है।

ऊपर से ज्ञातव्य है कि सन्ध्योपासनों के समय दिशा के संबन्ध में कूर्मपुराण, कात्यायनगृह्य परिशिष्ट शौच सूत्र तथा गोभिलगृह्यसूत्र के अनुसार ईशान कोण के विकल्प मे पूरब तथा उत्तर दिशा भी है। किन्तु मैथिल निबन्धकार तथा तदनुगामी पद्धति निर्माताओं का विशेष पक्षपात ईशान कोण की ओर (अभिमुख हो सन्ध्योपासन में) देखा जाता है।

[ टिप्पणी ]

अत्रेदं बोध्यम्।

उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसा

इति छन्दोग-परिशिष्ट-वचनेन,

**ब्रह्मवादिन: सूर्याभिमुखा: सन्ध्यायां गायत्र्यभिमन्त्रिता अप ऊर्ध्वमुत्क्षिपन्ति.....उद्यन्तमस्तं यान्तमभिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते**

इति तैत्तिरीयश्रुतिवचनेन,

**अथ पुष्पाञ्जलिं क्षिप्त्वा भानवे चोर्ध्वबाहुक:।**
**उदुत्यञ्च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि॥**

इति नरसिंहपुराण-वचनेन,

पुष्पाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षेत, उद्वयंतम, उदुत्यं, चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्ति रूपमुपस्थानम्

इति कात्यायनवचनेन,

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥

इति याज्ञवल्क्यवचनेन ;

तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः ।
आसीतोड्डूद्गमाच्चान्त्यां सन्ध्यां पूर्वंत्रिकं जपन् ॥

इति छन्दोगपरिशिष्टवचनेन ;

तिष्ठँश्चेद् वीक्षमाणोऽर्कं जपं कुर्यात् समाहितः ।

इति योगि-याज्ञवल्क्यवचनेन ;

आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम् ।
ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

इति तर्पणोत्तर-सूर्यार्घ्यदानकर्म-विधायिना विष्णुपुणव-वचनेन च( सन्ध्योपासन-प्रकरणीयैराचारादर्शोद्धृतैरेव विशेषवचनैरेभिः) निश्चेतुं शक्यते यद् मध्याह्नसायंसन्ध्योपासनयोः समये अर्घोपस्थानजपान्तिमार्घदानकर्माणि अर्थादर्घाद्यर्घान्तकर्माणि (तर्पणकर्मेतराणि) सूर्याभिमुख्येनैव भवन्तु । अन्यान्याचमनादीनि अर्थादाचमनाद्याचमनान्त-कर्माणि ईशानकोण-पूर्वोत्तरा-भिमुख्येन भविष्यन्ति । एवमेव प्रातः सन्ध्योपासनेऽपि।

अतएव-" आचम्योत्थाय सप्रणवव्याहृति-सावित्र्या प्रत्यर्कमेकमञ्जलि-मञ्जलित्रयं वा निःक्षिप्योर्ध्वबाहुरादित्याभिमुखः .....सूर्यमुपतिष्ठेत । तत्र.... इति षड्भिर्मन्त्रैर्मध्याह्ने । प्रातः सायम् सन्ध्ययोस्तुः...इति ऋक् त्रयेण । सायं पश्चिमाभिमुखमुपस्थानमिति विशेषः । इदन्तु बोध्यम्। उपस्थानात्प्राक्तनमर्घदानन्तु सूर्याभिमुखमेवेति निर्विवादमतः प्राक्तन माचमना-द्याचमनान्तं कर्मजातं यथोक्तं प्रागुदङ्मुखमैशान्यभिमुखं वेति सप्रमाणमुक्तम-

धस्तादिती'' ति सामवेदि सन्ध्यावन्दन कृत्ये नित्यकृत्यरत्नमाला तट्टिपणी च। (पृ० सं० २४)। एवमेव च प्रायः गीता प्रेस गोरखपुरतः प्रकाशितो नित्यकर्मप्रयोगः।

अत्र विशेषः-अन्तिमसूर्यार्घदानस्य विष्णुपुराणादिप्रतिपादिततया, मैथिल-गौड-सम्मत-निबन्धसन्ध्या-तर्पण-पद्धति-प्रदर्शिततया, शिष्टजनैरद्याप्ये-तन्मन्त्रेणाचरिततया च मयापि तथैव (सूर्याभिमुखत्वेन) सन्निवेशितमस्ती-ति। अतएवात्र वीरमित्रोदयोऽप्याह-''केचित् सन्ध्याप्रयोगानन्तरं सूर्यायार्घं प्रयच्छन्ति, नृसिंहपुराणीयवाक्यं पठन्ति च। यथा-

अर्घं दद्यात्तु सूर्याय त्रिकालेषु यथाक्रमात्।
अशक्त एककाले तु मध्याह्ने तु विशेषतः॥
सन्ध्यां कृत्वाऽद्भिर्दत्त्वाऽर्घं ततः पश्येद्दिवाकरम्। इति।

वस्तुतस्तु सन्ध्यां कृत्वेति तर्पणाकरणे बोध्यम्। तर्पणकरणे तु वक्ष्यमाण-विष्णुपुराणादि-वाक्येन तर्पणानन्तरं तत्प्रतिपादनात्तदैव तदुचितमित्य स्माभिरपि तत्रैव तल्लेख्यम्। अत्रायं निर्णयः। स्व स्व गृह्यानुसारेण सन्ध्याप्रयोगेऽनुष्ठित एव प्रत्यवाय-परिहारः, अधिकानुष्ठानन्त्वानुषङ्गिक-फलभूयस्त्वार्थमेवे'' ति। पृ० सं० ३०२। तर्पणानन्तरं विष्णुपुराणम्-

आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम्।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने॥ इति च

[हिन्दी टिप्पणी]

संस्कृत टिप्पणी में आचारादर्श (संध्यावन्दन प्रकरण) से ही लिये एवं दिखाये गए वचनों के आधार से निश्चय किया जा सकता है कि मध्याह्न एवं सायं संध्योपासनों के समय होने वाले अर्घ, उपस्थान, जप, तथा अन्तिम सूर्यार्घदान सूर्य के अभिमुख ही होने चाहिए तथा प्रथमार्घ दान के पहले वाले प्रथमाचमन से अन्तिम आचमन तक सभी कर्म ईशान कोण, पूर्व या उत्तर दिशा के अभिमुख होकर हो। इसी तरह प्रातः काल के संध्योपासन में भी उक्त चारों से भिन्न सभी कर्म उक्त तीनों दिशाओं में से किसी भी ओर अभिमुख हो किये जा सकते हैं। इसीलिए नित्यकृत्यरत्नमाला एवं उसकी टिप्पणी का भी कहना है कि मध्याह्न एवं प्रातः काल का सूर्योपस्थान

सूर्याभिमुख हो तो सायं काल का पश्चिमाभिमुख। उपस्थान के पहले वाला अर्घदान तो सूर्याभिमुख होना निर्विवाद है अतः इससे पहले का आचमन से लेकर आचमन तक सभी कर्म पूर्व, उत्तर या ईशान कोण के अभिमुख हो। जप में भी सूर्य (वाली दिशा की ओर अभिमुख होना इनका भी अभिप्रेत है। इसी तरह गीता प्रेस गोरखपुर से प्रकाशित 'नित्य कर्म प्रयोग' का भी प्रायः ऐसा ही मत है। इसी के शब्दों में-यथा-

''स्मृतियों के अनेको वचनों का समन्वय करने पर यही निश्चय होता है कि तीनों कालों की संध्या पूर्वाभिख होकर करनी चाहिए[१]। ईशान कोण तथा[२] उत्तर दिशा की ओर मुंह करके भी त्रिकाल संध्या की जा सकती है, किन्तु यह ध्यान अवश्य रखना चाहिए कि अर्ध्य, उपस्थान और जप सूर्य की ओर ही मुंह करके किये जायँ। सारांश यह कि प्रातः संध्या का तो समस्त कार्य पूर्वाभिमुख ही करना चाहिए। परन्तु मध्याह्न संध्या और सायं-संध्या में अर्घ्य, उपस्थान, और जप सूर्य जिस दिशा में हो उधर ही मुंह करके करे तथा शेष आचमन आदि कर्म अपनी सुविधा के अनुसार पूर्व, ईशान या उत्तर की ओर मुंह करके करे किन्तु दक्षिण और पश्चिम की ओर मुंह करके आचमन न हीं करना चाहिए।

याज्ञवल्क्यस्मृति में कहा है कि ''द्विज नित्य शुद्ध आसन पर बैठकर उत्तराभिमुख अथवा पूर्वाभिमुख हो दोनों हाथों को जानुओं के भीतर करके दाहिने हाथ से ब्राह्मतीर्थ से आचमन करे।''[३]

यहाँ विशेषतः ज्ञातव्य है कि जैसे यजुर्वेदियों के एकोद्दिष्ट पार्वण आदि पितृकर्म समाप्त कर ''उत्तानमर्घपात्रन्तु कृत्वा दत्त्वा च दक्षिणाम्' इस नागरखण्डीय वचनानुसार दक्षिणादान तथा 'निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य (निर्वाप्य) पाणिना। प्रक्षाल्य पाणी आचम्य ज्ञातीन् शेषेण भोजयेत्' श्राद्धतत्त्व में उद्धृत इस वचन के अनुसार दीप निर्वापण (प्रच्छादन) पूर्व सम्पन्न श्राद्ध कर्म के ही अंग माने जाते हैं। अथवा इन दोनों के बाद भी ''पिण्डिकां छित्वा सूर्यं प्रणमेत्'' इस श्राद्धपद्धति के निर्देशानुसार पिण्डिका छेदन पूर्वक सूर्य का प्रणाम करना पूर्व सम्पन्न श्राद्ध कर्म का अंग माना जाता है। उसी तरह सन्ध्योपासन समाप्ति के बाद भी सन्ध्योपासन का ही अंग-भूत अन्तिम सूर्यार्घदान विष्णुपुराण आदि से प्रतिपादित होने तथा मैथिलगौड़

---

(१) प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत्। (कूर्म पुराण उ० १८।२६)।

(२) ऐशान्यभिमुखो भूत्वा शुचिः प्रयतमानसः॥ (आचारदर्श)।

(३) प्रक्षालित-पाणिपादः शुचौ देश उपविश्य नित्यं बद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्ये करौ कृत्वाऽशूद्रानीतोदकै र्द्विजातयो यथाक्रमं हृत्कण्ठतालुगैराचामन्ति। (कात्यायन गृह्य परिशिष्ट शौचसूत्र)।

निबन्ध एवं तत्सम्मत सन्ध्यातर्पण पद्धति के द्वारा प्रदर्शित होने तथा शिष्टजनों के द्वारा आज भी आचरित होने के कारण मैंने सूर्याभिमुख होकर करने की कोटि में इसे भी सन्निवेशित कर दिया है; क्योंकि इसके विधायक वचन तथा 'इति सूर्यायार्घं त्रिर्दद्यात्' आदि पद्धति (प्रयोग) पंक्ति से सूर्य सम्प्रदानक (सूर्य को दिया जाने वाला) अर्घदान विपरीत दिशा के अभिमुख से होना सर्वथा विपरीत ही माना जा सकता है। इसीलिए अभी ही आगे कहे जानेवाले 'दत्त्वार्घं ततः पश्येद्दिवाकरम्' स्पष्ट कह भी दिया गया है। विपरीत दिशा में गरदन या मुंह घुमाकर कुछ भी देना तथा पुनः ऐसे सूर्य दर्शन करना द्राविडप्राणायाम ही कहा जा सकता है। विशेष कर देवादिसमर्पणीय वस्तु सम्मुखावस्था में ही दी जाती है।

यहाँ वीरमित्रोदय का विवेचन है कि "कितने निबन्धकार संध्या प्रयोग के बाद सूर्य को (अन्तिम) अर्घ देना मानते हैं और एतदर्थ–"तीनों ही सन्ध्या समयों में यथा क्रम से अर्घ देना चाहिए। ऐसे करने की अशक्ति स्थिति में विशेषतः एक काल–मध्याह्न में तो अवश्य दें। सन्ध्योपासन कर के जल से अर्घदान देकर सूर्य को देखे" इस नृसिंहपुराण का वचन प्रमाण रूप से उपस्थित करते हैं। वस्तुतः देखा जाय तो 'सन्ध्यां कृत्वा' (सन्ध्योपासन कर) यह कहा जाना तर्पण न करने के पक्ष में समझना चाहिए। तर्पण करने के पक्ष में तो आगे कहे जाने वाले विष्णु पुराण के वचनों से तर्पण के बाद प्रकृत सूर्यार्घदान का प्रतिपादन होने के कारण तर्पण के बाद ही करना चाहिए। इसलिए हम (निबन्धकारों) को भी इसे वहीं लिखना चाहिए। यहाँ यह निर्णय है कि अपने गृह्य ग्रन्थों के अनुसार सन्ध्या प्रयोग का अनुष्ठान करने पर ही प्रत्यवाय का परिहार होता है फिर भी तत्सम्बद्ध अधिक कर्म का अनुष्ठान तो प्रत्यवाय परिहार के साथ अधिक फल प्राप्ति के लिए होता है। तर्पण के बाद विष्णु पुराणके वचनानुसार सन्ध्योपासन के अनन्तर आचमन कर–

नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने॥

इस मन्त्र से सूर्य भगवान् को जलाञ्जलि प्रदान करे।"

प्रतीत होता है कि नृसिंहपुराणीय वचन को मुख्य मानते हुए निबन्ध तथा पद्धतिकारों ने विष्णु पुराण वाले आचमन को अपनी अपनी पद्धति में उल्लेख नहीं किया है।

## गायत्र्या ध्यानम्

[मूलम्]

तथा,

पूर्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता।
या भवेत्पश्चिमा सन्ध्या सा तु देवी[1] सरस्वती॥

**रक्ता भवति गायत्री सावित्री शुक्लवर्णिका[२]।**

**कृष्णा सरस्वती ज्ञेया सन्ध्यात्रय[३] मुदाहृतम् ॥**

कामधेन्वादौ श्वेता भवति गायत्री सावित्री रक्तवर्णिका इति क्वचित्पाठः। एतच्च सन्ध्यारूपकथनं ध्यानार्थं स्तुतिमात्रपरं वा। गायत्री कालत्रयेऽपि शुक्लवर्णैव ध्येयेति वक्ष्यते।

**या सन्ध्या सा च गायत्री त्रिधा भूत्वा व्यवस्थिता।**

इति अभेदाभिधानं स्तुतिः। पारमर्थिकेऽप्यभेदे जपोपक्रमे शुक्लाया एव ध्यानम्।

**[ संस्कृत टीका ]**

तथा पूर्वेति। सन्ध्यायाः प्रातःकालादिभेदेन नामवर्णभेदानाह सन्ध्येत्यादिना। पूर्वा सन्ध्या = प्रातः कालीना सन्ध्या देवी। गायत्री = गायत्री संज्ञिका। मध्यमा = मध्यंदिने उपासनीया देवी। सावित्री = एतत्संज्ञिका। पश्चिमा या सन्ध्या = दिनान्ते या उपास्या भवेत्, सा तु सरस्वती देवी, स्मृता=मुनिभिः कथिता। उक्त गायत्र्यादि शब्दानां व्युत्पत्तिरप्युक्ता तेनैव। यथा

**प्रतिग्रहान्नदोषाच्च पातकादुपपातकात्।**

**गायत्री प्रोच्यते तस्माद् गायन्तं त्रायते यतः ॥**

**सवितृद्योतनात्सैव सावित्री परिकीर्त्तिता।**

**जगतः प्रसवित्रीत्वाद् वाग्रूपत्वात्सरस्वती ॥ इति।**

गायत्री (देवी)। रक्ता = लोहितवर्णा भवति। सावित्री। शुक्ल वर्णिका=श्वेतरूपा। सरस्वती (देवी) तु। कृष्णा = कृष्णवर्णा ज्ञेया। एवं रीत्या सन्ध्या, देवीत्रयम्, उदाहृतम् = मुनिभिः कथितम्।

वीरमित्रोदयोद्धृत-स्मृतिचन्द्रिकायां स्मृत्यन्तरमन्य स्वरूपमप्याह-

**गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी।**

**सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥ इति।**

---

पाठा० (१) विज्ञेया सा। (२) श्वेत। (३) सन्ध्यास्तिस्र उदाहृताः।

कामधेन्वादौ = गोपालप्रणीतकामधेनुनामकनिबन्धग्रन्थादौ तु । क्वचिद् वैपरीत्येन पाठः । यथा-

**श्वेता भवति गायत्री सावित्री रक्तवर्णिका । इति**

एतच्च सन्ध्यारूपकथनम् = 'रक्ता भवति गायत्री' त्यादिना सन्ध्यावर्णानामभिधानम् । ध्यानार्थम् = सन्ध्याकालभेदेन चिन्तनार्थम् । स्तुतिमात्रपरं वा = स्तवनार्थमेव वा । (यतः) गायत्री, कालत्रयेऽपि = प्रातः मध्याह्न सायं समयेऽपि । शुक्लवर्णैव = श्वेत रूपैव । ध्येया = चिन्तनीयेति, वक्ष्यते=गायत्री-जप प्रकरणे 'रूपमाहे 'त्युप क्रम्य' श्वेतवर्णा समुद्दिष्टा' इत्यादि योगियाज्ञवल्क्यवचनेनेति भावः । "जपकाले तु गायत्र्या यद्ध्यानं तत्सन्ध्यात्र्येऽपि शुक्लाया एवेति वक्ष्यत इति बहव इत्याचार-विवेक इति" नित्यकृत्यार्णवः । "या सन्ध्या सा च गायत्री त्रिधा भूत्वा व्यवस्थिता" इति शब्दकल्पद्रुमोद्धृतेनाऽपि योगियाज्ञवल्क्य-वचनेन सन्ध्यारूपाणां तिसृणामेव देवीनाम्, अभेदाभिधानम् = अभेदथाकथनम् । स्तुतिः = स्तवनं, प्रशंसनवाक्यमेव । अन्यथा कस्मिन्नपि सन्ध्यासमये कस्या अपि उक्तान्यतम देव्या उपासनापत्तिः स्यात् । पारमार्थिके = सिद्धान्ततः निष्कर्षे । अभेदेऽपि = घटाकाशमठाकाशादिवद् बाह्योपाधीनामनित्यतया एकस्या एव शक्तिरूपाया देव्याः सत्वेऽपि । जपोपक्रमे = जपप्रारम्भे । शुक्लाया एव ध्यानम् । "श्वेतवर्णा समुदिष्टे" त्यादि-योगियाज्ञवल्क्य-वचनादिति भावः । अतएव-"ऋष्यादिं स्मृत्वा गायत्री ध्येयेत्यर्थः । तद्रूपमाह-स (योगियाज्ञवल्क्यः) एव श्वेत वर्णेत्यादीत्याचार-चिन्तामणिरपि ।

**[ हिन्दी टीका ]**

अब प्रातः काल आदि के भेद से सन्ध्या देवी का नाम और वर्णभेद प्रकृत वचनों से कहा जा रहा है । यथा-प्रातः कालिक सन्ध्या को गायत्री देवी, मध्याह्नकालिक को सावित्री देवी तथा सायं कालिक को सरस्वती देवी के रूप में समझना चाहिए ।

यह गायत्री रक्तवर्णा सावित्री श्वेतवर्णा, और सरस्वती कृष्ण वर्णा हैं ऐसा भी समझना चाहिए । व्यासवचन के अनुसार ये देवियाँ उपासना करने वाले को दानमें लिए गए अन्न के दोष, पातक तथा उपपातक से त्राण करने के कारण गायत्री कही जाती हैं तो सूर्य को प्रकाशवान् करने के कारण सावित्री तथा जगत् को जन्म देने एवं वाणी रूप होने के कारण सरस्वती नाम से कही जाती हैं । गोपाल प्रणीत कामधेनु आदि निबन्ध ग्रन्थों में कहीं-कहीं गायत्री श्वेतरूपा और सावित्री रक्तरूपा कही गई हैं।

यहाँ ग्रन्थकार का विवेचन है कि यह जो संध्यारूपों का कथन हुआ है वह ध्यान करने के लिए अथवा प्रशंसामात्र के लिए ही है। वास्तव में गायत्री तो तीनों (प्रातः, मध्याह्न एवं सायम्) ही कालों में शुक्लवर्णा ही ध्यानयोग्या हैं, यह आगे (जप प्रकरण में) कहा जायगा।

"जो सन्ध्या हैं वही गायत्री हैं और ये ही तीनों रूपों में व्यवस्थित हैं" इस योगियाज्ञवल्क्य के कथनानुसार जो तीनों देवियों का अभेद कहा गया है जिससे किसी भी संध्या समय में किसी भी रूपवाली देवी का ध्यान कर लिया जाय, यह बात नही, क्योंकि यह प्रशंसा वाक्य ही है।

निष्कर्ष में घटाकाश मठाकाश स्थलों के जैसे वाह्य उपाधियों को अनित्य होने के कारण अभेद रहने पर भी जप के प्रारम्भ में शुक्ल वर्ण वाली देवी (गायत्री) का ही ध्यान करना चाहिए। (यह आगे जप प्रकरण में स्पष्ट हो जायगा।)

# प्राणायामः

[मूलम्]

बृहस्पतिः:-

**बध्वाऽऽसनं नियम्य स्वं स्मृत्वा ऋष्यादिकं ततः ।**
**सन्निमीलितदृङ् मौनी प्राणायामान् समभ्यसेत् ॥**

आसनम्-'पद्मार्धासनञ्चापि तथा स्वस्तिकमासनम्' इति वायुपुराणोक्तम्। स्वम् = आत्मानम्। नियमम्यासूनिति पाठे प्राणायामपदं मन्त्रपरम्।

**[ संस्कृत टीका ]**

बध्वेति। आसनं बध्वा = कुशकम्बलादीनामासनं प्रासार्य तच्छुद्धिञ्च विधाय पश्चात्तत्र वायु कूर्मपुराणाद्युक्तं पद्मसंज्ञकमर्धासन संज्ञकं स्वस्तिकसंज्ञकं वाऽऽसनं कृत्वेत्यर्थः। अत्र "वायुपुराणाद्युक्तम्। स्वमिति पाठः। तत्र-स्वमात्मानमित्यर्थ इत्यन्ये" इत्याचारचिन्तामणिः। स्वम् = आत्मानम्। नियम्य = एकाग्रीकृत्य। ऋष्यादिकम् = ऋषिच्छन्दोदेवताविनियोग चतुष्कम्। स्मृत्वा। सन्निमीलितदृक् = देवताध्यानपूर्वकं निमीलितनयनः मौनी च सन्। ततः। प्राणायामान् = वक्ष्यमाणरीत्या नियतमन्त्रोच्चारणपूर्वकं निरुद्धप्राणवायोरादानधारणरेचनरूपान् प्राणायामान्। समभ्यसेत् = त्रिः त्रिरावर्तयेत्। 'नियम्य स्वमि' ति स्थाने नियम्यासूनिति पाठे तु प्राणायामपदं प्राणायाममन्त्रपरं बोद्धव्यम्।

पद्मासनादेर्नाम लक्षणञ्च कूर्मपुराणे उक्तम्–

आसनं स्वस्तिकं प्रोक्तं पद्ममर्धासनं तथा ।
आसनानाञ्च सर्वेषामेतदासनमुत्तमम् ॥
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ।
समासीतात्मनः प्रोक्तमेतत्पद्मासनं शुभम् ॥
एकपादमथैकस्मिन् विन्यस्योरुणि सत्तम ।
आसनार्धमिति ज्ञेयं योगसाधनमुत्तमम् ॥
उभे कृते पादतले जानूर्वोरन्तरेण हि ।
समासीतात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥ इति

आसनमुपवेशनमिति भावल्युडन्तव्युत्पत्तौ आसनशब्दस्योपवेशनक्रमोऽर्थः । यद्विषयकं विवेचनमिदानीं वचनैरुदीरितमेव । यदि चाऽस्यते–उपविश्यतेऽस्मिन्नित्यधिकरणल्युडन्तव्युत्पत्तौ उपवेशनाधारोऽर्थो विवक्ष्यते तदा निम्नप्रकारेण बोध्यम् । यथा–"आसनान्याह व्यासः–

कौशेयं कम्बलञ्चैव अजिनं पट्टमेव वा ।
दारुजं बलपत्रञ्च आसनं परिकल्पयेत् ॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ।
गजा ( वशा ) जिने व्याधिनाशः सर्वं वै चित्रकम्बले ।
नादीक्षितश्चोपविशेत् कृष्णसाराजिने गृही ॥

इति निषेधाद्दीक्षितविषयं कृष्णाजिनमिति सन्ध्योपासनरहस्यम् । अत्रैव कृत्यसारसमुच्चय टिप्पणी तु–"अथासन नियमः –

काम्यार्थं कम्बलं चैव श्रेष्ठं तद् रक्तकम्बलम् ।
कृष्णाजिने ज्ञानसिद्धिर्मोक्षः श्रीर्व्याघ्रचर्मणि ॥
कुशासने मन्त्रसिद्धिर्नात्र कार्या विचारणा ।
धरण्यां दुःखसंभूतिर्दौर्भाग्यं दारुजासने ॥

वंशासने तु दारिद्र्यं पाषाणे व्याधिपीड़नम् ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥
जपध्यानतपोहानिं वस्त्रासनं करोति च ॥''इति

[ हिन्दी टीका ]

कुश या कम्बल आदि का आसन बिछाकर तथा उसकी शुद्धि कर पश्चात् मूलवचनानुसार उस पर पद्मासन, अर्धासन या स्वस्तिकासन (बैठने का क्रम विशेष) से बैठकर एवम् अपने को एकाग्र कर, ऋषि-छन्द-देवता और विनियोग का स्मरण कर, देवताध्यानपूर्वक आँख मूँद कर तथा मौनी होकर आगे कही जाने वाली रीति से नियतमन्त्रोच्चारण पूर्वक निरुद्ध प्राणवायु के ग्रहण, धारण तथा त्यागरूप प्राणायामों की तीन-तीन बार आवृत्ति करें ।

मूल में 'नियम्य स्वम्' के स्थान पर यदि 'नियम्यासून्' ऐसा पाठ है तो अपने प्राणवायुओं को नियमित कर प्राणायाममन्त्रों की तीन-तीन बार आवृत्ति करें, यह अर्थ होगा ।

कूर्मपुराण के अनुसार आसनों (बैठने आदि के क्रमविशेषों) में तीन उत्तम आसनों के नाम तथा लक्षण निम्न प्रकार से समझें ।

अपनी दोनों जंघाओं के ऊपर यदि दोनों पैरों के तलुओं को रखकर बैठे तो 'पद्मासन' होता है (और इससे सर्वसिद्धि प्राप्त कर सकते हैं) ।

यदि अपनी एक जंघा पर एक पैर के तलुए को रखकर बैठे तो 'आसनार्ध' कहलाता है । यह योग साधन के लिए श्रेष्ठ है ।

यदि दोनों जंघाओं और घुटनों के बीच दोनों पैरों के तलुओं को रखकर बैठे तो 'स्वस्तिकासन'- होता है । (इससे जप की सिद्धि शीघ्र मिलती है ।)

ऊपर से ज्ञातव्य है कि जिस पर बैठकर पूजापाठ आदि किया जाता है वह भी आसन ही कहलाता है । इसमें कुशा, कम्बल, मृगचर्म, व्याघ्रचर्म, गजचर्म, महीन रंगीन या रेशमवस्त्र (का टुकड़ा), लकड़ी की बनी हुई पट्टी या तख्ती और बलपत्र (मजबूतपत्तों) का आसन प्रशस्त होता है । क्योंकि कामना सिद्धि के लिए कम्बल तो इसमें भी लालकम्बल या चित्र कम्बल श्रेष्ठ है । कुशासन पर मन्त्रसिद्धि तो व्याघ्रचर्म पर मोक्ष एवं लक्ष्मी की प्राप्ति होती है । गजचर्म पर व्याधिनाश तो कृष्णमृग के चर्म पर ज्ञान सिद्धि होती है । किन्तु दीक्षारहित व्यक्ति को कृष्णमृगचर्म के आसन का उपयोग नहीं करना चाहिए । हाँ, लकड़ी या पत्तों से बना हुआ आसन यदि किसी वचन से

विहित है तो किसी वचन से निषिद्ध भी । अतः इन्हें विहित निषिद्ध होने के कारण उक्त विहितों के अभाव में इन का उपयोग किया जाना सिद्ध होता है ।

यहाँ नित्यकर्म प्रयोग के लेखानुसार वैज्ञानिक दृष्टि से यह भी ज्ञातव्य है कि आसन की शुद्धि कर उस शुद्ध हुए आसन पर बैठना चाहिए । उस पर बैठे हुए साधक को भगवान् के साथ अपने सम्बन्ध का अनुभव होता है । मन्त्रजप के समय अथवा वृत्तियों के एकाग्र करते समय शरीर के अन्दर एक प्रकार की 'विद्युत् शक्ति' आविर्भूत होती है जो शरीर और मन को स्वस्थ बनाती है । यदि शरीर और पृथ्वी के बीच कोई आसन न रखा जाय तो वह विद्युत्शक्ति पृथ्वी के आकर्षण से खिंच जायगी और इससे शरीर तथा मन दोनों के ही स्वास्थ्यनाश की आशंका रहेगी । इसीलिए शास्त्रमें आसन पर बड़ा जोर दिया गया है । आसन पर बैठने में दो बातों का ध्यान रखना चाहिए । एक तो सिद्धासन (अर्धासन), स्वस्तिकासन और पद्मासन आदि में से कोई आसन होना चाहिए और दूसरी यह कि हाथ पैर सिर आदि यथास्थान ही रहना चाहिए । जप आदि करते समय पैर के तलुओं का गुह्य स्थानों से स्पर्श निषिद्ध है । पीठ का रीढ़ा सीधा होना चाहिए । शरीर, गला और सिर भी समस्थिति में ही होने चाहिये । मन्त्रों के उच्चारण के समय नस-नाड़ियों का और शरीर के सूक्ष्म अवयवों का परस्पर आघात प्रत्याघात होता है, जिससे शरीर के अवयवों में भी परिवर्तन होता है और शक्ति का विकास तथा प्रसार भी होता हे । कोई नस-नाड़ी टेढ़ी रहे अथवा हाथ आदि रख देने के कारण उसके प्रवाह में बाधा पड़े तो उन क्रियाओं से उतना लाभ नहीं होता । इसलिए संध्या अथवा ध्यान करते समय शरीर को सीधा तथा स्थिर रखना चाहिए ।''

[ मूलम् ]

छन्दोग-परिशिष्टे-

**रक्षाऽन्ते वारिणाऽऽत्मानं परिवेष्ट्य[१] समन्ततः ।**

रक्षा कार्येति शेषः । अन्तशब्दस्यादावपि शक्तत्वात्, शिष्टाऽचारानुरोधात् प्राणायामादावियं रक्षा कार्येत्यर्थः ।[२] कामधेनौ तु प्राणायामानन्तरमेव लिखितम् ।

**[ संस्कृत टीका ]**

रक्षेति । अन्ते = अन्तशब्दस्यादावपि शक्तत्वात्, शिष्टाचारानुरोधात् (च) प्राणायामस्यादाविति ग्रन्थकारः । ''पूर्वोक्ताचमनानान्ते । आत्मानं वारिणा परिक्षिप्य रक्षा कार्येत्यर्थः । इयञ्च रक्षा प्राणायामात्प्रागेव । अनेनैव तदनन्तरं

प्राणायामकथनादि''त्याचारचिन्तामणिः । पूर्वश्लोकोक्ताचमनान्ते इति वीरमित्रोदयः । वारिणा=जलेन (ॐ आपो मामभिरक्षन्तुं इति मन्त्रं पठन्) आत्मानम् = आत्माऽवच्छेदकं शरीरम् । समन्ततः = परितः । परिवेष्ट्य = परिक्षिप्य । रक्षा –कार्येति शेषः । कामधेनुकारो गोपालस्तु प्राणायामानन्तरमेव रक्षामिमामलेखीत् ।

अत्र "अत्रान्ते–इत्यस्य प्राणायामकर्मण इति व्याख्यानमनादेयं, यत एतत्पूर्वम्–

**दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मणः ।**
**सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रक ॥**

इत्येवोक्तम् । तस्मादन्तशब्दोऽत्राचमनमेवोक्रान्तमवधित्वेनान्वयति । यद्वोत्तरार्धानुसारेणान्तशब्दोऽत्राद्यर्थक एवास्तु–यथाऽग्निष्टोमे 'तस्यान्तेऽक्षारलवणे' इत्यत्राम्नातं तद्भाष्ये । अतएव 'पर्युक्षणान्तान्व्यतिहरन्ति' ति गोभिलसूत्रं व्याख्यन् पर्युक्षणारम्भकोटिमभ्यन्तरत इत्येवं तद्भाष्यकार आह'' इति नित्यकृत्यरत्नमाला–टिप्पणी ।

[ हिन्दी टीका ]

प्राणायाम के पहले जल के द्वारा 'ॐ आपो मामभिरक्षन्तु' इस मन्त्र से अपने शरीर को चारो तरफ वेष्टित (घेर) कर रक्षा करनी चाहिए ।

कामधेनुकार ने तो इसे प्रणायाम के बाद ही करने को लिखा है जो नित्य कृत्यरत्नमाला टिप्पणी के अनुसार उचित नहीं ।

[ मूलम् ]

शङ्ख –वसिष्ठाङ्गिरो बृहस्पति–पैठीनसि–बौधायनाः–

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥**

व्याहृतं च छन्दोगपरिशिष्टे–

**भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।**
**महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥**

पाठ ( १ ) परिक्षिप्य । ( २ ) कार्येत्याहुः ।

आपो ज्योती रसोऽमृतं ब्रह्मभू र्भुवः स्वरिति[1] शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारये[2]दन्ते च शिरसः ॥
एता एतां सहानेन तथैभिर्दशभिः सह ।
त्रिः पठे[3]दायतप्राणः प्राणायामः स उच्यते ॥

प्रतिप्रतीकम् = सप्तव्याहृतीनां, गायत्र्याः, शिरसश्चादावित्यर्थः । एवं शिरोऽन्त प्रणवमादाय दश भवन्ति । एताः = (सप्त) व्याहृतीः । एताम् = गायत्रीम् । अनेन = शिरसा । एभिः = प्रणवैः । आयतप्राणो = नियतवातः । नियमश्च पूरके आदानमेव, कुम्भके धारणमेव, रेचके त्याग एवेत्येवं रूपः ।

[ संस्कृत टीका ]

सव्याहृतिमिति । प्राणायामसामान्यलक्षणमाह सव्याहृतिमित्यादिना । सव्याहृतिम् – अत्र व्याहृतयः सप्त ग्राह्याः, अग्रिमच्छन्दोगपरिशिष्टैक वाक्यत्वात् एवञ्च सप्तव्याहृतिभिः सहिताम् । अतएव "अत्र व्याहृतिपदेन सप्ताऽपि गृह्यन्ते । तदेतद् गोभिलीये द्रष्टव्यम् । व्यक्तीकृतं तच्छन्दोगपरि- शिष्टेऽपी"ति नित्यकृत्यरत्नमालाटिप्पण्यपि । सप्रणवाम् ओङ्कार सहिताम् । (एवं) शिरसा सह गायत्रीम् । आयतप्राणः = निरुद्धप्राणः - नियमितप्राणवायुः सन् त्रिः पठेत् = मनसा वारत्रयं जपेत् । सोऽयं जपः प्राणायाम इत्युच्यते इत्यर्थः । तथा च त्रिरावृत्तमन्त्रपाठावच्छिन्नःश्वासरोधादिः, निरुद्धश्वासाद्यवच्छिन्न- स्त्रिरावृत्तमन्त्रपाठो वा प्राणायामपदार्थ इति गम्यते ।

व्याहृतश्चेति । भूराद्यास्तिस्रः महर्जनस्तपः सत्यमिति कृत्वा, एताः = सप्त, व्याहृतयो महाव्याहृतयो वा उच्चन्ते, याश्च, अव्ययाः = अव्ययफल (जन) कत्वादव्ययाः सन्ति । गायत्र्याः शिरः किमित्यपेक्षायामाह– आपो ज्योतीति । प्रतिप्रतीकमित्यादेः व्याख्या मूले स्पष्टैव । एतदनुसरन्नाचारचिन्तामणिरपि यथा "प्रतिप्रतीकम्-सप्तव्याहृतिगायत्रीशिरसां नवानाम्– आदौ नवोङ्काराः शिरसोऽन्ते चैक उच्चार्यः । एताः-सप्तव्याहृतीः, एतां गायत्रीम्, अनेन-शिरसा, एभिर्दशभिरोङ्कारैश्च सह, आयत-नियतवायुः सन् त्रिर्मनसा जपेत् । सोऽयं जपः

पाठ (१) स्वरोमिति । (२) मुच्चार्यं च शिरस्तथा । (३) त्रिर्जपेन् ।

प्राणायाम-संज्ञक इत्यर्थः । शिरस्तु-'आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरि' ति तत्रैवोक्तम्'' इति । एवञ्च-ॐ भूः, ॐ भुवः, ॐ स्वः, ॐ महः, ॐ जनः, ॐ तपः, ॐ सत्यम् । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् इति प्राणायाममन्त्रः निष्पन्नः ।

[ हिन्दी टीका ]

अब प्राणायाम का लक्षण तथा मन्त्र का आकार कहा जा रहा है ।

प्राणवायु को नियमित करके सातो व्याहृति, प्रणव, तथा शिर सहित गायत्री का तीन-तीन बार पढ़ना ही सामान्यतः प्राणायाम कहा जाता है ।

यद्यपि व्याहृति पद से भूः भुवः तथा स्वः ये तीन ही अन्यत्र लिए जाते हैं तथापि छन्दोगपरिशिष्ट के (वचन) निर्देशानुसार यहाँ भूः भुवः स्वः महः जनः तपः तथा सत्यम्, ये सातों ही लिए ज़ाते हैं । गायत्री मन्त्र प्रसिद्ध ही है । इसका शिऱ है-'आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वः' ।

प्रत्येक प्रतीक पर अर्थात् भूः आदि सातो व्याहृति, गायत्री और शिर के आदि में, साथ ही शिर के अन्त में भी एक एक प्रणव लगाना चाहिए । फलतः इस तरह 10 प्रणव हो जाते हैं ।

अब सारांश में-प्राणायाम का मन्त्र हुआ-'ॐ भूः, ॐ भुवः ॐ स्वः, ॐ महः, ॐ जनः, ॐ तपः, ॐ सत्यम्, ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।

पूरक के समय प्राणवायु (श्वास) को भीतर खींचना, कुम्भक के समय उसे धारण करना तथा रेचक के समय उसे छोड़ना यहाँ नियम कहा जाता है। इसके साथ ही साधक क्रमशः तीन-तीन बार उक्त प्रणायाममन्त्रको मन ही मनमें पढे, यही प्राणायाम करना कहलाता है ।

[ मूलम् ]

योगियाज्ञवल्क्यः-

पूरकरेचककुम्भकैः प्राणायामस्त्रिलक्षणः ।

त्रिलक्षणः=त्रिविधः । एतच्च योगियाज्ञवल्क्य एव पौर्वापर्यपरामर्शाद् व्यक्तम् । एवञ्च प्रत्येकमेव प्रणायमत्वात्प्रत्येकमेव त्रिरावृत्तो मन्त्रपाठः । एतावतैव प्राणायामत्रय-सिद्धिरिति । अतएव ''ततोऽन्तः शुद्ध्यति त्रिभिरि'' त्युपसंहारः ।

**आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ।**

इति व्यासोक्तो नवधाऽभ्यासः पक्षान्तरम् ।

**त्रिविधं केचिदिच्छन्ति तथैव नवधा परे ।**

इत्यनेनाप्यभिधानात् ।

[ संस्कृत टीका ]

पूरक इति । पूरकादिलक्षणमनुपदमेव वक्ष्यते । त्रिलक्षणः=त्रिविधः । एतच्च = त्रिविधत्वञ्च । योगियाज्ञवल्क्यवचन एव । पौर्वापर्यपरामर्शात् = पूरकादिषु पूर्वापरीभावस्य उन्नयनात्, ज्ञानादिति यावत् । व्यक्तम् = स्पष्टम् । 'त्रिविध' इत्यत्र विधाशब्दो हि अवान्तरभेदवाची । अतः समान्यस्य प्राणायामस्य पूरणं कुम्भनं रेचनमिति त्रयो भेदाः सिद्धाः । एवञ्च प्रत्येकमेव पूरकादीनां प्राणायामत्वम् । तथा च पूरकादिषु प्रत्येकमेव पूर्वोक्त-प्राणायामसामान्यलक्षणानुसारं,

**गायत्रीं शिरसा सार्द्धं जपेद् व्याहृतिपूर्विकाम् ।**
**प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ।**

इति याज्ञवल्क्यवचनानुसारं वा त्रिरावृत्तो मन्त्रपाठ आवश्यकः । अतएव= प्राणायामत्रयस्य सिद्धेरेव । "ततोऽन्तः शुध्यति त्रिभिरि" तिवचनेन योगियाज्ञवल्क्येन कृत उपसंहारः = प्रदर्शितं समापनम्, सारांश इति यावत् । ततः = प्राणायामत्रयात् । त्रिभिः = त्रिरावृत्तमन्त्रपाठैः । अन्तः = अन्तः करणम् । शुध्यतीत्यस्यार्थः । एवञ्च प्रत्येकमेव प्राणायामत्वात् त्रिरावृत्तमन्त्रपाठेन नवकृत्वो मन्त्र पाठः फलितः । पक्षान्तरमाह आदानमित्यादिना । आदानम् = ग्रहणम् । रोधः= धारणम्—अवरोध इति यावत् । उत्सर्गः=त्यागः ।
आदानादिकं कुर्वन्नेषु प्रत्येकं मन्त्रस्य त्रिरावृत्तपाठेन मन्त्रं त्रिस्त्रिरभ्यसेदित्यर्थः इति, पक्षान्तरं वा तत्— 'त्रिविधं केचिदिच्छन्ति तथैव नवधाऽपरे' इत्यनेन तथैव प्रतीतेरिति मैथिलनिबन्धार इति च वीरमित्रेदयः । "तेन नव प्राणायामा जायन्ते" इति स्मृति-समुच्चयः । आदानमितिवचनस्योत्तरार्धं यथा—

**ब्रह्माणं केशवं शम्भुं ध्यायेद्देवाननुक्रमात् । इति**

देवाननुक्रमात्—शास्त्रान्तरोक्तक्रमणेत्यर्थ एतेनैतन्मते देवध्यानमपि व्युत्क्रमतां बोधयतीति बोध्यम् ।

[ हिन्दी टीका ]

पहले कहे गए प्राणायाम सामान्य का पूरक, कुम्भक और रेचक ये तीन भेद हैं। (इनका लक्षण आगे कहा जा रहा है।) इन का पौवापर्य (अनुक्रम–आगेपीछे का क्रम) वचन के पाठानुसार स्पष्ट है। प्रत्येक ही प्राणायाम होने के कारण प्रत्येक (पूरक आदि) के समय उक्त प्राणायामसामान्य लक्षण वचनानुसार तीन तीन बार मन्त्र पाठ आवश्यक है। इसी कारण तीन प्राणायामों की सिद्धि होती है और नौ बार प्राणायाम मन्त्र का पाठ होना सिद्ध होता है। फलितार्थ में तीन प्राणायाम की सिद्धि होने के कारण ही "ततोऽन्तः शुध्यति त्रिभिः" (तीन-तीन बार मन्त्रपाठ पूर्वक तीनो प्राणायामों के अनुष्ठान से अन्तः करण शुद्ध होता है।) यह उपसंहार (अन्तिम सारांश) ग्रन्थ भी सङ्गत होता है। यह एक सिद्धान्त मत हुआ।

'आदानम्' इत्यादि व्यासवचनानुसार प्राणायाम के संबन्ध में दूसरा मत है कि पूरक के समय प्राणवायु का ग्रहण, कुम्भक के समय धारण (रोध) और रेचक के समय त्याग करता हुआ साधक त्रिरावृत्तपाठ से तीन-तीन बार मन्त्र पढ़े। अर्थात् पूरक आदि के समय तीन-तीन के स्थान पर नौ-नौ बार मन्त्र पढ़े यह फलितार्थ होता है।

उक्त दोनों ही मत–'अभ्यास की दृष्टि से कितने तो तीन प्रकार का और दूसरे नौ प्रकार का प्राणायाम कहते हैं' इस वचनानुसार–मुनि सम्मत हैं।

उक्त दोनों ही मत मैथिल निबन्ध सम्मत हैं, ऐसा वीरमित्रोदय का कहना है। यहाँ स्मृतिसमुच्चय का कहना है कि 'आदानं रोधमुत्सर्गम्' इस वचनानुसार नौ प्राणायाम सिद्ध हो जाते हैं। आदानमित्यादि वचन के उत्तरार्ध रूप से पठित वचनानुसार ध्यानार्थ देवों (ब्रह्मा विष्णु तथा शिव) का निर्देश भी उल्टा है।

[ मूलम् ]

तथाहि (योगियाज्ञवल्क्यः)

नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते।
कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः॥
नीलोत्पलदलश्यामं नाभिदेशे प्रतिष्ठितम्।
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत्॥
कुम्भकेन[1] हृदि स्थाने ध्यायेच्च कमलाऽसनम्।
ब्रह्माणं रक्तगौराङ्ग[2] चतुर्वक्त्रं पितामहम्॥

पाठ (१) रेचके च। (२) वर्णा।

रेचकेने³ श्वरं ध्यायेल्ललाटस्थं महेश्वरम् ।
शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम् ॥

पूरकेणेत्यादौ तृतीया सप्तम्यर्थे, कालोपलक्षणत्वात् । गौरसर्वाङ्गपाठे गौरपदं रक्तपरं, नानाऽर्थत्वात् । तथा च– व्यासः–'रक्तं प्रजापतिं ध्यायेत् ।' इति

[ संस्कृत टीका ]

नासिकेति । पूरकादिलक्षणं तत्समये ध्येयञ्चाह नासिकेत्यादिश्लोकैः । ध्मातः= अग्निसंयुक्तः-जठराग्निसंयुक्त इति यावत्, शब्दितो वा । ध्मा अग्नि-युतौ । ध्वनौ इति कविकल्पद्रुमः । अग्नियुतिरग्निसंयोगः । ध्वनिः शब्दोत्पत्ति-हेतुभावः । धमति सुवर्णं वणिक् = अग्निसंयुक्तं करोतीत्यर्थः । धमति शब्दं जनः–स शब्दं करोतीत्यर्थः इति दुर्गादास इति शब्दकल्पद्रुमः ।

नासिकाऽऽकृष्टः = प्राणायामविधौ दक्षिणहस्ताङ्गुष्ठेन नासिकाया दक्षिणपुटं निरुध्य नासिकावामरन्ध्रेण कृताकर्षण आकर्षित इति यावत् । अच्छ्वासः = दीर्घश्वासः पूरक इत्युच्यते । व्युत्पत्तिश्चास्य शब्दकल्पद्रुमे "पु, (पूरयतीति । पूरि+ण्वुल्) ध्यानादिकर्त्तृनासिकागतोच्छ्वासः । ब्रह्मध्यानपूर्वक-प्राणायामाङ्गतत्तन्मन्त्रं जपन् वामनासिकया वायुना देहपूरणम्" इति । 'सर्वनाडीः पूरयन्नितिच्छन्दोगाह्निकानुसारं सर्वनाडीः श्वासवायुना पूरयतीति सतः' इति नित्यकृत्यरत्नमालाटिप्पणी । निश्चलश्वासः = दक्षिण हस्तानामिकया कनिष्ठा-नामिकाऽ ङ्गुलीभ्यां वा वामनासापुटमपि निरुध्य स्तम्भितवायुः कुम्भक इति कथ्यते । अस्य व्युत्पत्तौ–"कुम्भकः, पुं० कुम्भ इव कायति प्रकाशते निश्चलत्वात् कै +कः । यद्वाकुम्भ + स्वार्थे कः । दक्षिहस्तेन नासापुटद्वयं धृत्वा प्राणायामाङ्गं वायुस्तम्भनम् इतितन्त्रम् । पातञ्जल-याज्ञवल्क्यादौ तु–

कुम्भकः पूरको रेचः प्राणायामस्त्रिलक्षणः ।
पूरकः पूरणं वायोः कुम्भकः स्थापनं क्वचित् ॥
बहि र्निस्सारणं तस्य रेचकः परिकीर्त्तितः ॥

इति शब्दकल्पद्रुमः । रिच्यमानः अङ्गुष्ठसम्बन्धत्यागेन मुच्यमानः प्राणायामाङ्गवायुस्तु रेचक इति कथ्यते । रेचयतीति रिच् + णिच् + ण्वुल् इति

(३) चेश्वरम् ।

व्युत्पत्तिः । नासापुटधारणायाङ्गुलिविषये–

अङ्गुष्ठेन पुटं धार्यं नासाया दक्षिणं पुनः ।
कनिष्ठाऽनामिकाभ्यान्तु वामं प्राणस्य संग्रहे ॥
अङ्गुष्ठतर्जनीभ्याञ्च ऋग्वेदी सामगायनः ।
अङ्गुष्ठानामिकाभ्यान्तु ग्राह्यं सर्वमथर्वणा[१] ॥

इति व्यासवचनमुद्धृत्य "अङ्गुष्ठतर्जनीभ्याम् ऋग्वेदी उक्तरीत्या नासापुटद्वयं गृह्णीयात् । अङ्गुष्ठानामिकाभ्यान्तु सामगायन इत्यर्थः । एवञ्च प्रथमोक्तं यजुर्वेदिविषयमिति व्याख्यातवान् मित्रमिश्रः । परन्तु 'तत्राङ्गुलिनियमो ज्ञानार्णवे–

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥

इतिप्राणायामशब्द प्रकरणस्थशब्दकल्पानुसारं गौडसम्मतनित्यकर्मप्रयोग पुस्तकेषु कनिष्ठानामिकाङ्गुलिभ्याम्, परं मैथिलसदाचारसार पुस्तकेषु सामगायका (छन्दोगा) दीनामिव यजुर्वेदिनां कृतेऽपि अनामिकया नासावामपुटधारण-विधान-दर्शनादनयोः कल्पयोः सम्प्रदायभेदेन विकल्पो बोध्यः ।

पूरकेणेति । पूरकेणेत्यादौ तृतीया सप्तम्यर्थे । कालोपलक्षणत्वात् = स्वस्वाधारकालोपलक्षणार्थत्वात् । तेन पूरकादिकाले इत्यर्थः । नाभिदेशे । प्रतिष्ठितम्=अवस्थितम् । नीलोत्पलदलश्यामम्=नीलकमलपत्रवद् श्यामवर्णम् । महात्मानम् = भगवन्तम् । चतुर्भुजम् = चतुर्हस्तं विष्णुम् । चिन्तयेत् = ध्यायेत् ।

कुम्भकेन=कुम्भकसमये । हृदि=हृदयमध्ये । कमलासनम्= कमलासन-मासीनम्। रक्तगौराङ्गम्=अरुण मिश्रित गौरवर्णाङ्गम् । गौरसर्वाङ्गमितिपाठे तु गौरपदं नानार्थत्वाद् रक्तपरं 'रक्तं प्रजापतिं ध्यायेदि'ति व्यासवाक्यैकवाक्यत्वात् । चतुर्वक्त्रम् = चतुर्मुखम् । पितामहम् "ब्रह्मणि तु, पितुः पिता-जनकस्या पि जनकः । पितॄणां मरीच्यादीनां पितृगणानां पिता वा । ब्रह्मा" इति शब्दकल्पद्रुमः । ब्रह्माणम्=प्रजापतिम् । ध्यायेत् = चिन्तयेत् ।

---

पाठ (१) कुम्भकशब्द प्रकरणस्थ शब्द कल्पद्रुमोद्धृत पातञ्जल-याज्ञवल्क्यादिवचनानुसारं–"सर्वैरथर्वभिः" इति पाठः ।

रेचकेन = रेचककाले । ललाटस्थम् = भालस्थितम् । शुद्धस्फटिक सङ्काशम् = शुद्धस्फटिकवदतीवश्वेतवर्णम् । ईश्वरम् = ऐश्वर्यशालिनम् । निर्मलम् = निष्पापम्, धर्मस्वरूपमिति यावत् । पापनाशनम् = पापाहारकम् । महेश्वरम्=भगवन्तं शिवम् (शिवः शूली महेश्वर इत्यमरः) । ध्यायेत् = चिन्तयेत् ।

**ब्रह्माणं केशवं शम्भुं ध्यायन्मुच्येत बन्धनात् ।**

इति बृहस्पतिवचने (च) पूरककाले ब्रह्मध्यानं कुम्भककाले च विष्णुध्यानमुक्तं तत्पक्षान्तराभिप्रायम् । तेन विष्णुपूर्वकमेव ध्यानमिति पारिजातरत्नाकराविति वीरमित्रोदयः ।

प्राणायामफलश्रुतौ योगियाज्ञवल्क्यः–

**पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिके ।**
**रेचकेन तृतीयेन गमयेदैश्वरं पदम् ॥ इति ।**

अत्रैवात्रिस्तु–

**प्राणायामाँश्चरेत् त्रींस्तु यथाकालमतन्द्रितः ।**
**अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ इति ।**

## [ हिन्दी टीका ]

अब पूरक आदि का लक्षण तथा ध्येय देवों का वर्णन किया जा रहा है ।

नाक के दाहिने पूडे (छिद्र) को दाहिने हाथ के अंगूठे से दाब कर बायें छिद्र से धीरे धीरे खींचा गया, जठराग्निसंयुक्त दीर्घश्वास (जिससे देह की सारी नाड़ियाँ सजग हो जायँ) पूरक कहलाता है ।

मैथिल सम्प्रदाय के अनुसार

दाहिने हाथ की अनामिका अंगुलि से किन्तु गौड सम्प्रदाय के अनुसार अनामिका व कनिष्ठ अंगुलियों से बायें पूड़े को भी बन्द कर स्तम्भित (रोका गया) प्राणवायु (श्वास) कुम्भक कहलाता है ।

अंगूठे को हटा देने पर दाहिने छिद्र से धीरे-धीरे निकाला गया श्वास रेचक कहलाता है ।

पूरक के समय नील कमलदल के समान श्यामवर्ण चतुर्भुज भगवान् विष्णु का नाभिदेश में (अवस्थित का) ध्यान करें ।

कुम्भक करते समय कमल के आसन पर आसीन अरुणमिश्रित गौरवर्ण वाले चतुर्मुख पितामह (पिता के भी पिता अथवा पितरों, मरीच्यादि दिव्य ऋषियों तथा अग्निष्वात्ता आदि दिव्य पितृगणों के भी पिता) ब्रह्मा का हृदयदेश में ध्यान करें।

रेचक करते समय शुद्धस्फटिक के समान श्वेतवर्णवाले ऐश्वर्यशाली निष्पाप (धर्मस्वरूप) पापनाशक भगवान् शङ्कर का ललाटदेश में ध्यान लगावे।

ऊपर से ज्ञातव्य है कि बृहस्पतिवचन के द्वारा पूरक के समय ब्रह्मा और कुम्भल के समय विष्णु का ध्यान करना जो कहा गया है, वह अन्य कल्प है। अतः विष्णु पूर्वक ही ध्यान हो ऐसा वीरमित्रोदय के अनुसार पारिजात तथा रत्नाकर का कहना है।

फलश्रुति में योगियाज्ञवल्क्य ने कहा हे कि पूरक की उपासना से विष्णु-सायुज्य, कुम्भक के समय वाली उपासना से ब्रह्मसायुज्य तथा रेचक कालीन उपासना से साधक शिव सायुज्य प्राप्त करता है। प्रणवव्याहृतियों के साथ किया गया यह प्रणायाम परम तपस्या है।

यहीं मुनि अत्रि का कहना है कि आलस्यरहित होकर यथोचित समय से जो तीनों प्राणायामों का आचरण करता है उसका दिन-रात में किया गया पाप तत्काल ही नष्ट हो जाता है।

[ मूलम् ]

मात्राभेदान्मृदुमध्यमोत्तमत्वं योगिप्राणायामविषयम्। सन्ध्याप्राणायामकालस्य मन्त्रपाठेनैवावच्छेदात्।

[ संस्कृत टीका ]

मात्राभेदादिति। प्राणायामस्तावद् द्विविधः। सगर्भो निर्गर्भश्च। तथा च

**सगर्भो मन्त्रजापेन निर्गर्भो मात्रया भवेत्।**

इति कालीहृदयम्। तत्र द्वितीयो यथा मार्कण्डेय पुराणे-

**इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया।**
**धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया॥**
**सुषुम्णा मध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः।**
**नाड्या पिङ्गलया चैनं रेचयेद् योगविग्रहः॥**
**प्राणायाममिमं प्राहुर्योगशास्त्र-विशारदाः।**
**भूयोभूयः समभ्यस्य व्यत्यासेन समाचरेत्॥ इति।**

अस्मिँ श्च "योगाङ्गप्राणायामे पूरणं वाम-नासापुटस्थेड़या नाड्या । (स्तम्भनं सुषुम्णा) । रेचनञ्च दक्षिणपुटस्थया पिङ्गलया कार्यम् । अनन्तरं पिङ्गलयाऽऽकर्षणम्, इडया त्याग इत्येवं रूपेण व्यत्यासेनापि कार्यम् ।

मात्राकालस्तु निमेषानन्तरं यावता कालेन स्वभावत उन्मेषो भवति तावान् कालः ।

**निमेषोन्मेषणं मात्रा कालस्तु द्व्यक्षरस्तथा ॥**

इति मार्कण्डेय-पुराण एवाभिधानादिति व्याख्यातवान् मित्रमिश्रः ।

अत्र शब्दकल्पद्रुमे-"मात्रा च

**वामजानुनि तद्धस्तभ्रामणं यावता भवेत् ।**

**कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ॥**

अथ प्राणायामः । मूलमन्त्रस्य बीजस्य प्रणवस्य वा षोडशधाजपेन वामनासापुटे वायुं पूरयेत् । तस्य चतुः षष्टिवारं जपेन वायुं कुम्भयेत् । तस्य द्वात्रिंशद्वारं जपेन वायुं रेचयेत् । पुनर्वामेनापूर्य उभाम्यां कुम्भयित्वा दक्षिणेन रेचयेत् ।

तथा च काली हृदये-

**प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।**

**अथवा मन्त्रबीजेन यथोक्तविधिना सुधीः ॥ इति ।**

एवञ्च, मात्राभेदात् = मात्राकालविशेषात् । प्राणायामे जायमानं यद् मृदुमध्यमोत्तमत्वम्=लघुमध्यमश्रेष्ठत्वम् । तद्, योगिप्राणायामविषयम् = योगिभिराचरणीयस्य प्राणायामस्य विषयम् । अर्थात्,

**लघुर्द्वादशमात्रः स्याच्चतुर्विंशतिकः परः ।**

**षट्त्रिंशन्मात्रिकः श्रेष्ठः............**

इति गरुडपुराणवचनेन,

**लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः ।**

**लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ॥**

**त्रिगुणाभिश्च मात्राभिरुत्तरीय उदाहृतः ॥**

इति पद्मपुराणवचनेन,

मृदुत्वं सेव्यमानास्तु सिंहशार्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः॥
वश्यं सन्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी च्छन्देन प्राणं नयति साधितम् ॥

इति फलश्रुति-परकमार्कण्डेयपुराणवचनेन च मात्राकालेनाचरणीयः प्राणायामः योगिनामेवेति मन्तव्यम् । सन्ध्याप्राणायामकालस्य = सन्ध्याऽन्तर्गत-प्राणायामानुष्ठानसमयस्य । मन्त्रपाठेनैव=पूर्वोक्तसन्ध्याप्राणायाममन्त्राणां पठनेनैव । अवच्छेदात् = व्यापनात् । एवकारः मात्राव्यवच्छेदार्थः ।

[ हिन्दी टीका ]

यहाँ ज्ञातव्य है कि प्राणायाम दो प्रकार का होता है- १ सगर्भ और २ निर्गर्भ । मन्त्रजप से होने वाला सगर्भ है तो मात्रा से होने वाला निर्गर्भ । इनमे प्रथम साधारणतः द्विजमात्र के लिएं है तो द्वितीय योगियों के लिए । मात्रा के संबंध में मार्कण्डेय पुराण में कहा गया है कि पलक गिरने के बाद उठाने तक में स्वभावतः जितना समय लगे वही मात्राकाल है । अथवा कालीहृदय के वचनानुसार वाम जानु (जंघा) के ऊपर वायाँ हाथ घुमाने में जितना समय लगे वही मात्रा काल है । इसी के अनुसार सोलह मात्रा समय में सोलह बार मूलमन्त्र, बीच या प्रणव का जप करता हुआ नासिका के वामपुटस्थित इडा नाड़ी से वायु का पूरण (पूरक प्राणायाम) करे । चौंसठ मात्रा समय से चौंसठ बार जप करता हुआ सुषुम्ना नाड़ी से वायु का स्तम्भन (कुम्भक) करे । इसी तरह बत्तीस बार जप करता हुआ नासिका के दक्षिण पुट स्थित पिङ्गला नाड़ी से वायु का रेचन (रेचक) करे । पुनः दक्षिण से वायु का पूरण तथा दोनों पुटों से कुम्भन (स्तम्भन) कर बायें पुट से रेचन करे । पुनः बायें पुट से पूरण कर दोनों पुटों से कुम्भन कर दाहिने पुट से रेचन करे ।

अब प्रकृत में ग्रन्थानुसार ज्ञातव्य है कि इस मात्रा (समय) के भेद से मृदु (लघु) मध्यम तथा उत्तम (श्रेष्ठ) ये तीन प्रकार का प्राणायाम होता है । यथा. गरुड़पुराण एवं पद्मपुराण के वचनानुसार बारह मात्रा मृदु (लघु), चौबीस मात्रा वाला माध्यम और छत्तीस मात्रा वाला उत्तम होता है । ये तीनों ही प्राणायाम योगियों के लिए हैं क्योंकि सन्ध्या के अन्तर्गत होनेवाले प्राणायाम के अनुष्ठान के समय तो केवल मन्त्र पाठ ही होता है, नकि मात्रा-समय का प्रतिबन्ध रहता है ?

ऊपर से फलश्रुति समझें कि जैसे सेवा करने वालों के लिए सिंह, व्याघ्र तथा हाथी डरावने नहीं होते अपितु मृदु (कोमलमानस) हो जाते हैं उसी तरह योगी को भी प्राण वश में हो जाते हैं। अथवा वशीभूत हाथी को हाथी का सेवक जैसे इच्छानुसार घुमाता है उसी तरह योगी साधित प्राणों को इच्छानुसार चलाता है।

इस फलश्रुति से भी ये प्राणायाम योगियों के लिए ही सिद्ध होते हैं। क्योंकि मृदु पद से दोनों ही ओर संकेत कर दिया गया है।

## [ मूलम् ]

पूरक-कुम्भक-रेचकै र्मिलित्वैकः प्राणायामः। कुम्भकमात्र एव तु मन्त्र-पाठ इत्याद्यसत्। पक्ष-निरास-विस्तरश्छन्दोगाह्निकेऽनुसन्धेयः।

## [ संस्कृत टीका ]

पूरकेति। पूरक कुम्भक रेचक समुदायः प्राणायामो वाच्यः। कुम्भक मात्र एव मन्त्रपाठः न तु पूरकरेचकयोरपीति यत् केनचिदुक्तं तन्न युक्तम् इति छन्दोगाह्निके द्रष्ट व्यम्।

छन्दोगाह्निक इति। अत्र केचित् पूरककुम्भकरेचकैर्मिलित्वा एकं प्राणायाममिच्छन्ति। तत्रापि पक्षत्रयम्। एके प्रत्येकमेकधा (वारम्) पूरकादिषु मन्त्रपाठं मन्यन्ते। अन्ये त्रिधा। अपरे पूरकरेचकयोर्मन्त्रपाठं नेच्छन्ति (न मन्यन्ते)। किन्तु कुम्भक मात्रे त्रिधा मन्त्रपाठमिच्छन्ति। तत्सर्वमयुक्तम्। तथाहि पूरकादीनुक्त्वा योगियाज्ञवल्क्यः-

**एवं त्रिविधमुद्दिष्टं प्राणायामस्य लक्षणम्।**

एवमन्यत्राप्युक्तम्- त्रिविधः प्राणसंयमः (प्राणायामः)। पूरकं कुम्भकं रेचकमिति। विधाशब्दोऽ सावयान्तरभेदवाची। अतः सामान्यस्य प्राणायामस्य एते त्रयः (प्र)भेदा इति प्रत्येकमेव पूरकादीनां प्राणायामत्वम्। प्राणायाम-लक्षणं तु-

**गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम्।**
**प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः॥**

इति याज्ञवल्क्योक्तम्। अतः पूरकादिषु प्रत्येकमेव त्रिधा मन्त्रपाठः। एतावतैव च प्राणायमत्रयसिद्धिरिति। एवञ्च-

आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत्।

इति व्यासवाक्यात्पूरकादिषु त्रिरावृत्तमन्त्रावच्छेदेन त्रित्वम्। नाना-प्रयोगापेक्षया वाऽस्तु बहुत्वम्। नत्वेतद्बलादेव पूरकादिभिर्मिलित्वैकः प्राणायाम इती'' तिच्छन्दोगाह्निकम्।

[ हिन्दी टीका ]

प्राणायाम प्रसंग में किसी का कहना है कि पूरक, कुम्भक और रेचक इन तीनों को मिला कर एक ही प्राणायाम होता है। किसी अन्य का मत है कि कुम्भक मात्र में ही मन्त्र पाठ हो। किन्तु ये सभी मत असमीचीन हैं। इन मतों का खण्डन विस्तार से मेरे (ग्रन्थकार के) छन्दोगाह्निक नाम के ग्रन्थ का अवलोकन कर समझा जाय।

(छन्दोगाह्निक के इस अंश को संस्कृत टीका में उद्धृत हो जाने तथा प्रायः अधिकांश विषय का किसी न किसी रूप में आ जाने एवं सभी के लिए उपयोगी भी न होने के कारण इसका पूरा हिन्दीकरण छोड़ दिया गया है। फिर भी सारांश में समझें कि प्राणायाम सामान्य के पूरक आदि तीन भेद होते हैं। अतः ये तीनों ही प्राणायाम हैं ओर इन तीनों में ही तीन तीन बार-योग में नौ बार-प्राणायाम मन्त्र के जप होंगे।

अब ऊपर से 'नित्यकर्म प्रयोग' के लेखानुसार ज्ञातव्य है कि -''प्राणायाम सन्ध्याकर्म का एक प्रधान अङ्ग है। इसके अभ्यास से प्राणशक्ति का विकास होता है। प्राणशक्ति के अपव्यय से प्राणी रोग और अकालमृत्यु के शिकार होते हैं। प्राणायाम के द्वारा प्राणवायु का निरोध होने से प्राणशक्ति का आयाम-विस्तार होता है। प्राणक्रिया के अनियन्त्रित हो जाने के कारण ही जीवन के बहुत से अङ्ग बेकार-निकम्मे-हो जाते हैं। प्राणायाम के द्वारा क्रियाशक्ति नियन्त्रित की जाती है। वे नस नाडियाँ जो वायु संचार न होने के कारण अनेक प्रकार के रोगों का उद्गम बन रही हैं, पुनः अपना काम ठीक-ठीक करने लग जाती हैं। शास्त्रों में कहा गया है कि मन, प्राण और वीर्य ये तीनों एक ही वस्तु हैं। तीनों में से एक को वश में कर लिया जाय तो शेष दो अपने आप वश में हो जाते हैं। जिसने प्राण वश में कर लिये उसका मन वश में हो गया और उसका वीर्य भी स्थिर हो गया। मन की स्थिरता से आध्यात्मिक लाभ और वीर्य की स्थिरता से लौकिक-पारलौकिक लाभ सुनिश्चित है।

वैज्ञानिक दृष्टि से प्राणायाम का बहुत बड़ा महत्त्व है। फेफड़े में सात करोड़ कई लाख छोटे-छोटे छिद्र माने जाते है, उनके द्वारा समस्त शरीर में रक्त का प्रसार होता है। प्रणायाम करने से जो वायु रुककर भीतर जाती है वह बड़े वेग से फेफड़े में प्रवेश करती है। इससे उन छिद्रों में जो मल आदि ठहरे होते हैं, वे दूर हो जाते हैं और

रुधिर भी वहाँ से शुद्ध हो कर संचारित होता है । अतः अपनी वास्तविक उन्नति की इच्छा रखने वालों को पूर्ण तत्परता से प्राणायाम का अभ्यास करना चाहिये ।''

ऊपर से यह भी ज्ञातव्य है कि गरुणपुराणसारोद्धार-१५वें अध्याय के निम्नलिखित ७७वें श्लोक

एकविंशत्सहस्राणि षट्शतान्यधिकानि च ।
अहोरात्रेण श्वासस्य गतिः सूक्ष्मा स्मृता बुधैः ॥

के अनुसार २१ हजार ६ सौ श्वास दिन और रात में चलते हैं । जितने श्वास निकल जाते हैं, आयु का उतना ही ह्रास हो जाता है । त्रैकालिक प्राणायाम करने से जितने श्वास रुकेंगे उतनी आयुवृद्धि होगी । इसलिए भी शास्त्रों में प्राणायाम की भूरि-भूरि प्रशंसा की गई है ।

## आचमनम्

### [ मूलम् ]

योगियाज्ञवल्क्यः–

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन् ।
आन्तरं खिद्यते[1] यस्मात्तस्मादाचमनं स्मृतम् ॥

हेतु-निर्देशस्सर्वस्मिन्नेव प्राणायामे आचमनप्राप्त्यर्थः ।

### [ संस्कृत टीका ]

प्राणस्येति । प्राणस्य = प्राणवायोः । आयमनम् = निरोधम् । कृत्वा । प्रयतोऽपि सन् = पूतोऽपि सन् । आचामेत् । यस्माद्धेतोः, प्राणयामानन्तरम् । आन्तरम् = अन्तः करणम् । खिद्यते = खेदमाप्नोति । तस्मात् = खेदनिवारणार्थम् । आचमनम् =आचमनरूपेण समन्त्रकमपां पानम् । स्मृतम् = मुनिभिःकथितम् ।

हेतु निर्देश इति । हेतु निर्देशः = आन्तरिकखेद प्राप्ति रूप हेतोः कथनम् । सर्वस्मिन्नेव = सन्ध्येतरस्थलीयेऽपि । प्राणायामे । आचमनप्राप्त्यर्थः = आचमनविधानार्थः ।

### [ हिन्दी टीका ]

प्राणायाम करने के बाद पवित्र रहने पर भी आचमन करना चाहिए । प्राणायाम करने से अन्तःकरण खिन्न हो जाता है । अतः इस खेद को दूर करेन के लिए मुनियों

पाठ० (१) स्विद्यते ।

ने तीन सन्ध्याओं तथा अन्य स्थलों में भी प्राणायामों के बाद आचमन करने को कहा है।

## [ मूलम् ]

अत्र हलायुधनिबन्धे तु प्रक्षालितपाणिपादोऽप आचम्य अग्निश्च[1] मा मन्युश्चेति सायमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातरिति बौधायनवाक्य[2]माचमनमन्त्रे प्रमाणमुक्तम्। एतच्च वाक्यं[3] सन्ध्याप्राक्कालीनप्रोक्षणात्प्राक् श्रुतम्। तस्मात्प्राणायामानन्तरमाचमने मन्त्रसम्बन्धे आचार एव प्रमाणम्। अतएव मध्याह्नेऽपि मन्त्र इति केचित्[4] (तु)।

प्रातः सूर्यश्चमेत्युक्त्वा सायमग्निश्चमेति च।
आपः पुनन्तु मध्याह्ने कुर्यादाचमनं ततः।

इति राजाद्यलिखितं[5] मैत्रायणीयगृह्यपरिशिष्टवचनं प्रमाणमाहुः।

## [ संस्कृत टीका ]

अत्रेति। अत्र = प्रणायामोत्तराचमनविषये। हलायुधनिबन्धे = हलायुध शर्मणा विनिर्मिते 'ब्राह्मणसर्वस्व' नामके स्व निबन्धग्रन्थे तु। प्रकृतग्रन्थानुरोधात्सम्पूर्णं बौधायनवचनं वीरमित्रोदये यथा–

"अथातः सन्ध्योपासनविधिं व्याख्यास्यामः। तीर्थं गत्वाऽप्रयतोऽभिषिक्तः प्रयतोवाऽनभिषिक्तः प्रक्षालित[6] पाणिपादोऽप आचम्य अग्निश्चमा मन्युश्चेति सायमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातः सपवित्रेण पाणिना सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्य वर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवतीति ॥ १ ॥

तथा, सर्वकर्मणां चैवारम्भेषु प्राक्सन्ध्योपासनकालाच्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति ॥ इति ॥ २ ॥

---

पाठ० (१) सूर्यश्च मा मन्युश्चे ति प्रातरपः पीत्वाऽग्निश्च मा मन्युश्चेतिसायमपःपीत्वा। (२) वचन (३) वचनम्। (४) यद्यपि प्रकाशिताचारादर्शपुस्तके नित्यकृत्यार्णवे च 'मन्त्र इती' त्यनन्तरमेव केचिदिति पदं सम्बद्धमस्ति तथापि आहुरितिक्रियापदस्यक र्तृतया मयैव तत् संयोजितमस्ति प्रकरणमनुरुध्य इमानि च पाठान्तराणि नित्यकृत्यार्णवे आचारादर्शनाम्नोद्धृत पाठानुसारं सन्ति। परंवाजसनेयिसन्ध्यावन्दनप्रकरणाय नित्यकृत्यरत्नमालाटिप्पण्यनुसारन्तु राजाद्यलिखितमित्येवास्ति पाठः। मूलग्रन्थस्वरसादप्येष एव पाठः समीचीनः प्रतीयते। किन्तु कस्यापि कृते लिखितालिखितपाठभेदस्त्वतीवानर्थविधायक एव विज्ञेयः। (५) राजादिलिखितम्।

अत्रत्यव्याख्या प्रायः गोविन्दस्वामि प्रणीत विवरणानुसारिणी भविष्यति । यथा—

कर्त्तृसंस्कारवचनमिदम् । तीर्थम् = नदीदेवखातादि बहिर्ग्रामाज्जलाशयः । तत्र गतः सन्नप्रयत श्चेत् स्नायादेव । प्रयतश्चेन्न स्नायात् । स्नानास्नानयोर्विकल्पः । स च शक्त्यपेक्षः । अभिषिक्तः = स्नातः । प्रक्षालितपाणिपाद इत्यादि अभिषिक्तानभिषिक्तयोः साधारणम् । प्रक्षालनञ्चामणिबन्धात् । अप आचम्य = अमन्त्रकमेव प्रथममप आचम्य । 'अग्निश्च मा मन्युश्चेत्यनुवाकः सायङ्काले । 'सूर्यश्च मा मन्यु श्चे'ति प्रातः, पुनः अपः पीत्वा = आचम्य । सपवित्रेण पाणिना = पवित्रसहितेन दक्षिण पाणिना । प्रत्यहं हस्तपादादिभिः पा। करणस्यावश्यं-भावित्वादवलोपनसमर्थत्वाच्चैतयोः । स्नानप्रक्षालनाचमनप्रोक्षणानि च बाह्याभ्यन्तरमलावलोपार्थानीति गम्यते । प्रयतो भवतीति सूत्रान्ते निगमनात् । अतएव स्नानमप्यत्र हिरण्यशृङ्गमित्येवमादिभिः समन्त्रकमेव द्रष्टव्यमित्येतद् विवरणम् ।

''सुरभिमत्या='दधिक्राव्ण' इत्यादिकया ऋचा । अब्लिङ्गाभिः = आपो हिष्ठेत्यादिभिः । वारुणीभिः = वरुणदेवताकाभिः 'यच्चिद्धि ते विश' इत्याद्याभिस्तिसृभिः । पावमानीभिः = 'पवमानः सुवर्ज्जन' इत्यादिकाभिः । व्याहृतिभिः = सप्तव्याहृतिभिः, व्याहृतित्रयैर्वा । अन्यैश्च पवित्रैः = सुरभिमत्याद्यनन्तरोक्तैर्मन्त्रैः । आत्मानम् = आत्मावच्छेदकं शरीरम् । प्रोक्ष्य = संमार्ज्य । कुशोदकबिन्दून् शिरसि निःक्षिप्येत्यर्थः । प्रयतः = पूतः —सन्ध्योपासनयोग्यो भवतीत्याशयः ।

सर्वकर्मणामिति । सर्वकर्माणि = श्रुतिस्मृतिशिष्टागगगि हानि । सर्वकर्मग्रहणेनैव सिद्धे सन्ध्योपासनस्य पृथग् ग्रहणं तस्यात्यन्तप्राशस्त्यप्रति-पादनार्थम् । पवित्रसमूहेन = सुरभिमत्यादीनां स्तोमेनात्मानं प्रोक्ष्य (प्रयता भवति = सन्ध्योपासनयोग्यो भवति ) अद्भिरेवात्मानं परितोऽपि रक्षा कर्तव्येति'' तद्विवरणम् । एवञ्चैतद् बौधायनवचनम्, सन्ध्याप्राक्कालीन प्रोक्षणात् = सन्ध्योपासनप्राक्तनीनमार्जनात् । प्राक् = प्रायत्यसम्पादनार्थतया पूर्वम् । श्रुतम् = पठितम् । तस्मात् = अतः । प्राणायामानन्तरमाचमने = प्राणायामानन्तरं खेदापनयनार्थं भाविनि प्रथमाचमने । मन्त्रसम्बन्धे = मन्त्रप्रसङ्गे। आचार एव = परम्पराऽऽगतशिष्टव्यवहार एव । प्रमाणम् = हेतुः (प्रमाणं हेतु मर्यादा शास्त्रेयत्ता प्रमातृषु इत्यमरः) ।

अतएव = आचारस्यैव प्रमाणत्वादेव । मध्याह्नेऽपि = माध्याह्निकेऽपि सन्ध्योपासने बौधायनवचनेन मध्याह्नसन्ध्यायाः अनुल्लेखात् । केचित्तु प्रातः सूर्यश्च मेत्युक्त्वेत्यादि मैत्रायणीयगृह्यपरिशिष्ट-वचनं राजाद्यलिखिमपि प्रमाणमाहुः । आहुरित्यत्रारुचिबीजमपि राजाद्यलिखितत्वमेव बोध्यम् । अतएवात्र "अत्र यद्यपि वाजसनेयिगुरुणा योगिना मन्त्रान्वयो नाभिहितस्तथापि 'प्रातः सूर्यश्च.......इति मैत्रायणीयपरिशिष्टवचनं राजाद्यलिखितमप्याचारानुगृहीतं तत्र प्रमाणमिति नित्यकृत्यरत्नमाला -टिप्पण्यपि ।

## [ टिप्पणी ]

एतेन, "अप आचम्येति । एतदनन्तरं च मार्जनप्राणायामावन्य-मुन्युक्तावुपसंहरणीयौ । कल्पान्तरं वेदम् । अग्निश्चेत्यादि । इदञ्च समन्त्रकमाचमनं 'प्राणस्यायमनं कृत्वेत्यादि योगियाज्ञवल्क्यवाक्यैकवाक्यतया प्राणायामोत्तरं बोद्धव्यम् । सन्ध्याप्राक्कालीनाचमनस्य 'अप आचम्ये'त्यनेनैवाभिधानात् । सुरभिमत्येत्यादि । इदञ्चमार्जनम् 'प्राणानायम्य सम्प्रोक्ष्य त्र्यृचेनाब्दैवतेन तु' इत्यादि याज्ञवल्क्यादिवाक्यैकवाक्यतया प्राणायामानन्तरं बोद्धव्यम् । अतएव एदनन्तरमनेन गायत्रीजप एवाभिधास्यते । एतेन-सूर्यश्चेत्यादि बौधायनवाक्यं सन्ध्याप्राक्कालीन-प्रोक्षणात्प्राक् श्रुतमितितत्रैव मन्त्रान्वयबोधकम् । प्राणायामोत्तरकालीनाचमने मन्त्रसम्बन्धे आचार एव प्रमाणमिति श्रीदत्तपारिजाताद्युक्तमनादेयमिति वीरमित्रोदयोक्तमनादेयम् । कल्पान्तरं वेदमित्युक्त्वाऽप्यत्र कल्पे मुन्यन्तरवाक्यानामेकवाक्यतया यथाकथञ्चित् समन्वयकरणस्यानुपयुक्तत्वात् । तथात्वेऽपि 'प्रयतो भवती'ति सूत्रान्तनिगमनवाक्यानुसारं प्रायत्य- विधायकैतद्बौधायनवचनेन सह प्राणायामोत्तरमान्तरिक-खेदापनोदकाचमनविधायकस्य

प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन् ।
आन्तरं खिद्यते यस्मात्तस्मादाचमनं स्मृतम् ॥

इति योगियाज्ञवल्क्यवचनस्य विभिन्नोद्देश्यकतया विभिन्नकालिके विधि -विधायकतया च परस्परमेकवाक्यताया एवासम्भवात् । प्रत्युत ''अथाप्युदाहरन्ति दर्भेष्वासीनो दर्भान् धारयमाणः सोदकेन पाणिना प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेदपरिमितकृत्वः प्राणायामशो वा शतकृत्वस्त्रिभिस्तु प्राणायामैः श्रान्तो ब्रह्महृदयेन''[३] इत्याद्यग्रिमप्राणायामविधायकबौधायनवचनेन सह, 'प्राणायामशः= प्राणायामेन । एतदुक्तं भवति-यावद्भिः प्राणायामैः सावित्र्याः शतं भवति तावतः प्राणायामान् कुर्यादिति । ........पूर्वोक्तानामेकं कल्पमनुष्ठाय ततोब्रह्महृदयेन= प्रणवेन, त्रीन् प्राणायामान् कृत्वा तैः श्रान्तः = खिन्नः इति वीरमित्रोदयस्यैव व्याख्याऽनुसारं 'प्राणस्यायमनं कृत्वे'ति योगियाज्ञवल्क्योक्तस्य, प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु' इति याज्ञवल्क्योक्तवचनस्य च क्रमशः प्राणायामोत्तराचमनमार्जनयोर्विधायकस्यैकवाक्यतायाः सर्वथौचित्यात् । सुरभिमत्यादिमन्त्रैरात्मप्रोक्षणस्य सूत्रानुसारं तत्रैवा श्यकत्वात् । ''सर्वकर्मणां चैवारम्भेषु प्राक्सन्ध्योपासनकालाच्चैतेनैव पवित्र समूहेनात्मानं प्रोक्ष्य प्रयतो भवती'' त्यन्तसूत्रद्वयेन प्रायत्यार्थममन्त्रकसमन्त्रकाचमनद्वयस्य समन्त्रक प्रोक्षणद्वयस्य च बौधायनेन कल्पान्तरतया सन्ध्योपासनप्राक्काले एव विधानाच्च । कल्पान्तरतयैव चान्य कल्पापेक्षया प्रायत्यानन्तरमेव गायत्रीजप-विधानेऽपि क्षत्यभावाच्च ।

अतएव सुष्ठूक्तं श्रीदत्तोपाध्यायैः पारिजातदिभिश्च-''एतच्च वाक्यं सन्ध्याप्राक्कालीन प्रोक्षणात्प्राक्श्रुतम् । तस्मात्प्राणायामानन्तरमाचमने मन्त्र-सम्बन्धे आचार एव प्रमाणमित्यलम् ।

## [ हिन्दी टीका ]

प्राणायाम के बाद होनेवाले आचमन के प्रसंग में हलायुध (शर्मा के ब्राह्मणसर्वस्व नाम के) निबन्ध ने तो 'प्रक्षालितपाणिपादः' इत्यादि बौधायन वचन के आधार पर सायं सन्ध्या के समय ''अग्निश्चमा मन्युश्च'' इत्यादि मन्त्र को तथा प्रातः कालिक सन्ध्या के समय ''सूर्यश्च मा मन्युश्च'' इस मन्त्र को आचमन मन्त्र के रूप में कहा है किन्तु यह ठीक नहीं, क्योंकि यह बौधायन वचन सन्ध्या आरम्भ होने के पूर्व होनेवाले

मार्जन से पूर्व आवश्यक पवित्रता के प्रसंग में कहा गया है। अतः प्राणायाम के बाद होने वाले आचमनार्थ मन्त्र के संबन्ध में शिष्टों का आचार (परम्परा से आगत व्यवहार) ही प्रमाण है। इसी कारण मध्याह्न समय के संध्योपासन में भी मन्त्रपूर्वक ही आचामन होता है, अन्यथा बौधायन वचन में मध्याह्नसंध्या की चर्चा न रहने के कारण यहाँ मन्त्र प्रयोग नहीं हो पायेगा।

यहाँ कितने निबन्धकार तो ''प्रातःसंध्या में सूर्यश्च मा मन्युश्च'' सायं संध्या में 'आग्निश्च' तथा मध्याह्नसंध्या में 'आपः पुनन्तु' इत्यादि मैत्रायणीगृह्य परिशिष्टवचन को राजा आदि के द्वारा लिखित न होने पर भी प्रमाण मानते हैं।

परन्तु इसमें में अरुचि बीज राजा आदि के द्वारा प्रकृत मन्त्र को न लिखा जाना ही है।

ऊपर से ज्ञातव्य है कि यद्यपि श्रीदत्तोपाध्याय के ग्रन्थों में राजा, भूपाल, भूप आदि प्रयुक्त पदों का तात्पर्य धर्मशास्त्रेतिहास के लेखक पी० वी काणे महोदय के मतानुसार 'प्रायः भोजदेव (से) है। परन्तु इस सम्बन्ध में इसी ग्रन्थ का 'प्राक्कथन' लेख देखें।

**[ टिप्पणी हिन्दी ]**

यहाँ के मत मतान्तर सम्बन्धी वाद विवाद तथा प्रकृतग्रन्थ का तात्पर्य समझने की दृष्टि से टीका एवं टिप्पणी में उद्धृत मूल के तीन वचनों में प्रथम दो के गोविन्दस्वामीकृत विवरण (सूत्रव्याख्या) और तीसरे का वीरमित्रोदयकृत व्याख्या के अनुसार निम्न प्रकार है।

अब सन्ध्याविधि कही जायगी।

गाँव के बाहर नदी, देवखात आदि जलाशय के समीप जाकर अपवित्र हो तो स्नान कर ले। पवित्र हो तो स्नान की आवश्यकता नहीं। अनन्तर हाथ पैर धोकर बिना मन्त्र का प्रथम आचमन कर बाद में सायं काल 'अग्निश्च' इत्यादि मन्त्र पढ़कर तथा प्रातःकाल 'सूर्यश्च मा मन्युश्च' इत्यादि मन्त्र पढ़कर आचमन करे। इसके बाद 'दधि क्राव्ण' इत्यादि ऋचा ''आपो हि ष्ठा'' इत्यादि तीनों ऋचाएँ, ''यच्चिद्धि ते विशे'' इत्यादि वरुण देवता वाली तीनों ऋचाएँ 'हिरण्यवर्णाः शुचय' इत्यादि चारो ऋचाएँ, पवमानः सुवर्जन इत्यादि ऋचा, सातों या तीनों व्याहृतियाँ तथा सुरभिमती आदि के बाद में कहे गए मन्त्रों से कुशोदकविन्दुओं का शिरपर छिडककर वह उपासक पवित्र अर्थात् सन्ध्योपसन करने योग्य होता है। यह प्रथम वचन का अर्थ हुआ।

श्रुति स्मृति शिष्टागम सिद्ध सभी कर्मों के प्रारम्भ में तथा विशेषतः सन्ध्योपासनके पूर्व पूर्वनिर्दिष्ट वैदिक ऋचाओं से मार्जन (शिर पर कुशस्थित जल का प्रक्षेप -

छिड़कना) कर पवित्र अर्थात् सन्ध्योपासन-योग्य होना है । अनन्तर जल से अपने शरीर को परिवेष्टित कर रक्षा करनी चाहिए । यह उद्धृत द्वितीय वचन का अर्थ हुआ ।

टिप्पणी लेख में दिखाये गए "अथाप्युदाहरन्ति दर्भेष्वासीनः" इत्यादि तृतीय वचन का संक्षित अर्थ है कि कुशासन पर कुशहस्त तथा पूर्वमुंह हो बैठकर दाहिने हाथ में जल लेकर हजार, सौ या दश बार या दश के ऊपर तथा सौ के भीतर किसी नियत संख्या से गायत्री जप करके प्रणव से तीन बार प्राणायाम कर खिन्नमानस होते हुए भी 'इमं मे वरुण तत्त्वा यामि' इन दो मन्त्रें से उपस्थान करे ।

"यह (पहला) बौधायनवचन संन्ध्या (वन्दन) आरम्भ होने के पूर्व होने वाले मार्जन से पूर्व आवश्यक पवित्रता के प्रसंग में कहा गया है । अतः प्राणायाम के बाद होनेवाले आचमन के सम्बन्ध में शिष्टजनों का आचारण ही प्रमाण है"—आचारादर्श के इस विवेचन पर आपत्ति उठाते हुए वीरमित्रोदय का कहना है कि बौधायन वचनानुसार प्रथम आचमन के बाद अन्य मुनि प्रतिपादित मार्जन और प्राणायाम का भी यहाँ सम्बन्धन कर लेना चाहिए । अथवा यह कल्पान्तर (अन्यतरीके का सन्ध्यावन्दन) है ।

यहाँ 'अग्निश्च मा मन्युश्च' इत्यादि मन्त्रों के साथ होने वाले दूसरा आचमन "प्राणस्यायामनं कृत्वा" इत्यादि योगियाज्ञवल्क्य-वचन के साथ एकवाक्यता करने पर (यहीं) प्राणायाम के बाद समझा जाय । क्योंकि सन्ध्यावन्दन के पहले होनेवाला अमन्त्रक प्रथम आचमन तो शुरुआत के 'अप आचम्य' इतने से ही कह दिया गया है। 'सुरभिमती' आदि ऋचाओं (मन्त्रों) से कहा गया मार्जन भी "प्राणानायम्य संप्रोक्ष्य" आदि के वचनों के साथ एकवाक्यता करने पर (यहीं) प्राणायाम के बाद समझना चाहिए । अतएव इसके बाद बौधायन गायत्री जप कहेंगे ।

एतावता—श्रीदत्त तथा पारिजात प्रभृति ने जो कहा था कि "सूर्यश्च" इत्यादि बौधायनवचन सन्ध्या (वन्दन) आरम्भ होने के पूर्व होनेवाले मार्जन से पूर्व आवश्यक पवित्रता के प्रसंग में कहा गया है, अतः प्राणायाम के बाद होने वाले आचमनार्थ मन्त्र के संबन्ध में शिष्टजनों का आचार ही प्रमाण है, यह अनादेय (अग्राह्य) है । किन्तु वास्तव में देखा जाय तो वीरमित्रोदय का यह कहना ही अनादेय है । क्योंकि—

**पहली बात**, बौधायन धर्मसूत्र की गोविन्द स्वामीकृत विवरण नामक व्याख्या—जो आचारादर्शके अनुकूल है— के प्रतिकूल है ।

**दूसरी बात**, वीरमित्रोदय ने ही 'यह कल्पान्तर है' (दूसरे तरीके का संध्यावन्दन है) कहकर भी इस कल्प में अन्य मुनियों के वचनों की एकवाक्यता के आधार पर कहीं की बात को कहीं भी जैसे तैसे समन्वय करना उपयुक्त नहीं माना जा सकता है ।

**तीसरी बात,**—यदि वैसा भी मान लिया जाय तो भी बौधायनसूत्र के अन्तिम अंश 'प्रयतो भवति' (पवित्र सन्ध्योपासनयोग्य होता है) इस नियमन-परिणाम (नतीजा) वाले वचन के अनुसार पवित्रता विधायक इस बौधायन वचन के साथ प्राणायाम के बाद होनेवाले खेद के निवारण हेतु आचमन के विधायक 'प्रणस्यायमनं कृत्वा' इत्यादि योगियाज्ञवल्क्यावचन का विभिन्न उद्देश्य तथा विभिन्न काल में होने वाली विधियों का विधायक होने के कारण परस्पर एकवाक्यता ही नहीं हो सकती है।

**चौथी बात**—जब कि आगे ''अथाऽप्युदाहरन्ति'', इत्यादि वचनों के द्वारा सूत्रकार बौधायन प्राणायामों का विधान करते हैं और स्वयं वीरमित्रोदय की ही वैसी व्याख्या भी है तो फिर 'प्राणस्यायमनं कृत्वा' इस योगियाज्ञवल्क्यवचन तथा 'प्राणानायम्य' इत्यादि याज्ञवल्क्य वचन जो प्राणायामों के बाद के आचमन एवं मार्जन के विधायक हैं— की भी एकवाकयता होना सर्वथा उचित है।

**पाँचवीं बात**—'सुरभिमती' आदि मन्त्रों (ऋचाओं) के द्वारा कहे गए प्रोक्षणों को भी प्राणायाम के बाद की अपेक्षा सूत्र निर्देशानुसार पवित्रता निमित्त सन्ध्यावन्दन के पहले ही करना अवश्यक भी है।

**छठी बात**—न० १ तथा न० २ के ''सर्वकर्मणां चैवारम्भेषु''से लेकर प्रयतो भवति'' तक के दोनों वचनों के अनुसार बौधायन ने अमन्त्रक और समन्त्रक दोनों आचमनों एवं समन्त्रक दोनों मार्जनों का सन्ध्योपासन के पहले ही पवित्रता के निमित्त विधान किया है।

**सातवीं बात,**—बौधायन प्रदर्शित सन्ध्योपासन को कल्पान्तर होने के कारण अन्य कल्प की अपेक्षा पवित्रता के बाद ही गायत्रीजप का विधान होने पर भी कोई क्षति नहीं मानी जा सकती।

अत: श्रीदत्तोपाध्याय, पारिजात आदि का उक्त कथन कि—यह बौधायनवचन संध्या आरम्भ होने के पूर्व होने वाले मार्जन से पूर्व आवश्यक पवित्रता प्रसंग में कहा गया है, अत: प्राणायाम के बाद होने वाले आचमनार्थ मन्त्र के सम्बन्ध में शिष्टों का आचार भी प्रमाण है, यह सर्वथा युक्तियुक्त है। इति।

# मार्जनम्

## [ मूलम् ]

प्राणायामानन्तरमापोहिष्ठेत्यादिना मार्जनमाह याज्ञवल्क्य :—

**प्राणनायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु ॥ इति ॥**

विभागमाह व्यासः–

**विप्रुषोऽष्टौ क्षिपेन्मूर्ध्नि अधो यस्य क्षयाय च ॥ इति ॥**

प्रकारमाह छन्दोग–परिशिष्टे–

**शिरसो मार्जनं कुर्यात्कुशैः सोदक–बिन्दुभिः । इति ।**

**[ संस्कृत टीका ]**

प्राणायामेति । मार्जनमाह = प्राणायामोत्तरमाचमनानन्तरमापोहिष्ठेत्यादि ऋगंशात्मकनवभिर्मन्त्रैर्मार्जनमाहेत्यर्थः । प्राणानेति । प्राणानायम्य = पूर्वोक्तान् प्राणायामान् कृत्वा । त्र्यृचेन = तिस्रः ऋचः यस्मिन् सूक्ते (मन्त्रे) तेन । ऋक् पूरब्धूरिति (पा० सू०) समासान्तोऽच् । अब्दैवतेन = आपोजलानि–जला–धिष्ठितानि, दैवतानि–देवा यस्मिन् । तेन । आपोहिष्ठेत्यादिकेन मन्त्रेणेत्यर्थः । प्रतिपादस्य चात्र मन्त्रता बोध्या । सम्प्रोक्ष्य=मार्जनं कृत्वा । तु = तुरत्र चार्थे व्युत्क्रमे च । तेन, सम्प्रोक्ष्य चेत्यर्थः ।

**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्**

इत्युत्तरार्धेन अस्यान्वयः ।

अत्र यद्यपि प्राणायामाव्यवहितोत्तरमेव मार्जनं प्रतीयते, तथापि

**प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन्**

इति योगियाज्ञवल्क्यवचनादाचमनानन्तरं बोध्यम् । विप्रुषोऽष्टाविति । अत्र पूर्वोत्तरैः सहितं वचनं यथा–

**आपोहिष्ठेत्यृचा कुर्यान्मार्जनं च कुशोदकैः ।**
**प्रणवेन तु संयुक्तं क्षिपेद् वारि पदेपदे ॥**
**विप्रुषोऽष्टौ क्षिपेन्मूर्ध्नि अधो[1] यस्य क्षयाय च ।**
**रजस्तमोमोहजातान् जाग्रत्स्वप्नसुषुप्तिजान् ।**
**वाङ्मनःकर्मजान् दोषान्नवैतान्नवभिर्दहेत् ॥ इति ॥**

शिरसो मार्जनमिति । सोदकबिन्दुभिः कुशै : मार्जनं कुर्यादित्यन्वयः । कुशसंलग्नोदकविन्दुभिः शिरसः, मार्जनम् = प्रोक्षणं, कुर्यादिति भावः । कुशालाभे तु दैवतीर्थेन मार्जनं कुर्यात् । ''मार्जनार्चनबलिकर्म भोजनानि दैवतीर्थेन कुर्यादि'' ति हारीतवचनात् ।

[ हिन्दी टीका ]

याज्ञवल्क्य का कहना है कि पूर्वोक्त प्राणायाम करने के बाद 'आपोहिष्ठा' इत्यादि तीनों ऋचाओं के प्रत्येक पादरूप नौ मन्त्रों से मार्जन करे ।

व्यास ने विभाग इस प्रकार किया है कि 'आपो हि ष्ठा' इत्यादि तीनों ऋचाओं के ओंकार सहित नवों मन्त्रों के द्वारा कुशलग्न जल से मार्जन करें, जिसमें सात बार तो लगातार शिर पर और आठवीं बार भूमिपर तो पुनः नौवीं बार शिर पर मार्जन होंगे ।

यहाँ कही गई फलव्यवस्था ऊपर से ज्ञातव्य है कि रजोगुण तमोगुण तथा मोह से जाग्रत्, स्वप्न और सुषुप्ति अवस्था में हुए एवम् वाणी, मन और क्रिया से हुए नौवों प्रकार के दोषों को उन नौवों मन्त्रों से मार्जन कर दग्ध कर देना चहिए ।

छन्दोगपरिशिष्ट में भी इसी प्रकार कहा गया है कि कुशसंलग्न जल से आठ बार शिर का मार्जन करे । फलतः एक बार नीचे भूमि पर ।

यदि कुश नहीं मिल सके तो ऊपर से समझें कि दाहिने हाथ के दैवतीर्थ से मार्जन करें क्योंकि हारीत का वचन है कि मार्जन, पूजन, बलिकर्म तथा भोजन दैव तीर्थ से करें ।

[ मूलम् ]

यत्तु योगियाज्ञवल्क्येन

सार्धयर्चाऽ[1]धः प्रक्षिप्य सार्धयोर्ध्वन्तु प्रक्षिपेत् ।

इति विभाग उक्तः स प्राचीन मार्जने,

एवं सम्मार्जनं कृत्वा बाह्य-शुद्ध्यर्थ-कारणम् ।
[2]अथाभ्यन्तरशुद्ध्यर्थं प्राणायामान् समभ्यसेत् ॥

इति उपसंहारात् ।

पाठा० (१) सार्धामृचन्तु प्रक्षिप्य ऊर्ध्वं सार्धामधः क्षिपेत् । सार्द्धामृचञ्च प्रक्षिप्य ऊर्ध्वं सार्धां समुत्क्षिपेत् । (२) तथा ।

[ संस्कृत टीका ]

यत्त्विति । यत्तु योगियाज्ञवल्क्येन, ऋक्त्रयात्मको हि 'आपोहिष्ठे' त्यादि-मन्त्रः, तत्र सार्धया ऋचा कुशोदकम्, अधः = भूमौ, प्रक्षिप्य, सार्धयत्रृचा ऊर्ध्वम् = शिरसि, प्रक्षिपेदिति विभागः कथितः । स प्राचीनमार्जने = सन्योपासनारम्भात्प्राक्कालीनमार्जने ज्ञातव्यः, अग्रिमोपसंहारवचनात् । तथाहि, बाह्य-शुद्ध्यर्थकारणम् = बाह्यशौचहेतुम् । एवं सम्मार्जनम् = पूर्वोक्तसा-र्धयेत्यादिदिशा कुशोदकेन प्रोक्षणम् । कृत्वा । आभ्यन्तर शुद्ध्यर्थम् = अन्तःकरणपवित्रार्थम् । प्राणायामान् = पूर्वोक्तप्रणाल्या प्राणानामायमनानि । समभ्यसेत् = प्रत्यहमावर्तयेत् ।

[ हिन्दी टीका ]

"आपोहिष्ठा इत्यादि तीनों ऋचाओं में डेढ़ ऋचाओं से शिर पर कुशजल छिड़कें" इस वचन से योगियाज्ञवल्क्य ने जो मार्जन का विभाग किया है वह सन्ध्योपासन के पूर्व होने वाले मार्जन प्रसंग का है क्योंकि 'बाह्यशुद्धि के लिए उक्त रीति से मार्जन कर आन्तरिक शुद्धि के निमित्त प्राणायामों का प्रतिदिन भली भाँति अभ्यास करे यह उपसंहार वाक्य भी उन्हीं का है ।

[ मूलम् ]

एतच्च सम्मार्जनं स्नानासामर्थ्ये सन्ध्यानुकूल शौचार्थमेव । बाह्य शुद्ध्यर्थकारणमिति श्रवणात् । अधिकफलार्थं वा । अतएव बहुभिरननुष्ठानम् । अनावश्यकत्वात् कल्पान्तरञ्चेति परिभाव्यम् । प्राणायामानन्तरं मार्जनं सन्ध्यान्तर्गतमिति दर्शितमेव ।

[ संस्कृत टीका ]

एतच्चेति । एतच्च सम्मार्जनम् = सन्ध्याऽऽरम्भात् (प्राणायामात्) पूर्वम् आपोहिष्ठेत्यादिनाऽऽचरणीयं सम्मार्जनम् । स्नानासामर्थ्ये = रोगादिना स्नानाशक्तौ । सन्ध्याऽनुकूलशौचार्थमेव = सन्ध्योपयोगिशरीरशुद्ध्यर्थमेव । बाह्यशुद्ध्यर्थकारणमित्युक्तयोगियाज्ञवल्क्य वचने श्रवणात् ।

ननु नीरुजेन सविधिस्नानं कृत्वाऽऽचरणीये सन्ध्यावन्दने 'स्नानासामर्थ्ये' इत्यादि कथनं कथं सङ्गतं स्यादित्यत आह-अधिकफलार्थं वेति । वा =

अथवा । 'अधिकस्याधिकं फलमि' ति न्यायादधिकानुष्ठानमधिकफलार्थं वेदितव्यम् । अतएव = अधिक फलार्थत्वादेव । बहुभि:शिष्टै: । अननुष्ठानम् । बहुभि: शिष्टै: सन्ध्याऽऽरम्भात्पूर्वमुक्तापोहिष्ठेत्यदिना मार्जनं नाचर्यते इति भाव: । अनावश्यकत्वात् = बहुभिरननुष्ठानादवश्यंकरणीयत्वाभावात् । कल्पान्तरम् = अन्य: कल्प:-सन्ध्योपासनस्य भिन्न: प्रकार: । इति । परिभाव्यम् = पर्यालोच्यम् । सम्यगालोचनीयम् । दर्शितमिति । 'प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु' इति याज्ञवल्क्य वचन प्रदर्शनावसरे इति भाव: ।

अत्र'' श्रीदत्तस्तु प्राणायामात्पूर्वमभिहितमिदं मार्जनं स्नानासामर्थ्ये शरीर-शौचार्थमेव, बाह्यशुद्ध्यर्थमिति योगियाज्ञवल्क्य वचने श्रवणादित्याह । तच्चिन्त्यं, बाह्यशुद्ध्यर्थकारणत्वेऽपि स्नानानुकल्पे मानाभावादिति यदाह वीरमित्रोदय स्तन्न मनोरमम् । स्नानानुकल्पत्वेनोक्तमार्जनस्य कथनाभावात् । अपितु सन्ध्योपयोगिशौचार्थत्वेनैव प्रतिपादनात् । तदाशायत्वेऽपि तत्रारुचिमवबुद्ध्य ''अधिकफलार्थं वा'' कल्पान्तरञ्चेति परिभाव्यमि''त्या दिनाऽग्रे ग्रन्थकारेणैव सिद्धान्तपक्षस्य प्रतिपादनेन समाहितत्वात् । तदाशयत्वेऽपि च ''योगियाज्ञ-वल्क्यीयं 'शन्न आप' (श्च द्रुपदां कामत: सम्प्रयोजयेत्) इत्यादिनोक्तमार्जनन्तु अप्रयतस्य कर्माङ्गमुख्य स्नानाशक्तौ बोद्धयम् ।

**असामर्थ्यात् शरीरस्य कालशक्त्याद्यपेक्षया ।**

**मन्त्रस्नानादित: सप्त केचिदिच्छन्ति सूरय: ॥**

इति काल-दोषादसामर्थ्यादिति च योगियाज्ञवल्क्य-वचनादि'' ति बोध ायनोक्त-सन्ध्या-प्रयोग-प्रकरणीय वीरमित्रोदय-लेखेन ''स्नानासामर्थ्ये सन्ध्याऽनुकूल- शौचार्थमेवेति श्रीदत्तोपाध्याय (आचारादर्श) ग्रन्थस्यैव समर्थनात्। प्रत्युत ''मार्जनस्य बाह्यशुद्ध्यर्थ कारणत्वेऽपि स्नानोनुकल्पेकल्पे मानाभावादि'' ति स्वलेखस्यैव चिन्तनीयत्वाच्च ।

**[ हिन्दी टीका ]**

सन्ध्या (प्राणायाम) के पूर्व 'आपो हि ष्ठा' इत्यादि मन्त्रों से होने वाला मार्जन स्नान न करने की स्थिति में सन्ध्योपयोगी शुद्धि के लिए ही है । क्योंकि योगी

याज्ञवल्क्य के वचन में ''बाह्यशुद्धि का कारण उक्त मार्जन है'' ऐसा कहा गया है। अथवा 'अधिक करने का फल अधिक होता है' इस न्याय के अनुसार अधिक फल प्राप्ति के लिए ही इसे मानना चाहिए । इसी कारण बहुत से शिष्टजन यह मार्जन नहीं भी करते हैं । इस तरह आवश्यक न होने के कारण अन्यकल्प के अनुकूल इस मार्जन को समझना चाहिए ।

प्राणायाम के बाद होने वाला मार्जन सन्ध्या के अन्तर्गत है यह विषय ''प्राणायाम कर मार्जज करें'' इस याज्ञवल्क्य के वचन की व्याख्या के प्रसंग पर दिख ादिया ही गया है ।

यहाँ ऊपर से ज्ञातव्य है कि ''प्राणायाम के पूर्व कहा गया यह मार्जन स्नान की अशक्ति स्थिति में शरीर शुद्धि के लिए ही है, क्योंकि वह (मार्जन) योगियाज्ञवल्वय के वचनानुसार बाह्य (शारीरिक) शुद्धि के लिए ही है'' इस उक्त श्रीदत्तोपाध्याय-विवेचन पर आपत्ति उठाते वीरमित्रोदय का कहना है कि'' उक्त मार्जन को बाह्यशुद्धि का कारण होने पर भी स्नान का अनुकल्प (विकल्प) मानने में कोई भी प्रमाण नहीं है ।'' किन्तु वास्तव में देखा जाय तो वीरमित्रोदय का यह कथन उचित एवम् उपयुक्त नहीं है । क्योंकि,

**पहली बात**—श्रीदत्तोपाध्याय ने प्रथम इस मार्जन को को स्नान कचगकहा भी नहीं है, अपितु सन्ध्यावन्दन की उपयोगिनी शुद्धि के लिए ही माना है ।

**दूसरी बात**—यदि उनका (श्रीदत्त का) आशय वैसा मान भी लिया जाय तो भी इस पक्ष को (किन्हीं कारणवश) अरुचिकर मानते हुए उन्होंने ''यह मार्जन अधिक फल प्राप्ति के लिए अथवा अन्य कल्प के अनुसार (अनुकूल) है'' ग्रन्थ के इस सिद्धान्त कथन से उक्त आपत्ति का समाधान पहले ही कर दिया है ।

**तीसरी बात**—यदि सचमुच में वैसा आशय है तो बौधायनोक्त सन्ध्यावन्दन प्रकरण में वीरमित्रोदय द्वारा प्रतिपादन किया गया है कि 'योगियाज्ञवल्क्य के 'शन्न आपः' इत्यादि वचनानुसार कहा गया मार्जन कर्माङ्ग मुख्यस्नान की अशक्तिस्थिति में अपवित्र व्यक्ति के लिए है क्योंकि योगियाज्ञवल्क्य वचनानुसार कालदोष तथा शारीरिक असामर्थ्य मन्त्रस्नान आदि के द्वारा होनेवाले सात प्रकार के अनुकल्प स्नानों के कारण हैं ।'' इसके अनुसार अब कहा जा सकता है कि उक्त वीरमित्रोदय के लेख से जहाँ 'स्नान की अशक्ति स्थिति में सन्ध्यानुकूल शुद्धि के लिए मार्जन है'-इस श्रीदत्तोपाध्याय के कथन का समर्थन हो जाता है, वहीं इसके खण्डन में प्रयुक्त -'मार्जन को बाह्यशुद्धि का कारण होने पर भी स्नानानुकल्प मानने में कोई प्रमाण नहीं'-यह वीर मित्रोदय का कथन ही चिन्तनीय (खण्डनीय) हो जाता है ।

[ मूलम् ]

अयमपि सन्ध्यामन्त्रक्रमे प्राणायाममन्त्रानन्तरं मार्जनमन्त्रमाह-

ॐकारं व्याहृतीः सप्त गायत्रीं शिरसा सह ।
आपोहिष्ठा ऋचस्तिस्रः सूक्तं चैवाघमर्षणम् ॥ इति

[ संस्कृत टीका ]

अयमपीति । अयमपि = योगियाज्ञवल्क्योऽपि । सन्ध्यामन्त्रक्रमे = सन्ध्यामन्त्राणां कथनावसरे । प्राणायाममन्त्रानन्तरं मार्जनमन्त्रमाह = प्राणायाममन्त्रमुक्त्वा मार्जनमन्त्रमभिदधाति- ॐकारेत्यादिना । ॐकारम् = प्रणवम् । सप्तव्याहृतीः भूरादिसप्त । शिरसा सह='आपोज्योतिरि' त्यादिमन्त्रेण सह । गायत्रीम् । पठित्वा प्राणायामं कुर्यादित्यर्थः । ततः आपो हिष्ठा इत्यादि तिस्र ऋचः । अघमर्षणसूक्तञ्च । पठित्वा मार्जयेदिति भावः । अत्र यद्यपि प्राणायामाव्यवहितोत्तरमेव मार्जनं प्रतीयते तथापि प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन् इति पूर्वोदाहृत-योगियाज्ञवल्क्यवचनात् ।

[ हिन्दी टीका ]

योगियाज्ञवल्क्य ने भी सन्ध्यामन्त्र कथन क्रम में प्राणायाम का मन्त्र कहकर मार्जन का मन्त्र कहा है । यथा-ॐकार, भूः भुवः, इत्यादि सातो व्याहृतियाँ 'आपोज्योतिः' इत्यादि गायत्री शिर मन्त्र के साथ गायत्री, मन्त्र पढ़ कर प्राणायाम करे । अनन्तर 'आपोहिष्ठा' इत्यादि तीनों ऋचाएँ तथा 'अघमर्षण' सूक्त पढकर मार्जन करे ।

ऊपर से ज्ञातव्य है कि यहाँ यद्यपि प्राणायाम के तुरत बाद ही मन्त्रकथनक्रम से मार्जन करना प्रतीत हो रहा है तथापि 'प्राणस्यायमनं कृत्वा' इत्यादिपूर्वोक्त योगि याज्ञवल्क्य के वचनानुसार इसे बीच में होने वाले मार्जन के बाद समझना चाहिए ।

[ मूलम् ]

अत्र यद्यप्यापोहिष्ठाऽनन्तरमघमर्षणमुक्तं तथापि मध्ये द्रुपदा बोद्धव्या सर्वत्र

[१]मार्जनं कर्म अब्लिङ्गानामुदाहृतम्

---

पाठा० ( १ ) पावनं । पावनं= मार्जनमित्याचारचिन्तामणिः ।

इत्यनन्तरं द्रुपदा ऋष्यादिकमुक्त्वा-

अपःपुण्याः[१] समादाय त्रिःपठेद् द्रुपदामृचम् ।
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥

इति द्रुपदाप्रयोगमुक्त्वा 'एवं ज्ञात्वा तु मन्त्राणामि' त्यादिना योगियाज्ञवल्क्येन सन्ध्या-प्रयोगाभिधानात् । एवञ्चोक्त एव द्रुपदाप्रयोगः सन्ध्यायां ग्राह्यः, प्रकारान्तरे प्रमाणाभावात् ।

[ संस्कृत टीका ]

अत्रेति । अत्र = योगियाज्ञवल्क्य वचने । यद्यपि आपोष्ठेत्यादिना मार्जन-करणोत्तरमघमर्षणमन्त्र-प्रयोगः योगियाज्ञवल्क्येन सन्ध्यामन्त्र-कथनक्रमे उक्त स्तथाऽप्यनयोर्मध्ये योगियाज्ञवल्क्यवचनरीत्यैव द्रुपदामन्त्र-प्रयोगो ज्ञेयः । अब्लिङ्गानामिति । अब्लिङ्गानाम् = आपोहिष्ठेत्यादीनामित्याचारचिन्तामणिः । मार्जनं कर्म । सर्वत्र=सन्ध्यात्रयेऽन्ये च शुभकर्मणि । उदाहृतम् = प्राचीनैर्मुनिभिरभिहितम् । आपोहिष्ठेत्यादिमन्त्रैः सर्वस्मिन्नपि सन्ध्यावन्दनेऽन्ये च शुभकर्मणि मार्जनं कर्म कर्तव्यमिति भावः । इत्यनन्तरम् = एतदनन्तम् । द्रुपदा ऋष्यादिकमुक्त्वा ।

कोकिलो राजपुत्रस्तु द्रुपदादार्षमुच्यते ।

इत्यादिना द्रुपदामन्त्रस्य ऋष्यादिचतुष्कमुक्त्वा । अपः पुण्या इति । पुण्या आपः = पवित्रं जलम् । पाण्योरिति पाठे तु हस्तद्वये इत्यर्थः । समादाय = गृहीत्वा । द्रुपदामृचम् । त्रिःपठेत् । अनन्तरं तत्तोयम् । तज्जलम् । मूर्ध्नि = शिरसि । विन्यस्य सम्प्रोक्ष्य । सर्वपापैः = कायादिकृतैः सर्वविधपापैः प्रमुच्यते = मुक्तो भवतीत्यर्थः । इति = इत्येवंरूपेण । द्रुपदाप्रयोगमुक्तवा = द्रुपदामन्त्रस्य व्यवहारमुक्त्वा । **एवं ज्ञात्वेति** । "एवं ज्ञात्वा तु मन्त्राणां प्रयोगं वै द्विजोत्तमाः" इत्यादिना सन्ध्याप्रयोगाभिघानात् । एवञ्च, उक्तएव = इदानीमेव पुरोदीरितः । द्रुपदा प्रयोगः= द्रुपदामन्त्रस्य क्रियान्वितव्यवहारः ।

---

पाठा० ( १ ) पाण्योः

सन्ध्यायाम्=सन्ध्यान्तर्गततया। ग्राह्यः = बोध्यः । प्रकारान्तरेद्रुपदामन्त्र करकैतत्प्रयोगात्मक प्राकार भिन्न प्रकारे प्रमाणा भावात् = प्रमाणासत्वात् । तथाच - आपोहिष्ठेत्यादिना मार्जनानन्तरमुक्तरीत्या द्रुपदामन्त्राभिमन्त्रितं जलं शिरसि प्रक्षिपेदिति सारांशः ।

अत्रैवमेवनित्यकृत्यार्णवधृताचारविवेकोऽ पि यथा-"तत्र यद्यपि

ओंकारं व्याहृतीः सप्त गायत्री शिरसा सह ।
आपोहिष्ठा ऋचस्तिस्रः सूक्तञ्चैवाघमर्षणम् ॥

इति सन्ध्यामन्त्रक्रममभिधाय यथाश्रुतयोगियाज्ञवल्क्योक्त आपो हिष्ठानन्तरमेवाघमर्षणप्रयोगेऽवगम्यते । तथापि मध्ये द्रुपदा बोद्धव्या । 'सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम्, इत्यनन्तरं-

कोकिलो राजपुत्रस्तु द्रुपदादार्षमुच्यते ।

इत्यादिना च द्रुपदा ऋष्यादिकमुक्त्वा

अपः पाण्योः समादाय त्रिः पठेद् द्रुपदामृचम् ।
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥

इति योगियाज्ञवल्क्येनैव तथा क्रमभिधानात् । तदुक्त एव च सन्ध्यायां द्रुपदा-प्रयोगो ग्राह्यः । प्रकारान्तेण प्रयोगाभावादि" ति ।

[ हिन्दी टीका ]

उक्तयोगियाज्ञवल्क्य वचन में यद्यपि आपोहिष्ठा आदि मन्त्र से मार्जन के बाद अघमर्षण मन्त्र कहा गया है, तथापि इन दोनों के मध्य में द्रुपदा मन्त्र समझना चाहिए । क्योंकि क्रम प्रसंग में-"सर्वत्र मार्जनं कर्म" इत्यादि वचनानुसार 'आपोहिष्ठा' इत्यादि मन्त्रों से सन्ध्या तथा अन्य शुभकर्मो में मार्जन करना मुनिसम्मत है, यह कहने के बाद 'द्रुपदा' मन्त्र का ऋष्यादि कहकर "आपः पुण्याः (पाण्योः) इत्यादि वचनानुसार दोनों हाथों में पवित्र जल लेकर द्रुपदा ऋचा तीन बार पढ़े और उस जल को अपने मस्तक पर छिड़के । इससे कायादिकृत सभी पापों से मुक्त हो जाता है । इस तरह 'द्रुपदा' मन्त्र का प्रयोग (क्रिया के साथ व्यवहार) कहकर अन्त में 'एवं ज्ञात्वातु मन्त्राणाम्' इस वचन के द्वारा (अर्थात् इस तरह मन्त्रों का प्रयोग समझ कर द्विजश्रेष्ठ सन्ध्योपासन

करे) योगियाज्ञवल्क्य ने सन्ध्या प्रयोग कहा है। अब फलितार्थ में उक्त द्रुपदा मन्त्र का प्रयोग सन्ध्या के अन्तर्गत समझना चाहिए क्योंकि द्रुपदामन्त्र के होनेवाले प्रयोग स्वरूप प्रकार से भिन्न प्रकार में प्रमाण नहीं है।

सारांश में सिद्ध यह हुआ कि-'आपोहिंष्ठा' इत्यादि मन्त्रों से मार्जन के बाद द्रुपदा मन्त्र के द्वारा अभिमन्त्रित जल से भी मार्जन (शिर पर जल को छिड़कना) करे।

## [ मूलम् ]

अघमर्षण-प्रयोगस्तु छन्दोग-परिशिष्टे दर्शित:

**करेणोद्धृत्य सलिलं प्राणमासज्य तत्र च।**
**जपेदनायतासुर्वा त्रिः सकृद्वाऽघमर्षणम्॥ इति**

अनायतासुर्वेति विकल्पबला[1]दायतासुरनायतासुरपि। आयतासुपक्षे सकृत्। अनायतासुपक्षे त्रिरिति व्यवस्थितो[2] विकल्पः।

## [ संस्कृत टीका ]

अघमर्षणेति। करेणेति। करेण = दक्षिणकरेणेत्यर्थः।

**यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न चोच्यते।**
**दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः॥**

इतिच्छन्दोगपरिशिष्टात्। सलिलम् = जलम्। उद्धृत्य = गृहीत्वा। तत्र = सलिले च। घ्राणम् = घ्राणेन्द्रियस्थानम्-नासाग्रभागमिति यावत्। आसज्य=संयोज्य। अनायतासुः = अनिरुद्धश्वासः। वेति विकल्पबोधक-पदबलादायतासुरपि = निरुद्धश्वासोऽपि ग्राह्यः। त्रिः अनायतासुपक्षे वारत्रयम्। सकृत् = आयतासु पक्षे एकवारम्। अघमर्षणम् = एतत्सूक्तम्। जपेत् = पठेत्। अनायतासु-आयतासु-पक्षद्वय, भेदेन व्यवस्थितस्त्रिः सकृद्वेति अघमर्षण-सूक्तपाठविकल्पो ज्ञेयः।

"अनायतासुर्वेति विकल्पादायतासुर्वा जपेदिति नेयम्। त्रिःसकृद्वेति शक्त्यपेक्षया विकल्प इत्याचार विवेकः। आचारचिन्तामणिस्वरसोऽप्येवमि-" ति नित्यकृत्यार्णवः। "अत्रायतासुपक्षे सकृदनायतासुपक्षे त्रिर्गोभिलानुसारात्। शक्त्यपेक्षयेत्यन्ये" इति नित्यकृत्यरत्नमाला टिप्पणी।

---

पाठा० (१) दायतासुर्वा (२) व्यवस्थितविकल्पः

"अस्य (अघमर्षण) मन्त्रस्याश्वमेधावभृथे विशिष्य विनियोगात्कर्मान्तरेऽपि तथैवादृष्टार्थमभिधानं न तु तत्त द्रूपेण विनियोग इति ज्ञेयम् । अत्र शौनकः

**उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते ।**

**निश्वास्य नासिकाग्रे तु पाप्मानं पुरुषं स्मरेत् ।**

**ऋतञ्चेति ऋचा तच्च वामभागे क्षितौ क्षिपेत् । इति।**

अत्र गृह्य परिषिष्टम्-"तदुदकमवीक्षमाणो वामतो भुवि तीव्रपातेन क्षिप्त्वा पाप्मानं वज्रहतं सहस्रधा दलितं भावयेदित्यपि सैव ।"

तथा चान्यवचनानुसारमपि एतदघमर्षणसूक्तजपसमये मनस्येतादृशी भावनोदनीया यद् गोकर्णवत्कृते दक्षिणहस्ते स्थितं नासिका-स्पृष्ट-जलमिदं नासिकाया वामपुटमार्गेणान्तः प्रविश्य दक्षिणपुटमार्गेण आत्मानमन्तर्व्याप्य स्थितं कृष्णघोरपुरुषाकृतिं वज्रहतं सहस्रधादालितं पाप्मानं निष्कासयति । तत्र तज्जलमपश्यन्नेव स्व वाम भागे पृथिव्यां तीव्रं प्रक्षिपेदिति सारः । सन्ध्योपासन-रहस्ये तु प्रयोगोऽयं पाप्मव्यपोह (पापनाशविधि) शब्देनाख्यायते । सर्वविध-पापक्षयहेतुत्वादघमर्षण-सूक्तस्योत्कर्षमाह मनुः-

**यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः ।**

**तथाऽघमर्षणं सूक्तं सर्वपापापनोदम् ॥ ( ११ । २६० ) इति ।**

**[ हिन्दी टीका ]**

मार्जन के बाद अघमर्षण सूक्त का प्रयोग छन्दोगपरिशिष्ट में कात्यायन ने यों दिखाया है कि- दाहिने हाथ में जल लेकर उसमें नासिका के अग्रभाग को संलग्न कर निरुद्धश्वास (श्वास रोका गया) हो तो एकबार, निरुद्धश्वास न हो तो तीन बार अघमर्षण मन्त्र का जप करे ।

ऊपर से ज्ञातव्य है किन्तु आचारविवेक तथा आचारचिन्तामणि का विवेचन है कि यह विकल्प शक्त्यपेक्षाकृत है । फिर भी नित्यकृत्यरत्नमाला टिप्पणी ने गोभिल वचनानुसार आचारादर्श का मत ही अपनाया है ।

उक्त मन्त्र का पाठ करते समय मन में ऐसी भावना करनी चाहिए कि गाय के कान आकार के जैसे किये गए दाहिने हाथ में स्थित तथा नासिका से स्पृष्ट (छुपाए गए)

जल नासिका के बायें छिद्रमार्ग से भीतर घुसकर दाहिने छिद्रमार्ग से उस पाप को निंकाल रहा है जो अपनी आत्माको चारों तरफ से घेरे हुए तथा काले रंग वाले भयङ्कर पुरुष के शक्ल का है किन्तु इसे वज्र से मार दिया गया है और इसके हजारों टुकड़े कर दिये गये हैं । बाद में उस जल की ओर विना देखे ही उसे अपनी बायी ओर जोर से फेंक दें ।

अघमर्षणसूक्त के फलोत्कर्ष सम्बन्ध मे मनु का कहना है कि यज्ञों में राजा अश्वमेध के जैसे यह अघमर्षण सूक्त (मन्त्र) भी सर्वविध पापों का नाश करने वाला है ।

यहाँ नित्यकृत्यरत्नमाला टिप्पणी के अनुसार ज्ञातव्य है कि इस अघमर्षण मन्त्र का विनियोग विशेषकर अश्वमेघ यज्ञ के अन्त मे होनेवाले स्नान (अवभृथ) के लिए किया गया है, फिर भी अन्य कर्मों में भी अदृष्टोत्पादन के निमित्त उसी तरह ऋष्यादि चतुष्क का कथन होना चाहिए नकि उन उन कर्म विशेषों का नाम लेकर विनियोग वाक्य जोड़ा जाना चाहिए ।

नित्यकर्मप्रयोग के लेखानुसार यह भी ज्ञातव्य है कि सत्यतः परमात्मा के साक्षात्कार में मल, विक्षेप और आवरण ये तीन दोष बाधक माने जाते हैं । सन्ध्या के द्वारा मल, विक्षेप और आवरण सभी नष्ट हो जाते हैं । अघमर्षण मन्त्र मल का नाश करता है, विक्षेप को दूर भगाता है, मन में प्रसन्नता भर देता है और मेरे पाप नष्ट हो गये इस भाव को दृढ़ कर देता है । दृढ़ता से विक्षेप नष्ट होता है और मन्त्र के अर्थ पर विचार करते ही आवरण भङ्ग हो जाता है । अघमर्षण मन्त्र के अर्थ पर ध्यान देने से संसार के सब पदार्थों का सम्बन्ध भगवान् के साथ जोड़कर साधक उस प्रभुका वैभव और उसकी लीला देखने में मस्त हो जाता है । इसलिए सब प्रकार के साधकों को अघमर्षण का सविधि अनुष्ठान करना चाहिए ।

## [ मूलम् ]

शङ्खः—

उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्मतः ।
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ।

इति प्राणायामानन्तरमाचमन-विधानादायतासु पक्षे शङ्खोक्तवचनमुप- संहर्तव्य मिति केचित् । एतच्चाचमनं मार्जनानन्तरं श्रुतमपि ऋष्यन्तरोक्ताघमर्षणानन्तर-मनुष्ठेयम् । शङ्खेनाप्येतदनन्तरं सूर्याञ्जलिदानाभिधानादुपस्थानात्प्राक् ।

[ संस्कृत टीका ]

उपस्पृशेदिति । अत्र केचिद्-आयतासु (निरुद्धासुत्व) पक्षे प्राणायामानन्तरं "प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन्" इति योगियाज्ञवल्क्यवचनेना-चमनविधानाद्- "अन्तश्चरसि भूतेषु" इत्यादि शङ्खोक्तवचनरूपमन्त्रेण आचमनमुप संहन्ति । परन्तु, एतच्चाचमनम् = "उपस्पृशेत्ततःपश्चान्मन्त्रेणानेन धर्मतः" इति वचनेन बोधितम्-' अन्तश्चरसी' त्यादि मन्त्रेणाचमनम् । मार्जनानन्तरं श्रुतमपि = आपोहिष्ठेत्यादिना मार्जनकथनानन्तरं कथितमपि । यथा च दर्शितवचनात्प्राक्तनं शङ्खवचनम्-

आचम्यैवं पुरा प्रोक्तास्तीर्थसम्मार्जने तु ये ।
मन्त्रास्तैर्मन्त्रितं तोयं मूर्ध्नि भूमौ तथा क्षिपेत् ॥
क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति ।
भूमौ क्षिप्तेन हन्यन्ते असुरा देव-शत्रवः ॥
व्याहृतीःकीर्त्तयेच्चैव तथैवाव्ययमक्षरम् । इति।

एवम् = अनन्तरोक्ताचमन कल्पेन । तीर्थ सम्मार्जने = स्नानाङ्गभूतान्तर्जल-मार्जने । ते मन्त्राः स्नान प्रकरणे तेनैवोक्ता :-आपोहिष्ठाहिष्ठाभिस्तिसृभिर्यथा-वदनुपूर्वशः इत्यादि । अव्ययम् = ओंकारम् ।

ऋष्यन्तरेति । ऋष्यन्तरोक्ताघमर्षणानन्तरम् = अन्येन ऋषिणा कात्यायनेनोक्ता-घमर्षण प्रयोगादनन्तरम् । अनुष्ठेयम् = आचारणीयम् । कस्मात्पूर्व मित्याकांक्षायामाह -शङ्खेनापीति । शङ्खेनापि, एतदनन्तरम् = अन्तश्चरसीत्यादिना विधेयाचमनोत्तरम् । सूर्याञ्जलिदानाभिधानात् = सूर्यायाञ्जलिदानस्य कथनात् । यथा च शङ्खवचनम्:-

आचम्य तु ततः पश्चादादित्याभिमुखो जलम् ।
उदुत्यं जातवेदेति मन्त्रेणानेन च क्षिपेत् । इति ।

तथा च उपस्थानात्प्राक् = सूर्योपस्थानकरणात्पूर्वम् । अनुष्ठेयमित्यस्य सम्बन्धः । वाजसनेयिनां तु द्रुपदाऽघमर्षणानन्तरमनुष्ठेयम्, शङ्खेनाप्येतदनन्तरं सूर्याञ्जलिदानोक्तेरिति रत्नाकरोऽपि । वीरमित्रोदयस्तु वस्तुतस्तु शङ्खोक्तस्य कल्पान्तरत्वादत्राचमनेऽनाकाङ्क्षितस्य मन्त्रस्योपसंहारे मूलं चिन्त्यमित्याह ।

[ हिन्दी टीका ]

यहाँ किसी का कहना है कि श्वास रोकने वाले कल्प में ''पवित्र जन भी प्राणायाम कर आचमन करें'' इस योगियाज्ञवल्क्य के कथनानुसार प्राणायाम के बाद आचमन का विधान है । अतः शङ्ख द्वारा कहे गये-

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोऽमृतम् ।।

इस मन्त्र से प्राणायाम के बाद आचमन करें परन्तु यह ठीक नहीं, क्योंकि अन्तश्चरसि मन्त्र से होने वाला आचमन शंखस्मृति में यद्यपि 'आपोहिष्ठा' आदि ऋचाओं से होने वाले मार्जन के बाद कहा गया है तो भी कात्यायन आदि अन्य ऋषि द्वारा कहे गए अघमर्षण मन्त्र-प्रयोग के बाद और शंख के द्वारा भी इस आमचन के बाद सूर्य के लिए अञ्जलिदान कहे जाने के कारण सूर्योपस्थान के पूर्व यह 'अन्तश्चरसि' इत्यादि मन्त्र से होने वाला आचमन करना चाहिए ।

## अर्घदानम्

[ मूलम् ]

छन्दोगपरिशिष्टे-

उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसा ।

प्रोहेत् = क्षिपेत् । त्रिकेण

प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयिका ।

इत्यनेनैव प्रागुक्तेन । अञ्जलिमित्येकत्वस्य विवक्षितत्वादञ्जलित्रयदानमशुद्धम् ।

[ संस्कृत टीका ]

उत्थायेति । छन्दोगपरिशिष्टेऽघमर्षणजपानन्तरमाह-उत्थायेत्यादि । अम्भसः अञ्जलिम् अञ्जलौ जलं प्रपूर्य । उत्थाय । त्रिकेण = अनन्तरं प्रागुक्त-प्रणव-

महाव्याहृति-गायत्र्यात्मक-मन्त्रत्रिकेण । अर्कं प्रति = सूर्याभिमुखम् । प्रोहेत्=क्षिपेत् । अत्र "अञ्जलिमित्यंत्रैकत्वस्य विवक्षितत्वादञ्जलित्रयदानमशुद्ध-मित्याचारादर्शः । अञ्जलावेकत्वञ्च विवक्षितं विधेयगत संख्यात्वात् इत्याचार-चिन्तामण्याचारविवेकावि"ति नित्यकृत्यार्णवः । वीरमित्रोदयस्तु-अत्राञ्जलिमित्येकत्वस्य विवक्षितत्वादञ्जलित्रयदानमशुद्धमिति श्रीदत्तपारिजातौ । वस्तुतस्तु अघमर्षण-जपानन्तरं त्रीनुदकाञ्जलीनादित्य उत्क्षिपेदिति गोभिलवचनादञ्जलित्रयदानमपि शास्त्रार्थः । एवञ्च

**कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।**
**आदित्याभिमुखँस्तिष्ठँ स्त्रिरर्घ्यं सन्ध्ययोः क्षिपेत् ॥**
**सकृदेव तु मध्याह्ने क्षेपणीयं द्विजातिभिः ॥ इति**

व्यासवाक्यव्यवस्थाऽवसेया । अत्राभिमन्त्रितजलस्य त्रिः प्रक्षेपाभिधा-नात्प्रत्यञ्जलि मन्त्र इति । एवमेव व्यासवाक्यं दर्शयन् नित्यकृत्यार्णवोऽपि वीरमित्रोदयतोऽपि पूर्वनिर्मितायां स्मृतिदीपिकायां नित्यकृत्यार्णवानुसारं वामदेवोपाध्यायास्तु-पुष्पमिश्रितजलानि अञ्जलित्रयेण सूर्यमुद्दिश्य प्रक्षिपेदित्यर्थः, 'पुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्ये' ति पारस्करात् ,

**मन्देह-देह -नाशार्थमुदयास्तमये रविः ।**
**समीहते द्विजोत्सृष्टं मन्त्रतोयाञ्जलित्रयम् ॥**

इति काशीखण्डाच्चेत्याहुः ।

परं नित्यकृत्यरत्नमालाटिप्पणी तु-अत्राञ्जलिमित्येकत्वस्य विवक्षितत्वादञ्जलित्रयदानमशुद्धमिति स्मृतिसारः । रूपनाथाह्निकादीना-मप्ययमेव स्वरसः । प्रागुक्तगोभिलवाक्यमनुसरन्तो वामदेवोपाध्याया अञ्जलित्रयमेव व्यलिखन् । तदेतद्व्यवातिष्ठिपद् व्यासः-

**कराभ्यां तोयमादाय गायत्र्याचाभिमन्त्रितम् ।** इत्यादि,

निष्कर्षे निबन्धकारेषु एकार्ध्यदानानुयायिनां मतिमतां बहुमतं दर्शं दर्शमाचारदर्शव्याख्यानमेव प्राचीनतयाऽपि समीचीनतामाचिनोतीति प्रतिभाति ।

अथवा प्रत्यर्कमेकमञ्जलिमञ्जलित्रयं वा निक्षिप्येति नित्यकृत्यरत्नमाला लेखानुसारं पूर्वोक्त व्यासवचनानुसारे व्यवहारं वर्ततां नाम विकल्पः ।

अत्रार्घ्यदाने शौनकः-

ईषन्नम्रः प्रभाते तु मध्याह्ने ऋजुसंस्थितः ।
द्विजोऽर्घं प्रक्षिपेद्देव्या सायं तूपविशन्भुवि ॥

देव्या = गायत्र्या ।

अत्रार्घ्ये हस्तेन क्रियमाणे तर्जन्यङ्गुष्ठयोगो निषिद्ध इति मुक्तहस्तेनैवार्घ्यं निक्षिपेत् । तथा च संग्रहे-

मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् ।
तर्जन्यङ्गुष्ठयोगे तु राक्षसी मुद्रिका भवेत् ॥
राक्षस्या मुद्रया दत्तं तत्तोयं रुधिरं भवेत् ।
जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ॥ इति ।

[ हिन्दी टीका ]

अघमर्षण जप के बाद छन्दोगपरिशिष्ट में कहा गया है कि अपनी अंजुलि में जल भर कर उठकर सूर्य के प्रति (सूर्याभिमुख हो) प्रणव, भूर्भुवः स्वः तथा गायत्री मन्त्र पढ़ कर सूर्यदेव को अर्घ्यदान करे ।

यहाँ 'अञ्जलिम्' पद में एकवचन पढे जाने के कारण एक ही बार जल-पूर्ण अञ्जलिदान करना चाहिए, तीन बार का अंजलिदान अशुद्ध (अप्रमाणिक) है यह मत आचारादर्श (श्रीदत्त) कार है । वीरमित्रोदय के अनुसार पारिजातकार का भी यही मत समझना चाहिए । नित्यकृत्यार्णव में उद्धृत आचार चिन्तामणि तथा आचार विवेक का भी यही कहना है । कि गोभिल तथा व्यास के वचनानुसार मध्याह्न में एकबार और इससे अन्य (प्रातः एवं सायं) संध्याओं में तीन-तीन बार अर्घ्य दान होने चाहिए । इन सब के विपरीत (नित्यकृत्यार्णव में उद्धृत) स्मृति दीपिका के अनुसार दिखाये गए पारस्कर गृह्य सूत्र तथा काशीखण्ड के वचनों के आधार पर सभी संध्याओं में पुष्पमिश्रित जलाञ्जलियों से तीन-तीन अर्घ्यदान होने चाहिएँ ।

यहीं नित्यकृत्य रत्नमाला टिप्पणी के अनुसार स्मृतिसार का मन्तव्य तथा विद्वद्वर रूपनाथ प्रभृति के निबन्धों का स्वरस है कि एक ही अञ्जलि दान उचित है। फलतः अञ्जलित्रयदान अशुद्ध है । पहले कहे गए गोभिल वचन का अनुसरण करते हुए वामदेवोपाध्याय (स्मृतिदीपिका) ने तीन अंजलियों का दान ही लिखा है । किन्तु व्यासवचन ने समन्वयात्मक व्यवस्था कर दी है ।

नित्यकृत्यरत्नमाला टिप्पणी द्वारा प्रतिपादित यह व्यवस्था नित्यकृत्यार्णव तथा वीर मित्रोदय द्वारा प्रतिपादित पूर्वोक्त व्यवस्था ही समझी जाय ।

इन विविध विवेचन प्रदर्शनों के बाद निष्कर्ष में एक अर्घ्यदान के अनुयायी निबन्धकारों का बहुमत देखने तथा बहु प्राचीनता के कारण भी मुझे तो आचारादर्श का विवेचन समीचीन प्रतीत होता है । अथवा नित्यकृत्यार्णवं, वीरमित्रोदय तथा नित्यकृत्यरत्नमालाटिप्पणी के अनुसार मध्याह्न के समय एक, तो प्रातः सायं संध्याओं में तीन तीन अञ्जलिदान अथवा नित्यकृत्यरत्नमाला के "प्रत्येकमञ्जलिमञ्जलित्रयं वा निःक्षिप्य" (सूर्य को एक या तीन अञ्जलियों से जलदान कर) इस लेखानुसार एक या तीन अञ्जलिदान विकल्परूप से व्यवहार में अपने-अपने कुल अथवा देशाचार के अनुसार मान लिया जाय तो सर्वत्र सामञ्जस्य स्थापित हो जायेगा ।

अर्घ्यदान प्रसंग में ऊपर से ज्ञातव्य है कि प्रातः संध्या में कुछ झुककर, मध्याह्नमें सीधे खड़ा होकर तो सायं संध्या में बैठकर गायत्री मन्त्र पढ़ते हुए द्विज के द्वारा सूर्य को अर्घ्यदान होना चाहिए ।

किन्तु उक्त अर्घ्यदान के संबंध में ध्यान रखना चाहिए कि अर्घ्यदान के समय में तर्जनी अंगुलि के साथ अंगूठा मिला हुआ नहीं रहे क्योंकि संग्रह वचनानुसार उक्त दोनों अंगुलियों की मिलने वाली मुद्रा राक्षसी मुद्रा कहलाती है । इस मुद्रा से दिया गया जल रुधिर के समान हो जाता है । अतः खुले हाथों से ही अर्घ्यदान करना चाहिए । यह अर्घ्यदान जल में अथवा जलाभाव स्थिति में पवित्र स्थान में करना चाहिए ।

यहाँ नित्यकर्मप्रयोग के लेखानुसार यह भी ज्ञातव्य है कि इस पृथ्वीमण्डल और यहाँ रहनेवाले जीवों का सूर्य के साथ घनिष्ठ संबन्ध है । सूर्य के ही प्रकाश से चाहे वह चन्द्रमा के रूप में हो या दीपक के, हम इस संसार को देखते हैं । सूर्य की ही उष्णता से यह हमरा जीवन जीवन बना हुआ है तथा भोजन का परिपाक कर के सूर्य ही हमें रस भी देता है । यह पृथिवी सूर्य से ही प्रकट हुई और सूर्य स्वयं इस के स्वरूप हैं । अतः प्रत्येक द्विज को नियत समय पर अर्घ्यदान और नमस्कार आदि के द्वारा उसकी उपासना करनी चाहिए । इससे भगवान् सूर्य देव प्रसन्न होते हैं । उनकी प्रसन्नता से हमारी आँखों में ज्योति आती है, क्योंकि सूर्य की शक्ति के विना आँखें कुछ कर ही

नहीं सकतीं । इसलिए अपने अन्तःकरण और शरीर को स्वस्थ रखने के लिए सूर्यदेव को अर्ध्य देना बहुत आवश्यक है ।''

# सूर्योपस्थानम्

## [ मूलम् ]

कात्यायनश्च-

**पुष्पाण्यम्बु-मिश्राण्यूर्ध्वं क्षिप्त्वो[१]र्ध्वबाहुः सूर्यमुदीक्षे[२]त, उद्वयन्तम, उदुत्यम्, चित्रम्, तच्चक्षुरिति, गायत्र्या च यथाशक्ति ।**

अत्र मध्याह्नसन्ध्याऽञ्जलौ सजलपुष्प-श्रवणाद् विष्णुपुराणादौ तोयमात्र-श्रवणमुपलक्षणम् । प्रातः सायं विषयं वा ।

तथा च तैत्तिरीयश्रुतिः-(तै० आ३ २ प्र० २ अ०)

**ब्रह्मवादिनः [३]सूर्याभिमुखाः सन्ध्यायां गायत्र्यभिमन्त्रिता अप ऊर्ध्व[४]मुत्क्षि[५]पन्ति । ता एता[५] आपो वज्रीभूता[६]स्तानि रक्षांसि मन्देहान्[७] वारुण[८]-द्वीपे प्रक्षिपन्ति[९] । यत्प्रदक्षिणं प्रक्रा[९अ]मन्ति तेन पाप्मानमवधुन्वन्ति । उदयन्त[१०]मस्तं यान्त[११]मादित्यमभिध्या[११अ]यन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते । इति ।**

तथा चोर्ध्वबाहु विधानात्[१२]

**तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि ।**
**कुर्यात्कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा ॥**

इतिच्छन्दोगपरिशिष्टीयमुपस्थाने कृताञ्जलित्वं सायं प्रातर्विषयमेव । 'उदीक्षेते'ति सूर्याभिमुखत्वे तात्पर्यम् । तेन मेघादिच्छन्नेऽपि सम्मुखमुपतिष्ठेत् ।

---

पा० ( १ ) क्षिपेद् । ( २ ) मुदीक्षेदुद्वयमुदुत्यमुदीक्षन्नुद्वय ( ३ ) पूर्वा । ( ४ ) विक्षिपन्ति । क्षिपन्ति । ( ५ ) पूता । ( ६ ) भूत्वा । ( ७ ) न्यारुणे । ( ८ ) वारुणे । ( ९ ) क्षिपन्ति । ( ९ अ ) क्रमन्ति ( १० ) मस्तमयन्तम् ( ११ ) यन्त । ( ११ अ ) मभिध्यानं कुर्वन् । ( १२ ) तथात्रो ।

[ संस्कृत टीका ]

पुष्पाण्येति । अर्घ्यदानानन्तरमुपस्थानार्थमाह– पुष्पाणीत्यादि । अम्बुमिश्राणि पुष्पाणि = मध्याह्नसन्ध्यायामञ्जलौ जलसहितानि कुसुमानि । आदाय ऊर्ध्वं क्षिप्त्वा = सूर्योद्देश्येन उपर्याकाशे प्रक्षिप्य । ऊर्ध्वबाहुः = मध्याह्नसन्ध्यायामुपरिकृतभुजः, बाहूपरि उत्थाप्येत्यर्थः । सूर्यम् = परमात्मरूपं सूर्यदेवम् । उदीक्षेत = सूर्यमुद्दिश्य पश्येत्-सूर्याभिमुखो भवेदिति यावत् । तेन मेघनीहारादिच्छन्नत्वेऽपि गृहेऽपि चोपस्थानसिद्धिः ।

अत्रेति । अत्र = उक्त-कात्यायन-वचने । मध्याह्नसन्ध्याऽञ्जलौ = मध्याह्नकालिक-सन्ध्योपासन-समये सूर्याञ्जलिदाने । सजल-पुष्पश्रवणात् जलमिश्रित-पुष्पाणां विधानात् । विष्णुपुराणादौ,

त्रिंशत्कोट्यो महावीर्या मन्देहा नाम राक्षसाः ।
कृष्णातिदारुणा घोराः सूर्यमिच्छन्ति खादितुम् ॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
उपासते तदा सन्ध्यां प्रक्षिपन्त्युदकाञ्जलिम् ॥
दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा ।
ततः प्र ( या ) पाति भगवान् ब्राह्मणैरभिरक्षितः ॥
बालखिल्यादिभिश्चैव जगतः पालनोद्यतः ।

इति सन्ध्योपासनरहस्य धृत-स्कन्दपुराणवचने,

'अथ सूर्यस्य तेषाञ्च युद्धमासीत्सुदारुणम् ।
ततो ब्रह्मा च देवाश्च ब्राह्मणाश्चैव सत्तमाः ॥
सन्ध्येति समुपासन्तः क्षेपयन्ति महाजलम् ॥

इति वायुपुराण ( ५० अध्याय) वचने,

करा‍भ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठँस्त्रिरूर्ध्वं सन्ध्ययोः क्षिपेत् ॥

इति व्याससमृतिवचने,

उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसः ।

इति पूर्वोक्तच्छन्दोगपरिशिष्टवचनादौ च तोयमात्रश्रवणम् = केवलजलोपादानम् । उपलक्षणम्-पुष्पस्यापिबोधकम् । स्वबोधकत्वे सति स्वेतरबोधकत्वमिति प्रकृते उपलक्षणक्षणत्वात् । एतेनात्राविद्यमानं सदितरव्यावर्तकर्मिति विशेषणपदार्थस्य वा नोपयोगित्वमिति ध्येयम् ।

ब्रह्मवादिन इति । ब्रह्मवादिनः ब्रह्मोपदेष्टारः । सूर्याभिमुखाः = सूर्यसम्मुखाः सन्तः । सन्ध्यायाम् = प्रातः सायं सन्ध्ययोरित्यर्थः, उदयन्तमस्तं यान्तमादित्यमित्यग्रिमांशानुरोधात् । गायत्र्यभिमन्त्रिताः =प्रणव-व्याहृतिसहित-गायत्री-मन्त्रेणाभिमन्त्रिताः । अपः = जलानि । ऊर्ध्वम् = सूर्योद्देश्येन उपरि (आकाशे) प्रक्षिपन्ति = अर्घ्यं ददति । ता एता आपः । वज्रीभूताः = कुलिशवत्कठोरीभूताः । तानि रक्षांसि मन्देहान् = सूर्योपद्रवकान् मन्देहप्रभृति-त्रिंशत्कोटि-संख्याकराक्षसान् । वारुणद्वीपे = वरुणलोकस्थिते द्वीपे जलबहुले वा द्वीपे प्रक्षिपन्ति = अस्यन्ति = प्रापयन्तीति यावत् । अञ्जलिदानानन्तरं श्रुतिः-''यत्प्रदक्षिणं प्रक्रामन्ति, तेन पाप्मानमवधुन्वन्ती''ति ।

यदिति । यत्प्रदक्षिणम् = सूर्यस्य यत् प्रदक्षिणम् । प्रक्रामन्ति = पाद विक्षेपणं कुर्वन्ति । तेन = प्रदक्षिणकरणेन । पाप्मानम् = पापम् । अवधुन्वन्ति=विनाशयन्ति ।

प्रातः सायं सन्ध्ययोः सूर्योपस्थानफलमाह-उदयन्तमित्यादि । उद्यन्तम् = उदयाचलमासाद्यन्तम् । अस्तम् = अस्ताचलं वा । यान्तम् = प्राप्नुवन्तम् । आदित्यम् = सूर्यम् । अभिध्यायन् = सर्वतोभावेन चिन्तयन् । विद्वान् = ज्ञानी । ब्राह्मणः = द्विजः, द्विजमात्रस्यैव सन्ध्यावन्दनेऽधिकारात् । सकलं भद्रम् = सर्वविधं कल्याणम् । अश्नुते = प्राप्नोति, इति ।

तथेति । तथा च = एवञ्च । ऊर्ध्वबाहुविधानात् = कात्यायनवचनेनोर्ध्वबाहुविधानस्य मध्याह्नविषयकत्वात् । उपस्थाने कृताञ्जलित्वम् = सूर्योपस्थानक्रमे ''तदसंसक्तपार्ष्णिर्वे''त्यादिच्छन्दोगपरिशिष्टवचनेन बद्धाञ्जलिकरणविधानम् । सायंप्रातर्विषयमेव = सायंप्रातःकालिकसन्ध्यावन्दनपरकमेव बोद्धव्यम् । तथा च हारीतोऽपि–

**सायंप्रातरुपस्थानं कुर्यात्प्राञ्जलिरानतः ।**

**ऊर्ध्वबाहुस्तु मध्याह्ने यथा सूर्यस्य दर्शनात् ॥ इति ।**

एवञ्च छन्दोगपरिशिष्ट-वचने वा शब्दो व्यवस्थित विकल्पार्थः ।

उक्तपरिशिष्ट-वचनार्थो यथा–

तत् = उपस्थानम् । असंसक्तपार्ष्णिः = भूम्यलग्नगुल्मतलभागः । पार्ष्णिः =गुल्फयोरधोभागः । (पुमान् पार्ष्णिस्तयोरधः इत्यमरः) । एकपात् = भूमिष्ठैकमात्रचरणः । अर्धपात् = भूमिष्ठैकचरणार्धमात्रो वा । कृताञ्जलिः=सायं प्रातः सन्ध्योपासनसमये बद्धाञ्जलिः सन् (व्यवस्थित विकल्पार्थक 'वा' शब्दबलादुक्तहारीतवाक्यैकवाक्यता बलाच्चेति बोद्धव्यम् )। अथापि वा=अथवा । ऊर्ध्वबाहुः = मध्याह्नसन्ध्यासमये उपरिकृतबाहुः सन्नुपस्थानं कुर्यादि ति ।

ननु लघुगुरु-प्रयास-साध्यानां कथं विकल्प इति चेन्न–

**यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।**

**भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥**

इति तेनैव तदुत्तरमभिहितत्वात् । प्रयासभूयस्त्वात्फल भूयस्त्वमित्येतद् वाक्यार्थः ।

उपस्थानमन्त्रानाह उद्वयन्तम इत्यादिना मूले ।

अत्र कात्यायनोक्तत्रिकण्डिकासम्पूर्णसूत्रं याथा–''उद्वयन्तम, उदुत्यं, चित्रं, तच्चक्षुरिति गायत्र्या च यथाशक्ति, विभ्राडित्यनुवाक-पुरुषसूक्त-शिवसङ्कल्प-मण्डलब्राह्मणैरित्युपस्थाप्य प्रदक्षिणीकृत्य, नमस्कृत्योपविशेदिति।''

उद्वयन्तम, उदुत्यं, चित्रं, तच्चक्षुरिति मन्त्रचतुष्टयेन सन्ध्यात्रयेऽपि वाजसनेयिभिरुपस्थानं कर्तव्यम् (सम्पूर्णमन्त्राः सन्ध्याप्रयोगप्रकरणे द्रष्टव्याः)।

"छन्दोगैः सायंप्रातःसन्ध्ययोरुदुत्यं, चित्रम्, उद्वयन्तमसस्परि इति ऋक्त्रयेण सूर्य उपस्थातव्यः" इति श्रीदत्तः इति। एवं, "मध्याह्ने उदुत्यं, चित्रंदेवानाम्, आयङ्गोः, अपत्येतायवः, तरणिर्विश्वदर्शतो, विद्यामेषि रजः" इत्येतैषड्भि र्मन्त्रै श्छन्दोगानां सूर्योपस्थानमिति श्रीदत्तादय" इति च वीरमित्रोदयः। "गायत्र्या च यथाशक्ति" इति मूलांशस्य व्याख्याऽनुपदमेवाग्रे ग्रन्थ- कारेणैव वक्ष्यते।

यद्यपि कात्यायनोक्तत्रिकण्डिकासूत्रानुसारं गायत्रीसहितोक्त-चतुर्भ्यो मन्त्रेभ्योऽतिरिक्तं "विभ्राड्" इत्याद्यनुवाकं, षोड़शमन्त्रात्मकं पुरुषसूक्तं, षण्मन्त्रात्मकं "यज्जाग्रतो दूरमि" त्यादि शिवसङ्कल्पं, "यदेतन्मण्डलं तपती"त्यादि-मण्डलब्राह्मणञ्चापि पठित्वा मध्याह्नसन्ध्यायामुपस्थान-करणमावश्यकं प्रतिभाति, तथापि-

**मध्ये त्वह्न उदये च विभ्राडादीच्छया जपेत्।**

इति च्छछन्दोग-परिशिष्टीयवचनेन, अह्नो मध्ये=दिनस्य मध्यभागे-मध्याह्नसन्ध्यायामिति यावत्। उदये = प्रातःसन्ध्यायाम्। "विभ्राड्बृहदित्याद्यनुवाकम्, आदिग्रहणाच् शिवसङ्कल्पं, पुरुषसूक्तं, मण्डलब्राह्मणञ्चेच्छया जपेन्नत्ववश्यमि"ति परिशिष्टप्रकाशाख्यव्याख्या चैषामिच्छयैव जपविधानम्। तेनायंजपः काम्य एवेतिबोध्यम्।

पूर्वोक्तश्रुतिप्रतिपादितसूर्यमन्देहप्रमुखराक्षसयुद्धविषये वैज्ञानिक-विवेचनायां सन्ध्योपासनरहस्यं यथा-

यद्यपि सूर्यरश्मिः श्वेतः कृष्णं पृथ्वीरश्मिं निश्शेषतो नाशयति इति कृष्णरश्मिनिकेतन प्राणरूपाणि रक्षांसि नैर्बल्यादमुनादित्येन योद्धुं न शक्नुवन्ति, तथापि सूर्यबिम्बात्मकब्रह्मसाम्मुख्यायोगादस्यां सन्ध्यायां लम्बनो-पसृप्तसूर्यरश्मिभिः सह पृथ्वीरश्मयोऽभियुज्यन्ते इति श्वेतकृष्णोभयप्राणाः

सह सम्पृक्ता: प्राणिहृदयमुपसृप्य धियं जनयन्ति। तत्रामीभि: कृष्णप्राणैस्तमस: प्रयोगान्मन्देहा: प्राणिबुद्धयो मा जायन्तमिति पूर्वदिगन्तराले गायत्र्या सूर्यं ध्यायन्तोऽप: प्रक्षिपन्ति। ताश्च च्छिन्नमूलान् कृष्णप्राणान् न्यग्भावयन्त: श्वेतप्राणान् ब्रह्ममूलानधिकमुद्दीपयन्तीत्योजस्विन्यो दैव्यांषधय: प्रजायन्ते नासुर्य्य:। ब्रह्मणैव सूर्यरश्मिना विशुद्धेनोपसम्पन्नो ब्रह्मभूतोऽयं विज्ञानमय आत्मा देहावसाने सूर्यं ब्रह्मैवान्येति- नत्वन्यत्र तमसा विक्षिप्तो रिष्यति। तस्मात् सूर्यायार्घ्यं प्रक्षिपन्ति'' इति।

## [ हिन्दी टीका ]

अर्घ्यदान के बाद उपस्थान विधान की दृष्टि से 'पुष्पाणि' आदि वचन कहा जाता है।

मध्याह्नसंध्या के मध्य अपनी अंजुलि में जलसहित पुष्प (फूल) लेकर सूर्य के उद्देश्य से आकाश में प्रक्षेप (अर्घ्यदान) करें। अनन्तर दोनों भुजाएँ ऊपर उठाकर सूर्य देव को देखे अर्थात् सूर्याभिमुख हों। ऐसा अर्थ कर देने पर बादल या कुहरा आदि से सूर्य को ढँक जाने पर या घर में भी सूर्य का सम्मुख होना सिद्ध हो जाता है।

यहाँ मध्याह्नसन्ध्या के समय अंजुलि में जलसहित पुष्प लेने को कहे जाने के कारण विष्णुपुराण आदि (संस्कृत टीका में प्रदर्शित स्कन्दपुराण, वायुपुराण, व्यास स्मृति तथा छन्दोगपरिशिष्ट के वचनों) में जो केवल जलदान कहा है, इसका भी तात्पर्य (छन्दोगपरिशिष्ट वचन के साथ एकवाक्यता करने पर) जलसहित पुष्प से ही है।

अथवा केवल जलदान प्रात: तथा सायं सन्ध्योपासन समय के लिए समझना चाहिए। जैसा कि इस प्रसंग पर तैत्तिरीयश्रुति –(पूर्व पश्चात् सहित) (तै० आ० 2 प्र० 2 अ०) का कहना है कि (राक्षसों ने उग्रतप किया। प्रजापति सूर्य ने उन से कहा युद्ध करो। इसलिए वे राक्षस उदय से अस्तकाल पर्यन्त सूर्य से युद्ध करते हैं। ये राक्षस गायत्री मन्त्र द्वारा अभिमन्त्रित जल से शान्त होते हैं।) इसीलिए ब्रह्मवादी ब्राह्मण (द्विज) सूर्याभिमुख हो (प्रात: एवं सायं) सन्ध्योपासन समय में गायत्री मन्त्र से अभिमन्त्रित जल (सूर्य के उद्देश्य से) ऊपर फेंकते हैं। वे ये पवित्रजल वज्र के समान कठोर होकर सूर्य को उपद्रव करने वाले मन्देह आदि (३० करोड़) राक्षसों को वरुण लोक स्थित या जलबहुल द्वीप में फेंक देते हैं। सूर्य प्रदक्षिण के समय जो पैरों से चलते हैं उससे अपने पापों का नाश करते हैं। उदयाचल पर आते हुए तथा अस्ताचल

को जाते हुए सूर्य का जो ब्राह्मण (द्विज) सर्वतोभाव से ध्यान करता है वह सर्वविध कल्याण पाता है। (यह आदित्य ही ब्रह्म है। इसकी उपासना करने वाला ब्रह्मरूप बन कर ब्रह्म में लीन हो जाता है तथा इस रहस्य को जानने वाला भी ब्रह्मरूप बनकर ब्रह्म में लीन हो जाता है।) (उक्तश्रुति में पहले आये प्रजापति शब्द से भी आदित्य ही अभिप्रेत है)।

यहाँ 'ऊर्ध्वबाहु' होने का जो विधान है इससे भी सिद्ध होता है कि यह कात्यायन वचन मध्याह्न सन्ध्या परक है। क्योंकि छन्दोगपरिशिष्ट के हीं एक वचन का कहना है कि दोनों पैरों की एडी उठा कर केवल दोनों पञ्जों के बल पर खड़ा हो या एक पैर उठा कर दूसरे पैर से भूमि स्थित हो या एक पैर उठाकर दूसरे पैर के भी एक पञ्जें के बल पर ही खडा होकर बद्धाञ्जलि हो तथा ऊर्ध्वबाहु हो सूर्य का उपस्थान करें।

इससे सिद्ध होता है कि बद्धाञ्जलि तो प्रातः एवं सायं संध्या के समय और ऊर्ध्वबाहु मध्याह्न संध्या के समय हो। इस प्रसंग पर तो हारीत ने स्पष्ट ही कहा है–"नम्र तथा बद्धांजलि हो प्रातः एवं सायं संध्या और मध्याह्नसंध्या के समय ऊर्ध्वबाहु हो उपस्थान करें।"

यहाँ यह शंका हो सकती है कि जब खड़ा होने के प्रकारों में एक की अपेक्षा दूसरा श्रम साध्य है तो विकल्प विधान कैसे किया गया? इसका उत्तर यह है कि इन प्रकारों में उत्तरोत्तर श्रेष्ठ है क्योंकि पुनः छन्दोगपरिशिष्ट का ही कहना है कि–"प्रयास की अधिकता के अनुसार ही फल में भी अधिकता होती है। ऐसा मनीषिजनकहते हैं।"

उद्वयन्तमसः, उदुत्यम्, चित्रम्, एवं तच्चक्षुः, इन चारों मन्त्रों (सम्पूर्ण मन्त्र संध्या प्रयोग प्रकरण में देखें) तथा यथाशक्ति गायत्रीजप से (इस जप संबन्ध में आगे कहा जायगा) तीनों संध्याओं में सूर्योपस्थान करें।

यहाँ वीरमित्रोदय के अनुसार श्रीदत्तोपाध्याय का मत है कि छन्दोग (सामवेदी) सायं तथा प्रातः सध्योपासन में 'उदुत्यम्', 'चित्रम् देवानाम्', 'उद्वयन्तमसस्परि', इन तीनों ऋचाओं तथा मध्याह्न सन्ध्या में उदुत्यम्, चित्रं देवानाम्, आयङ्गौः, 'अपत्येतायवः 'तरणि विंश्वदर्शितो', 'विद्यामेषि रजः' इन छहों मन्त्रों से सूर्योपस्थान करें।,

यद्यपि कात्यायनोक्त त्रिकण्डिका सूत्रके अनुसार मध्याह्नसन्ध्या के उपस्थान समय में गायत्री सहित उक्त 'उद्वयन्तम' इत्यादि चारों मन्त्रों के अतिरिक्त "विभ्राड्बृहद्" इत्यादि अनुवाक, सोलह मन्त्रों का पुरुषसूक्त, छह मन्त्रों वाला "यज्जाग्रतो दूरम्" इत्यादि शिवसङ्कल्प, 'यदेतन्मण्डलं तपति' इत्यादि मण्डलब्राह्मण का भी पाठ होना चाहिए किन्तु छन्दोगपरिशिष्ट के वचन तथा उसकी 'परिशिष्टप्रकाश'

नामक व्याख्या के आधार पर ज्ञातव्य है कि इन का पाठ होना आवश्यक नहीं, अपितु पाठ कर लेना अपनी इच्छा पर निर्भर है। अतः यह जप काम्य है।

उपरिउक्त सूर्य एवं मन्देह प्रभृति (३० कोटि राक्षसों के प्रसंग में वैज्ञानिक विवेचनापद्धति से प्रकाश डालने वाली "सन्ध्योपासनरहस्य" पुस्तक से लिए गए अंश का वहीं प्रकाशित सुरजनदास स्वामी कृत भाषाऽनुवाद यह है –यहाँ पृथ्वी की कृष्ण रश्मिरूप अन्धकार ही राक्षस है, उनका सूर्य प्रकाश के साथ सम्पर्क ही सूर्य के साथ राक्षसों का युद्ध है। यद्यपि श्वेत प्रकाशरूप सूर्यरश्मियाँ कृष्ण पृथ्वी रश्मिरूप रात्रि (अन्धकार) को पूर्णतया नष्ट कर देती हैं अतः इन का सूर्य के साथ युद्ध नहीं बन सकता तथापि प्रातः सन्ध्याकाल तथा सायंसंध्याकाल में क्षितिज पर जो सूर्य दिखाई देता है वह वास्तविक सूर्य नहीं है, किन्तु काल्पनिक सूर्य है। क्योंकि इस समय सूर्य भूकेन्द्र के सधस्थ पर प्रतिष्ठित रहता है। सधस्थ पर प्रतिष्ठित सूर्य से निकलने वाली रश्मियाँ उस समय व्याप्त पृथ्वी की कृष्णरश्मिरूप भूभा से सम्पृक्त होती है। भूभा वायु प्रधान होने से जल की तरह ऋतपदार्थ है। इसके साथ सम्बन्ध होने से सूर्यरश्मियों का लम्बन होता है जिस तरह जल रूप ऋत पदार्थ में प्रविष्ट यष्टि का लम्बन होता है। इस लम्बन से लम्बनसूत्र के सामने नवीन (काल्पनिक) सूर्य का स्वरूप बन जाता है। वही सूर्य हमें उस समय दिखाई देता है। इस समय सूर्य रश्मियाँ कृष्णरश्मि रूप भूभा सम्पृक्त हैं; शुद्ध नहीं हैं। यही सूर्य का राक्षसों से युद्ध है। पृथ्वी की कृष्णरश्मियों से सम्पृक्त सूर्यरश्मियाँ ही इस समय प्राणिहृदय में पहुँचकर मनुष्य की बुद्धि का निर्माण करती है। क्योंकि प्राणी में बुद्धि का निर्माण सूर्यरश्मियों से ही होता है। इसीलिए "धियो यो नः प्रचोदयात्" यह कहा गया है और वे सूर्य रश्मियाँ कृष्णप्राणरूप अन्धकार से युक्त हैं। अतः हमारी बुद्धि भी अज्ञान से आक्रान्त होकर मन्द न बन जाय, इसी के परिहार के लिए अर्थात् सूर्य रश्मियों के साथ प्रविष्ट कृष्ण प्राणरूप तम के परिहार के लिए सूर्य का ध्यान करते हुए गायत्री मन्त्र से अभिमन्त्रित जल सूर्य की तरफ फेंका जाता है। वे गायत्रीमन्त्राभिमन्त्रित जल कृष्ण प्राणों को अभिभूत करते हुए ब्रह्म (ज्ञान) के कारण श्वेत प्राणों को उद्दीप्त करते हैं। अतः ओजस्विनी दिव्यबुद्धि उत्पन्न होती है। सूर्यराशिरूप विशुद्धब्रह्म से युक्त ब्रह्मरूप यह विज्ञानमय (बुद्धि) आत्मा देह-परित्यागानन्तर सूर्यरूप ब्रह्म में ही लीन हो जाता है। तम से विक्षिप्त होकर अन्यत्र तामस नरकलोकों में नहीं जाता। यही सूर्य को अर्घ्यप्रदान करने का रहस्य है। वायुपुराण में भी इस रहस्य का उद्घाटन निम्न प्रकार किया गया है–

तिस्रः कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।

तेन दह्यन्ति ते दैत्या वज्रभूतेन वारिणा ॥

(वायु० पु० ५० अ०) तक ॥४॥

यहाँ इन राक्षसों को 'मन्देह' शब्द से व्यवहृत किया गया है । क्यों कि वे तमोमय राक्षस सूर्यरश्मिसे सम्बद्ध होकर हमारे हृदय में पहुँच कर सूर्यरश्मियों से बननेवाली हमारी बुद्धि को अज्ञान द्वारा आवृत कर मन्द चेष्टा वाली बना देते है ।

इसी सूर्योपस्थान के संबन्ध में आधुनिकता की दृष्टि से भी विवेचक शास्त्रार्थ महारथी पं. माधवाचार्यशास्त्रीकृत 'क्यों' नाम की पुस्तक के लेखानुसार वैज्ञानिकता निम्न प्रकार से ज्ञातव्य है ।

''सूर्योपस्थान क्यों ?

संध्याका उपसंहारात्मक अन्तिम अनुष्ठान सूर्योपस्थान है । वेद में लिखा है–अथ सन्ध्यायां यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभूत्वा असुरानपाध्नन्ति ।। (षड्विंश ४/५) अर्थात् सन्ध्या में जो जल का प्रयोग किया जाता है वे जलकण वज्र बनकर असुरों का विनाश करते हैं ।

इस बुद्धिवाद के युग में सूर्य किरणों द्वारा असुरनामक किसी जातिविशेष के प्राणियों का अथवा आध्यात्मिकरूप में बाह्य वातारणमें फैले हुए असुरों तथा हृदय से आसुरीभावरूप असुरों का विनाश आप चाहे मानें न मानें किन्तु मानव जाति के लिए असुरों से भी अधिक अहितकारी प्रस्तुत चित्र में प्रदर्शित टाइफाइड, राजयक्ष्मा, फिरंग, निमोनिया के जीवाणुरूप असुरों के विनाश के लिए सूर्यकिरणों की दिव्य सामर्थ्य तो बाध्य होकर माननी ही पड़ेगी । आप यह जान कर आश्चर्यचकित होंगे कि इनमें से कतिपय जीवाणुओं के लिए सूर्य प्रकाश-सी अमोध और अव्यर्थ महौषधि कोई है ही नहीं । उसका निदर्शन डा० मुकुन्दस्वरूप वर्मा B.S.C.M. B.B.S. चीफ मैडिकल ऑफिसर काशी विद्यालय के शब्दों में सुनिये । डा० साहिब अपने 'संक्षिप्त शल्यविज्ञान' में लिखते हैं–

सूर्य प्रकाश का जीवाणुओं पर बहुत प्रभाव पड़ता है । एन्थ्रेक्स के स्पार जो कई वर्षों तक शुष्कीकरण से नहीं मरते, सूर्य प्रकाश से डेढ़ घंटे में मर जाते हैं । आन्त्रिकज्वर (टायफायड) के जीवाणु भी डेढ घंटे तक सूर्य प्रकाश में रहने से नष्ट हो जाते हैं । किन्तु इसके लिए आवश्यक है कि प्रत्येक जीवाणु पर विकरणें पड़ें। राजयक्ष्मा के जीवाणु का भी यही हाल है । सूर्य प्रकाश उसका सबसे बड़ा वैरी है ।

प्रयोग से मालूम हुआ है कि सूर्य प्रकाश के हरे वैंगनी और अल्ट्रावायलेट भाग में जीवाणुओं के नाश करने की विशेष शक्ति है। अस्तु।

जो नास्तिकलोग कलतक इस विज्ञानपूर्ण वैदिक विधान को कोरी पोपलीला कहकर मखौल उड़ाया करते थे, स्वास्थ्य विज्ञन की नई खोजने कान पकड़ कर आज उन्हीं लोगों को नामान्तर और रूपान्तर में यही क्रिया करने के लिए बाध्य कर दिया है। पाश्चात्य जगत् और उसका अन्धानुकरण करने वाले भारतीय अब अनेक शारीरिक रोगों के लिए 'सनबाथ' Sun bath अर्थात् खुले बदन सूर्य किरणों में स्नान करने लगे हैं। अमेरिका में तो गर्मी सर्दी सहन करने के लिए सदैव दिगम्बर रहने वाला एक सम्प्रदाय-सा ही चल पड़ा है जिस के अनुयायी सहस्रों प्रतिष्ठित व्यक्ति अपने देश के कानून को तोड़ कर नाना प्रकार का दण्ड भुगतते हुए भी अपनी टेक को नहीं छोड़ते हैं।

अमुक रंग की बोतल में केवल फिलटर किया पानी भरकर सूर्य की खुली धूप में रख देना, फिर नियत समय के बाद उस जल को ही अमुक-अमुक रोग में रंग के तारताम्य के अनुसार बीमार को औषध रूप में पिलाना, आजकल एक यह भी नई चिकित्सा-प्रणाली निकली है। विश्वास किया जाता है कि सूर्य किरणों से संस्पृष्ट यह जल बोतल के काँचके रंग की विशेषता के अनुसार अमुक अमुक रोगों को दूर करने में औषध सिद्ध होता है।

हम सिद्धान्ताध्याय के प्रत्यक्ष-परोक्षवाद प्रघट्टमें यह सिद्ध कर चुके हैं कि वैदिक विज्ञान के अनुसार समस्त रंगों का मूल स्रोत एकमात्र सूर्य की किरणें ही हैं,—सो यदि हम सूर्योपस्थान विधान के प्रकाश में वर्तमान समय के उपर्युक्त सूर्यकिरण स्नान (Chromopathy) और सौरजलाभिमर्षण का विश्लेषणात्मक अध्यायन करें, तो यह विदित हो जायगा कि आज का पाश्चात्यजगत् अपने जिन उपर्युक्त आविष्कारों को अभूतपूर्व और बेजोड़ समझकर फूला नहीं समाता, वस्तुतः वे दोनों आविष्कार हमारे अनन्त सहस्राब्दियों से चले आने वाले नित्यकर्म = सूर्योपस्थान की छाया मात्र है। इन दोनों में यदि कोई अन्तर है तो केवल यही है कि जहाँ सूर्योपस्थान असुरभूत अनेक शारीरिक रोगों को दूर करने का व्रज के समान अव्यर्थ साधन होते हुए अदृष्टफल-पुण्याधायक धार्मिक अनुष्ठान भी है, वहाँ सूर्य किरण-स्नान और सौरजला भिमर्षण चिकित्सा पद्धतियाँ अपूर्ण, एकदेशी एवम् 'अन्धेरे में चांदमारी' के बराबर है।

सूर्यार्घ्य में साधक (उत्तान दोनों हाथों द्वारा) जलपूरित अञ्जलि लेकर सूर्याभिमुख खड़ा होकर जब जल को भूमिपर गिराता है तो नवोदित सूर्य की सीधी पड़ती हुई

किरणों से अनुविद्ध वह जलराशि, मस्तक से लेकर पाँव पर्यन्त साधक के शरीर के समान सूत्र में गिरती हुई, सूर्यकिरणों से उपात्त रंगों के प्रभाव को ऊपर से नीचे तक समस्त शरीर में प्रवाहित कर देती है। इसलिए वेद शास्त्रानुसार प्रातः पूर्वाभिमुख, उगते हुए सूर्य के सामने और सायं पाश्चिमाभिमुख छुपते हुए सूर्य के सामने खड़े होकर सूर्यार्ध्य देने का विधान है।

सूर्योपस्थान में सूर्यस्नानचिकित्सा विधि की तरह तीनों समय सूर्य की ओर लम्बे हाथ फैला कर साधक अंगुलियों के अग्रभाग में वैद्युतचुम्बक स्विचों की भाँति प्रकृति देवी द्वारा निहित्त नखों की मार्फत सप्तविध रंगों से परिपूरित सौर प्रवाह को अपने शरीर में धारण करता है।

कहना न होगा कि हमारे इस वैदिक अनुष्ठान में आधुनिक सूर्य किरण स्नान और सौर जलाभिमर्षण क्रियाओं के समस्त लाभ तो आ जाते हैं, परन्तु असमय में ललाटन्तप सूर्यकी धूप सेकने से और बोतलों में बन्द कई दिन तर रखे हुए विकृत पानी पीने से होनेवाली अनेक अप्रत्याशित हानियों का खतरा नहीं होता–यही सूर्योपस्थान के संक्षिप्त लाभों का दिग्दर्शन है''।

यहीं नित्यकर्मप्रयोग का कहना है कि अर्घ्यदान के द्वारा भगवान् सूर्य की आराध ना के बाद उनकी स्तुति प्रार्थना की जाती है–यही उपस्थान है। सूर्य उपस्थन का अर्थ है–भगवान् सूर्य के पास उपस्थित होना–उनके दरवार में हाजिरी देना। सूर्योपस्थान के द्वारा हमें भगवान् सूर्यका सन्निधान प्राप्त होता है।

## गायत्रीजपः

### [ मूलम् ]

'उपस्थाये' त्युपसंहारात्तु गायत्र्या च जपितयैवोपस्थानम्। मन्त्रकरणकं हि देवज्ञानमुपस्थानम्। तच्च जपेऽपि सम्भवति। अनर्थपर एवोच्चारणे जपपदमिति प्रायिकम्, अन्यत्रार्थपरत्वे प्रमाणाभावात्। अतएव यथाशक्तीति, नानाजप-संख्यासम्भवात्। युक्तञ्चैतत्। पृथक्कात्यायनेन जपानभिधानात्। ऋष्यन्तर-संवादाच्चेति।

### [ संस्कृत टीका ]

उपेति। उपस्थाय इति। उपस्थाय = ''उपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेदि'' ति कात्यायनसूत्रे उपस्थायेत्यनेन। उपसंहारात् =

समापनात् । जपितयैव= जपविषयीभूतयैव । गायत्र्या = गायत्रीमन्त्रेण । उपस्थानम् = सूर्योपस्थानम्, जायते इति शेषः । अतएव 'गायत्र्योपस्थानञ्च वक्ष्यमाणक्रमेण गायत्रीजप एवेति वीरमित्रोदयोऽपि ।

विभ्राडित्याद्यनुवाकादीनां नावश्यम्भाव इतीदानीं दर्शितमेव ।

ननूपस्थानशब्देन योगत उपस्थितिरर्थो भवति । स चार्थः कथं प्रकृते संगच्छेतेत्यत आह-मन्त्रेति । मन्त्रकरणकम् = मन्त्रपठनवपूर्वकम् । देवज्ञानम् = देवस्वरूपचिन्तमन् । उपस्थानमुच्यते । तच्च = उपस्थानञ्च । जपेऽपि सम्भवति = मन्त्रजपकालेऽपि सम्भवति । अपिशब्दात्क्वचिज्जपात्पूर्वमपि बोध्यम् । अतएव -"उपस्थानञ्चैतज्जपात् प्राक्" इत्यग्रे ग्रन्थकारः । अनर्थपर एवोच्चारणे = बीजमन्त्रादीनामर्थरहितोच्चारण एव । जपपदमिति, प्रायिकम् = बाहुल्येन, न तु सार्वत्रिकमिति भावः । अन्यत्र = गायत्री-मन्त्रादन्यत्र सर्वत्र । अर्थपरत्वे = बीजमन्त्रादीनामर्थवाचकत्वे । प्रमाणाभावात् = तथाबोधक वचनानुपलब्धेः । अतएव = सूर्योपस्थाने गायत्री जपस्य गायत्र्युपस्थानरूपत्वादेव । नानाजपसम्भवात् =

**सहस्रपरमां देवीं शतमध्यां दशावराम् ।**
**गायत्रीं प्रजपेन्नित्यं सर्वकल्मषनाशिनीम् ॥**

इत्यादि वक्ष्यमाणवचनैः बहुविधतज्जपसंख्याविधानाद्- "यथाशक्ति' इत्युक्तम् । युक्तञ्चैतत् = गायत्रीजप संख्या बहुविधेत्येतद् युक्तमेव । कात्यायनेन = कात्यायनोक्तत्रिकण्डिका सूत्ररूपवचनेन । पृथक् = उपस्थानान्तर्गत यथाशक्ति गायत्रीजप-कथनात्पृथक् । जपानभिधानात् = गायत्री जपाकथनात् । ऋष्यन्तर-संवादाच्च = ऋषिभिरन्यैः यमबौधायनादिभिरनेकविधायाः कथनाच्च । तद्यथा, यमः-

**सहस्रपरमां देवीं शतमध्यां दशावराम् । इति**

बौधायनश्च -

**शतकृत्वोऽपरिमितकृत्वो वा दशावराम् । इति**

**[ हिन्दी टीका ]**

कात्यायन ने सूर्योपस्थान के उपसंहार में यथाशक्ति गायत्री जप का निर्देश किया है । अतः यह समाप्ति का उपस्थान गायत्रीजप द्वारा ही होगा । 'विभ्राड्बृहद्' इत्यादि

अनुवाक तथा पुरुषसूक्त आदि का पाठ अवश्यक नहीं है, यह तो पहले ही कह दिया गया है। प्रकृत में उपस्थान का अर्थ है मन्त्र जप (पाठ) द्वारा देवताके स्वरूप का चिन्तन करना। यह उपस्थान जपसमय या कहीं जप के पहले भी हो सकता है।

जप पद का व्यवहार बहुतायत में विना अर्थ के बीज मन्त्र आदि के उच्चारण में होता है क्योंकि सभी मन्त्र का (वाच्य) अर्थ हो ही, इसमें कोई प्रमाण नहीं है। गायत्री जप से उपस्थान होने तथा अनेक प्रकार की गायत्रीजपसंख्या होने के कारण 'यथा शक्ति' (शक्ति के अनुसार) ऐसा मूल में कहा गया है। अनेक प्रकार की गायत्री जप संख्या है यह युक्तियुक्त भी है क्योंकि कात्यायन ने तो 'गायत्र्या च यथाशक्ति' कहकर यथासम्भव गायत्रीजप का विधान किया है। अन्य ऋषि यम, बौधायन आदि ने तो विभिन्न संख्या का निर्देश भी कर दिया है। यथा– यमका कहना है कि सर्वपापविनाशिनी गायत्री की नित्य सहस्रसंख्या का जप उत्तम है, सौ संख्या का मध्यम और दश संख्या का अधम है। यहीं बौधायन का कहना है कि सौ बार या दश बार या दश से लेकर सौ तक में अनियत (मध्य की किसी नियत) संख्या का जप करे।

**[ मूलम् ]**

याज्ञवल्क्यः–

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
सूर्यस्य चा प्युपस्थानं गायत्र्याः प्रत्यहं जपः॥

इति मार्जन-प्राणसंयमयोः पाठक्रमो न ग्राह्यः, प्राणायामादेः सन्ध्याप्रयोगोपलक्षणत्वात्। एवं कात्यायनेनापि प्राणायामानन्तरमुपस्थानाभिधानं संक्षेपात्।

**[ संस्कृत टीका ]**

स्नानेति। स्नानम् = वारुणस्नानमनुकल्पितं वा स्नानम्। अब्दैवतैर्मन्त्रैः= आपोहिष्ठेत्यादिभिस्तिसृभिः ऋग्भिः। मार्जनम् = उदक विन्दूनां शिरसि प्रक्षेपः। प्राणसंयमः = प्राणायामः। सूर्यस्योपस्थानम्। गायत्र्याः = गायत्रीमन्त्रस्य। प्रत्यहम् = प्रतिदिनम्। जपः = अभ्यसनम्, च। द्विजैः कार्य इति शेषः। उक्त याज्ञवल्क्यवचन-पाठक्रमेण प्राणायामात्पूर्वं मार्जनं प्रतीयते, किन्तु मार्जन प्राणायामयोः यवागूपाकाग्निहोत्रयोरिव पाठक्रमो न ग्राह्यः,

प्राणायामादेः सन्ध्याप्रयोगोपलक्षणत्वात् = प्राणायामादिपदेन सन्ध्या-प्रयोगस्य बोद्धयत्वात् अर्थादत्र प्राणायामादिपदं सन्ध्याप्रयोगस्यैव बोधकं वर्तते ।

प्राणानायम्य सम्प्रोक्ष्य त्र्यृचेनाब्दैवतेन तु ।

इतियाज्ञवल्क्येनैव प्राणायामानन्तरं मार्जनस्य विधानाच्च । कात्यायनेनापि, प्राणायामानन्तरम् = प्राणायामकथनानन्तरम् । उपस्थानाभिधानम् = उपस्थानकथनम् । संक्षेपात् = संक्षेपेण प्रतिपदनात् । ऋष्यन्तरैः मध्येऽन्यानुष्ठेयस्यापि विधानाच्च ।

## [ हिन्दी टीका ]

प्रत्येक द्विज को प्रतिदिन जल-स्नान या अनुकल्पित स्नान, आपोहिष्ठा आदि तीनों ऋचाओं से मार्जन, प्राणायाम, सूर्योपस्थान तथा गायत्रीजप करने चाहिएँ ।

इस याज्ञवल्क्य कथन में मार्जन तथा प्रणायाम में पाठक्रम नहीं समझना चाहिए, क्योंकि "प्राणायामक्रिया आदि द्वारा सन्ध्योपासन करना चाहिए" यही तात्पर्य इस वचन का है । दूसरी बात, स्वयं याज्ञवल्क्य ने ही यह भी कहा है कि प्राणायाम करके आपोहिष्ठा आदि तीनों ऋचाओं से मार्जन करें । इससे स्पष्ट है कि वह पाठक्रम उन्होंने भी ग्राह्य (मान्य) नहीं माना है ।

कात्यायन ने जो कहा है कि " प्राणायाम के बाद उपस्थान करें" यह भी संक्षेप से कह दिया गया है । क्योंकि अन्य ऋषियों ने बीच में और क्रिया का अनुष्ठान करने को कहा है ।

## [ मूलम् ]

गायत्रीजपे योगियाज्ञाल्क्यः—

प्रणवो भूर्भुवः स्वश्च स्वाङ्गानि हृदयादितः[1] ।
त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम् ।
विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै ।

---

पा० ( १ ) दतः ।

रूपमाह—

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता[२] ॥
आदित्यमण्डलान्तःस्था[३] ब्राह्मलोकगताऽथवा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥
आवाह्य यजुषाऽनेन तेजोऽसीति विधानतः ।
तत्रावाह्य[४] जपित्वा च नमस्कृत्य विसर्जयेत् ॥

[ संस्कृत टीका ]

गायत्रीति । गायत्रीजपे = गायत्रीजप-विषये षडङ्गन्यासमाह प्रणव इत्यादिना । त्रिरावर्त्येति । "व्याख्यातञ्चैतत् श्रीदत्तेन- ॐ हृदयाय नमः (१), ॐ भूः शिरसे स्वाहा (२), ॐ भुवः शिखायै वषट् (३), ॐ स्वः कवचाय हुँ (४), ॐ भूर्भुवःस्वः नेत्राभ्यां वौषट् (५), ॐ भूर्भुवः स्वः अस्त्राय फट् (६) इत्युक्त मन्त्रोक्ताङ्गेषु त्रिरावृत्येति" इति, "प्रणव इत्यादि । ॐ हृदयाय नमः, ॐ भूः शिरसे स्वाहा, ॐ भुवः शिखायैवषट्, ॐ स्वः कवचाय हुँ, ॐ भूर्भुवः स्वः नेत्राभ्यां वौषट्, ॐ भूर्भुवः स्वरस्त्राय फट् इतिमन्त्रैः हृदय, शिरः, शिखा, सर्वाङ्ग (बाहुद्वय)नेत्रद्वय करद्वयेषु न्यसेदिति । एवञ्च ॐ भूर्भवःस्वरिति मन्त्रस्य त्रिरावर्तनं भवतीतिश्रीदत्तादिसम्मतः पक्ष इति च, ( ३१०, २८८ पृष्ठे च) वीरमित्रोदय :।

ॐ भूर्भुवः स्वरित्यक्षरपञ्चकं हृदय शिरः शिखा नेत्रद्वय करद्वयेषु न्यसेदेवमपरं वारद्वयमित्यनिरुद्धादिसम्मता व्याख्या । ॐ भूर्भुवः स्वरित्यक्षर पञ्चकस्य हृदय शिरः शिखासु स्थानत्रये एकैकवारं न्यासेन तदक्षरपञ्चकं त्रिरावर्तयेदित्यर्थ इति ब्राह्मणसर्वस्वे हलायुधः" इत्यपि च वीरमित्रोदयः ।

षडङ्गन्यासविधिर्यथा ।

---

पाठ० ( २ ) शोभिता ( ३ ) मण्डलान्तस्था; मण्डलस्थाच । ( ४ ) तत्रावाह्य ।

प्रथममन्त्रमुच्चार्य दक्षिणहस्तस्य पञ्चाङ्गुलिभिः (अनामिकाऽङ्गुष्ठाभ्याम् वा) हृदयं स्पृशेत्। द्वितीयमन्त्रवाक्येन मस्तकम्, तृतीयेन शिखां शिखास्थानं शिखास्थानीयं तत्र स्थापितं कुशं वा, चतुर्थवाक्येन दक्षिणहस्ताङ्गुलिभिः वामस्कन्धं वामहस्ताङ्गुलिभिश्च दक्षिणस्कन्धं, पञ्चमवाक्येन नेत्रद्वयम् च स्पृशेत्। षष्ठवाक्येन दक्षिणहस्तं वामतः पृष्ठत : दक्षिणभागतश्च स्वाग्रे समानीय अथवा प्रदक्षिणक्रमेण मध्यमाङ्गुष्ठाभ्यां चुट् चुट् शब्दं कारयन् स्वाग्रे समानीय तर्जनी मध्यामाङ्गुलिभ्यां वामहस्तस्योत्तानतले तालीं वादयेत्।

ततः पश्चादिति। षडङ्गन्यासानन्तरमित्यर्थः। ध्यातव्यं क्रमशस्तु वै इति। गायत्र्या ऋषिच्छन्दोदैवत-विनियोगा योगियाज्ञवल्क्योक्ता यथा-

**सविता देवता यस्याः मुखमग्नि स्त्रिपाच्च या।**

**विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते॥**

**विनियोग उपनयने प्राणायामे तथैव च। इति**

यथा च संवर्तोऽपि-

**विश्वामित्र ऋषिश्छन्दो गायत्री सविता तथा।**

**जप होमोपनयने विनियोगो विधीयते॥ इति**

"प्रणवादीनि हृदयादिषु त्रिर्विन्यस्य ऋष्यादिं स्मृत्वा गायत्री ध्येयेत्यर्थ इत्याचारचिन्तामणिः। **रूपमाहेति**। गायत्र्या ध्येयरूपमाह-श्वेतवर्णेत्यादि। एवञ्चात्र-"एतच्च सन्ध्यारूपकथनं ध्यानार्थं स्तुतिमात्रपरं वा। गायत्री कालत्रयेऽपि शुक्लवर्णैव ध्येयेति वक्ष्यते।

'या सन्ध्या सा च गायत्री त्रिधा भूत्वा व्यवस्थिता' इत्यभेदाभिधानं स्तुतिः। पारमर्थिके ऽप्यभेदे जपोपक्रमे शुक्लाया एव ध्यानमि" ति ग्रन्थकारस्य पूर्व विवेचनं न विस्मर्तव्यम्। अतएव प्रकृत पद्य द्वयात्मकं वचनमुल्लिख्य "इति ध्येय सावि (गाय) त्री (स्वरूप) कथनाविशेषित योगियाज्ञवल्क्य-वचनात्सर्वत्र शुक्लैव गायत्री ध्येया। केचित् - प्रात ब्रह्माणीं रक्तवर्णां, मध्याह्ने

वैष्णवीं कृष्णां, सायं माहेश्वरीं शुक्लां ध्यायन्ति । एतनमूलकतया चानाकरवाक्यानि बहूनि पठन्ति'' इति ग्रन्थकृता कृतं छन्दोगाह्निकमपि ।

अनेन 'तेजोऽसी' ति यजुषा विधानतः आवाह्य, तत्र = एवं स्थितौ । वाह्यम् = धारणीयम्–गायत्रीमन्त्रमिति यावत्, ग्रामाद् बहिर्वा जपित्वा, नमस्कृत्य = प्रणम्य, विसर्जयेत् =

उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि ।
ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम् ॥

इति मन्त्रमुच्चार्य विसर्जनं कुर्यात् ।

[ हिन्दी टीका ]

गायत्री जपके विषय में योगियाज्ञवल्क्य का कहना है कि ॐ हृदयाय नमः ( १ ), ॐ भूःशिरसे स्वाहा ( २ ) ,ॐ भुवः शिखायै वषट् ( ३ ), ॐ स्वः कवचाय हुँ ( ४ ), ॐ भूर्भवःस्वः नेत्राभ्यां वौषट् ( ५ ), ॐ भूर्भुवः स्वरस्त्राय फट ( ६ ), इन छहों मन्त्रों से हृदय, शिर, शिखा, दोनों नेत्र तथा दोनों बाहु (मूल, कंधा) पर तीन बार षडङ्गन्यास करे । अर्थात् प्रथम मन्त्र पढ़कर दाहिने हाथ की पाँचो उँगलियों से या अनामिका तथा अंगूठे से हृदय का स्पर्श करे । द्वितीय मन्त्रवाक्य से मस्तक, तृतीय से शिखा, चौथे वाक्य से दाहिनी अंगुलियों से बायें कंधे तथा बायें हाथ की अंगुलियों से दायें कंधे का स्पर्श करे पाँचवे से दोनों नेत्रों का स्पर्श करना चाहिए । छठा वाक्य पढ़ कर दाहिने हाथ को बायीं ओर से पीछे की ओर ले जाकर दाहिनी ओर से आगेकी ओर ले आवे अथवा प्रदक्षिण (दक्षिणावर्त) क्रम से चुटकी बजाते हुए शिर के चारों तरफ से दाहिने हाथ को आगे ले आवे और तर्जनी एवं मध्यमा उंगुलियों से बायें हाथ की हथेली पर ताली बजावें ।

इस तरह षडङ्गन्यास कर गायत्री के ऋपि छन्द देवता विनियोग तथा रूप का क्रमशः ध्यान करें ।

योगियाज्ञवल्क्य द्वारा अन्यत्र कहे गए ऋपि छन्द देवता तथा विनियोग आगे संध्या प्रयोग प्रकरण में स्वयं ग्रन्थकार कहेंगे । अतः ये वहीं से ज्ञातव्य हैं ।

'श्वेतवर्णा समुद्दिष्टा' आदि से गायत्री का रूप कहा गया है । यथा–गायत्री, श्वेतवर्णा रेशमवस्त्र धारण करने वाली, श्वेत चन्दन, पुष्प तथा अलंकारों से अलंकृत, सूर्य मण्डल के मध्य में अथवा ब्रह्मलोक के निवासिनी है । ये हाथ में माला धारण

किये हुए तथा पद्मासन से पद्मों (कमलों) के आसन पर विराजमान और शुभ-दायिनी हैं ऐसी गायत्री का 'तेजोऽसि' आदि यजुर्वेद के मन्त्र से विधान पूर्वक आवाहन करके और यथासंभव गाँव से बाहर ही जप कर प्रणाम करे।

अनन्तर 'उत्तरे शिखरे जाते' आदि मन्त्र पढ़ते हुए जल प्रदान कर विसर्जन कर दें।

यहाँ ग्रन्थकार के पूर्व विवेचनानुसार भूलना नहीं चाहिए कि तीनों ही संध्या समयों में शुक्लवर्णा ही गायत्री का ध्यान करना चाहिए। इसी तरह इन्हीं ग्रन्थकार के अपर ग्रन्थ छन्दोगाह्निक का विवेचन है कि योगियाज्ञवल्क्य के वचनानुसार सर्वत्र श्वेतवर्णा ही गायत्री का ध्यान होना चाहिए। कितने (निबन्धकार) तो प्रातः काल में रक्तवर्णा ब्रह्माणी, मध्याह्न में कृष्णवर्णा वैष्णवी, तथा सायंकाल शुक्लवर्णा माहेश्वरी गायत्री का ध्यन करना मानते हैं और एतदर्थ बहुत से वचन दिखाने हैं जो आकर (प्राचीन प्रमाण ग्रन्थ भाष्य आदि) से विरुद्ध हैं।

[ मूलम् ]

गायत्रीमधिकृत्य शतपथश्रुतिः (बृहदारण्यकोपनिषच्च)-

**"तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी च- तुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति। यं द्विष्यादसावस्मै कामो मा समृद्धीति[1] वा न है वा स्मै स कामः समृध्यते यस्मा एवमुपतिष्ठते"।**

उपस्थानञ्चैतज्जपात्प्राक्। तथाच बौधायनः-

**"उपतिष्ठेद्वा[2] एतां देवीं तुरीयेण पदेन। अथाप्युदाहरन्ति। गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय परोरजसे इत्यथैनां जपती" ति।**

अथापीत्यादिना तुरीय-पदस्वरूप- कथनम्, एवं श्रुतावपि परोरजसे इत्यन्तो मन्त्रः। अग्रेचार्थवादः। इदञ्च बौधायनवाक्यं राजाद्यलिखितमपि बहुजन-सम्मतत्वाल्लिखितम्।

---

पाठा० (१) समृद्धि। (२) तिपेद्वैतां।

[ संस्कृत टीका ]

गायत्रीति । गायत्रीमधिकृत्य उपात्तेयं श्रुतिः शतपथब्राह्मणस्य चतुर्दशकाण्डे सप्तमे प्रपाठके प्रथमब्राह्मणे दशमौ मन्त्रः । बृहदारण्यकोपनिषदश्च पञ्चमाध्याये चतुर्दशब्राह्मणे सप्तमो मन्त्रः । मन्त्र(वचन)स्यास्य "अहमद:प्रापमि" ति शेषांशो ज्ञातव्यः । अस्य सायणभाष्य व्याख्या प्रायः आरण्यकोपनिषदः शाङ्करभाष्यव्याख्या समैवास्ति । तत्र सायणव्याख्या यथा-

"एवमुक्तगायत्र्युपासनासंग्रह विषयमेव मन्त्रमैहिक-फल-विशेषोपाय कथनार्थमवतारयति तस्या उपस्थानमिति । अस्यार्थः । तस्याः=गायत्र्याः । उपस्थानम् = एत्य नमस्करणम् । (उपेत्य स्थानम् - नमस्करणमिति शङ्करः) अनने मन्त्रेण । कोऽसौ मन्त्र इति कथयति - गायत्र्यस्येकपदी द्विपदीत्यादि - प्रापदित्यन्तम् ।

हे गायत्रि, त्वं त्रैलोक्यात्मकपादेन एकपदी (असि) भवसि । विद्यारूपेण द्वितीयेन द्विपदी असि । प्राणादिना तृतीयेन त्रिपद्यसि । मण्डलान्तर्गत-पुरुष-लक्षणेन चतुर्थेन तुरीयेण चतुष्पद्यसि । एवं चतुर्भिः पादैरुपासकैः पद्यसे=ज्ञायसे ।

अतः परं परेण निरुपाधिकेन स्वेनात्मना अपदसि । अविद्यमानं पदं यस्यास्तव येन पद्यसे सा त्वमपदसि, यस्मान्नहि पद्यसे, नेतिनेत्यात्मत्वात् । अतोऽव्यवहार्य विषया । अतस्त्वमपदसीति । (अतोऽव्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय परोरजसे इति शङ्करः) ।

अथ पादत्रयापेक्षया चतुर्थपादस्य प्राधान्यमभिप्रेत्य तस्य नमस्करणमुच्यते नमस्ते-तुरीयाय दर्शताय पदाय परोरजसे इति । एवं नमस्करणमुक्त्वा शेषेण यथोक्तनमस्कार प्रयोजनमुच्यते । असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः । अदः = पाप्मरूपशत्रोःयत् त्वत्प्राप्तिविघ्नकर्तृत्वं तच्च मा प्रापत् = नैव[१] प्राप्नोतु । इतिशब्दः पापक्षयफलोपस्थानमन्त्रपरिसमाप्त्यर्थः । (इति शब्दो मन्त्र परिसमाप्त्यर्थ इति शङ्करः) ।

इदानीं प्रवृद्धद्वेषवन्तं प्रति उक्तोपस्थान-मन्त्रे ऊहप्रदर्शनेनाभिचारिकम्[२] उपस्थानान्तरमाह-यं द्विष्यादिति । यं द्विष्यात् = यं प्रति द्वेषं कुर्यात् स्वयं विद्वान् तं प्रति अनेनोपस्थानम् । असौ = शत्रुरमुकनामा इति तन्नाम गृह्णीयात् । अस्मै = देवदत्ताय शत्रवे । अभिप्रेतः कामः = अभिलषितोऽर्थः । मा समर्द्धि[२]=समृद्धिं मा प्राप्नोतु । तथा च "असावदो मा प्रापत्" इत्यस्य "असावस्मै कामो मा समर्द्धि", इत्यूहं कृत्वा गायत्र्यस्येकपदीत्यादिना पूर्वोक्तेन मन्त्रेणाभिचरन्नुपतिष्ठेतेति वाक्यार्थः । न हैवास्मै देवदत्ताय शत्रवे स कामः समृध्यते । यस्मा एवमुपतिष्ठते ।

कामिनं प्रति आभिचारिकमुपस्थानानन्तरमाह-अहमदः प्रापमिति वेति । अहम्। अदः= देवदत्ताभिप्रेतं मदभिलषितम् वा प्रापम् = प्राप्नुयामिति वा उपस्थिष्ठते । "असावदो मा प्रापत्" इत्यादि त्रयाणां मन्त्रपदानां यथाकामं विकल्पः ।। १० ।।

उपस्थानञ्चैदति । एतदुपस्थानम् = उक्तश्रुत्या प्रतिपादितमुपस्थानम् । जपात् = गायत्रीजपात् । प्राक् पूर्वम् । करणीयमितिशेषः । "उपतिष्ठेद्वा एतां देवीमि" त्यारभ्य "एनां जपती" त्यन्तबौधायन-वचनेनोपस्थानान्तरं जपविधानात् ।

अथापीति । उपतिष्ठेद्वा एतां देवीं तुरीयेण पदेन इति वचनांशमुक्त्वा तुरीयपदस्वरूप-कथनाभिप्रायेणोच्यते अथापीत्यादि । तथा च बौधायन-वाक्ये गायत्र्यस्येकपदीत्यारभ्य परोरजसे इत्यन्तस्तुरीय पदात्मको मन्त्रः, तथैव, श्रुतावपि = शतपथ - बृहदारण्यक वचनेऽपि 'परोरजसे' इत्यन्तो मन्त्रो ज्ञेयः । तुरीयं परं परोरजसेऽसावदोमित्यष्टाक्षरमिति तु स्मृतिचन्द्रिके तिवीर मित्रोदयः । अग्रे च ='सावदोमा' इत्यारभ्य एतद्वचनान्तं यावत् । अर्थवादः = प्रशंसापरक-वाक्यम् - फलश्रुतिरिति यावत् । अथवा सन्ध्यावन्दने गायत्री जपस्य प्राधान्यपक्षे प्राणायामादीनामङ्गानामिव गायत्र्युपस्थानस्यापि फलश्रव-णमर्थवादपरमेव, अङ्गे फलश्रवणमर्थवाद इतिन्यायात् । इदञ्च बौधायनवाक्यम्

= उपतिष्ठेद्वा एतामित्यादिवचनम्। राजाद्यलिखितमपि = (स्व-धर्मशास्त्रेतिहास-पुस्तके श्रीदत्तोपाध्यायोल्लिखित 'राजाद्यलिखिते' त्यादौ राजपदेन प्रायः भोजराजो गृह्यते इति म० म० काणेमहोदयस्तथाप्येतदर्थमस्यैव पुस्तकस्य प्राक्कथनमवलोकनीयम्)। बहुजन-सम्मतत्वात् = बहुविद्वज्जनैरङ्गीकृतत्वात्। लिखितम् = स्वनिबन्धग्रन्थे मयापि (श्रीदत्तोपाध्यायेन उल्लिखितमिति भावः)।

प्रकृतश्रुतिवचनमुल्लिख्यात्र "अत्र इतिना व्यवच्छेदनात्, प्रापत्पर्यन्त उपस्थानमन्त्र इति शङ्कराचार्य भास्कराचार्ययोव्याख्या,", इति। एवममेव प्रकृत बौधायनवचनमुल्लिख्य "अत्र यद्यपि 'परोरजस' इत्यनन्तरमपि शतपथे सावदो मा प्रापदितिरूपो मन्त्रस्य शेषः श्रूयते। तथापि तस्य नेह विनियोगो बौधायनेन व्यवच्छेदनात् इति श्रीदत्ताह्निकम्। अन्येतु एतत्सूत्रस्य लक्ष्मी-धराद्यलिखितत्वेन निर्मूलत्वम्। समूलत्वे वा बौधायनस्य तैत्तिरीय-सूत्रकारत्वेन शतपथस्य च माध्य न्दिनत्वेन माध्यन्दिनानां शतपथोक्त एव मन्त्रो ग्राह्य इत्याहु-रितिचाचारचिन्तामणिः।

अत्र नित्यकृत्यरत्नमालाटिप्पण्यपि यथा—अत्रावाहनानन्तरं जपात्प्राक् गायत्र्या उपस्थानं गायत्र्यस्येकपदीति मन्त्रेण।......."अथैनां जपति" इति बौधायन सूत्रा'त्परोरसज' इत्यन्त एव मन्त्रः। शतपथे—'असावदोमा प्रापदित्यनुवाद इत्याचारादर्श मन्त्रार्थ दीपिका रघुनन्दनादयः।......ब्रह्म न-"तस्या उपस्थानं गायत्र्यस्येक-××× मा प्राप दिति" इति शतपथब्राह्मणे इतिना व्यवच्छेदात्प्रापदन्त एव मन्त्र इति वदन्ति। शङ्कराचार्य - भास्कराचार्य -वाचस्पति मिश्रादयोऽप्येवम्। युक्तञ्चैतत्। आद्ये बौधायनसूत्रस्य कल्पतरुकारादिभिरलिखितत्वेन निर्मूलत्वात्समूलत्वे वा तस्य तैत्तिरीयसूत्रकारत्वेन माध्यन्दिनशाखीयै ग्रहीतुमयोग्यत्वात्। द्वितीयेऽपि शतपथविरोधस्य ध्रुवत्वात् तदनुसारिणां तृतीय-पक्षस्यैवादरणीत्वासंशयेऽधिक-प्रवेशेऽपि हान्यभावाच्चे".ति।

## [ हिन्दी टीका ]

पूर्वोक्त उस गायत्री की उपासना का मन्त्र ऐहिक फल विषयोपाय के कथन की दृष्टि से यहाँ कहा जा रहा है ।

'तस्या उपस्थानम्' का अर्थ है- उस गायत्री का इस मन्त्र से उपस्थान-समीप जाकर स्थित होना-अर्थात् नमस्कार करना । वह मन्त्र कौन सा है ? इस जिज्ञासा में श्रुति बतलाती है-'गायत्र्यस्येकपदी' से लेकर 'प्रापत्' पर्यन्त मन्त्र है । इसका अर्थ यों ज्ञातव्य है कि-हे गायत्री देवी ! तुम त्रिभुवन रूप प्रथम चरण से 'एकपदी' हो । ऋक् यजुः एवं सामरूप द्वितीय चरण से 'द्विपदी' ही । प्राण, अपान तथा व्यान आदि रूप तृतीय चरण से 'त्रिपदी' हो और सूर्यमण्डलान्तर्गत ब्रह्मरूप चतुर्थ (तुरीय) चरण से 'चतुष्पदी' हो । इस तरह इन चारों चरणों के कारण उपासकों के द्वारा तुम जानी जाती हो । फिर भी अपने सर्वोत्तम निरुपाधिक स्वरूप से अर्थात् निर्गुण स्वरूप से अचिन्त्य होने के कारण तुम 'अपद' हो क्योंकि ''नेति नेति'' कहकर तुम्हारे स्वरूप का वर्णन किया जाता है । अतएव मनबुद्धि के अगोचर होने से तुम सबके लिए प्राप्य नहीं हो । तुम्हारे दर्शन-दर्शनीय-(अनुभव करने योग्य) चतुर्थ पद को जो परोरज (रजोगुण या प्रपञ्च से परे-शुद्ध परब्रह्म स्वरूप है, नमस्कार है ।

यहाँ 'गायत्र्यस्येकपदी' से लेकर 'परोरजसे' तक के मन्त्र से नमस्कार कहकर शेष से नमस्कार का प्रयोजन कहा जाता है । यथा-

तुम्हारी प्राप्ति में विघ्न डालने वाले वे राग द्वेष काम क्रोध आदि रूप पाप मेरे पास न पहुँच सकें । अर्थात् परब्रह्मस्वरूपिणी तुमको मैं निर्विघ्न प्राप्त करूँ ।

यहाँ ''प्रापदिति'' का 'इति' शब्द पापक्षय रूप फल के लिए उपस्थान मन्त्र की समाप्ति का सूचक है । इससे यह सूचित होता है कि पापक्षय रूप फल चाहनेवालों के लिए 'गायत्र्यस्येकपदी' से लेकर 'प्रापत्' पर्यन्त मन्त्र होगा ।

अब उपासक जिसके प्रति द्वेष करता हो उसके लिए नाम आदि का ऊह कर आभिचारिक (अदृष्ट उपाय से दूसरे के लिए दुःखोत्पादन को अभिचार कहते हैं) दूसरा उपस्थान 'यं द्विष्यादि' से कहा जाता है । यथा, यह अमुक नामवाला शत्रु इस प्रकार यहाँ नाम ले । अर्थात् इस शत्रु देवदत्त का अभिलषित (कामना) समृद्ध (सम्पन्नता को प्राप्त) न हो, इस तात्पर्य से 'असावदो मा प्रापत्' के स्थान पर ''असावस्मै कामो मा समर्धि'' ऐसा कहकर 'गायत्र्यस्येकपदी' से 'परोरजसे' पर्यन्त मन्त्र से आभिचारिक उपस्थान करे । ऐसा करने से इस देवदत्त की अभीष्ट कामना

पूर्ण नहीं ही होती है। किस देवदत्त के लिए ऐसी बात है ? इसके उत्तर में समझना चाहिए कि जिसके उद्देश्य से इस प्रकार का उपथान किया जाता है।

फलकामी के प्रति इसके अतिरिक्त भी आभिचारिक उपस्थान पुनः ''अहमदः प्रापमिति वेति'' वाक्य से कहा जा रहा है। यथा–'इस देवदत्तके अभीष्ट अर्थ को या अपने अभिलषित अर्थ को मैं प्राप्त कर लूँ' इस उद्देश्य से उपस्थान किया जाता है।

यहाँ 'असौ', 'अदः', 'मा प्रापत्' इन तीनों मन्त्र पदों का उपासक के इच्छानुसार विकल्प हो सकता है। अर्थात् वह जिसके लिए जिस वस्तु की प्राप्ति या अप्राप्ति कामना रखता हो उन्हीं का इनके स्थान पर उच्चारण करे।

श्रुति प्रतिपादित यह उपस्थान गायत्री जपके पूर्व करना चाहिए क्योंकि बौधायन का कहना है कि तुरीय पद से गायत्री देवी का उपस्थान करे। तुरीयपद 'गायत्र्यस्येक पदी' से 'परोरजसे' पर्यन्त मन्त्र लिया जाता है।। अनन्तर जप करे। बौधायन वचन में 'अथाप्युदाहरन्ति' इत्यादि वचन में तुरीय पद का स्वरूप कहा गया है। इसी तरह श्रुतिवाक्य से 'परोरजसे' पर्यन्त ही मन्त्र है क्योंकि आगे का वाक्य तो अर्थवाद-प्रशंसा पर वाक्य अर्थात् फलश्रुति है।

यह बौधायनवचन यद्यपि राजा आदि से सम्मत ग्रन्थों में लिखित नहीं पाया जाता है। अथापि अधिकांश विद्वज्जन सम्मत होने के कारण मैं (श्रीदत्तोपाध्याय) ने अपने निबन्धग्रन्थ (आचारादर्श) में लिखा है।

यहाँ आचारचिन्तामणि के लेखानुसार शंकराचार्य एवं भास्कराचार्य की व्याख्या है कि ''प्रकृतश्रुति वचन में 'इति' पद से अलग (व्यवच्छेद) कर देने के कारण 'प्रापत्' पर्यन्त उपस्थान मन्त्र है।'' किन्तु उक्त श्रुतिवचन के बाद प्रकृत बौधायन वचन का उल्लेख करते हुए श्रीदत्ताह्निक का विवेचन है कि यद्यपि 'परोरजसे' इसके बाद भी शतपथ में 'सावदो मा प्रापत्' ऐसा मन्त्र का शेषभाग सुना जाता है फिर भी यहाँ इसका उपयोग (विनियोग) नहीं होता क्योंकि बौधायन वचन ने 'प्रापत्' पर्यन्त को ही अलग से कहा है। इनसे भी अन्यों का मत है कि लक्ष्मीधर (कल्पतरुकार) आदि के द्वारा उद्धृत न होने के कारण यह बौधायन वचन निर्मूल है। यदि इसे समूल (प्रामाणिक) भी मान लिया जाय तो भी बौधायन ऋषि को तैत्तिरीयब्राह्मण के सूत्रकार होने के कारण माध्यन्दिनशाखीय व्यक्तियों के लिए शतपथब्राह्मण के द्वारा कहा गया मन्त्र ही ग्राह्य होगा।''

इसी बात को नित्यकृत्यरत्नमालाटिप्पणी ने भी कुछ विशदता से कहा है।

## [ मूलम् ]

जप्यमाह योगियाज्ञवल्क्यः–

ॐ कारः[१] पूर्वमुच्चार्यो[२] भूर्भवः स्वस्ततः परम् ।
गायत्री प्रणवश्चान्ते जप्ये[३] ह्येवमुदाहृतम्[४] ॥

एवं गायत्र्यादौ द्वितीयोंकारोच्चारणमन्तिमोंकारत्यागश्चायुक्तः । मन्वादावप्यन्ते ॐ कारान्तर्भावात् ।

## [ संस्कृत टीका ]

जप्यमिति । जप्यम् = जपयोग्यं मन्त्रमाह-ओंकारेत्यादिना । जप्ये = जपनीये गायत्रीमन्त्रे इत्यर्थः । पूर्वम्=सर्वप्रथमम् । ॐकारः । उच्चार्यः=पठनीयः । ततः परम् = तदनन्तरम् । भूर्भुवः स्वरिति व्याहृतयः । गायत्री = तत्सवितुरित्यादि मन्त्रः । तदन्ते, प्रणवः = ॐकारः । 'उच्चार्य' इति यथालिङ्गवचनं प्रत्येकमभिसम्बध्यते । एवमुदाहृतम् = एष क्रमः कथितः ।

एवञ्च गायत्र्यादावोङ्कारोच्चारणं न भवति किन्तु व्यहृत्यादावेवेति सिद्धम्। जप्ये ह्येवमित्यभिधानाद् यत्र यत्र गायत्र्याः जप उक्तस्तत्र तत्र प्रणवादि-व्याहृतित्रय-पूर्विकायाः प्रणवान्ताया एव तस्याः जपः । तेन श्राद्धादौ जपोऽप्येवमेवेति निष्पद्यते । एवं गायत्र्यादाविति । एवम् = उक्तयोगियाज्ञवल्क्यवचने सति । गायत्र्यादौ = गायत्रीमन्त्रस्य प्रारम्भे । द्वितीयोंकारोच्चारणम् = अपरस्योंकारस्य पठनम् । अन्तिकमोंकारत्यागश्च गायत्रीमन्त्रस्यावसाने ओंकारोच्चारणाभावश्च । अयुक्तः = अनादरणीयः । मन्वादावपि–

---

पाठा० (१) ओंकारं । (२) मुच्चार्यः आदावोङ्कार उच्चार्यो । (३) जपो ह्येवमुदाहृत; जप्यं ह्येवमुदाहृतम् । (४) हृता ।

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।

क्षरत्य[१]नोङ्कृते पूर्वं पर[२]स्ताच्च विशीर्यते ॥

इति मनुवचनादावपि ओंकारनिवेशस्य प्रतिपादनात् ।

अत्रैतद् योगियाज्ञवल्क्य-मनुवचने उद्धृत्य "ब्रह्मणः = वेंदस्य । ब्रह्मगायत्रीमन्त्रस्य च । उक्तयोगियाज्ञवल्क्य-वचनात् । तथाचात्रान्त्ये प्रणवयोगं मनोःस्वाध्याय-(वेदपाठ)मात्रपरत्वेन तात्पर्यं कल्पयँश्चन्द्रकान्ततर्कालङ्कारो गोभिलीयपरिशिष्टभाष्ये योगिवचनं नातर्कयदिति भ्रान्त एवेति नित्यकृत्यरत्नमाला टि० । अत्रच्छन्दोगाह्निके तु-'तिष्ठेदोदयनात्पूर्वा' मिति कर्मप्रदीपवचनमुल्लिख्य- "पूर्व त्रिकम् = पूर्वोक्तं त्रिकम् । प्रणवव्याहृति सावित्र्यात्मकम् । अत्र यद्यपि अन्तिम ॐकारो नोक्तस्तथापि-

आदावोङ्कार उच्चार्यो भूर्भुवः श्वस्ततः परम् ।

सावित्री प्रणवश्चान्ते जप्ये ह्येवमुदाहृतम् ॥ इति

योगियाज्ञवल्क्योक्तः सोऽपि बोद्धव्यः । महार्णवप्रकाशे तु अन्तिम ॐकारो विकल्प उक्त (ल्पो दर्शितः)" इत्युक्तम् ।

परं वीरमित्रोदयस्तु-" अत्र केचित् ।

तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः ।

आसीतोऽडूद्गमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन् ॥

इति छन्दोगपरिशिष्टवचनेन त्रिकस्य प्रणवव्याहृतिगायत्र्यात्मकस्य जपविधानादन्ते प्रणवो नास्ति । अन्त्यप्रणवविधायकं योगियाज्ञवल्क्यञ्च सन्ध्यातिरिक्तजपपरमित्याहुः । तन्न । छन्दोगपरिशिष्टवचनवद् योगियाज्ञवल्क्य वचनस्यापि सन्ध्या प्रकरणीयत्वेन सन्ध्यातिरिक्त जप मात्र परत्वे प्रमाणाभावात् । योगियाज्ञवल्क्य-वचनानुसारेण प्रणवस्याद्यन्तयोर्जपेऽपि त्रिकातिरिक्तजपेन त्रिकजपविधायकवाक्यविरोधाच्च । किञ्च परिशिष्टवाक्यस्य

पाठा० (१) स्रव । (२) पुर ।

जपानुवादेनोत्थानादि विधायकत्वम्। अनुवादश्चैकदेशस्यापि। किञ्च 'गायत्र्याः प्रत्यहं जपः' इति जपविधायक-याज्ञवल्क्यवाक्ये गायत्री-मात्रश्रवणेऽपि वचनान्तरैकवाक्यतया प्रथमप्रणवव्याहृतिप्राप्तिवदन्यप्रणवप्राप्तिर-प्रत्यूहैवेती'' ति।

## [ हिन्दी टीका ]

योगियाज्ञवल्क्य जपनीय गायत्री मन्त्र के सम्बन्ध में कहते हैं कि ''गायत्री मन्त्र के जप में पहले ॐकार, फिर 'भूर्भुवः स्वः' इन तीन व्याहृतियों तत्पश्चात् गायत्री मन्त्र तथा इसके अन्त में भी ॐकार का उच्चारण करना चाहिए।'' इससे सिद्ध यह हुआ है कि गायत्री के आदि में ॐकार न लगाकर व्याहृति (भूर्भुवः स्वः) लगावें और इसके पूर्व में ओंकार लगावे; साथ ही द्वितीय ओंकार गायत्री मन्त्र के अन्त में लगावें। इस प्रकार के गायत्री मन्त्र का जप होना चाहिए। फलतः श्राद्धआदि में भी इसी तरह की गायत्री का जप होगा।

यहाँ ग्रन्थकार के विवेचनानुसार ज्ञातव्य है कि 'गायत्री के आदि में ॐकार का उच्चारण करे तथा गायत्री मन्त्र के अन्त में ओंकार का उच्चारण न हो ऐसा समझना अयुक्त है'। क्योंकि उक्त योगियाज्ञवल्क्य वचन में ही नहीं, अपितु मनु (आदि के) वचन (२।७४) में भी अन्त में ॐ कार लगाने का विधान किया गया है। यथा, गायत्री मन्त्र तथा वेदपाठ के आदि और अन्त में सर्वदैव प्रणव लगाना चाहिए। यदि आदि का ओंकार न लगाया जाय तो पहले का पढ़ा हुआ भूल जाता है और अन्त वाला न लगाया जाय तो आगे याद नहीं होता है। इसी भाव को नित्यकृत्यरत्नमालाटिप्पणी ने भी पल्लवित किया है।

किन्तु आचारादर्श प्रणेता के अपर ग्रन्थ छन्दोगाह्निक के अनुसार महार्णवप्रकाश नाम के ग्रन्थ में तो अन्तिम ओंकार के प्रयोग में विकल्प दिखाया गया है।

यहाँ वीरमित्रोदय के अनुसार किन्हीं का कहना है 'उदय के पूर्व प्रातः सन्ध्या, शक्त्यनुसार मध्याह्न संध्या तथा तारोदय के पूर्व सायं संध्या प्रणव व्याहृति एवं गायत्री रूप त्रिक का जप करते हुए समाप्त करे' इस छन्दोगपरिशिष्ट वचन के अनुसार उक्त त्रिक का ही जप विहित है। फलतः गायत्री के अन्त में प्रणव नहीं होना चाहिए। हाँ, (मूल में अभी कहा गया) जो अन्तिम ओंकार का विधायक योगियाज्ञवल्क्य वचन है वह संध्यावन्दन से अन्य स्थल वाले जप के प्रसंग का है।'' किन्तु यह कहना इसलिए उपयुक्त नहीं कि छन्दोगपरिशिष्ट के जैसे योगियाज्ञवल्क्य का वचन भी सन्ध्या

प्रकरण में ही कहा गया है तो फिर कोई प्रमाण नहीं कि सन्ध्या से अन्यस्थल के जप मात्र का बोधक रूप योगिज्ञवल्क्य वचन मान लें।

दूसरी बात, योगियाज्ञवल्क्य के वचनानुसार व्याहृति के आदि तथा गायत्री के अन्त में प्रणव का जप होने पर भी त्रिक से अतिरिक्त (आद्यन्त में प्रणव का प्रयोग होने पर भी प्रणवत्वेन एक ही होने के कारण) का जप न होने के कारण त्रिक के जप का विधायक छन्दोगपरिशिष्ट वचन का कोई विरोध भी नहीं हो पाता है।

तीसरी बात, उक्त छन्दोगपरिशिष्टवचन जप के अनुवादक के साथ मुख्यत: प्रात: आदि संध्याओं में उत्थान आदि (आदि पद ग्राह्य उपवेश) का विधायक है और अनुवाद तो एकदेश का भी हो सकता है। इसलिए कोई अनुपपत्ति नहीं।

चौथी बात, 'गायत्र्या: प्रत्यहं जप:' (गायत्री का जप प्रतिदिन करे) इस जप विधायक याज्ञवल्क्य वचन में गायत्री मात्र का उल्लेख रहने पर भी उक्त योगियाज्ञवल्क्य आदि के वचनों के साथ एकवावयता करने से गायत्री मन्त्र के पूर्व प्रथम प्रणव तथा व्याहृति की प्राप्ति (लगाने) के जैसे अन्त में भी प्रणव लगाना निर्विघ्न ही सिद्ध होता है।

[ मूलम् ]

यम:-

सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीं[१] प्रजपेन्नित्यं सर्वकल्मष[२] नाशिनीम्॥

अत्र बौधायन:-

शतकृत्वोऽपरिमितकृत्वोदशावरामिति।

अपरिमितकृत्व: = दशोपरिशतादर्वागनियतसंख्यामित्यर्थ:।

[ संस्कृत टीका ]

सहस्रेति। उत्कृष्टत्वादिमुखेन गायत्रीजपसंख्यामाह-सहस्रेत्यादिना। सहस्रपरमाम् = सहस्रम् - दशशतसंख्याको जप:, परमम् उत्कृष्टो यस्यास्ताम्। शतम्-शतसंख्याको जप:, मध्यम् = मध्यश्रेणीको यस्यास्ताम्। दशावराम् =

पाठा० (१) गायत्रीन्तु। (२) पापप्रणाशिनीम्।

दशसंख्याकनिकृष्ट जपाम् । सर्वकल्मषनाशिनीम् = कायादिकृत पापापहारिणीम् । गायत्रीं देवीम् = देवीमेनां ध्यात्वा तन्मन्त्रमित्यर्थः । प्रजपेत् = प्रकर्षेणाधिकं जपेत् । एतदुत्तरं माहात्म्यावबोधकं यमवचनं यथा

**गायत्रीञ्चैव वेदाँश्च तुलयाऽतोलयत्प्रभुः ।**

**एकतश्चतुरोवेदान् साङ्गाँश्च सपदक्रमान् ॥**

**एकतश्चैव गायत्रीं तुल्यरूपा तु सा स्मृता ॥ इति**

शतकृत्व इति । अत्र 'गायत्रीं जपेदि' त्यनुवृत्तौ बौधायनः शतकृत्व इत्यादि । एतत्पूर्वार्धं यथा–'दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेत्' इति । सम्पूर्ण वचनस्य व्याख्या यथा–'दर्भेषु' इत्यनेन कुशासनासीनत्वे तात्पर्यम् । दर्भान् = कुशान् । धारयमाणः = धारयन् । प्राङ्मुखः = पूर्वाभिमुखः । दशावराम् = दशसंख्याकनिकृष्टजपाम् । सावित्रीम् = "सवितृ देवताकां गायत्रीम् । तेन नवव्याहृतिकैव सावित्रीपदवाच्येति केषाञ्चिद्भ्रमो हेयः । गायत्रीति छन्दोऽभिप्रायेण नाम । स्तुतिर्वा । 'गायन्तं त्रायसे यस्माद् गायत्री त्वं ततः स्मृते' ति तत्स्तुतिर्ध्याने पठ्यते सामगैरित्यन्य-स्थलीया नि० कृ० र० मा० टिप्पणी । सहस्रकृत्वः = सहस्रवारम् । (क्रियाऽभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः)। एवमग्रेऽपि । शतकृत्वः = शतवारम् । अपरिमितकृत्वः = दशोपरिशतादर्वागनियतसंख्यामित्यर्थः दशभ्य ऊर्ध्वं शतादिसंख्याव्यतिरिक्तसंख्यामिति यावत् । शतकृत्वः, दशावराभित्यभिधानात् इत्याचारादर्शः। "सहस्राभ्यन्तर एव पञ्चाशद् विंशत्यादिकृत्वो वा जपेदित्यर्थ" इत्याचारचिन्तामणिः। शतादर्वाग् दशोपर्यनियतसंख्यामित्यर्थः । अपरिमितकृत्व इत्यसंख्यात्वेऽपि कृत्वसुच्छान्दसः। किन्तु लौकिकप्रयोगेऽनुवादरूपतयैवेतत्प्रयोगः साधीयान्, यथा छन्दोगाह्निकादौ" इति नि० कृ० र० मा० टि० । "अपरिमितकृत्व इति पूर्वोक्तसंख्याऽतिरिक्तसंख्यत्वं विवक्षितं, नत्वसंख्यत्वम्-'असंख्यातन्तु यज्जप्तं तत्सर्वं निष्फलं भवेत्' इति लघुहारीत-वाक्येनासंख्यात-जप-निषेधादिति वीरमित्रोदयः । आवर्तयेत् = जपेत् ।

मूलवचने दशावरामित्युक्तेः कृत्यसारसमुच्चयेनाप्युल्लेखितम् – गायत्र्याः दशवार जपः अशौचेऽपि कर्तव्यः । तत्राश्वलायनः:-

**आपन्न आशुचः काले तिष्ठन्नपि जपेद्दश ।इति**

अशुचिरेव आशुचिः । तिष्ठन्नुत्तिष्ठन् । नित्यवान् मलमासेऽपि दशवार जपः'' इति ।

**[ हिन्दी टीका ]**

कायादिकृत सभी प्रकार के पापों का विनाश करनेवाली गायत्री के हजार संख्या का जप उत्कृष्ट, सौ संख्या का मध्यम तथा अन्ततः दशसंख्या का निकृष्ट होता है । इसका यथाशक्तिअधिकाधिक जप करना चाहिए । यह अर्थ यमवचन का हुआ ।

कुशासन पर बैठकर कुश हाथ में लेकर हजार, सौ अन्ततः दश बार अथवा अपरिमित बार (अपरिमितकृत्वः) गायत्री मन्त्र जप करना चाहिए । यह अर्थ बौधायन वचन का हुआ ।

यहाँ उक्त वचन में पठित 'अपरिमितकृत्वः' पद की आचारादर्श की व्याख्या है कि दशसे ऊपर और सौ के अन्दर किसी भी अनियमित संख्या का जप हो । किन्तु यहीं आचारचिन्तामणि की व्याख्या है कि हजार के भीतर पचास या वीस आदि बार (नियत संख्या से) जप करें । यहीं नित्यकृत्यरत्नमालाटिप्पणी की व्याख्या आंचारादर्शानुसारिणी है । यहीं वीरमित्रोदय की व्याख्या है कि पूर्वोक्त सहस्र, सौ आदि संख्या से अतिरिक्त संख्या का जप हो, न कि विना गिनती का जप किया जाय । क्योंकि लघुहारीत के वचनानुसार विना गिनती के जप का निष्फल कथन से जप का निषेध कर दिया गया है ।

मूल वचनानुसार दश बार के जप को अतीव आवश्यक मानते हुए कृत्यसार समुच्चय का विवेचन है कि आश्वलायन वचन के आधार से आशांच या मलमास में भी दश वार का गायत्री जप होना चाहिए ।

**[ मूलम् ]**

गोभिलः:-

**कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् ।**
**गायत्र्यग्निमुखी यस्मात्[१] तस्मादुत्थाय तां जपेत् ॥**

---

पाठा० ( १ ) प्रोक्ता ।

[ संस्कृत टीका ]

कदाचीतिं । यस्माद् हेतोः । गायत्री देवी । अग्निमुखी अग्निरेव मुखं यस्याः सा । अस्ति । तथा च शतपथश्रुतिः ( १४।५।१ ) बृहदारण्यकश्रुतिश्च-( ५।१४।८ )

"तस्याः अग्निरेव मुखम्, यदि ह वा अपि वह्विव अग्नावभ्यादधाति । सर्वमेव तत् सन्दहति । एवं हैव एवं विद्यद्यपि वह्निः पापं करोति । सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति" इति ।

तस्माद् = गायत्र्या अग्निमुखीत्वाद्धेतोः । विद्वान् = धीमान् । कदाचिदपि = कस्मिन्नपि समये । गायत्रीम्=गायत्रीमन्त्रम् । उदके = जले । नो = नहि । जपेत् । (किन्तु) उत्थाय = जलादुत्तीर्य । ताम् = गायत्रीम् जपेत् ।

अत्र नित्यकृत्यरत्नमाला-टिप्पणी "अत्र जल-सन्ध्यावन्दन-पक्षेऽपि गायत्रीजपः स्थल एव कार्यः

यदाऽऽर्द्रवासाः कुरुते जपहोमतपांसि च ।
तत्सर्वं निष्फलं याति .......॥

इत्यादिवचनात्, 'कदाचिदपि नो विद्वान्'....इत्यादिना गोभिलेन विशिष्य निषेधाच्च । गोभिलस्य सामगगुरुत्वेऽपि कात्यायनाविरुद्धत्वादग्नि-मुखत्व रूप-हेतु-निर्देशाच्च वाजसनेयकेऽप्युपस्थितौ बाधकाभावाच्च । उत्थाय = जलादुत्त्सीर्य ।.........कात्यायनोक्तक्रमभङ्गभीता वाजसनेयिवृद्धास्तु-

यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत् ।
अन्यथातु शुचौ भूम्यां कुशोपरि समाहितः ॥

इति पठित्वा जलसन्ध्यावन्दनपक्षे जलेऽपि गायत्रीजपमावश्यकत्वादशधाऽपि कुर्वन्ति । द्वैतपरिशिष्ट-स्मृतिकौमुद्यादिष्वप्येवमि"त्याह । अत्र-वीरमित्रोदयस्तु-"अत्र प्रतिप्रसववाक्यं वृद्धमनुनाम्ना केचित् पठन्ति यदि स्यात् क्लिन्नवासा वै'........इती"ति ।

[ हिन्दी टीका ]

गायत्री देवी अग्निमुखी है। अतः ज्ञानीजन कभी भी गायत्री का जप जल में न करे किन्तु जलाशय से ऊपर आकर ही जपें। यह मूल वचन का अर्थ हुआ।

उक्त प्रसंग पर संस्कृत टीका में उद्धृत शतपथ एवं बृहदारण्यक श्रुति का अर्थ है- (तब जनक ने कहा - अच्छा तो सुनो) उक्त गायत्री का अग्नि ही मुख है। यदि लौकिक पुरुष अग्नि में बहुत सा इन्धन भी डाले तो वह (अग्नि) उस सभी को भस्म कर देती है, इसी प्रकार जो ऐसा जानने वाला है अर्थात् गायत्री का मुख अग्नि है ऐसा जो जानता है तथा स्वयं अग्नि मुख होकर गायत्री का स्वरूप हो गया है, वह यद्यपि बहुत सा याने प्रतिग्रहादि दोष भी कर रहा हो तो उस सम्पूर्ण पापसमूह को भक्षण करके (संप्साय) गायत्र्यात्मा बनकर उस प्रतिग्रह (- दान लेना -) आदि से शुद्ध और अग्नि के समान पवित्र होकर अजर-अमर हो जाता है।

[ मूलम् ]

बृहस्पतिः-

मार्जनं जलमध्ये तु प्राणायामो यतस्ततः।
उपस्थानं ततः पश्चात् सवित्रीजप उच्यते॥

मार्जनम् = मन्त्र स्नानाङ्गभूतमपेक्षितम्[1]। यतस्ततः = जले स्थले च। एवञ्च प्रणायामस्य सन्ध्यान्तर्गतस्य जले स्थले च विधानादुपस्थानपर्यन्ता सन्ध्या जलेऽप्यस्य मते। गायत्रीजपस्तु स्थल एवोक्तः। कात्यायनेनोत्तीर्य प्राणायामादिकमुक्तम्। नरसिंहपुराणे स्नानोत्तरतर्पणात् प्रागुक्तम्।

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः।
प्राणायामाँस्तु कुर्वीत यथाशास्त्रमतन्द्रितः॥
जपेदहरहः स्नात्वा सावित्रीं जपविद् द्विजः।
अथ पुष्पाञ्जालिं क्षिप्त्वा भानवे चोर्ध्वबाहुकः॥
उदुत्यञ्च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि।
प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम्॥

---

पाठा० (१) स्नानाङ्गभूतम्।

अत्र दर्भेष्विति श्रवणात् स्थल एव सन्ध्याऽऽचरणमुक्तम् । जपानन्तरमुपस्थानं प्रकरान्तरमेतत् । बौधायनेऽपि तथा दर्शनात् ।

[ संस्कृत टीका ]

मार्जनमिति । मार्जनम् =

**सार्धयर्चाऽधः प्रक्षिप्य सार्धयोर्ध्वन्तु प्रक्षिपेत् ।**

इति योगियाज्ञवल्क्योक्तम्,

**अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् ।**
**मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते ॥**

इति बौधायनादिभिरप्युक्तं वा मार्जनम् । जलमध्ये = जलाभ्यन्तरे कार्यम् । तु=किन्तु । प्राणायामः । यतस्ततः =जले स्थले च कार्यः । ततः पश्चात् = ऋष्यन्तरवचनैरेकवाक्यतया अर्घप्रक्षेपानन्तरमित्यर्थः नतु प्राणायामानन्तरमेवेतिभावः । उपस्थानम् = सूर्योपस्थानम् । अन्ते च, सावित्रीजपः कार्यः' इति बृहस्पतिवचनार्थः ।

एतेन यत्र तु जले स्थले वेति विशेषो नोपलभ्यते तत्रोभयत्रापि तदनुष्ठानमविरुद्धम् । अतएवोक्तवचनेन बृहस्पतिना मन्त्रस्नानाङ्गभूतं स्नानाङ्गभूतं वा मार्जनं जलमध्ये उक्त्वा सन्ध्याङ्गभूतः प्राणायामः 'यतस्ततः' इत्यनेन जले स्थले वा बोधितः । एवञ्च बृहस्पतिमते उपस्थानपर्यन्ता सन्ध्या जलेऽपि सम्मता । गायत्री जपस्तु स्थलएवोक्तः-'कदाचिदपि नो विद्वानि' त्यादिपूर्वोक्तगोभिलवचनात् । अतएव-"एवञ्च प्राणायमोपस्थानयोः सन्ध्याऽन्तर्गतयोरुभयत्रविधानादुपस्थानपर्यन्ता सन्ध्या जलेऽप्यस्य मते । गायत्रीपजस्तु स्थल एव सर्वेषां नियत इत्यवसीयते" इत्याचारचिन्तामणिः ।

कात्यायनेन तु उत्तीर्य= अवगाहितजलादुपरि आगत्य । प्राणायामादिकम् । उक्तम्=कथितम् । नरसिंहपुराणे तु = स्नानोत्तरतर्पणात् = स्नानादुत्तरकर्तव्य देवर्षि पितृतर्पणात्पूर्वम् । उक्तम् = स्नानादुत्तरंकर्तव्य देवर्षि-पितृतर्पणात्पूर्वम् । उक्तम्=प्राणायामादिकमितिशेषः । अधः प्रदर्शित 'दर्भेषु दर्भपाणिः सन्नि' त्यादि नरसिंहपुराण-वचनात् ।

दर्भेषु इत्यादि । स्नात्वा = स्नानं कृत्वा । दर्भेषु=शुचौ भूम्यां दर्भासने आसीन इत्यर्थः ।। दर्भपाणिः = कुशहस्तः । प्राङ्मुखः = पूर्वाभिमुखः । सुसमाहितः = अनन्यमनस्कः । अतन्द्रितः = निरलसः । यथाशास्त्रम् = शास्त्रानुसारम् । प्राणायामाँस्तुकुर्वीत । ततः, जपवित् = जपविधिज्ञो,द्विजः । अहरहः=प्रतिदिनम् । सावित्रीम् = गायत्रीम् । जपेत् । अथ=अनन्तरम् । भानवे = सूर्याय । पुष्पाञ्जलिम् = मध्याह्नसन्ध्यायां पुष्पमिश्रित जलाञ्जलिम्। क्षिप्त्वा । ऊर्ध्वबाहुकः सन् । एतेनेदं वचनं मध्याह्नसन्ध्यावन्दनविषयकं बोद्धव्यम् । उदुत्यम्, चित्रम्, तच्चक्षुरित्यादि च मन्त्रं जपेत् । ततः प्रभुम् = सूर्यदेवम् । प्रदक्षिणम् उपावृत्य नमस्कृत्य अर्घ्यं दत्वोपविशेदिति शेषः । एतदर्घदानं तर्पणकरणपक्षे तु तर्पणानन्तरं विधेयमितिं पूर्वमेव विवेचितम् ।

अत्रेति । अत्र = नरसिंहपुराणवचने । दर्भेष्वितिश्रवणात् स्थल एव = भूमावेव, कुशासनमास्तीर्येत्यर्थः । सन्ध्याऽऽचरणम् = सन्ध्योपासनम् । उक्तम् = बोधितं (व्यञ्जितं) भवति ।

यदत्र वचने जपानन्तरमुच्यमानमुपस्थानं विरुद्धमिव प्रतिभाति, तदेतत्, प्रकारान्तरम्= अन्यः प्रकारः कल्पान्तरमिति यावत् । बौधायनेऽपि = बौधायनसूत्रेऽपि । तथा दर्शनात् = गायत्रीजपानन्तरं सूर्योपस्थानविधानदर्शनात् । यथा च तत्सूत्रम्–"दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखस्सावित्रीं सहस्रकृत्व आवर्तयंच्छतकृत्वोऽपरिमितकृत्वो वा दशावराम् ।। अथादित्यामुपतिष्ठते उद्वयं तमसस्परि । उदुत्यम् । चित्रम् । तच्चक्षुर्देवहितम् । य उदगादिती" ति ।

## [ हिन्दी टीका ]

मार्जन जल में, प्राणायाम स्वेच्छा से जल या स्थल में, इसके बद उपस्थान, अनन्तर गायत्री जप करें । यह हुआ बृहस्पति वचन का शाब्दिक अर्थ । इससे यहाँ सिद्ध यह हुआ कि जहाँ जल या स्थल का कोई विशेष निर्देशन न हो वहाँ वह दोनों स्थानों पर हो सकता है ।

यहाँ मूलवचन में मार्जन पद से मन्त्रस्नान या स्नान का अङ्गभूत मार्जन लेना चाहिए । मूल के 'यतस्ततः' पद का अर्थ है– जल या स्थल में । फलतः संध्या के

अंगभूत प्रणायाम का विधान जल या स्थल में होने के कारण उपस्थान पर्यन्त की संध्या जल में भी होना बृहस्पति के मत से सम्मत है। किन्तु गायत्रीजप तो स्थल में ही होना चाहिए, क्योंकि गोभिलवचन की स्पष्टोक्ति ऐसी ही है।

कात्यायन ने तो जल से ऊपर आकर प्राणायाम आदि करने को कहा है। नरसिंह पुराण में तो स्नान के बाद होनेवाले देव, ऋषि एवं पितृतर्पण के पहले प्राणायाम आदि सन्ध्यावन्दन होने को कहा गया है। यथा– स्नान करने के बाद कुशासन पर बैठकर कुश हाथ में लेकर पूर्वाभिमुख, अनन्यमनस्क एवं निरलस हो शास्त्रविधि के अनुसार प्राणायाम करे। अनन्तर जपविधि के ज्ञाता द्विज प्रतिदिन गायत्री मन्त्र का जप करे। इसके बाद मध्याह्नसंध्या के समय सूर्य देव के उद्देश्य से पुष्पमिश्रित जल की अंजुलि ऊपर फेंक कर तथा ऊर्ध्वबाहु हो 'उदुत्यम्', 'चित्रम्', 'तच्चक्षुः' इन तीनों वैदिक मन्त्रों को पढ़े। बाद इस प्रभु (सूर्यदेव) की प्रदक्षिणा तथा नमस्कार कर अर्घ्य देवे। (यह अर्घ्यदान तर्पण करने वाले तर्पण के अनन्तर करे।)

उक्त नरसिंह पुराण वचन में 'दर्भेषु' (कुशों पर) पद के पढ़े जाने से सिद्ध होता है कि यह सन्ध्योपासन स्थल पर ही हो, न कि जल में भी। उक्त वचन में जप के बाद जो सूर्योपस्थान कहा गया है वह कल्पान्तर है, जैसा कि ''दर्भेष्वासीनो दर्भान् धारयमाणः'' इत्यादि बौधायन धर्मसूत्र से भी ज्ञात होता है। अर्थात् इस वचन से भी प्रतिपादित सूर्योपस्थान (या सन्ध्या ही) गायत्रीजप के पहले होने के कारण कल्पान्तर है।

[ मूलम् ]

हारीतः–

**प्रणवव्याहृतिसावित्रीं जपन् पापेभ्यो मुच्यते। शतं जप्त्वा मानसात्पूतो भवति। सहस्रं जप्त्वा वाक्कायकृतात्पूतो भवति।**

[ संस्कृत टीका ]

प्रणवेति। गायत्रीजपस्य फलान्याह प्रणवेत्यादिना। प्रणवव्याहृति सावित्रीम्="ॐकारः पूर्वमुच्चार्य" इत्याद्युक्तयोगियाज्ञवल्क्यैकवाक्यतया ॐकार व्याहृतिसहितां प्रणवान्तां गायत्रीम्। जपन् = अभ्यसन्। पापेभ्यः = सर्वविध-दुरितेभ्यः। मुच्यते = मुक्तो भवति। शतम् = शतवारम्। जप्त्वा = प्रत्यहं

जपित्वा । मानसात्-पापात् । पूतः पवित्रो भवति । सहस्रम् जप्त्वा । वाक्कायकृतात् = वाचिकात् कायिकाच्च पापात् । पूतो भवति ।

योगियाज्ञवल्क्येन तु जपसंख्याभेदात् क्रमशः विभिन्नफलान्युक्तानि यथा–

सप्तभिः पावयेद्देहं दशभिः प्रापयेद्दिवम् ।
विंशत्याऽऽवर्त्तिता देवीं नयते चेश्वरालयम् ॥
अष्टोत्तरशतं जप्त्वा तारयेज्जन्मसागरात् ।
तीर्णो न पश्यति प्रायो जन्ममृत्युं हि दारुणम् ॥ इत्यादि ।

[ हिन्दी टीका ]

प्रणवव्याहृति (ॐ भूर्भुवः स्वः) सहित तथा अन्त में भी प्रणवयुक्ता गायत्री का जप करने वला सभी पापों से मुक्त हो जाता है । प्रतिदिन सौ बार जप करने वाला मानसिक पाप से तो हजार बार जपने से वाचिक तथा कायिक पापों से छुटकारा पा लेता है' यह अर्थ मूलवचन का हुआ ।

ऊपर से योगियाज्ञवल्क्य के वचनानुसार जपसंख्या के भेद से विभिन्न फल इस प्रकार ज्ञातव्य है कि प्रतिदिन सात बार जप करने से गायत्रीदेवी शरीर को पवित्र कर देती है, दश बार के जप से स्वर्गलोक की प्राप्ति कराती है, बीस बार जप करने से शिवलोक में पहुँचाती है और एक सौ आठ बार के जप से जन्म-समुद्र से पार कर देती है ।

वास्तव में देखा जाय तो गायत्री जप से वारंवार परेश्वर की स्तुति सम्पन्न होती है जिससे मनुष्य जन्ममरण के चक्कर से छुटकारा पाकर शाश्वत शान्ति प्राप्त करते रहते हैं ।

[ मूलम् ]

यमः–

न तथा वेदजप्येन[१] पापं निर्दहति द्विजः ।
यथा सावित्रीजप्येन[२] सर्वपापैः प्रमुच्यते ॥

पाठा० ( १ ) वेदजपतः । ( २ ) जपतः ।

[ संस्कृत टीका ]

न तथेति । द्विजः= द्विजातिः । वेदजप्येन = वेदानामध्ययनेन । पापम् = जन्मान्तरार्जितं दुरितनिचयम् । तथा = तेन प्रकारेण । न निर्दहति = न भस्मसात् करोति । यथा= येन प्रकारेण । सावित्रीजप्येन = गायत्री-जपेन । सर्वपापैः = विविधैरुपार्जितैः पातकैः । प्रमुच्यते = प्रकर्षेण मुक्तो भवति ।

गायत्रीज्ञानस्य वैशिष्ट्यमाह योगियाज्ञवल्क्यः-

**वेदाः साङ्गास्तु चत्वारोऽधीताः सर्वेऽत्र वाङ्मयाः ।**
**गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥**
**नायन्त्रितस्त्रिवेदी च सर्वाशी सर्वविक्रयी ॥ इति ॥**

परमार्थतः गायत्रीज्ञाने तज्जपे च जीवनस्य यथार्थसार्थकता विद्यते । अतो मनोयोगपुरस्सरं गायत्र्यर्थज्ञानपूर्वकं तज्जपस्तु करणीय एवेति दिक् ।

[ टिप्पणी ]

अत्र वाजसनेयिच्छन्दोगपराणि सामान्य वचनानि यथा -''अत्रेदमवधेयम् । 'अनर्हः कर्मणां विप्र' इत्यादि निन्दाविधायकवचनानि 'सन्ध्यामुपासते ये तु सततमि' त्यादि प्राशस्त्यादिबोधकवचनानि, 'गृहे प्राकृतिकी सन्ध्यं त्यादि देशविधायकवचनानि 'प्रातःसन्ध्यां सनक्षत्रामि' त्यादिकालविधायकवचनानि यान्यन्यान्यपि सामान्यधर्मप्रापकानि तानि सर्वशाखिसाधारणान्येव न तु वाजसनेयिपराणीतीति नि त्यकृत्यार्णवः ।

[ हिन्दी टीका ]

द्विज वेदों के अध्ययन से उस प्रकार अपने पापों को नहीं दग्ध कर सकता जिस प्रकार कि गायत्रीजप से । अर्थात् पापों को दग्ध करने में गायत्रीमन्त्र के जैसे अन्य अलौकिक चमत्कारी शक्ति नहीं है ।

गायत्रीज्ञान के सम्बन्ध में योगियाज्ञवल्क्य का कहना है कि यदि अंगों सहित चारो वेद तथा सकल वाङ्मय पढ़ लिये गए हों तो भी जो गायत्री को तत्त्वतः नहीं जाने तो उसका सारा परिश्रम व्यर्थ है । गायत्री मात्र से सन्तुष्ट होकर अपनी मनोवृत्ति को

नियन्त्रित रखनेवाला ब्राह्मण श्रेष्ठ है किन्तु जिसका अपने मन पर काबू नहीं है, वह सब कुछ चाहने वाला या सभी कुछ खाने वाला और लोभवश अपना सब कुछ बेचने वाला विप्र तीनों वेदों का ज्ञाता होकर भी उत्तम नहीं माना जाता।

सचमुच में देखा जाय तो गायत्री के (शब्दार्थ) ज्ञान तथा उसके जप में ही जीवन की यथार्थ सार्थकता है, अतः सावधानी से अर्थज्ञानपूर्वक गायत्री मन्त्र का जप करना ही चाहिए।

## [ टिप्पणी हिन्दी ]

यहाँ नित्यकृत्यार्णव लेखानुसार ज्ञातव्य है कि पूर्वोक्त 'अनर्हः कर्मणां विप्रः' इत्यादि निन्दाबोधकवचन, 'सन्ध्यामुपासते ये तु सततम्' इत्यादि प्रशंसाबोधक वचन, 'गृहे प्राकृतिकी सन्ध्या' इत्यादि देशविधायक वचन 'प्रातः संध्यां सनक्षत्राम्' इत्यादि काल विधायक वचन तथा इसी तरह के सामान्य धर्मबोधक अन्य अन्य बचन भी सभी शाखियों के लिए साधारण वचन है, नकि वाजसनेयियों के लिए ही मानना चाहिए।

## इति सन्ध्योपासनविधिप्रकरणम्

# जपविधिः

## [ मूलम् ]

अथ जपविधिः । तत्र शङ्खः –

कुशवृष्यामासीनः कुशोत्तरायां वा कुशपवित्रपाणिरुदङ्मुखः सूर्याभिमुखो वा अक्षमालामादाय देवतां ध्यायन् जपं कुर्यात् । सुवर्ण-मणि-मुक्ताफल- स्फटिक-पद्माक्षेन्द्राक्ष-रुद्राक्ष-पुत्रजीवकानामन्यतमानामक्षमालां कुर्वीत[1] कुशग्रन्थिकृतां वा हस्तोपयामैर्वा गणयेत् ।

देवतां ध्यायन् इति । देवताध्यानस्य जपाङ्गता-विधानाद्यत्र न देवता-विशेषविधिस्तत्रापि मन्त्रप्रकाश्या देवता ध्येया । हस्तोपयामः = अङ्गुलिनमनम् ।

## [ संस्कृत टीका ]

अथ जपेति । विधानपूर्वकं भूयोभूयो मन्त्रोच्चारणं मन्त्रस्मरणं वा जपः । तस्य विधिः = विधानं, वक्ष्यते इति शेषः । जपफलं यथा तन्त्रसारे–

जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् ।
सर्वेषामेव यज्ञानां जायतेऽसौ महाफलः ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च शाश्वतीम् ॥
यक्षरक्षःपिशाचाश्च ग्रहाः सर्वे च भीषणाः ।
जपिनं नोपसर्पन्ति भयभीताः समन्ततः ॥
यावन्तः कर्मयज्ञाः स्युः प्रदिष्टानि तपांसि च ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥

---

पाठा० ( १ ) कुर्यात् ।

**माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्त्तितम् ।**

**तस्माच्छतगुणोपांशुः साहस्रो मानसः स्मृतः ।। इति**

अतएव 'यज्ञानां जपयज्ञोऽस्मी'ति श्रीमद्भगवद् गीताऽपि । कुशवृष्यामिति । 'व्रतिनामासनं वृषी' इत्यमरः । वृषी स्वल्पासनमिति कल्पतरुरिति वीरमित्रोदयः । वृषी तृणमयं वर्तुलमासनमिति श्राद्धकाण्डे लक्ष्मीधर इति परिभाषा विवेकः । स्वल्पमासनमिति रत्नाकरादय इति नित्यकृत्यार्णवः । 'मुनीनामासनं वृषी' त्यभिधानमिति नि०कृ० मा० टि० । एवञ्च, कुशवृष्याम् = कुशासने । कुशोत्तरायां वा = कुशाग्रोत्तरायां वा । आसीनः = उपविष्टः । कुशपवित्रपाणिः = वामेऽनियतकुशपाणिर्दक्षिणे पवित्रपाणिरित्यर्थ इति वीरमित्रोदयः । कुशाश्च पवित्रञ्चेति द्वन्द्व इति नित्यकृत्यार्णवः । उदङ्मुखः = उत्तराभिमुखः । सूर्याभिमुखः = सूर्य सम्मुखो वा ।

अक्षमालाम् = जपमालाम् ।[†] आदाय = गृहीत्वा । देवताम् = विशेषतोऽभिहिताम् तदभावे मन्त्रप्रकाश्यां देवतामित्यर्थः । ध्यायन् = चिन्तयन् । जपं कुर्यात् ।

देवताध्यानस्येति । यद्यपि जपे मन्त्रप्रकाश्यमन्त्राधिष्ठातृ देवतयोः ध्यानमुचितं, यथा गायत्रीमन्त्र प्रकाश्यः सर्वभूतान्तर्यामी परमात्मा—

**ध्येयः सदा सवितृ-मण्डलमध्यवर्ती**

**नारायणः सरसिजासनसन्निविष्टः ।।**

इत्यादिरूपेण नारायणः, सूर्यदेवो वा ध्यातव्यः । एवं मन्त्राधिष्ठातृ-देवतात्वेन गायत्र्यपि ध्यातव्या भवेत्, तथापि

**आवाह्य यजुषाऽनेनतेजोऽसीति विधानतः ।**

**तत्रावाह्यं जपित्वा तु नमस्कृत्य विसर्जयेत् ।**

[†]अक्षमाला विषये टिप्पणी अग्रे-(५०० पृष्ठे) द्रष्टव्या ।

तथा,

विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै ।
श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ॥

इत्यादिपूर्वोक्तयोगियाज्ञवल्क्यवचनात्कालत्रयेऽपि शुक्लवर्णैव गायत्री ध्यातव्या भवति । अतएव कालत्रयेऽपि शुक्लवर्णैव गायत्री ध्येयेतिवक्ष्यते इति, तथा, ऋष्यादिकं स्मृस्वा पूर्वोक्तरूपां गायत्रीं ध्यात्वेति ग्रन्थकारोऽपि । एवमेवाचरचिन्तामणिरपि ।

एतेन च देवताध्यानस्य जपाङ्गतेत्यादिनियमः पर्यवस्यति । अतएव प्रकृतवचनस्थदेवतामित्यस्य व्याख्यायां "देवताम् = विशेषतोऽभिहितां तदभावे मन्त्र प्रकाश्यामि''तिवीर मित्रोदयोऽपि । मन्त्रार्थप्रकाश्या =मन्त्रार्थबोद्ध्या ।

एवञ्च–"सर्वत्र जपे मन्त्रप्रकाश्य मन्त्राधिष्ठातृदेवतयो र्ध्यानविधानादत्रापि तद्ध्यानमुचितम् । प्रकृते च सर्वभूतान्तर्यामी परमात्मैव मन्त्रप्रकाश्य इति सोऽपि–

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी ।
हारी हिरयण्मयवपुर्धृतशङ्खचक्रः ॥

इत्युक्तक्रमेण ध्येयः । मन्त्राधिष्ठातृ देवतात्वाद् गायत्र्यपि ध्येयेतिवदन्ती'' ति वीरमित्रोदयप्रतिपादितं वदन्तीति मतमेव प्राथमिकतया समीचीनं प्रतिभाति ।

सुवर्णमिति । सुवर्णम् = हिरण्यम् । मणिः = रत्नम् । मुक्ताफलम् = मुक्तैव फलमिवेति मौक्तिकम् । स्फटिकम् = श्वेतोपलविशेषः । पद्माक्षम् = पद्मबीजम् । इन्द्राक्षम् = आरुकमिति कल्पतरुरिति परिभाषा-विवेकः । अरुष्कमिति पारिजातः । अरुष्कञ्च 'भेला' इति प्रसिद्ध इत्याचारविवेक इति नित्यकृत्यार्णवः । हिमालयोद्भव-प्रसिद्धौषधिविशेषः, भाषायाम् 'आड़' इति

कथ्यते इति शब्दकल्पद्रुमः। रुद्राक्षन्तु प्रसिद्धमेव। पुत्रजीवकः = पुत्रञ्जीवः।' पितौझिया' इति मिथिलाभाषायां प्रसिद्धः। ''जीआपोता' इत्यन्यत्र इति नित्यकृत्यरत्नमाला टि०। एषु अन्यतमानाम् = कस्याप्येकस्य बीजानाम्, गुटिकानामितियावत्। अक्षमालाम् = जपमालाम्, अकारादिक्षकारान्तवर्णरूपैक-पञ्चाशज्जपमाला।

कुशग्रन्थिकृताम् = कुशेषु ग्रन्थीः विधाय सम्पन्नामक्षमालां वा कुर्वीत। हस्तोपयामैः = अङ्गुलिनमनैर्वा। गणयेत् = जप्तमन्त्राणां संख्यानं कुर्वीत। कुशग्रन्थिपाण्योर्विधानन्त्वक्षमालाया अभावे बोद्धव्यम्–

**अभावेत्वक्षमालायाः कुशग्रन्थ्याऽग्रपाणिना।**

इति योगियाज्ञवल्क्यवचनात्। पाण्यग्रञ्चाङ्गुलिपर्वरूपं–

**पद्माक्षैश्चैव रुद्राक्षै विद्रुमैर्मणिमौक्तिकैः।**
**राजतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः॥**

इति स्मृतिचन्द्रिकोद्धृत–हारीतवाक्यैकवाक्यत्वात्। अक्षपाणिना जपश्च क-निष्ठादिक्रमेणाङ्गुलीनां नमनोन्नमनैरित्यप्यरे इति वीरमित्रोदयः।

**[ हिन्दी टीका ]**

अब आगे जप का विधान कहा जा रहा है। ऊपर से ज्ञातव्य है कि विधानपूर्वक बारम्बार मन्त्रोच्चारण या मन्त्रस्मरण को जप कहते हैं। जपमाहात्म्य प्रसङ्ग पर तन्त्रसार नामक ग्रन्थ में कहा गया है कि ''जप-संलग्न द्विजश्रेष्ठ सारे यज्ञफल का लाभ करता है। सभी यज्ञों में महान् फल देने वाला जप है। नित्यजप से देवता की स्तुति होती है जिससे वे प्रसन्न होते हैं। प्रसन्न होकर पर्याप्त भोग्य पदार्थ देते हैं और अन्त में नित्य मुक्ति भी देते हैं। भय देने वाले यक्ष राक्षस पिशाच ग्रह तथा सर्पगण चारो तरफ से भयभीत हो (उपद्रव करने की इच्छा से) जप करने वाले के पास तक नहीं पहुच सकते। जितने ही कर्म यज्ञ हैं तथा शास्त्रों में प्रतिपादित तपस्याएँ हैं, ये सभी जपयज्ञ के पोडशांश भी नहीं है।'' अतएव श्रीमद् भगवद्गीता में भी भगवान का उपनिषद्गान है कि सारे यज्ञों में जपयज्ञ मैं ही हूँ।

अब आगे ज्ञातव्य है कि कुशके छोटे आसन, ब्रह्मचारियों के लिए निर्मित कुशासन से या कुशका से बनाए गए गोलाकार कुशासन (कुश वृषी), अथवा उत्तराग्र कुशासन

पर बैठकर वायें हाथ में बहुत कुश दायें हाथ में कुशत्रय (तेकुशा) तथा पवित्र ले उत्तराभिमुख या सूर्यामिमुखहो जपमाला ले यदि किसी देवता विशेष का विधान न हो तो मन्त्र प्रकाश्य (मन्त्रार्थ से समझे जाने योग्य) देवता का ध्यान करता हुआ पज करे।

जपमाला तो सुवर्ण, मणि (रत्न), मौक्तिक, स्फटिक, इन्द्राक्ष (हिमालय पर होने वाला प्रसिद्ध औरषधिविशेष) जिसे भाषा में "आड" कहते हैं, रुद्राक्ष, जिया पुता (जिसे दूसरे शब्दों में पितौझिया (पुत्रजीवक) कहते है के दानों (बीजों) की बनायें। अथवा कुशों में गाँठ देकर माला बना लें, अथवा जपकिये गए मन्त्रों की संख्या हाथ की अंगुलियों के नमन से ही कर लें।

किन्तु योगियाज्ञवल्क्य के वचनानुसार कुशग्रन्थि तथा अंगुलिनमन से जप विधान जपमाला के अभाव में ज्ञातव्य है।

[ संस्कृत टिप्पणी ]

वर्णमालाशब्दप्रसङ्गे शब्दकल्पद्रुमे "संस्कृतवर्णाः ५१। अकारादिक्षकारान्तवर्णरूपैकपञ्चाशज्जपमाला। यथा सनत्कुमार-संहितायाम्

**क्रमोत्क्रमगतैर्माला मातृकार्णैः क्षमेरुकैः। इति।**

चामुण्डातन्त्रे-

**नित्यं जपं करे कुर्याद् न तु काम्यमबोधनात्।**
**काम्यमपि करे कुर्यान्मालाऽभावेऽपि सुन्दरि। इति**

एतेन मालाया: प्राधान्यमवगतं भवति। कामनाभेदे तु -गौतमीये-

**समासेनाक्षसूत्रस्य विधानमिह कथ्यते।**
**पञ्चविंशतिभिर्मोक्षं त्रिंशद्भिर्धनसिद्धये।**
**सर्वार्थाः सप्तविंशत्या पञ्चदश्यभिचारके।**
**पञ्चाशद्भिः काम्यसिद्धिः स्यात्तथा चतुरुत्तरैः**
**अष्टोत्तरशतैः सर्वसिद्धिरुक्ता मनीषिभिः॥ इति**

अक्षसूत्रमक्षमालाऽपरवर्यायमित्यक्षमालाशशब्दकल्पद्रुमे एव। यथा चाक्षमालोपनिषदि आदिक्षान्तैरक्षैरक्षमालामष्टोत्तरशतं स्पृशेत्। इति

विशेष-जिज्ञासुभिरुपनिषदियमध्येतव्या।

कामना-विशेषे गुटिका-भेदो यथा कालिकापुराणे-

पद्माक्षैर्विहिता माला शत्रुनाशकरी मता।
कुशग्रन्थिमयी माला सर्वपापप्रणाशिनी॥
पुत्रजीवफलैः क्लृप्ता कुरुते पुत्रसम्पदम्।
निर्मिता रूप्यमणिभिः जपमालेप्सितप्रदा॥
प्रवालैर्विहिता माला प्रयच्छेद् विपुलां श्रियम्।

माला कीदृशी कार्या इत्युक्तं देवी-भागवते-

वक्त्रं वक्त्रेण संयोज्य पुच्छं पुच्छेन योजयेत्।
मेरुमूर्ध्वमुखं कुर्यात्तदूर्ध्वं नागपाशकम्॥
एवं संग्रथिता माला मन्त्रसिद्धिप्रदायिनी। इति

यथा वा गौतमीये-

मुखे मुखञ्च संयोज्य पुच्छे पुच्छं नियोजयेत्।
गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा। इति

माला-विषये कालिकापुराणे-

रुद्राक्षैर्यदि जप्येत इन्द्राक्षैः स्फटिकैस्तथा।
नान्यन्मध्ये प्रयोक्तव्यं पुत्रजीवादिकञ्च यत्॥
एको मेरुस्तत्र देयः सर्वेभ्यः स्थूलसम्भवः।
आद्यं स्थूलं ततस्तस्मान्न्यूनान्नयूनतरं तथा॥
विन्यसेत्क्रमशस्तस्मात् सर्पाऽकारा हि सा यतः। इति

एतेन गोपुच्छाकारां सर्पाकारां वा उत्तरोत्तरन्यूनप्रमाणकगुटिकात्मिकां मालां कुर्यादिति भावः।

तत्सूत्रमुक्तं देवीभागवते–

रक्तवर्णैः सितैः मिश्रैः कृतरन्ध्र-विदर्भितैः ।
अक्षसूत्रं प्रकर्तव्यं गोपुच्छवलयाकृति ॥ इति

सूत्रस्य रूपविषये सनत्कुमारीये –

शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् ।
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् ॥
आश्रमेषु तथा चैवं रक्तं सर्वसुसिद्धिदम् । इति ॥

आकाशभैरवे मालासूत्रे ग्रन्थिविधिर्यथा–

सार्धग्रन्थित्रयं देवि ब्रह्मग्रन्थिः प्रकीर्त्तितः ।
सार्धग्रन्थिद्वयं देवि नागपाशः प्रकीर्तितः ॥

सूत्रं कुतो ग्राह्यं तदाह सनत्कुमारीये–

कार्पास-सम्भवं सूत्रं धर्मकामार्थमोक्षदम् ।
तच्च विप्रेन्द्र कन्याभिः निर्मितञ्च सुशोभनम् ॥

देवीभागवतेऽपि–

कन्याकर्त्तृक ( कर्तित ) सूत्रेण त्रिवृता त्रिगुणेन तु ।
सितेन ग्रन्थिहीनेन शुद्धेनैव तु कारयेत् ॥

कालिकापुराणे तु –

नात्मना योजयेन्मन्त्रं नामन्त्रो योजयेन्नरः ।
दृढं सूत्रं नियुञ्जीत जप्ये त्रुट्यति नो यथा ॥
यथा हस्तान्नच्यवते जपतः स्रक् तथाऽऽचरेत् ।
हस्तच्युतायां विघ्नः स्याच्छिन्नायां मरणं भवेत् ॥ इति

सम्मोहनतन्त्रे तु–

गोमुखादौ ततो मालां गोपयेन्मातृजारवत् ।
कौशेयं रक्तवर्णञ्च पीतवस्त्रं सुरेश्वरि ॥
अथ कार्पासवस्त्रेण यत्नतो गोपयेत्सुधीः ।
वाससाऽऽच्छादयेन्मालां सर्वमन्त्रे महेश्वरि ॥ इति ।

पञ्चरात्रे तु–

वामेन न स्पृशेन्मालां न स्पृशेत्तामदीक्षितः ।
भूमौ न विन्यसेन्मालां नान्यं मन्त्रं जपेत्तया ॥

अन्यम् = येन मन्त्रेण माला ग्रथिता तद्भिन्नम् । अत्र गायत्र्यास्सर्वमन्त्रमयत्वेन तद्ग्रथितायां मन्त्रान्तरजपे न दोषः । अविशेषेण पञ्चरात्र्ये गायत्र्या ग्रन्थनोपदेशस्वरसादिति नित्यकृत्यार्णवः । एतेन यन्मन्त्रजपो यस्यां कृतस्त-द्भिन्नमन्त्रजपस्तस्यां न कार्यः । भिन्नभिन्नजपार्थं भिन्ना माला विधेयेति व्याख्यानमसमीचीनमिति मन्तव्यम् ।

रुद्राक्षमालागुटिका विषये शिवपुराणे यथा–

अष्टोत्तरशतं चैव पञ्चपञ्चाशदुत्तरम् ।
अष्टाविंशतिभिर्वाऽपि कार्या रुद्राक्षमालिका ॥ इति

पाद्मे......पाणिमाला चेत्थम् –

अनामिकाया मध्ये च मध्याधः प्रक्रमेण च ।
तर्जन्यादिगतान्ते च अक्षमाला करे स्थिता ॥

अस्यार्थः–अनामिकामध्यरेखामादिं कृत्वा तदधः क्रमेण सप्रदक्षिणावर्त्त-तर्जन्या आदिरेखा अन्ते कार्यो, सेयं करे स्थिता माला इत्यर्थ इति सन्ध्योपासन-रहस्यम् ।

अथैवं दशवारजपनियमस्तेन वामहस्तपर्वसु दशसु वा गुटिकादिषु दशदशवार-जपकरणेन शतसंख्या सिद्धा, परन्तु जपसंख्यायामष्टोत्तरशतसंख्या-विधानाद् अष्टपूर्त्तिः कथं तत्तावदाह तत्रैव (कुमारसंहितायाम्)

**अनामामूलमारभ्य कनिष्ठादित एव च ।**

**तर्जनीमध्यमारभ्य कनिष्ठाऽऽदित एव च ।।**

**तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत् ।**

इति वैदिकमन्त्रजपविषयम् । शक्तिविषयेतु-

**अनामामूलमारभ्य प्राग्दक्षिणक्रमेण तु ।**

**मध्यमा-मूलपर्यन्तमष्ट-पर्वसु संजपेत् ।।**

इत्यादि विशेषविषया नित्यकृत्यार्णवे द्रष्टव्याः इति कृत्यसारसुच्चय-टिप्पणी ।

**[ हिन्दी टिप्पणी ]**

## अक्षमाला के बारे में

अकार से क्षकार पर्यन्त संस्कृत वर्णमाला के ५१ वर्गों के अनुसार ५१ दानों की अक्षमाला--जपमाला होनी चाहिए । (इसीलिए 'अ-क्ष-माला' संज्ञा हुई । ) जैसा कि सनत्कुार संहिता (और गौतमीय में भी) कहा गया है कि सभी कर्मों में ५० लिपियों (दानों) की माला होनी चाहिए । इसके अतिरिक्त क्षकार स्थानीय एक दाने का मुख स्वरूप सुमेरु हो । इस माला से सभी प्रकार के मन्त्रों का जप सभी प्रकार की समृद्धि को देने वाला है । इसी तरह अक्षमालोपनिषद् में भी अकार से क्षकारान्त अक्षरों की अक्षमाला होने को कहा गया है । विशेप जिज्ञासुजन को छोटी सी यह उपनिषद् देखनी चाहिए ।

चामुण्डा तन्त्र में कहा गया है कि हाथ की अंगुलियों से नित्य कर्म जप तो करें किन्तु अज्ञान से भी काम्य जप न करे । किन्तु यदि माला का अभाव हो तो काम्य जप भी कर सकता है । इससे सिद्ध होता है कि जप के लिए माला प्रधान है ।

कामना के अनुसार गौतमीय में कहा गया है-पच्चीस दानों की माला से मोक्ष, तीस दानों की माला से धनसिद्धि, सत्ताईस की माला से सर्वार्थसिद्धि, पच्चीस की माला से अभिचार (अदृष्ट उपाय से दूसरे को पीड़ा देना) की सिद्धि या ५०/५४ से

कामना-सिद्धि, १०८ से सर्वसिद्धि होती है, ऐसा मनीषियों का कहना है। (यह विषय वर्णमाला प्रसंग के शब्द कल्पद्रुमनामक ग्रन्थ से लिया गया है।)

कामना विशेष में माला द्रव्यों का भेद कहा गया है। कालिका पुराण में यथा– पद्‌माक्षों से बनी माला शत्रु विनाश करने वाली, कुश में गांठ देकर बनाई गई माला सारे पापों का नाशक, जिया पुता (पितोझिया) के फलों से बनी माला पुत्र और सम्पत्ति, रूप्यमणि से बनी जपमाला मनोवाञ्छित, फल तथा प्रवालों (मूगों) से बनी माला प्रभूतधन देनेवाली होती है।

ऊपर से ज्ञातव्य है कि रक्तचन्दन की माला भोग, मोक्ष तथा शुभ फल देनेवाली होती है तथा विष्णु मन्त्र के जप में तुलसीमाला, गणेश मन्त्र जप में हाथी के दाँतों की माला तथा त्रिपुरा भगवती के मन्त्र जप में रुद्राक्ष या रक्तचन्दन की माला प्रशस्त हे।

माला कैसी हो इस प्रसंग पर देवी भागवत में तथा गौतमीय में कहा गया है कि प्रथम दाने का मुंह दूसरे दाने के मुंह से मिला हो और पुच्छ पुच्छ से। सुमेरु ऊर्ध्वमुख नागपाश ग्रन्थि वाली सर्पाकार या गोपुच्छाकार माला बनाई जाय जो मन्त्रसिद्धि या शुभ फल देनेवाली होती है।

माला विषय में कालिका पुराण का कहना है कि रुद्राक्ष, इन्द्राक्ष, या स्फटिक आदि की किसी भी माला में एक द्रव्य के दाने के बाद दूसरे द्रव्य का दाना नहीं गूथा जाय। जैसे रुद्राक्षमाला के बीच पितौझिया का दाना होना अनुचित है। वहाँ सबसे मोटे दाने का सुमेरु बने। क्रमशः न्यून-न्यून तरीके से दाने गूथे जायँ तो यही सर्पाकार हो जायगी।

माला सूत्र (धागे) के सम्वन्ध में देवीभागवत का कहना है कि रक्तवर्ण या श्वेतवर्ण या दोनो मिश्रित (मिले हुए) हों। दानों में ऐसे छेद किये गए हों जिससे कुश प्रवेश कर निकल सकता हो, उन छेदों में पिरोये गए उक्त धागों से गोपुच्छाकार होते हुए वलय के आकार अर्थात् गोलाकार माला बने।

सनत्कुमारीय तथा देवीभागवत में सूत्र के प्रसंग पर कहा गया है कि कपास का ध ागा धर्म अर्थ काम और मोक्ष को देनेवाला होता है किन्तु वह भी श्रेष्ठ ब्राह्मण की कन्या के हाथ का काता हुआ तथा सुन्दर हो। वह धागा तीन लडों का तथा एक एक धागा त्रिगुणित (तीन तीन धागों से बना हुआ) हो साथ ही सफेद तथा बीच में विना गाँठ का हो।

धागे के रूप के सम्बन्ध में अन्यत्र कहा गया है कि चतुर्वर्णों के क्रमशः सफेद, लाल, पीला तथा काला रंग सर्वकामना प्रदायक है। अथवा सभी वर्णों तथा सभी आश्रमियों के लिए लाल रंग सर्वसिद्धि दायक माना गया है।

माला सूत्र की गाँठ के संबन्ध में आकाशभैरव में यों कहा गया है कि साढ़े तीन बार गाँठ देने से ब्रह्मग्रन्थि होती है तो ढाई बार की गाँठ से नागग्रन्थि। (ये दोनों ही ग्रन्थियाँ प्रशस्त हैं)।

कालिकापुराण का कहना है कि अपनी माला अपने ही नहीं गूथे और न अदीक्षित व्यक्ति ही गूथे। साथ ही धागा मजबूत हो जिससे जपके समय टूटे नहीं। हाथ से गिरने पर विघ्न होता है और टूट जाने पर मरण या मरण समान कष्ट होता है।

सम्मोहन तन्त्र में कहा गया है कि माता के जारपुरुष के जैसे गोमुखी आदि में जपमाला को गुप्त कर के रखे। वह गोमुखी लाल या पीले रेशम वस्त्र की हो। अथवा सूती कपड़े से भी माला ढकी जा सकती है (किन्तु वह कपड़ा न काला, न बहुत वर्णों का चित्र और नाहीं रोयें से बना हुआ हो। तर्जनी उंगुली से तथा बायें हाथ से कभी भी स्पर्श न करे। साथ ही कभी भी कम्पित या नोंच पटक न करे और न हाथ से गिराये। धागा यदि पुराना हो गया हो तो पुनः नये से गूंथ ले। यदि प्रमादवश गिर जाय तो एक सौ आठ बार जप्यमन्त्र का जप कर ले।

यहाँ पञ्चरात्र का कहना है कि बायें हाथ से या अदीक्षित व्यक्ति के द्वारा माला का स्पर्श न हो। भूमि पर माला न रखी जाय। और उस माला से दूसरे मन्त्र का जप न किया जाय। अर्थात् -जिस मन्त्र से माला गूथी गई हो उससे भिन्न मन्त्र का जप न हो। एतावता यह सिद्ध हुआ कि गायत्री मन्त्र सर्वमन्त्र स्वरूप है अतः गायत्री मन्त्र से गुथी माला पर किसी भी मन्त्र के जप होने पर कोई दोष नहीं। क्योंकि पञ्चरात्रग्रन्थ में अविशेष रूप से गायत्री मन्त्र से माला गूथने का उपदेश दिया गया है'' –इस नित्यकृत्यार्णव-व्याख्या के अनुसार मानना चाहिए कि ''जिस मन्त्र का जप जिस माला पर किया गया हो उससे भिन्न मन्त्र का जप उस माला पर नहीं किया जाय'' इस किसी की व्याख्या समी चीन नहीं है।

रुद्राक्ष माला के दानों के संबन्ध में शिवपुराण की अभिमति है कि १०८, या ५५, या २८ दानों की रुद्राक्षमाला बनाई जाय।

सन्ध्योपासनरहस्य में उद्धृत पद्मपुराण के अनुसार कर माला के संबन्ध में ज्ञातव्य है कि अनामिका अंगुलि की बिचली रेखा से शुरू कर उससे नीच के तथा

प्रदक्षिणावर्त क्रम से तर्जनी अंगुलि की अन्तिम रेखा पर (दश या सौ संख्या के) जप का अन्त करे।

यहीं 'कुमारसंहिता' के अनुसार १०८ में आठ संख्या की पूर्त्ति अनामिका अंगुलि की मध्यरेखा से शुरू कर कनिष्ठिका की आदि से होते हुए तर्जनी अंगुलि की मध्यरेखा पर की जाय। यह वैदिक मन्त्र जप संबन्ध की बात हुई। किन्तु शक्ति मन्त्र जप में अनामिका की मूल रेखा से दक्षिणावर्त क्रम से मध्यमा अंगुलि की अन्तिम रेखा पर पूर्त्ति की जाय। इत्यादि विषय विशेष नित्यकृत्यार्णव नामक ग्रन्थ में देखा जाय। यह कृत्यासारसमुच्चय की टिप्पणी का कहना हैं। नित्यकृत्यार्णव के अनुसार मालाशुद्धि का प्रकार यह है कि पीपल या कमल के पत्ते पर माला रखे और उसे इन्द्रियसंयत हो विद्वान् गायत्री मन्त्र से स्नपन करे। अनन्तर उस माला पर विधिपूर्वक एक सौ गायत्री का जप करे। अथवा पञ्चगव्य (गोमूत्र, गोबर, गोदुग्ध, गोदधि, और गोघृत का मिश्रित एक पेय पदार्थ) से अथवा गङ्गाजल से स्नान कराकर उस माला को सुसंस्कृत कर ले।

❁ अक्षमाला सम्बन्धी टिप्पणी समाप्त ❁

[ मूलम् ]

देशमाह योगियाज्ञवल्क्यः-

गृहे त्वेकगुणं जप्यं[१] नद्यान्तु त्रिगुणं[२] स्मृतम्।
गवां गोष्ठे शतगुण[३] मग्न्यागारे शताधिकम्[४]॥
सिद्धिक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ।
सहस्रं शतकोटीनामनन्तं शिवसन्निधौ॥

तथा

तिष्ठँश्चेद्[६]वीक्ष माणोऽर्कं जपं कुर्यात्समाहितः।
अन्यथा प्राङ्मुखः कुर्याद् वक्ष्यमाण-क्रमेण तु॥

---

पाठा० (१) प्रोक्तम्। (२) द्विगुणम्। (३) दश। (४) दशा (५) विष्णु। (६) वीक्ष्य।

प्राक्कूलेषु कुशेष्वेवश्चासीन[1] श्चासने शुभे ।
नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥
स्फटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः
अक्षमाला हि[2] कर्तव्या प्रशस्ता[3] ह्युत्तरोत्तरा ॥

प्राक्कूलेषु = प्रागग्रेषु ।

[ संस्कृत टीका ]

गृहे इति । गृहे = साधारणगेहे कृतम् । जप्यम् = जपः । एकगुणम् = एकगुणितफलदायकम्, प्राकृतमिति यावत् । नद्याम् = नदीजलसमीपेत्रिगुणं स्मृतम् । गवां गोष्ठे = गोशालायाम् । शतगुणम् । अग्न्यागारे = यज्ञशालायाम् । शताधिकम् = शतगुणितादप्य-धिकफलदायकम् । सिद्धपीठेषु = अनवरत-पूजनादिना पवित्रीकृतस्थलेषु । तीर्थेषु = काशीप्रयागादिषु । देवतायाः सन्निधौ च = इन्द्रादि देवाता प्रतिमायाः समीपे शतकोटीनां सहस्रम् । शिवसन्निधौ = शङ्करलिङ्गादिसमीपे । अनन्तम् = अनन्तफलजनकमिति भावः ।

तिष्ठन्निति । तिष्ठन् = उत्तिष्ठन् । चेद् = यदि । अर्कम् = सूर्यम् । वीक्षमाणः = पश्यन् । समाहितः = अनन्यनस्कः सन् । जपं कुर्यात् । अन्यथा =उत्थानाभावे । प्राङ्मुखः = पूर्वाभिमुखः। वक्ष्यमाण क्रमेण = अनुपदमेवोच्यमानरीत्या । तत्क्रममाह प्राक्कूलेष्वित्यादिना । प्राक्कूलेषु = प्रागग्रेषु । कुशेष्वेव = कुशासन एव । शुभे आसने = (अथवा) पवित्रे कम्बलादीनामासने । । आसीनः = उपविष्टः । नात्युच्छ्रिते = नात्युन्नतप्रदेशे । नातिनीचे = नातिगभीराधोदेशे, अपि समतल भूतल देशे स्थितः सन्नित्यर्थः । दर्भपाणिः = कुशहस्तः । सुसंयतः = नियतेन्द्रियः । जपं कुर्यादिति भावः ।

स्फटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः = यथा-सम्भवमेषां बीजैः । अक्षमाला = जपमाला । कर्तव्या = विधेया । तत्रापि, उत्तरोत्तरा = पूर्वपूर्वापेक्षया अपराऽपरा । प्रशस्ता = उत्तमा । ज्ञातव्येतिशेषः ।

---

पाठ० (१) आसीन । (२) तु । (३) उत्तमा ।

[ हिन्दी टीका ]

घर में जप करने से एक गुना, नदी जल के समीप में तिगुना, गोशाल में सौ गुना, यज्ञशाला में सौ गुना से भी ज्यादा, सिद्धि क्षेत्र, तीर्थ स्थान तथा इन्द्रदि देवता के समीप में हजारों अरब गुना और भगवान् शङ्कर के पास तो अनन्त (निरवधि) फल होता है।

खड़ा हो यदि जप करें तो सूर्य की ओर देखता हुआ अनन्यमनस्क हो करे। अन्यथा (खड़ा होना संभव न हो तो) स्वयं पूर्वमुख हो और कुशों के अग्रभागों को पूर्वमुख कर अर्थात् पूर्वाभिमुख कुशासन, अथवा पवित्र कम्बल आदि के आसन पर बैठ इन्द्रियसंयत हो कुश हाथ में लेकर जप करे किन्तु अति उन्नत या अतिनीच प्रदेश में स्थित हो जप न करे।

स्फटिक, इन्द्राक्ष, रुद्राक्ष या पुत्रजीवक (पित्तौ झिया) के बीजों से जपमाला बनावें, परन्तु इनमें उत्तरोत्तर की माला उत्तम समझे।

## दीर्घजपे भक्ष्यम्

[ मूलम् ]

दीर्घकालीन-फलार्थजपे भक्ष्यमाह (योगियाज्ञवल्क्य:)—

शाक-यावक-भैक्षाणि पयोमूल-फलानि च।
दधि सर्पिस्तथा ह्यापः प्रशस्तं[1]ह्युत्तरोत्तरम्॥
चरवो ह्युपवासश्च भैक्षं नक्तमयाचितम्।
बिसशृङ्गाटशालूक हविष्यान्नानि यानि तु॥
एतान्यनुव्रतान्याहुः शस्तानि जपकर्मणि।

पुनर्भैक्षोपादनं प्रशंसार्थम्। अत्र शाकादीनां विकल्पाद् भक्ष्यंविशेषेण जपारम्भे एकादश्युपवासोऽपि न कर्तव्य इति हरिहरः। एतान्यनुव्रतानीत्युपसंहारादितरव्यावृत्तौ तात्पर्यम्। एषान्तु विकल्पः समुच्चयो वा नास्था।

[ संस्कृत टीका ]

दीर्घेति। दीर्घकालीने = आयतकालिके। फलार्थ जपे = फलनिमित्तक काम्यजपे। भक्ष्यम् = भक्षणीयपदार्थमाह शाकेत्यादिना। शाकम् =

पाठ० (१) प्रशास्तान्यु।

हरीतकम्। (अस्त्री शाकं हरीतकमित्यमरः)। अथवा आयुर्वेदोक्तं षड्विधं शाकं बोध्यम्। यथा-

**पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा।**

**शाकं षड्विधमुद्दिष्टं गुरु विद्याद् यथोत्तरम्॥**

इति भावप्रकाशः। यावकः = कुल्मासः। यव एव यावः। स इवेति इवार्थे कन्। यद्वा याव एव, यावकः, यावादिभ्यः कन् (पा. सू० ५।४।२९) इनि कन्। कुल्मास इति शब्दकल्पद्रुमः। अथवा यावान्नमिति हेमचन्द्रः। यथा मनोः (११।११२५) व्याख्यायां क्वथिता यवागूरिति कुल्लूकभट्टः। भैक्षम् = भिक्षाणां समूहः। भिक्षा+भिक्षादिभ्योऽण् (४।२।७८) इत्यण्। (भैक्षम् भिक्षाकदम्बकमित्यमरः)। एतेषामितरेतरयोगद्वन्द्वे भैक्षाणीति बहुवचनम्। पयः = दुग्धम्। मूलम् = आर्द्रकादि। फलम् = कदलीरसालादि तानि। दधि = द्रप्स्यम् - श्रीरोत्तरावस्थाभाव इति यावत्। सर्पिः = घृतम्। तथा, आपः जलम्। एषु, उत्तरोत्तरम् = पूर्व क्षीपूर्वापेक्षया उत्तरमुत्तरम्। प्रशस्तम् उत्तमं ज्ञेयम्। चरवः = हव्यान्नानि, अन्नस्थालीपाक-विशेषा इति यावत्। यथाच तद्विधिः-

**ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत्।**

इति शारदातिलकम्। उपवासः = उपवस्तम्। (उपवस्तं तूपवास इत्यमरः)। अहोरात्र-भोजनाभाव इति शब्दकल्पद्रुमः। भैक्षम् - पूर्वव्याख्यातम्। पुनर्भैक्षोपादानं प्रशंसार्थमित्यत्रैव ग्रन्थकारः। नक्तम् = रात्रिः। लक्षणया नक्तव्रतम्। यथा च देवी भागवते-

**उपवासात्परं भैक्षं भैक्षात्परमयाचितम्।**

**अयाचितात्परं नक्तं तस्मान्नक्तेन वर्तयेत्॥** इति

नक्तव्रतञ्च दिनोपवासपूर्वकं रात्रिभोजनरूपं भवति। अधिकमधष्टिप्पण्यां (५७७ पृष्ठे द्रष्टव्यम्। अयाचितम् अप्रार्थित्तम् याञ्चां विना लब्धं वस्त्विति भावः।

एत त्प्रशंसायामाह मनुः ''अमृतं स्यादयाचितम् '' इति । अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः इत्यन्या स्मृतिश्च । बिसम् = मृडालम् । 'मृडालं बिसमित्यमरः)। 'पद्मनालं मृडालं स्यात्तथा विसमिति स्थितम्' इति भाव प्रकाशश्च । शृङ्गाटम् = जल कण्टकः इति शब्दमाला । जलजलता-फल-विशेष इति । यावत् । पानीफल शिंगाडा इति च भाषा । शालूकम् कुमुदादिमूलम् । शालूकमेषां कन्दः स्यादित्यमरः) । हविष्यान्नम् = यवादयः । अधिकमध ष्टिप्पण्यां द्रष्टव्यम् । एतेषां द्वन्द्वे बहुवचनम् । यानि हविष्यान्नादीनि पुरोदितानि तान्येतानि , अनुव्रतानि = जपयज्ञस्याङ्गभूत व्रतानि । जप कर्मणि । शस्तानि = प्रशस्तानि, आहु:,मुनय इति शेषः ।

''चरव इति बहुवचनेन वैकल्पिक-शाल्यादिबहुत्वापेक्षया । चरुर्भैक्ष्यमयाचितं नक्तमुपवास इत्युत्तरोत्तरं प्रशस्तम् । हविष्येति । उक्तानिसर्वाणि हविष्याणि ग्राह्यणि, नत्वन्यथाभूतानीत्यर्थः । एतच्चिरकालिकपुरश्चरणादि-जप-विषयमिति परिभाषाविवेक इति नित्यकृत्यार्णव : ।

उपर्युक्तवचनेन आरब्धचिरकालिकजपस्य जपसमाप्तिपर्यन्तमाहार नियम उक्तो भवति । तत्र तावद् हरिहरस्तु- शाकादीनामित्यादि । शाकादीनाम् वचनोक्तानां शाकादीनाम् । विकल्पात् विकल्पेन विधानात् । भक्ष्यविशेषेण = उपात्तेषु केनापि भक्ष्यपदार्थेन । जपारम्भे = जपस्य प्रारम्भे कृते सति । एकादश्युपवासोऽपि = मध्यपतितैका दश्याम् । एकादशीपदमत्र व्रतान्तरस्याप्युपलक्षकम्, नित्योप वासस्यान्यस्यापि पातसम्भवात् । न कर्तव्य इति व्याख्यातवान् ।

''रत्नाकरादयस्तु - रागप्राप्तत्वाद् भोजनंन विधीयते अपि तु प्राप्ते भोजने शाकादिकं नियम्यते । ततश्च जपप्रवृत्तो यदि भुङ्क्ते तदा शाकादिकमेव, नतु शाकादिकं भुक्त एवेत्यर्थ इत्याहुरि''ति वीरमित्रोदयः ।

ग्रन्थकारमते एतान्यनुव्रतानीत्यनेन, उपसंहारात् = वचनान्तें सारांशरूपेण लेखनात् । इतरव्यावृत्तौ = शाकादि भोजनातिरिक्त भोजनाभावे । तात्पर्यम् = वचनतात्पर्यम् बोध्यम् ।

"तत्रापि प्रशस्तमुत्तरोत्तरमित्यभिधानादेकैकभोजनाभावे तात्पर्यमिति, स चाभोजनेऽप्युपपद्यत इति एकादश्युपवासेऽपि न व्रतहानिरित्याहुरि" ति वीरमित्रोदय-व्याख्यानानुसारमिदमधिकमपि तात्पर्यमवधेयम् ।

अत्र वीरमित्रोदयस्तु - वस्तुतस्तु यत्र भोजनस्यालौकिकसम्बन्धो विधि-ना प्रत्याय्यते, व्रतरूपता च प्रतीयते, तत्र तन्मात्र भोजनं बिना फलं नोत्पद्यत एव । अतएव चान्द्रायणादावेकादश्यामपि नियमित-ग्रासान् भुञ्जते । यत्र तु तद्भोजनस्य न व्रतरूपता, तद्भोजनं फलार्थमनुष्ठीयते न तु भोजने तदिरव्यावृत्ति-रपि शास्त्रानुमता, यथा 'शाकान् भुक्त्वा चतुर्दश्यां न प्रेतो जायते नरः' इत्यादौ देवता-नैवेद्य-भोजनोदौ च नहि तद्भोजनं विना तत्र फलसिद्धिः । परन्तु प्रत्यहं शाकभोजन विधानाभावाज्जपारम्भोत्तरं तत्समाप्तिपूर्वं कादाचित्क-शाकभोजनेनापि तदुपपद्यत इति एकादश्यां न भोक्तव्यमेवेति युक्तमि" त्याह ।

एषामिति । एषाम् = वचनोपात्तानां शाकादीनाम् । विकल्पः । किमप्येकं वस्तु । समुच्चयो वा = समुदयः, समाहार इति यावत् । इति, नास्था = न व्यवस्था, न निर्णय इति भावः ।

## [ हिन्दी टीका ]

लम्बे समय से होनेवाले फलार्थ जपके निर्वाह के लिये योगियाज्ञवल्क्य ने खाद्यपदार्थ (भक्ष्य) यों कहा है-(बथुआ आदि) शाक (भावप्रकाश) के अनुसार पत्र-पुष्प-फल डण्डल-कन्द तथा संस्वेदज-ये छहों प्रकार का शाक), यावक (अधसूखे जौ या जौ की क्काथ), भिक्षा में प्राप्त पदार्थ; दूध, अदरख आदि मूल; आम केला आदि फल, दही घृत और जल क्रमशः श्रेष्ठ हैं। इसी तरह आगे भी उत्तरोत्तरश्रेष्ठ ज्ञातव्य है-चरु (यज्ञमें आहुति देने योग्य अन्न-हव्यान्न, उपवास (दिन और रात में विधिवत् भोजन न करना), भिक्षा में प्राप्त पदार्थ, नक्तव्रत (दिनभर व्रत कर रात का भोजन), विना याचनं से प्राप्त पदार्थ (देवी भागवात के अनुसार तो विना याचना से प्राप्त पदार्थ के बाद नक्तव्रत कहा गया है) मृडाल (कमल का वह डण्ठल जिसमें फूल लगा हो ); पानीफल (सींघाड़ा), कमल का कन्द (जड़) तथा हविष्यान्न ये जपकर्म में प्रशस्त (श्रेष्ठ) और जपयज्ञ के अङ्गभूत व्रतरूप है, ऐसा मुनिलोग कहते है ।

वचन में दो बार भैक्ष (भिक्षा में प्राप्त पदार्थ) पद का पढ़ा जाना इसकी प्रशंसा (उत्तमता) समझाने के लिए है ।

यहाँ नित्यकृत्यार्णव के अनुसानर 'चरव:' में बहुवचन का कहा जाना अन्य धान्य आदि के बोधन के लिए है । चरु, भैक्ष्य, अयाचित वस्तु, नक्त एवम् उपवास इनमें क्रमश: उत्तरोत्तर प्रशस्त है । उद्धृत परिभाषाविवेक का कहना है कि उक्त हविष्य पदार्थ उचित स्थिति के ही ग्राह्य हैं न कि विकृतावस्था के भी । उक्त आहार-नियम बहुत दिनों में सम्पन्न होने वाले पुरश्चरण आदि जप के सम्बन्ध में समझें ।

यहाँ हरहिर (भाष्यकर्त्ता) का कहना है कि उक्त वचन से शाक आदि भक्ष्य पदार्थों का विकल्प से विधान होने के कारण शाक आदि में से किसी एक भक्ष्य पदार्थ के भोजन से जप का आरम्भ करने पर एकादशी का उपवास भी नहीं करना होगा, क्योंकि उस दिन भी उसी भक्ष्य पदार्थ का सेवन आवश्यक होगा ।

यहीं रत्नाकर आदिका कहना है कि इस वचन से भोजन का विधान नहीं किया जाता है, क्योंकि भोजन में तो अनुराग (स्वाभाविक इच्छा) से ही प्राणियों की प्रवृत्ति होती हे । अत: अनुराग प्राप्त भोजन में शाक आदि का नियम किया जाता है । इससे यह सिद्ध हुआ कि जप में प्रवृत्त साधक यदि खाये तो शाक आदि ही, न कि उसे शाक आदि खाना ही चाहिए ।

इनसे अन्य ग्रन्थकारों का मत है कि ये शाक आदि जपयज्ञके अंगभूत व्रतरूप हैं ऐसा कहकर वचन का उपसंहार होने के कारण 'शाक आदि के भोजन से अतिरिक्त भोजन न करें, इसी अर्थ में वचन का तात्पर्य है । साथ ही यहीं के वीर मित्रोदय के तात्पर्यवर्णनानुसार 'भोजन में उत्तरोत्तर प्रशस्त (श्रेष्ठ) हैं ऐसा कहने का तात्पर्य एक एक का भोजन न करने में भी है । इससे यह सिद्ध हुआ कि ऊपर कहा गया भोजन का नियम भोजन न करने पर भी सम्पन्न हो जाता है । अत: एकादशी के दिन उपवास रखने पर भी व्रत या इसके अङ्गभूत व्रत की हानि नहीं होती है ।

सहैव यह भी समझ लेना चाहिए कि उक्त शाक आदि के भोजन में एक या संभव होने पर सभी के विधान में कोई निर्णय नहीं । फलत: यह साधक की इच्छा पर ही निर्भर है ।

यहाँ वीरमित्रोदय का मत है कि ''वस्तुत: समझा जाय तो जहाँ धर्म आदि फल और व्रत के साथ भोजन का सम्बन्ध विधिवाक्य द्वारा बोधित हो वहाँ केवल उस

पदार्थ के भोजन के विना धर्मादिरूप फल कैसे हो सकता है ? इसी हेतु चान्द्रायण आदि लम्बे व्रत के समय एकादशी व्रत के दिन भी दिन-क्रमानुसार निश्चित ग्रास (कौर) का भोजन होता है। किन्तु जहाँ वह भोजन व्रतस्वरूप न हो, न वह भोजन धर्म आदि फल के लिए किया जाता हो और ना ही उस भोजन में अन्य पदार्थों के भक्षण का निषेध ही शास्त्र के द्वारा समझा गया हो, 'चतुर्दशी (तिथि) को शाक खाने पर मनुष्य प्रेतयोनि में नहीं जाता है, तथा देवता नैवेद्य के भोजन स्थल में उन-उन पदार्थों के भक्षण के विना अभीष्ट फल की सिद्धि नहीं होती।

उपर्युक्त सिद्धन्तरूप विवेचन से प्रकृत में सिद्ध होता है कि शाक आदि के भक्षण से व्रत का आरम्भ करने के पक्ष में शाक आदि में किसी एकके भोजन के विना धर्मादि फल की सिद्धि कैसे हो सकती है ? परन्तु वचन से प्रतिदिन शाक आदि के भोजन का विधान न होने के कारण जप शुरू करने के बाद और जप समाप्ति के पूर्व कभी भी शाक (आदि) के भोजन कर लेने से वह जप का व्रत सम्पन्न हो जाता है। अतः बीच में आई एकादशी के दिन खाना ही नहीं चाहिए, यह युक्त है।"

## [ टिप्पणी ]

**१. व्रतम्**–चरुभक्षणापेक्षया उपवासः श्रेयान् इति व्रतविषये समीचीनमेव, उपवासस्य कष्टसाध्यत्वात्। शास्त्रे उपवासपूर्वकतपः करणस्य बहुश्रुतत्वाच्च। परं दीर्घकालेन जपसमाप्तिस्थले उपवासेनाधिकांश साधकस्य जपसमाप्तिरसम्भवैव। समाप्तौ वा मानसिक-स्थैर्यासम्भवेन तामस एव जपो भवेदिति भैक्षस्य प्रशस्तकल्पान्तरस्य कथनं युक्तमिति। अतएव कार्त्तिकमासकृत्य प्रकरणे कृत्यसार-समुच्चयधृत-नारदीये-

**एकभुक्तेन नक्तेन तथैवायाचितेन च।**
**उपवासेन भैक्ष्येण व्रजते परमं पदम्" ॥ इति**

**२. नक्तव्रतम्**–मूलोक्तवचने नक्तपदं नक्तव्रतस्य गुरुत्वेन हविष्यान्नादिभोजनस्य कालपरम्, न तु विहितनक्तव्रतपरम्। तथात्वे उत्तरोत्तर गुरु-व्रतोपदेश-प्रस्तावे तदनन्तरं हविष्याद्युपदेशानुपपत्तेः। एतदाशयक एव नक्तशब्दे शब्दकल्पद्रुमोऽपि।

३. हविष्यम्–मूले हविष्यान्नानीति । भविष्ये कथितानि स्मृतिसार-श्राद्धदर्पण-कृत्यसारसमुच्चय-कृत्यशिरोमण्यादि-प्रामाणिक ग्रन्थेषूद्धृतानि व्रताद्युपयुक्त हविष्य द्रव्याणि यथा-

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायं कङ्कुनीवाराःवास्तूकं हिलमोचिका ॥
षष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।
कन्दं सैन्धवसमुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ॥
पिप्पली जीरकञ्चैव नागरं कञ्चु[1] तिन्तिडी ॥
कदली लवली धात्री फलान्यगुडमैक्षव म् ॥
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

छन्दोग-परिशिष्टे कात्यायनः-

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माष-कोद्रव-गौरादीन् सर्वालाभे विवर्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमाः व्रीहीणामिव शालयः ॥
अलाबूं वर्तुलाकारं वार्त्ताकीं कुन्द-सन्निभाम् ।
अन्नपाचितवार्ताकीं खादन् गोमांसभक्षणम् ॥ इति

हविष्यप्रतिपादक-वचनयो व्यर्याख्या-

हैमन्तिकम् = हेमन्तभवं, लोके अगहनीति प्रसिद्धम् । मार्गपौषोद्भवमिति यावत् । धान्यमिति विशेष्यस्य विशेषणम् - सितास्विन्नमिति । सितम् =

---

पाठा० (१) 'चैव' इति वीरमित्रोदयपाठः ।

श्वेतम् । सितेति विशेषणेन श्यामतुषरक्त तण्डुलादेर्व्यावृत्तिर्भवति । धान्यं तावत् त्रिविधं भवति । तेषु केषाञ्चित्तुष तण्डुला अपि स्वच्छास्ते हविष्योत्तमाः । केषाञ्चित्तुषमात्रं स्वच्छं तण्डुला रक्तास्ते साधारणहविष्याः । केषाञ्चित् तु तुषा रक्ताःश्यामा वा तण्डुलाः श्वेतास्तेऽपि साधारणहविष्याः । अस्विन्नम् = स्विन्नन्तावज्जलाग्निसंयोगेन प्रसाधितं सस्वेदं (भाषायं उशिना, असना इति वा प्रसिद्धम्) । धान्यम् = तत्तण्डुलाः, आमिषमिति शेषः । एतद्भिन्नमस्विन्नम्। भाषायाम् 'अरवा' इति प्रसिद्धम् । तद् हविष्यमितिभावः । ''हरिद्रा-गोरस-पूग लवणमौषधमित्यादिवचनेन दिनान्तरेण स्विन्नधान्य (तण्डुल) भोजनेऽपि दोषाभावः इत्युक्तं नित्यकृत्यार्णवे इति कृत्यशिरामणिः । ''अत्र अस्विन्नमित्युपादानादन्यत्र स्विन्न धान्य तण्डुलत्वे न दोष इति शब्दकल्पद्रुमश्च हविष्यान्न शब्दप्रकरणे । मुद्गाः = मूंग इति लोके प्रसिद्धाः । तिलाः यवाश्च स्वस्वनाम्नैव ख्याताः । कलायः = 'कलायस्त्रिपुटो ज्ञेय' इति प्रसिद्धः । कङ्कु=कङ्कुणिका (काउन) इति प्रसिद्धः । नीवारः = जल धान्य विशेषः, यदनुप्त मेव बहुधा जीर्णे जलाशये नद्यादौ वा जायते, यच्छश्यम् अर्धपक्वमेव शीर्यते । 'ओड़री' इति लोके प्रसिद्धः । वास्तूकम् वसन्ति गुणा अस्मिन्निति विग्रहः । 'बथुआ' इति प्रसिद्धम् । हिलमोचिका = हिलसाल इति ख्यातमिति रामाश्रमी । 'हहोचि' इति प्रसिद्धशाकम्, यस्य 'हुरहुर' इत्यपि प्रसिद्धिः । 'सरहोंची' इति मिथिलायां प्रसिद्धः । षष्ठिका = शारदश्यामधान्य विशेषः 'साठी' इति लोके, मिथिलायां तु 'गमढ़ी' इति प्रसिद्धा । अत्रापि 'अस्विन्न-मि' ति विशेषणं ज्ञेयम् । कालशाकम् = पर्वतप्रसिद्ध ईषच्छ्यामपत्र शाक-विशेष इति कृत्यशिरोमणौ तूफानीशर्मा । कालिका शाकम् । (प्रायः करमीसाग भाषा) इति कृत्यसारसमुच्चय परिशिष्टे गङ्गाधर मिश्रः । मूलकम् = स्थूलशिफा रूपमार्द्रकशतावर्यादि । ''मूलकमित्यस्यैव विशेषणं 'केमुकेतरत्' इति । केमुकम् 'केउआ' इति प्रसिद्धम्, तद्भिन्नमिति कृत्यसारसमुच्चयः । केमुकम्-'केउआ' इति पूर्वदेश प्रसिद्ध कन्दविशेष इति कृत्यशिरोमणिः । तद्भिन्नं कन्दं शूरणादिः । (भाषायाम् ओल, आरु, खम्हारु आदि)। ''मूलक-

मित्यनेन (मूर वा मूली) इति न बोद्धव्यम् । (यतः) तत् सामान्यभोजनेऽपि निषिद्धम् द्रष्टव्यं विश्वकोषे

पितॄणां देवतानाञ्च मूलकं नैव दापयेत् ।
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणव्रतम् ।
वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम् ॥

कन्देषु "आलू" भाषाभाषितं न हविष्यम्, इदं पादोन-शतद्वयवर्षादेव भारते अमेरिकादेशादागतं वस्तु । पुदीना-संज्ञकशाकमपि ईरानदेशादागतमित्यपि कृत्यसारसमुच्चय-परिशिष्टम् । वस्तुतस्तु पितॄणां देवतानाञ्चेत्युपात्तं मूलकविषयं वचनं माघमासपरमेव बोध्यम् । यथा च मूलकशब्दे शब्दकल्पद्रुमे-"सौरमाघे तद् (मूलक) भक्षणे दोषो यथा-

मकरे मूलकञ्चैव सिंहे चालाबुकं तथा ।
कार्तिके शूरणञ्चैव सद्यो गोमांसभक्षणम् ॥

इति कर्मलोचनम् इति । " मिथिलायान्त्वद्यत्वेऽपि देवोत्थानैकादश्यां सायं भगवते विष्णवे शिष्टा अपि वृन्ताकैः सह मूलकान् समर्प्य वर्षं यावन्निराबाधं भुञ्जते । ईरानदेशस्यापि वेदे पुराणादौ च भारतावयत्वेन विद्यावाचस्पति-समीक्षाचक्रवर्त्ति-मधुसूदनझा-कृते 'इन्द्रविजय' नामके ग्रन्थे विविधवर्णनाद्यतनीनः पृथग्भूतोऽपि ईरानदेशः पुरा पश्चिमीयभारतमेवासीदित्यस्य मन्तव्यतया शासनभेदेनेदानीं पृथक्त्वेऽपि 'पुदीना'संज्ञकशाकं भारतीयमेव च विज्ञेयम् । एवमेव 'आलू' भाषाभाषितं वस्तु शिष्टजनैरपि फल-रूपेण व्यवहृततया अमेरिकादैशिकत्वमिति निश्चेतुमशक्यतया च भारतीयमेव कथयितुं शक्यते* ।

सैन्धवसामुद्रे (लवणे हविष्ये) लोके क्रमशः सिन्धा सामुद्रीति प्रसिद्धम् । गव्ये दधिसर्पिषी-गोसम्बधिनी दधिघृते । एतेन छागी मेषी महिष्यादि सम्बिन्धिनी दधिघृते न हविष्ये । भवतः । अनुद्धृतसारम् = अमन्थितम् । पयः गोरेव दुग्धम्, दधिसन्निधानादिति नित्यकृत्यार्णवः । एतेन गोदुग्धमपि तावदेव

हविष्यम्, यावत्तस्मान्नवनीतादिसारं नाकृष्यते । पनसः = मृदङ्गफलम् (कटहर (ल) इति भाषा । आम्रम् = रसालम् । हरीतकी = हर्रे हरीड़ इति भाषा । पिप्पली = शौण्डी (उषणा पिप्पली शौण्डी इत्यमरः)। जीरकः = जरणः । (जीरको जरणोऽजाजी इत्यमरः) सफेदजीरा । चकाराद्धन्या (धनी) नागरम् शुण्ठीति (सोंठ) प्रसिद्धम् । कञ्चु-(मिथिलायाम् अरिकोंछ इति प्रसिद्धम् । तिन्तिडी=चिञ्चा-अम्लिका, 'इमली' इति, मि० भा० तेतरि इति इति प्रसिद्धम् । कदली=रम्भा । लवली=धात्रीसमानाकृतिः पाण्डुफलविशेषः 'हरफा' इति लोके प्रसिद्धम् । धात्री-आमला इति भाषा । एतानि फलानि । अगुडमैक्षवम् = इक्षुविकारेषु गुडवर्जितसितशर्करादिकम् हविष्यम् । गुडन्तु आमिषम्-परन्तु सत्यनारायणकथायां शर्कराचगुडं तथा इति पङ्क्त्या गुडस्य वैकल्पिक विधान्द् हविष्यत्वेऽपि वैकल्पिकत्वं निष्पद्यते । तथा च अगस्त्य-संहितायाम्-

**नारिकेल-फलञ्चैव कदलीं लवलीं तथा ।**

**आम्रमामलकीञ्चैव पनसञ्च हरीतकीम् ॥**

**व्रतान्तर-प्रशस्तञ्च हविष्यं मन्यते बुधः । इति**

निर्णयनिबन्धे तु

**यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमम् । इति**

अत्र नारिकेलफलमधिकमुक्तम् । यत्नपक्वमपीति । अत्र यत्नः धूमोपरिस्थापन, पर्णादिनिःक्षेप, वंशपत्राद्याच्छादनरूपः, उत्तमपदेन रसस्योत्कर्षस्याभिधानात् । हेतुगर्भञ्च तद् विशेषणमिति पनसफलादिकमपि तादृशं ग्राह्यमित्यायाती" ति कृत्यशिरोमणिः। हविष्येष्विति । हविष्यपदार्थेषूक्तेषु-यवाः, मुख्याः= श्रेष्ठाः । तदनु = तत्पश्चात् । व्रीहयः = शरत्पक्वषष्ठिका धान्यम् ज्ञातव्यम् ।

सर्वालाभेऽपि माषकोद्रव-गौरादीनवश्यमेव वर्जयेदिति मूलार्थः । गौरः = सितसर्षपः । भट्टभाष्ये तु कोरेति पठित्वा कोरो-वरवट-इति व्याख्यातमिति वीरमित्रोदयः । गौरोऽत्र गुर्जरदेशे प्रसिद्धः पशुभक्ष्यो मसूराकृतिरन्नविशेषः । आदिपदात्कुलत्थमण्डूकादीन् वर्जयेदिति कृत्यशिरोमणिः । आदिपदग्राह्यश्च

कोद्रव-चणक-चीणक-माष-मसूर-कुलत्थ- कुद्दालक- वर्जमिति शङ्खलिखितवचनस्था एतद्वचनानुपात्ताः । एवञ्च व्रीहियवालाभे माषादिवर्जं ग्रैष्मिक हैमन्तिकधान्य गोधूम-मुद्गादि सर्वमेव विहितमितीति वी०मि० ।

चणकम् (चना वा बूट) आढकी (राहडि), माष (उरीद), बोडा, कुरथी, मडुआ, आँसु धान, कोदो (कोद्रव) इति सर्वमामिषम् । गोधूमञ्च न हविष्यं नचामिषम्, उभयत्रा (हविष्यामिषबोधक वचने) ऽनुल्लेखात् । परन्तु यवाभावे गोधूमग्रहणमिति स्मृतिषु दर्शनात्, सत्यदेवकथायां गोधूमस्य च चूर्णकमिति च लेख प्रामाण्याद्दैवे कर्मणि बहुधा प्रयुज्यते । हविष्यान्नेषु यवा एव मुख्याः, तदनु षष्ठिका धान्यम् । ततो हैमन्तिकमेवं क्रमः । मरीचं न हविष्यमिति कृ० सा० स० परिशिष्टम् । यत्तु-

**मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।**
**अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥**

इति मनु (३।२५६) वाक्येन मांसस्य हविष्यत्वमुक्तं, तत् श्राद्धप्रकरणात् श्राद्धपरम् । अतएव 'हविष्याणि च मांसानि' इति रामायणेऽप्युक्तम् । सामान्यतो हविष्यत्वेऽपि व्रते मधुमांसवर्जनाद् व्रते तत्त्याग इत्यपि वदन्ति । अनुपस्कृतम्=अशटितमिति श्राद्धकाण्डे कल्पतरुरिति वीरमित्रोदयः । अनुपस्कृतम् = अविकृतम्, पूतिगन्धादिरहितमिति मन्वर्थमुक्तावली ।

## आभिषम्

कृत्यसारसमुच्चय-कृत्य-शिरोमणि-धृते पाद्मे आमिषाण्याह-

**प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् ।**
**अयज्ञशिष्टं माषादि यद् विष्णोरनिवेदितम् ॥**
**दुग्धमन्नं मसूरञ्च मांसञ्चेत्यष्टधाऽऽमिषम् ।**
**गोछागीमहिषीदुग्धादन्यद् दुग्धं तथाऽऽमिषम् ॥**
**धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा ।**
**द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥**

ताम्रपात्रस्थितं गव्यं जलं पल्ल्वलसंस्थितम् ।
आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः ॥ इति

प्राण्यङ्गचूर्णम् = शुक्तिकादिचूर्णम् । उक्तग्रन्थ-द्वयानुसारि व्याख्या यथा–

प्राण्यङ्गचूर्णम् = शुक्तिकादि-चूर्णमिति कृत्यसार-समुच्चय-कृत्यशिरोमणी । शुण्डा (सूंडा) दिकृमिजीवावयवमिश्रितं हविष्यमप्यामिषम् । अनेन शुक्तिशम्बूकादिसिद्धं चूर्णमप्यामिषम् , यत्तमालपत्रे ताम्बूले च प्रायः बहुत्रोपयुज्यते । चर्माम्बु = चर्म निर्मितपत्रगतं जलं-मरुदेशे बहुधाऽस्य व्यवहारः । जम्बीरम् = जम्बीरजातिकं बीजपूरकं 'नेवो' इति प्रसिद्धम् । एतद्भिन्नं बीजपूरकं (कमला कागजी आदि) हविष्यमित्यर्थः । वा वीजपूरकं 'वेदाना' इति प्रसिद्धम् । अयज्ञशिष्टम् = देवपितृयागशेषभिन्नं माषादि = माषजातिकमामिषम्। अनेन यद् यज्ञोर्वरितं तदपि हविष्यवदेवेत्यर्थः । यद् हविष्यमपि विष्णोरनिवेदितम् = असमर्पितं तदप्यामिषम् । यद् आमिषमपि विष्णवे समर्पितं तद् हविष्यमेवेत्यर्थः । दग्धम् = भर्जितं होरिकादिकं धनादिकं वा हविष्यजातिकमप्यन्नमामिषम् । यथा-कलायो हविष्यं तल्लता-फल-पत्रं शुष्कतृणमिश्रितं कृत्वा यदग्निज्वालया प्रज्वाल्यत, तत्र तच्छेषं दग्धप्रायमेवान्नं 'होरिका' कथ्यते । एवं यवभर्जनेन धाना उत्पद्यन्ते । मसूरं स्वरूपेणैवामिषम् । मांसम् = विकृतं मांसम्–

मुन्यन्नानि पयः सोमो मांसं यच्चाऽनुपस्कृतम् ।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥

इति मनु (३।२५७) वाक्यैकवाक्यत्वात् । अथवा व्रतादौ वर्जनीयत्वेन सामान्यतः मांसम् ।) आमिषम् = व्रतादौ भक्षणीयद्रव्येतरद्रव्यविशेषः ।

गोच्छागीमहिषीदुग्धादिति । गोच्छागी = अप्रसूता गौः । गोमहिषी = मृतवत्सा गौः । अनयोर्दुग्धादन्यत्= अन्यतरं दुग्धन्तु आमिषम् । महिष्या दुग्ध मामिषम् । दुग्धमेव केवलं नहि, तद्दधिघृतादिकमपि सर्वमामिषमित्यर्थः ।

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

सौम्या = उत्तरा ।अपराजिता=ऐशानी । तथा–

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखो व्युपवीतश्च यत्करोति कृतं न[1] तत् ॥

सदेति श्रवणात्[2] कर्मकालेऽकर्मकाले च । यत्र निवीत-प्राचीनावीतयोर्न विधिस्तत्र सर्वत्रोंपवीतित्वम् । एवञ्च यत्र दैवकार्योद्देश्येनोपवीतित्वं श्रुतं तत्रापि दैवमुपलक्षणं, पितृमनुष्यातिरिक्तं[3] सर्वं दैवमिति ।

गोभिलः –

**दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापर्यात दक्षिणं कक्षमन्वा[2] लम्बं भवत्येवं यज्ञोपवीती भवति [3]॥०॥ सव्यं[4] बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति ।सव्यं कक्षमन्व[5] लम्बं भवत्येवं प्राचीनावीती भवति ॥०॥**

मनु :–

**निवीती कण्ठसज्जने ।**

## [ संस्कृत टीका ]

यत्रोपेति । यत्र = वचने । कर्म-उपदिश्यते = निर्दिश्यते, शिक्ष्यत इति यावत् । कर्त्तुः=कर्मानुष्ठातुः । अङ्गम् = वामदक्षिणरूपेण शरीरावयवः । न च । उच्यते = कश्यते । तत्र, कर्मणाम् । पारगः = सफलसमाप्तिजनकः । दक्षिणः-करः = सव्येतरहस्तः । विज्ञेयः =निश्चेतव्यः ।

अत्र 'कर्मणां पारगः करः' इति हेतुगर्भन्दक्षिण एव हि वैधकर्म – निष्पत्यै प्रभवति, सव्येन कृतं तद् विगुणम्भवतीति परिभाषाविवेकः । "एकहस्तसाध्य

---

पाठा० (१) न तत्कृतम् । (२) नित्यकृत्यार्णवोद्धृताचारादर्शानुसारं, श्रवणादकर्मकालं कर्मकाले इति । एवमेव (३) रिक्तं वैदिकं सर्वमिति पाठः । (४) अत्रमूले कक्षमवलम्ब्यइत्येवपाठं सत्यपि गोभिलगृह्यपुस्तकानुसारं तथा पाठः स्थापितः । (५) अत्रभवतीत्यधिकः पाठः प्रकाशितगोभिलगृह्यानुसारं स्थापितः ।

उपचारः परिभाषाबलाद्दक्षिणहस्तेन कार्यः। पुष्पाञ्जलिदान-शिवलिङ्ग घट्टन-वस्त्र-परिधापनावाहन-स्थापन-मुद्राप्रदर्शन-वीणावादन-नमस्कारादिकं हस्ताभ्यां कार्यमि''ति स्मृतिदीपिका । घण्टावादनन्तु वामहस्तेन, दक्षिणक-रस्यार्घादिनाऽवरुद्धत्वादिति 'सव्ये आचमनीयं कुर्वन् वामहस्तेन कमण्डलुं गृह्णाती'ति वाक्ये आचमनकाले वामहस्तेन कमण्डलु धारणवदिति हरिभक्ति-दीपिका'' इति नित्यकृत्यार्णवः।

यत्र च वचने जपहोमार्दिकर्मसु । दिङ्नियमः = दिशो विदिशो वा निर्धारणम् । नास्ति । तत्र । ऐन्द्री पूर्वा । सौम्या = उत्तरा । अपराजिता = ऐशानी, इति तिस्रो दिशः । कथिताः = विज्ञेयाः ।

यत्र = कर्मणि । आसीनः = उपविष्टः । प्रह्वः = नम्र इत्युणादिकोषः कल्पतरुश्च । ईदृशः = एतादृशः । नियमः = विधानम् । नास्ति । तत् = कर्म । न, प्रह्वेण = नम्रेण, न तिष्ठता = नोत्थितेनेति परिभाषा विवेकः, नोर्ध्वजानुना इति स्मृतिपरिभाषा । तथा च आसीनेन = उपविष्टेनैव कर्तव्यम् ।

तथा सदेति । सदा = सर्वदा-कर्मकाले अकर्मकाले चेत्यर्थः । उपवीतिना = ''उपतीतं ब्रह्मसूत्रं-प्रोद्धृते दक्षिणे करे'' इत्यमरोक्तदिशा सव्यभावेन ब्रह्म सूत्रधारिणा भाव्यम् । सदा च, बद्धशिखेन = बद्धा शिखा = चूडा येन, तेन भाव्यम् । विशिखः = शिखाग्रन्थिरहितः । व्युपवीतश्च = यज्ञोपवीतारहितश्च । यः, यत् = कर्म पुण्यकर्म, करोति तत् न कृतम् = सफलंन भवति ।

सदेति श्रवणात् = सदेतिपदस्य मूल वचने सन्निवेशात् । कर्मकाले = पुण्यकर्मानुष्ठानकाले । अकर्मकाले = तद्भिन्नकाले चेत्यर्थः । यत्र = कर्मणि वचने वा । निवीन प्राचीनावीतयोः = इदानीमेवाग्रेकथ्यमानयोः । न, विधिः = विधानम् । तत्र सर्वत्र = तादृशेसर्वस्मिन्नपि कर्मणि वचनं वा । उपवीतित्वम् = वक्ष्यमाणलक्षणलक्षित-यज्ञोपवीत-धारित्वं बोद्धव्यम् । एवञ्च, यत्र सन्ध्यावन्दन-देवतर्पण-वैश्वदेवश्राद्धादौ । दैव कार्योद्देश्येन = देवसम्बन्धि कर्मोद्देश्येन । उपवीतित्वम् । श्रुतम् = वचनेन बोधितम् । तत्रापि, दैवम्, उपलक्षणम् = अन्यस्यापि बोधकम् । अतः पितृमनुष्यातिरिक्तं सर्वं दैवं ज्ञेयम् ।

अतएव "यत्र निवीतप्राचीनावीतयोर्न विधिस्तत्रोपवीतं ज्ञेयमित्याचार-विवेक इति नित्यकृत्यार्णवोऽपि । " सदेत्यनेन शिखाबन्धनोपवीतयोः पुरुषार्थतोक्ता, ततश्चाधारणे प्रत्यवाय कल्पनात् । सदाधारणात्कर्मकालेऽपि धारणोपपत्तिः । तत्किं कर्माङ्गितानास्त्येवेत्यत उक्तं विशिख इति । विगुणत्वेन फलासाधकमित्यर्थः । केवल पुरुषार्थत्वे हि अधारणे कर्म साङ्गमेव स्यात्पुरुषः परम्प्रत्यवेयात् नत्वेवमिति कर्माङ्गतोपदेशप्रयोजनम् । एवञ्च क्रतु-पुरुषार्थत्वमुक्तमिति कृत्यमहार्णवः । सदा = वैदिकदैवकर्मकाले । यत् = वैदिकं कर्म, न कृतम् = न कार्यकारि " इत्या पि स एव ।

वाजसनेयिच्छन्दोगयोः क्रमशो यज्ञोपवीत-धारणमन्त्रौ–

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।**

**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति**

**ओं यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ॥ १ ॥ इति**

**[ टिप्पणी ]**

मन्त्रयोरनयोः ऋष्यादिकं क्रमशो यथा-अस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दो लिङ्गोक्ता देवता यज्ञोपवीतपरिधाने विनियोगः । इति । अस्य प्रजापतिर्ऋषिर्गायत्री-छन्दो विश्वेदेवा देवता यज्ञोपवीतधारणे विनियोगः । इति ।

क्रमशो व्याख्या यथा-हे आचार्य, इदं ब्रह्मसूत्रमहं प्रतिमुञ्च=प्रतिमुञ्चामि प्रतिपूर्वो मुञ्चतिर्बन्धनार्थः । पुरुषव्यत्यासश्छान्दसः । किं भूतं यज्ञोपवीतम् = यज्ञेन-प्रजापतिना, यज्ञाय-वेदोक्त कर्माधिकारायेति वा, उपवीतम्-उपरिस्कन्धप्रदेशे, वीतम्-परिहितम् । परमम्=परः-आत्मा, मीयते-ज्ञायतेऽनेन वाक्योपदेशाधिकारत्वात् । पवित्रम्=शोधकम् । प्रजापतेः=ब्रह्मणः । सहजम्=सहोत्पन्नम् स्वभावसिद्धं वा । पुरस्तात्=प्राग्भवम् । अत इदमायुषे हितम् आयुष्यमस्तु । अग्र्यम्=मुख्यम्-अनुपहतम् । शुभ्रम्=निर्मलम् । बलम्=धर्मसामर्थ्यम् । तेजः = प्रभावदम् ॥ ४ ॥

यद्यपि सूत्रकृता यज्ञोपवीतं नोक्तं तथापि 'उपवीतिन' इति परिभाषणात्, 'सदा यज्ञोपवीतिना भाव्यमि'ति परिशिष्टाच्च ग्राह्यम् । कालश्चानुक्तोऽपि स्मृत्यन्तरादयमेव । उपवीतिन इत्यस्यायमर्थः । सर्वे उपवीतिनः सव्य स्कन्धस्थितयज्ञोपवीतधारिणः कर्म कुर्वन्तीतिशेषः । 'उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः इति स्मरणात् । यज्ञोपवीतीति देवकर्माणि करोति ।। ४म० ।। इति पारस्करगृह्यसूत्रभाष्ये गदाधरैर्व्याख्यातम् ( ४टी० ) "हे माणवक । यज्ञोपवीतं प्रतिमुञ्च = धारय । प्रतिपूर्वो मुञ्चतिर्धारणे वर्तते । यज्ञोपवीतं किंभूतम् ? आयुष्यम्=आयुर्वृद्धिकरम्। अग्र्यम्=श्रेष्ठम् । शुभ्रम्=श्वेतम्-निर्मलम् । परमं पवित्रम्=अतिशयेन पवित्रम् । पुनः किं भूतम् ? पुरस्तात् । पूर्वम् । प्रजापतेः=ब्रह्मणः । सहजम्=सहजातं प्रजापतिना सह एकसमये जातमित्यर्थः । एतत्परिधानेन बलमस्तु तेजश्चास्तु इति" ।। ४ ।। इति मन्त्रार्थ-दीपिकायां शत्रुघ्नमिश्राः ।। ५ टी० ।।

("यद्यपि पारस्करेण स्वसूत्रे प्रक्षेपेण लिखितस्तथापि तदीयभाष्ये व्याख्यातः शाखान्तरीयोऽयं मन्त्रः कृष्णयजुर्वेदीयब्रह्मोपनिषदि पाठोऽस्य दृश्यते तत्रापि नारायण भट्टेन व्याख्यातः" इति तु मन्त्रार्थ-संग्रहः)।

द्वितीयमन्त्रस्य (छन्दोग-यज्ञोपवीतमन्त्रस्य) अर्थः हे त्रिवृत् सूत्र, त्वं यज्ञोपवीतमसि-यज्ञोपवीतशब्देन प्रसिद्धमसि, यत्तेन ब्रह्मणा वेदोक्त-कर्माधिकाराय वा उपवीतम्=उपरि स्कन्ध प्रदेशे वीतं परिहितं रचितं वा । यज्ञस्य=श्रुत्युक्तकर्मणः । उपवीतेन कर्माधिकारित्वचिह्नेन करणेन हेतुना वा । त्वा=त्वाम् । उपनह्यामि = परिबध्नामि । यतस्तव धारणं विना कर्मकरणे नाधिकारो भवति । अतस्त्वां परिदधामीति भावः । णह बन्धने, उपपूर्वक नह धातुर्धारणे वर्तते । ।।२० ।। इति मन्त्रार्थप्रकाशे व्याख्यातम् ।। ११ ।। टी०

इति जगद्धरझा-सङ्कलितो मन्त्रार्थसंग्रहः ।।

**[ हिन्दी टिप्पणी ]**

वाजसनेयी एवं छन्दोग के लिए संस्कृत टीका में लिखे गये क्रमशः यज्ञोवीत मन्त्रों का ऋष्यादि संस्कृत टिप्पणी के ऊपर में ही देखें ।

(१) वाजसनेयि-यज्ञोपवीत-मन्त्र का अर्थ--

आचार्य माणवक (मण्डप पर उपनयन निमित्त आचार्य के समीप उपस्थित कुमार वालक) से कहते हैं कि तुम इस यज्ञोपवीत (व्रह्मसूत्र) का धारण करो जिसे प्रजापति (व्रह्मा) ने पूर्व-प्रलय के वाद होने वाली सृष्टि के प्रारम्भ में वेदोक्तकर्म में अधिकार के लिए स्कन्ध प्रदेश-कंधे पर धारण किया था। जिससे आत्मज्ञान हो सकता है, जो अतिशय पवित्र एवं प्रजापति के साथ एक ही समय में उत्पन्न हुआ है। जो आयु बढ़ाने वाला, श्रेष्ठ अर्थात् किसी के द्वारा अभी तक धारण न किया गया एवं शुभ्र-सफेद-निर्मल है। इस यज्ञोपवीत के धारण करने से वल (धर्मसामर्थ्य) तथा प्रभावप्रद-तेज प्राप्त हो सकता है। माणवक भी आचार्य को सम्बोधित कर कहता है कि हे आचार्य, मैं इसे धारण कर रहा हूँ ।। इति ।।

(२) छन्दोग यज्ञोपवीत मन्त्र का अर्थ--

हे व्रह्मसूत्र, तुम यज्ञोपवीत के नाम से प्रसिद्ध हो, क्योंकि व्रह्माजी ने वेदोक्त कर्म में अधिकार के लिए तुझे स्कन्ध प्रदेश पर धारण किया था। वेदोक्त कर्म के अधिकार चिह्न होने के कारण तुझे धारण कर रहा हूँ। अर्थात् तुझे धारण किये विना कर्म करने का अधिकार नहीं होता है अतः तुझे धारण कर रहा हूँ।

यज्ञोपवीते नवसंख्यकसूत्राण्यावश्यकानि, यदाह देवलः-

**यज्ञोपवीतं कुर्यात्तु सूत्रेण नवकं ततः। इति**

यज्ञोपवीतस्य लम्बत्व-प्रमाणमाह गोभिलगृह्य-व्याख्यामृदुलायां मनुः-

**पृष्ठवंशे च नाभ्याञ्च धृतं यद् विन्दते कटिम्।**

**तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छृतम् ॥ इति**

दक्षिणं बाहुमिति। यज्ञोपवीतस्य विन्यासविशेषः परिभाष्यते दक्षिणमित्यादिना। दक्षिणं बाहुम्=दक्षभुजम्। उद्धृत्य=उत्क्षिप्य। शिरः= मूर्धानम्। अवधाय=वेष्टयित्वा। सव्ये=दक्षिणेतरे वामे अंसे=स्कन्धे। प्रतिष्ठापयति = विशेषप्रकारेण यज्ञोपवीतं स्थापयति। तच्च, दक्षिणं कक्षम् = दक्षिणबाहुकोटरप्रदेशम्। अनु=अधः। अवलम्बम्=लम्बमानं भवति। एवम्=अनेन प्रकारेण। यज्ञोपवीती= सव्यरूपेण यज्ञोपवीतधारी भवति।

सव्यं बाहुमिति। सव्यम्=वामम्। (वामं शरीरे सव्यं स्यादपसव्यन्तु दक्षिणमित्यमरः)। यदर्थं विन्यासविशेषः परिभाषितः स विनियोग-विशेषोग्रिमसूत्रेणाह यथा-

''पितृयज्ञे त्वेवं प्राचीनावीती भवति '' इति

पितृयज्ञे=पितृभ्यः पितृणां वा यज्ञे, पितृकर्मणीति भावः । 'तु' शब्दो ऽत्र च शब्दार्थेऽन्यदाऽपि सव्यजानुञ्चानापदि समुच्चिनोति । यदाह कात्यायनः-

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरज्जानु पितॄन् परिचरन्नपि ।। इति

एवञ्चात्रान्यदैवतकर्ममध्यपातिन्यपि पित्र्ये कर्माणि प्राचीनावीतित्वं नियमयति । यथाऽऽह मनुरपि-

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्यं विधिवद्दर्भ-पाणिना ।। इति ।

अत्र ''अतन्द्रिणा=अनलसेन । आनिधनात्=मरणमारम्य । मैथिलास्तु -कर्मसमाप्तिपर्यन्तमिति व्याचक्षते'' इति वीरमित्रोदयः ।

मनुः निवीतीति । सम्पूर्णमनुवचनं यथा-

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ।। इति ।

आचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्षणं, तत्प्रसङ्गेन प्राचीनावीतित्वादि लक्षणमाह उद्धृत इत्यादिना । निवीतीति । शिरोऽवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जने ऋजुप्रालम्बे यज्ञसूत्रे निवीती भवति-यथाचोक्तममरेणापि ।

उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन् निवीतं कण्ठलम्बितम् ।। इति

सूतके मृतके चैव गते मासचतुष्टये ।
नव यज्ञोपवीतानि धृत्वा जीर्णानि सन्त्यजेत् ।।
कठाः काण्वाश्च चरका विप्रा वाजसनेयकाः ।
बह्वृचाः सामगाश्चैव ये चान्ये यजुःशालिनः ।।
कण्ठादुत्तीर्य सूत्रन्तु पुनः संस्कारमर्हति,

इत्याह्निक-सूत्रावली'' ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

जिस वचन में कर्म का उपदेश तो किया गया है किन्तु कर्मानुष्ठाता के वायें या दायें अंग की कोई चर्चा नहीं की गई हो, वहाँ कर्मों की पूर्त्ति करने वाला दाहिना हाथ समझना चाहिए। जहाँ जप होम आदि कर्मों के लिए किसी दिशा विशेष का निर्देश नहीं किया गया हो वहाँ पूर्व, उत्तर तथा ईशान (कोण) समझें। इसी तरह जिस कर्म में बैठकर, उठकर या झुककर करने का कोई विधान नहीं वहाँ बैठकर ही कर्म करना चाहिए। तथा,

सदैव सव्यरूप से यज्ञोपवीतधारी एवं शिखा बाँधकर ही रहना चाहिए। कभी भी शिखा खुली न रहे और नही यज्ञोवीत के बिना ही रहें। क्योंकि ऐसी स्थिति में किया गया सुकर्म व्यर्थ हो जाता है।*

यज्ञोपवीत की लम्बाई के सम्बन्ध में गोभिलगृह्य की मृदुला व्याख्या में उद्धृत मनुवचनानुसार पीठ तथा नाभि से होकर आया हुआ यज्ञोपवीत कमर तक लम्बा हो। (इससे अधिक लम्बा होना विहित नहीं।)

यज्ञोपवीत धारण एवं निस्सारण मन्त्र क्रमशः संस्कृत टीका तथा हिन्दी टीका में देखें।

दैवकार्य में उपवीती, पितृकार्य में प्राचीनावीती और सनकादि ऋषि-मनुष्य (तर्पण आदि) कार्य में निवीती होना चाहिए।

ऊपर से यह भी ज्ञातव्य है कि स्मृतियों के अनुसार जीर्ण यज्ञोपवीत जल में फेंक दें। आह्निकसूत्रावली के अनुसार जन्माशौच, मरणाशौच और धारण करने के चार मास बीत जाने पर नवीन यज्ञोपवीत धारण कर पुराने का परित्याग कर दें। कठ, काण्व, चरक, बह्वृ चशाखी शुक्ल एवं कृष्ण यजुर्वेदी तथा छन्दोग ब्राह्मण (द्विज) कण्ठनाग से उस जीर्ण यज्ञोपवीत को न निकाल कर पैर के तरफ से ही निकालें। अन्यथा वे पुनः संस्कार कराने योग्य हो जाते हैं।

नित्यकर्मविधि के अनुसार यज्ञोपवीत त्याग मन्त्र-"जीर्णत्वे तत्परित्यागो गच्छ सूत्र यथा-सुखम्॥ १॥

[ टिप्पणी हिन्दी ]

यज्ञोपवीत के सम्बन्ध में कुछ जिज्ञासा शान्ति तथा विशेष जिज्ञासा उत्पादन निमित्त प० माधवाचार्य शास्त्री विरचित 'क्यों' नाम की पुस्तक से कुछ अंश और यहाँ दिखाये जा रहे हैं।

मूल वचन में 'सदा' पद देने का तात्पर्य यह है कि पुण्य कर्मानुष्ठान या उससे भिन्न समय में भी सव्यरूप से यज्ञोपवीत का धारणा होना ही चाहिए। साथ ही यह भी ज्ञातव्य है कि जहाँ निवीत (कण्ठावलम्बित यज्ञोपवीत) या प्राचीनावीत (अपसव्य) होने का कोई विधान नहीं है वहाँ सभी जगह उपवीत (सव्यरूप से यज्ञोपवीत का धारण) होना चाहिए। जहाँ दैवकार्य के उद्देश्य से उपवीत का विधान सुना गया हो, वहाँ भी दैवपद 'उपलक्षण' समझना चाहिए। अर्थात् पितृ एवं मनुष्य कार्य के अतिरिक्त सभी को दैव कार्य समझें।

सामान्यतः उपवीती (सव्य रूप से यज्ञोपवीतधारी) का लक्षण गोभिलगृह्य वचनानुसार यह है कि दाहिनी भुजा उठा लेने पर शिर के ऊपर से यदि यज्ञोपवीत बायें कंधे पर रखा जाय और यज्ञोपवीत के नीचे का भाग दाहिने भाग में अवलम्बित हो। इसी तरह प्राचीनावीती (अपसव्य से यज्ञोपवीतधारी) का लक्षण यह है कि बायीं भुजा को उठा लेने पर शिर के ऊपर से यदि यज्ञोपवीत दायें कंधे पर रखा जाय और यज्ञोपवीत के नीचे वायें भाग में अवलम्बित हो। मनु वचनानुसार कंठावलम्बित यज्ञोपवीत का होना ही निवीती का लक्षण है।

उपरिष्टात् यह भी ज्ञातव्य है कि देवल वचनानुसार यज्ञोपवीत का एक एक धागा नौ नौ धागों से बटा होना चाहिए।

शब्दकल्पद्रुभ के अनुसार श्रौत स्मार्त कर्म में दो यज्ञोपवीतों का धारण करना चाहिए। उत्तरीय के अभाव में तीन का धारण करें।

"यों तो यज्ञोपवीत के विषय में इतनी 'क्यों' उपस्थित है और जन साधारण के मस्तिष्क को तंग किया करती हैं कि यदि उनपर विशद विचार किया जाय तो एक वृहत्-काय स्वतन्त्र ग्रन्थ तैयार हो सकता है किन्तु हम इससे सम्बन्ध रखनेवाले प्रमुख प्रश्नों पर ही विचार करेंगे। यथा यज्ञापवीत बायें कंधे पर ही क्यों ? पितृकार्य के समय दाहिने कंधे पर क्यों ? शौचादि के समय कान पर क्यों ? इसमें तीन ही तार क्यों ? ब्रह्मग्रन्थि क्यों ? निर्माण की विशेष प्रक्रिया क्यों ? ब्राह्मणादि का अमुक अमुक समय में ही यज्ञोपवीत क्यों ? आदि।

यह सब इस प्रकार की क्यों हैं जिन को समझे विना वास्तव में यज्ञोपवीत की महत्ता यज्ञोपवीत की महत्ता नहीं जानी जा सकती और जब तक किसी वस्तु के तथ्य का हमें ज्ञान नहीं हो जाय उसके महत्व को हम समझ न लें तब तक उस वस्तु के प्रति हमारी श्रद्धा हो भी कैंसे सकती है, अगर होगी भी तो वह स्थायी नहीं हो सकती, इसलिए अब हम इस विषय पर प्रारम्भ करते हैं।

यज्ञोपवीत क्या है ?

यज्ञोपवीत शब्द यज्ञ और उपवीत इन दो शब्दों के संयोग से बना हुआ एक समस्त शब्द है, जिसका अर्थ है यज्ञ को प्राप्त करानेवाला। वेद में यज्ञो वै विष्णुः (शतपथ १/१/१/२) कहकर समस्त चराचर में व्याप्त सगुण परमात्मा को यज्ञ शब्द से ही स्मरण किया गया है। इसलिये यज्ञोपवीत का शब्दार्थ परमात्मा को प्राप्त कराने वाला है। स्मृतिसार में यज्ञोपवीत शब्द का विवेचन करते हुए लिखा है-

**यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः।**
**उपवीतं ततोऽस्येदं तस्माद् यज्ञोपवीतकम्॥**

इसके अतिरिक्त 'यज्ञेन संस्कृतमुपवीतम्' इस मध्यम पदलोपी समास द्वारा यज्ञोपवीत शब्द का दूसरा अर्थ यज्ञ से पवित्र किया हुआ उपवीत-सूत्र होता है। चूँकि यह संस्कार यज्ञपूर्वक होता है इसलिए द्वितीय अर्थ भी संगत हो जाता है। उपनयन भी इसी संस्कार का दूसरा पर्यायवाचक शब्द है, जिसका अर्थ होता है ऐसा संस्कार जिसके द्वारा बालक गुरु के समीप ले जाया जाय। कुछ व्याख्याकारों के अनुसार 'यज्ञार्थे उपवीतम् यज्ञोपवीतम्=यज्ञ के लिए जो सूत्र धारण किया जाय अर्थात् जिसके धारण करने पर मनुष्य को सर्वविध यज्ञ करने का अधिकार प्राप्त हो यज्ञोपवीत कहा जाता है।

इस विषय में यह समझ लेना आवश्यक है कि उपरोक्त विग्रह से निष्पन्न यज्ञोपवीत शब्द का अभिप्राय यह कदापि नहीं है कि जैसे आजकल के सभ्य पुरुष सभा सोसाइटी इत्यादि में जाते समय शोभा के लिए गले में दुपट्टा, दुशाला या चादर आदि डाल लेते हैं, और फिर उसे उतारकर रख लेते हैं। इसी प्रकार यज्ञोपवीत केवल यज्ञादि के समय पहिनने के काम आता है।

स्मृतिकारों ने 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च' कहकर उसे सर्वदा धारण किए रहने का विधान किया है। जिससे इस प्रकार की भ्रान्ति का भली भाँति निराकरण हो जाता है।

यहाँ इससे अधिक यज्ञोपवीत सम्बन्धी विस्तृत विश्लेषण तथा शिखा सम्बन्धी शंका-समाधान भी मूलग्रन्थ 'क्यों' से ही जिज्ञासु जन अवगत करें। प्रकृत आचारादर्श ग्रन्थ के प्रतिपाद्य विषय अहोरात्राश्रित् कृत्य-प्रातःकाल से लेकर रात्रि पर्यन्त के कृत्य-प्रसंग में इस क्यों के अहोरात्रचर्चाध्याय (दूसरा अध्याय) पृ० सं० ११३ से १८६ तक के अवलोकन से आजकल उठाये जाने वाले अधिकतर 'क्यों' का

समाधान हो जायगा। सम्पूर्ण ग्रन्थ के अवलोकन से तो तर्कवितर्क संवलित ज्ञान का भण्डार ही मिल सकता है। वेसे 'शिवद्रोहे तात्पर्यम्' वाले दुराग्रही के लिए विश्व में कोई भी प्रगह नहीं होता।

## नैमित्तिकाचमनादिः

### [ मूलम् ]

वायुपुराणे-

क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः॥

### [ संस्कृत टीका ]

क्रियामिति। यः नास्तिकः=ईश्वरे वेदे च विश्वासरहितो यो नरः। मोहात् = अज्ञानात्। अनाचम्यैव = आचमनमविधायैव। क्रियाम्=धार्मिकक्रियाम्। कुरुते = करोति। तस्य सर्वाः सम्पादिताः क्रिया वृथा भवन्ति, इत्यत्र न कोऽपि संशयः कार्य इति भावः।

### [ हिन्दी टीका ]

जो नास्तिक मानव अज्ञानवश विना आचमन किये ही धार्मिक अनुष्ठान करता है, उसकी वे सारी क्रियाएँ व्यर्थ (निष्फल) हो जाती हैं, इसमें कोई संदेह नहीं।

### [ मूलम् ]

बौधायनः-

कर्मयुतो[1] नाभेरधः स्पर्शनं[2] वर्जयेत्[3]।

### [ संस्कृत टीका ]

कर्मयुत इति। कर्मयुतः=यज्ञादिकर्मसंलग्नः। नाभेः। अधः निम्नदेशस्य। स्पर्शनम्= स्पर्शम्। वर्जयेत्=त्यजेत्। तद्देशस्याधमाङ्गत्वादिति भावः।

### [ हिन्दी टीका ]

यज्ञादिकर्म में संलग्न जन नाभि से निचले अंगों का अधमाङ्ग होने के कारण स्पर्श न करे।

---

पाठा० (१) युक्तो। (२) स्पर्शं। (३) विवर्ज।

## [ मूलम् ]

छन्दोग–परिशिष्टे-

पितृ[1]-मन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे[2] ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषक[3]-स्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेष्वेव[4] सर्वेषु कर्म कुर्वन्नुपस्पृशेत् ॥"

अनुद्रवणे = उच्चारणे । आत्मालम्भे = हृदयस्पर्शे । अवेक्षणे = हृदयस्यैव । मार्जारस्पर्शोऽत्र मार्जारकृतः, स्वयं कृतस्योक्तत्वात् ।

## [ संस्कृत टीका ]

पितृमन्त्रेति । पितृमन्त्रानुद्रवणे = पितृसम्बन्धि मन्त्रस्योच्चारणे । आत्मालम्भे= हृदयस्पर्शे । अवेक्षणे=हृदयावलोकने । एतदुभयमपि यज्ञादौ विहितमेव निमित्तमिति कल्पतरुप्रभृतय इति वीरमित्रोदयः । अधोवायुसमुत्सर्गे= अपानवायुत्यागे । प्रहासे=उच्चैर्महति वा हसने । अनृतभाषणे =मिथ्याकथने । मार्जारमूषकस्पर्शे = मार्जारकर्तृके स्पर्शे, भूषकस्पर्शे च । मार्जारकर्मके स्पर्शे तु पूर्वं स्नाननिमित्तप्रकरणे 'अभोज्यं सूतिका षण्ढ मार्जाराखुश्व कुक्कुटा नि' ति वचनव्याख्याऽवसरे स्नानविधानस्य विवेचनात् । आक्रुष्टे = कठोरवचनादिना आक्षिप्ते शप्ते वा । (आक्रोशः=आक्षेपः शाप इति विश्वः, आक्रोशमभीषङ्ग इत्यमरश्च) आक्रुष्टे परुषभाषणे । भावे क्त इति तु वीरमित्रोदयः । क्रोध सम्भवे = कोपजनने । एतेषु, निमित्तेषु=हेतुषु सत्सु । कर्म कुर्वन्=कर्मस्थो जनः । उपस्पृशेत्=आचामेत् ।

## [ हिन्दी टीका ]

पितृसम्बन्धी मन्त्र का उच्चारण, हृदय का स्पर्श हृदय का स्पर्श, हृदय का ही अवलोकन, (यहाँ कल्पतरु आदि के अनुसार ये दोनों कारण यज्ञ आदि में विहित ही माने जाते हैं ). वायुत्याग, जोर से या देर तक हसने, मिथ्या भाषण, बिल्ली या चूहे का

---

पाठा० (१) पित्र्य । (२) ह्यवेक्षणात् । (३) मूषिक । (४) निमित्तेष्वेषु ।

स्पर्श करने तथा कठोर वचन के द्वारा तिरस्कृत या शापित होने पर या कठोर भाषण करने पर पुण्यकर्म में प्रवृत्तजन आचमन करे ।

बिल्ली के स्पर्श में भेद इतना है कि यदि बिल्ली ही स्पर्श कर देती है तो आचमन मात्र होगा । अन्यथा अपने से उसका स्पर्श करने पर स्नान करना चाहिए । इससे अधिक नैमित्तिक स्नान प्रकरण मे पीछे ''अभोज्यं सूतिका षण्ढ मार्जाराखुश्वकुक्कुटान्'' आदि वचन की व्याख्या के अवसर पर कह दिया गया है ।

[ मूलम् ]

**योगियाज्ञवल्क्यः-**

**रौद्र-पि[१]त्र्यासुरान् मन्त्राँस्तथा चैवाभिचारिकान्[२] ।**
**व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वा ऽन्यदाचरेत् ॥**

पूर्ववाक्ये पितृमन्त्रानुद्रवणे आत्मालम्भेचाचमनदर्शानादपः स्पृष्ट्वात्याचमनपरमेव । चाज्ञिक सम्प्रदाये जलस्पर्शमात्रम् । येषां पूर्वत्राप्यपः स्पृशेदितिपाठस्तेषां जलस्पर्श एवाविवादः ।

तथा,

**परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।**
**धर्म्ये कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥**

तथा,

**नाचरेत् कस्यचित् पीडां कर्मणा मनसा गिरा ।**
**आचरन्नभिषेकन्तु कर्माण्यन्यानि[३] नाचरेत् ॥**
**विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।**
**तद्धरन्त्यसुरास्तस्य मूढस्य ह्यकृतात्मनः ॥**

तथा

**प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।**
**स्मरणादेव तद् विष्णोः सम्पूर्णं स्यादितिश्रुतिः ॥** इति अध्वरेष्विति वैदिक-कर्ममात्रपरम् ।

---

पाठा० (१) पैत्र्य । (२) राक्षसाभिचारिकान् । (३) वा ।

[ संस्कृत टीकार ]

रौद्रमिति । रौद्रपित्र्यासुरान् मन्त्रान् रौद्रम् रुद्रस्येदं, रुद्रो देवताऽस्येति, वा विग्रहे रुद्रसम्बन्धिनं "नमस्ते रुद्रमन्यव" इत्यादिमन्त्रम् । पित्र्यम्=पितृदेवताकम् –'उदीरतामवर उत्परास' इत्यादिमन्त्रम् । पितरो देवता अस्येति, पितृणां प्रियो वेति विग्रहे यत् (पा० ४१।३१) । आसुरम् = असुर सम्बन्धिमन्त्रम् । यथा,

ओम् महिष ! त्वं महावीर ! इन्द्रादि-देवमर्दक ।
देव्यस्त्रताडितो भूत्वा गतः स्वर्गं नमोऽस्तुते ॥ १॥

कात्यायन्या समं योद्धुं सामर्थ्यं कस्य विद्यते ।
केनासुरेण विधृतः समरे मधुसूदनः ॥ २ ॥

केनान्येन विजित्वा ते त्रिदशाः सेवकीकृताः ।
मन्वन्तरत्रयं भुक्तं देवराज्यमकण्टकम् ॥ ३ ॥

ओम् महिषस्त्वं महावीर शिवरूप सदाशिव ।
अतस्त्वां पूजयिष्यामि क्षमस्व महिषासुर ॥ ४ ॥ इति

राक्षसानित्यस्यापि पाठे तु–

ओम् वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
अपसर्पन्तु ते सर्वे देव्याः शस्त्रेण ताडिताः ॥ ५ ॥

इत्यादिकमपि दुर्गापूजापद्धत्यनुसारं बोध्यम् । अथवा,

ओं निर्ऋतिस्तु पुमान् कृष्णः सर्वरक्षोऽधिपो महान् ।
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥ १ ॥

इत्येकादशीव्रतोद्यापनपद्धतौ दशदिक्पालवन्दनप्रकरणे निर्ऋति (राक्षस) वन्दन-मन्त्रः ।

आभिचारिकान्='अभिचारः हिंसाकर्म' इत्यमरः । मारणोच्चाटन-हिंसात्मकं कर्म इति भरतः । स षड्विधः मारणम्, मोहनम्, स्तम्भनम्, विद्वेषणम्,

उच्चाटनम्, वशीकरणमिति तन्त्रसार इति शब्दकल्पद्रुमः । एवञ्च अदृष्टोपायेन परपीडनमिति परिभाषितोऽभिचारः । एतत्सम्बन्धिनः 'श्येनेनाभिचरन् यजेत' इति वैदिकवाक्यानुसारं श्येनयागादौ प्रयुज्यमानान् मन्त्रान् । अथवा शुक्लयजुर्वेदसंहिताया दर्शपूर्णमासप्रकरणीय 'देवस्य' त्वा सवितुः प्रसवेऽप्रसवेऽश्विनोर्बाहुभ्यामित्यादीन् । ग्रन्थेऽस्मिन्नितोऽधस्ताद् गायत्र्युपस्थानमन्त्रभाष्येऽप्युपात्त आभिचारिकमन्त्रो द्रष्टव्यः । अतएवैतद्वचनमुपक्रम्य, "रौद्रपित्र्यासुरान्=रुद्रपित्रसुरदेवताकान्, आभिचारकान्=अभिचारसम्बन्धिनः" इति वीरमित्रोदयोऽपि ।

व्याहृत्य=उच्चार्य आत्मानमालभ्य च आत्माधिष्ठानं हृदयं स्पृष्ट्वा च । अपः स्पृष्ट्वा । अन्यत् = जलस्पर्शनिमित्तजातीयादितरत् कर्म । आचरेत् = कुर्यात् । एवमेव कात्यायनोऽपि, 'रौद्रं राक्षस सुरमाभिचारिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्य अप उपस्पृशे ,' इति । पित्र्यमित्यस्यापि उक्त्वेत्यनेन सम्बन्धः। चकाराद् रौद्रादि कर्मकृत्वापीत्यर्थः ।

पूववर्वाक्ये इति । पूर्ववाक्ये='पितृमन्त्रानुद्रवणे' इति पूर्वोक्तछन्दोगपरिशिष्टीयवचने । पितृमन्त्रानुद्रवणे=पितृमन्त्रोच्चारणे । आत्मालम्भे = हृदयस्पर्शेच । आचमनदर्शनात् = आचमन विधान श्रवणात् । अपः स्पृष्ट्वेति=रोद्रेति वचनोक्तम् 'अपः स्पृष्ट्वे'ति विधानम् आचमनपरकमेव मन्तव्यम्, 'पितृमन्त्रानुद्रवणे' इति रौद्रपित्र्यासुरान् इत्युभयोर्वचनयोरेकवाक्यत्वात् । परम् याज्ञिकसम्प्रदाये = यज्ञानुष्ठातृजनसमूहे । जलस्पर्शमात्रम्, न त्वाचमनमपि भवति । येषाम् =विदुषाम् । पूर्वत्रापि = स्वनिबन्धग्रन्थोल्लिखित छन्दोगपरिशिष्टीय- वचनेऽपि । अपः स्पृशेदितिपाठः = कर्म कुर्वन्नुपस्पृशेदित्यत्र अपः स्पृशेदितिपाठ उपलभ्यते, तेषां कृते, जलस्पर्श एव । अविवादः = विवादरहितः । अत्र "केचित्तु-आत्मानम् = स्वम् । आलभ्य = स्तुत्वेत्यर्थमाहुरिति, तथा च कर्मस्थतायां वातकर्मादावाचमनं जलस्पर्शो वा । वातकर्मणि निष्ठीव्येत्यादि-शातातपोक्ताचमनानुकल्प दक्षिणकर्ण-स्पर्शो वेति स्मर्तव्यमित्याचारविवेकइति" च नित्यकृत्यार्णवः ।

परिधानेति । परिधानात् = परिहिताधोवस्त्रात् । ''बहिः कक्षा = असंवृत-परिधानोभयान्तः । बहिः कक्षा=असंवृतपश्चादङ्गमित्यन्ये इति कृत्यमहार्णवा-चारचिन्तामणौ । कक्षा=पश्चाद ञ्चलम् । बहिर्निर्गततेतिशेष इति रत्नाकरस्मृतिसारौ'' इति नित्यकृत्यार्णवः । निबद्धा= धारिता । आसुरी = दानवसम्बन्धिनी । भवेत् । (अतः) विद्वद्भिः = कर्मानुष्ठातृमनीषिभिः । धर्म्ये कर्मणि = धार्मिकानुष्ठाने । प्रयत्नतः = यत्नपूर्वकम्। (तादृशी कक्षा) वर्जनीया= त्यक्तव्या ।

उचितकक्षास्थानान्याह याज्ञवल्क्यः नित्यकृत्यार्णवे वस्त्रपरिधानतरङ्गे—

**वामकुक्षौ च नाभौ च पृष्ठे चैव यथाक्रमम् ।**

**त्रिकक्षेण समायुक्तो द्विजोऽसौ मुनिरुच्यते ॥ इति ।**

नाचरेदिति । कर्मणा=कयाचित् क्रियया । मनसा=चित्तेन । वचसा = वचनेन बा । कस्यचित्-प्राणिनः । पीड़ाम् =दुःखम् । नाचरेत् = न जनयेत् । (एवम्) अभिषेकम् = स्नानम् । आचरन् = कुर्वन् । अन्यानि = इतराणि कर्माणि = धार्मिकानुष्ठानानि । नाचरेत् = न विदध्यात् ।

विधिहीनम् = शास्त्रीयविधान विरहितम् । भावदुष्टम् = यत्र मनः प्रसादो न भवति तत् । अश्रद्धया = हार्दिकभक्त्यभावेन च ! यत्कर्म । कृतम् = येन निष्पादितम् । अकृतात्मनः = अविहितात्मकल्याणस्य । तस्य । मूढस्य = मूर्खस्य । तत् = सम्पादितं कर्म, कर्मफलमिति यावत् । असुराः = दैत्यदानवादयः । हरन्ति = विनाशयन्ति । अनुष्ठितं तत्कर्म निष्फलं भवतीतिभावः।

कर्म कुर्वताम् = यज्ञेषु धार्मिककृत्यान्याचरताम् । अध्वरेषु = वैदिककर्मसु । प्रमादात् = अनवधानत्वात् । यत्कर्म । प्रच्यवेत = विधिच्युतो भवेत् । तत्कर्म । भगवतो विष्णोः स्मरणादेव । सम्पूर्णम् = परिपूरिताङ्गकम् भवतीति श्रुतिः वेदवचनं विद्यते ।

**[ हिन्दी टीका ]**

अब कर्मलग्न जन के लिए रुद्रआदि सम्बन्धी मन्त्र के उच्चारण में आचमन कहा जा रहा है । रुद्र, पितृ, असुर, तथा अभिचार (मारण, मोहन, स्तम्भन, विद्वेषण,

उच्चाटन, तथा वशीकरण प्रयोग विशेष) सम्बन्धी मन्त्र का उच्चारण एवं हृदय को देखने पर आचमन करना चाहिए।

संस्कृत टीका में निर्दिष्ट याज्ञवल्क्य वचनानुसार अधोवस्त्र तीन स्थानों पर खोंसा हुआ (त्रिकच्छ) होना चाहिए। यथा नाभि के पास, बायीं ओर, और पीठ के नीचे कमर पर। अब प्रकृत वचन का अर्थ ज्ञातव्य है कि जो अधोवस्त्र के पीछे की लांगों या पिछुओं को पीछे की ओर नहीं बाँधता (खोंसता) है, साथ ही आगे की दोनों लांगें नाभि के नीचे तथा बायें भाग में न बाँध कर इससे अन्य स्थान पर बाँधता है या लटकाता है उसका यह लटकाना या बाँधना आसुरी हे। अतः विद्वज्जन धार्मिक कृत्यों के समय सावधान होकर इसका परित्याग कर दे।

मन, वाणी तथा क्रिया से किसी भी प्राणीको कष्ट नहीं पहुँचाना चाहिए और न स्नान करते समय कोई दूसरा कार्य करना चाहिए।

शास्त्रीय विधि विहीन, जिस कर्मानुष्ठान के समय मनःप्रसाद न हो, अश्रद्धा (अभक्ति) से सम्पन्न उस सभी कर्म के फल को असुर लोग विनष्ट कर देते हैं। अतः ऐसे कर्म का अनुष्ठाता मूढ़ है और इसका किया हुआ ऐसा कर्म व्यर्थ हो जाता है।

यज्ञ में कर्म करने वालों का यदि वैदिक कर्म प्रमाद वश विधि से च्युत हो जाय तो वह भगवान् विष्णु के स्मरण से ही परिपूर्ण हो जाता है, ऐसा वेदवचन है।

मूल वचन के 'अध्वरेषु' पद का अर्थ केवल वैदिक कर्म है।

**इति नैमित्तिकाचमनादिः**

# सन्ध्या-प्रयोगः

## [ मूलम् ]

अथ सन्ध्याप्रयोगः । वामे बहून् कुशान् दक्षिणे पाणौ पवित्रं कुशत्रयञ्च धृत्वा सप्रणव-गायत्र्या शिखां बध्वा ऐशान्यभिमुखः आचम्य ऋतमित्यभिमन्त्र्य पुनराचामेत् ।

## [ संस्कृत टीका ]

अथेति । अथ = जपविध्यनन्तरम् । सन्ध्याप्रयोगः = एतन्नामकप्रकरणं प्रारभ्यते इत्यर्थः ।

वामे इति । वामे = सव्ये * पवित्रम् = पवित्रकम् । कुशाभावे सुवर्णरजतताम्राणामन्यतमस्यापि पवित्रकम्-अङ्गुलीयकमिति यावत् । 'पवित्री' इति भाषायाम् । कुशत्रयम् = भाषायां 'तेकुशा' इति । च । धृत्वा । सप्रणवगायत्र्येति—'स्मृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखां ततः' इति वत्सवचनानुसारं बोध्यम् । कतिपयाह्निकसदाचारपद्धतिपुस्तकेषु सप्रणव-सव्याहृति-गायत्रीमन्त्रमुल्लिख्य गायत्रीमन्त्रेण वा शिखाबन्धन-लेख स्थले तु वचनस्थ-प्रणवपदं व्याहृत्युपलक्षकं ज्ञेयम् । ऐशान्यभिमुखः = ईशानकोणाभिमुखः । ऋतम् = अघमर्षणसूक्तम् । अत्र (प्रथमाघमर्षण-सूक्तपाठात्पूर्वमृष्यादिस्मरणाभावप्रसङ्गे) नित्यकृत्यार्णवोद्धृताचारविवेकादयो यथा—''यदि तु श्रुततत्तद्विशेषमतन्त्रीकृत्य कर्ममात्रे सम्बन्धस्तदा श्राद्धादावपि स्यात् । एवञ्च-श्रुतविशेषेष्वेव ऋष्यादिस्मरणन्न सर्वत्र ।.....अतएव च प्रथमाचमने अघमर्षण-सूक्तस्य ऋष्यादिस्मरणं बहूनामप्रामाणिकमित्यव-गन्तव्यम् । अतएवाचारादर्शे किञ्चात्राघमर्षणसूक्तस्य ऋष्यादिकं प्रथममुक्तं तदेव प्रथमं स्यादित्यापत्ति-मुखेन सिद्धवल्लिखितमि''त्युक्तपूर्वं न विस्मर्तव्यम् ।'' अतएव ''अत्र (ऋतमित्यत्र) वक्ष्यमाण-योगिया-ज्ञवल्क्यवचनोक्तो विनियोगपाठो वाजसनेयिवच्छन्दोगानां भ्रममूलक एव । तेषां हि स्नानकाले जलमध्ये, सन्ध्यावन्दने च मार्ज्जनान्ते अघमर्षपाठे जपरूपतया गोभिलेनोक्ते एव प्राणायामे च विनियोग -पाठस्तथा याजनाध्यापनहोमेष्वेव

*टिप्पणी—सन्ध्यावन्दनस्य नित्यविधित्वात्सङ्कल्पो नास्ति इति मन्तव्यम् ।

स्मर्यते, नान्यत्र। तथा च याज्ञवल्क्यः ऋष्यादिकमुपक्रम्य–

**अविदित्वा तु यः कुर्याद् याजनाध्यापनं जपम्।**

**होममन्तर्जलादीनि तस्य चाल्पं फलं भवेत्॥ इति**

बृहस्पतिश्च–

**बध्वासनं नियम्यासून् स्मृत्वा चर्ष्यादिकं ततः।**

**सन्निमीलितदृङ् मौनी प्राणायामान् समभ्यसेत्॥ इति**

अन्तर्जलादीनि–जलमध्ये क्रियमाणान्यघमर्षणादीनि, इति याज्ञवल्क्यवचनव्याख्यातारः। श्रीदत्त–हरिनाथोपाध्यायादयोऽप्येवम्। तथा चेदमृष्यादिस्मरणं यत्र स्मृतिकाराद्यभिहितत्वेन प्रामाणिकं तत्र मन्त्रपाठात्प्रागेव कार्यम्। 'अविदित्वा तु यः कुर्यादि' त्युक्तवचने क्त्वाश्रुतेः। यत्र च न प्रामाणिकं तत्र न कार्यम्। अतएव योगियाज्ञवल्क्याद्युक्तत्वेन सन्ध्यावन्दने यथालिखितमृष्यादिस्मरणं वाजसनेयिभिः क्रियते न तु विवाहादौ इति, "अत्र सन्ध्योपक्रमे गोभिलकात्यायनाभ्यां यद्यपि अघमर्षणसूक्तपाठो नोक्तस्तथापि कामधेनु-सन्ध्योद्योतानुसारात्सकलशिष्टसमाचाराच्च स आदौ युक्त एवे"ति च नित्यकृत्यरत्नमाला टिप्पण्यपि।

ऋतेति। ऋतमित्यभिमन्त्र्य = दक्षिणहस्ते जलं धृत्वा तज्जलम् ऋतमित्यादिसूक्तपठनेनाभिमन्त्रितं कृत्वा तेनैव जलेनेत्यर्थः। पुनराचामेत् = अन्याङ्गरहितं पूर्ववद्वारत्रयमाचामेत्। आचारादर्शाचारविवेकाद्यनुसारमृष्यादिस्मरणमत्र नोपयुक्तं तथापि येषां मतेनोचितं तदनुसारमेतत्कोष्ठीकृत्योल्लिख्यते [अघमर्षणसूक्तस्याघमर्षण ऋषिरनुष्टुप्छन्दो भाववृत्तो देवता अश्वमेधावभृथे विनियोग इति।] ऋतञ्चेत्यादिपूर्णसूक्तं यथा–

"ओम् ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत। ततः समुद्रो अर्णवः॥ १॥ समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद् विश्वस्य मिषतो वशी॥२॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥ ३॥

ऋतञ्चेत्यादिसूक्तस्य (ऋ० अष्ट० ८, अ० ८ब ४८) ऋग्वेदसंहितापठितस्य सायणाचार्येण कृतं भाष्यं यथा–

ऋतमिति सत्यनाम, ऋतं मानसं यथार्थसङ्कल्पनम् । सत्यं वाचिकं यथार्थं भाषणम् । चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते । तत्सर्वमभीद्धात्= अभितप्तात् ब्रह्मणा पुरा सृष्ट्यर्थं कृतात् तपसः । अधि=उपर्यर्थे,- उपर्यजायत-उदपद्यत (तपस्तप्त्वा इदं सर्वमसृजतेतिश्रुतेः) तपश्चात्र स्रष्टव्य-पर्यालोचनलक्षणम् । (यस्य ज्ञानमयं तप इति श्रुत्यन्तरात् ।)

यद्वा अभीद्धात् = अभितः प्रकाशमानात् परमात्मनो मायाऽधि-ष्ठानरूपादुपादानभूतात् । ऋतं सत्यञ्च अजायत । ततः = तस्मादेवेश्वरात् । रात्रीति उपलक्षणमेतदह्नोऽपि । अहश्च रात्रि श्चाजायत । (रात्रे श्चाजसाविति ङीप्) ततः=तस्मादेवेश्वरात् । अर्णवः = अर्णसा-उदकेन युक्तः समुद्रश्चाजायत । समुद्रशब्दोऽन्तरिक्षोदध्योः साधारणइति अभिमतार्थस्य प्रकाशनाय अर्णवशब्देन विशिष्यते । (अर्णसः सलोपश्चेति) मत्वर्थीय व प्रत्ययः सलोपश्च ।। १ ।।

अर्णवात् = समुद्रात् सृष्टात् । अधि = ऊर्ध्वम् । संत्सरः = संवत्सरोपलक्षितः सर्वः कालः अजायत । (श्रूयते हि सर्वे निमेषा यज्ञिरे विद्युतः पुरुषादधिकला-मुहूर्त्ताः काष्ठांश्चेति) स चेश्वरः अहोरात्राणि = एतदुपलक्षितानि सर्वाणि भूतजातानि । विदधत् = कुर्वन्-सृजन् । मिषतो = निमिषादियुक्तस्य । विश्वस्य = सर्वस्य प्राणिजातस्य । वशी = स्वामी भूत्वा वर्तते ।।२ ।।

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिवञ्च पृथिवीञ्च अन्तरिक्षञ्च इत्थं त्रिभुवनम् । स्वः = स्वश्शब्दः सुखवाची दिवो विशेषणम् । सुखरूपां दिवम्, तदेतत्सर्वं धाता = विधाता । यथापूर्वम् = पूर्वस्मिन् काले यथा अकल्पयत् = सृष्टवान्, तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ।। ३ ।। इति ।

सूक्तमिदंब्राह्मणसर्वस्वे हलायुधेन व्याख्यातं यथा—

ऋतञ्च सत्यञ्चेति परमं ब्रह्म उच्यते । तथा च श्रुतिः स्मृतिश्च— "ऋतमित्येकाक्षरं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म" इति । अत्रासीदित्यध्याहार्यम् । तेनायमर्थः—ऋतञ्च सत्यं परं ब्रह्म आसीत् । एतेन महाप्रलयावस्था प्रतिपादिता । महाप्रलयसमये केवलं परं ब्रह्ममात्रमासीदित्यर्थः । ततः = तदनन्तरं महाप्रल-यावस्थायामेव । रात्रिरजायत = रात्रिः समुत्पन्ना-सकलमन्धकारमयमासी-दित्यर्थः । तथा च स्मृति :— आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम् । इति ।

ततः = तदनन्तरं महाप्रलयाऽवसाने सृष्ट्यारम्भसमये । तपसः = अदृष्टात् । पुनः किंभूतात् ? अभीद्धात् =सर्वतोभावेन दीप्तत्वात् सर्वतोगतवृत्तिलब्धादित्यर्थः । एवम्भूताददृष्टात् पुनः समुद्रः अजायत । किंभूतः समुद्रः. अर्णवः = पानीयम्, तदस्यास्त्यर्णवः पानीययुक्तः समुद्रः समजायत इत्यर्थः । प्रथमतः सकलसृष्टिनिमित्तं जलराशिरुत्पन्न इत्यर्थः । तथा च स्मृतिः–"अप एव ससर्जादौ तासु वीर्यमवासृजदिति" । ततः = तदनन्तरं समुद्रादर्णवाद्, धाता = स्रष्टा । अजायत । किंभूतो धाता, मिषतः = अप्रकटीभूतविश्वस्य, वशी = प्रभुः । महाप्रलयेन विलुप्तस्यास्य त्रैलोक्यस्य निर्माणे प्रभुरित्यर्थः । स धाता यथापूर्वम् = यथाक्रमेण सूर्याचन्द्रमसावकल्पयत् = निर्मितवान् । किं भूतौ सूर्याचन्द्रमसौ ? अहोरात्राणि विदधत् = अहोरात्राणि कुर्वाणौ । सूर्य एव दिवसं करोति, चन्द्र एव रात्रिं करोति । ततः सूर्यचन्द्रयोरुत्पत्यनन्तरं संवत्सरोऽध्यजायत = समुत्पन्नः। सूर्यचन्द्रोत्पत्यनन्तरमेव रात्रिदिवसविभागोऽभवत् । रात्रिदिवसविभागे सति संवत्सरव्यवस्था भवतीत्यर्थः । अथो अनन्तरं दिवञ्च, पृथिवीं च अन्तरिक्षञ्च, स्वश्च एतान् लोकान् स एव धाता । अकल्पयत् = सृष्टवान् । चराचरात्मकसकललोकानेव स धाता सृष्टवानित्यर्थः । तत्र स्वश्शब्देन नक्षत्रलोकोपरिस्थः स्वर्गलोक उच्यते । दिवंशब्देन तदूर्ध्वस्थमहर्लोकादिलोकचतुष्टयम् । एतेन मन्त्रेण सृष्टिस्थिति-प्रलयाः प्रतिपादिताः ।। इति ।

### [ हिन्दी टीका ]

अब सन्ध्याप्रयोग (प्रकरण) कहा जा रहा है । बायें हाथ में बहुत से कुशों को दायें हाथ की अनामिका अंगुलि में पवित्रक (पवित्री) पहन कर (कुश के अभाव में अन्ततः सोना, चाँदी या ताँबें की अंगूठी पहन कर) तथा कुशत्रय (तंकुशा) लेकर प्रणव (व्याहृति) सहित गायत्री मन्त्र से शिखा यदि खुली हो तो बाँधकर ईशान कोण (या पूर्व दिशा या उत्तर दिशा) की ओर अभिमुख हो आचमन करे । अनन्तर दाहिने हाथ में जल लेकर तथा कुछ विद्वानों के मतानुसार–ओम् अघमर्पणसूक्तस्याघमर्पण-ऋषिरनुष्टप् छन्दो भाववृत्तो देवता अश्वमेधावभृथे विनियोगः-यह पढ़ कर

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ।

ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहो रात्राणि विदधद् विश्वस्य मिषतो वशी ॥ २ ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ ३ ॥

इस मन्त्र से उसे अभिमन्त्रित कर पुनः (तीन वार) आचमन करे । यहाँ शिखा वन्धन प्रसंग में ध्यान देने योग्य बात है कि 'स्मृत्वोंकारञ्च गायत्रीं निवघ्नीयाच्छिखां ततः' इस व्यासवचनानुसार ओंकार तथा गायत्री मन्त्र पढ़ कर ही मूल लेखानुसार शिखा वन्ध न होना चाहिए । फिर भी यदि कहीं ओंकार के वाद व्याहृति पठन भी होता हो तो वहाँ पदको ही तिपर्यन्त का बोधकमान लेना चाहिए ।

यहाँ ऊपर से यह भी ज्ञातव्य है कि नित्यकृत्यार्णव में उद्धृत आचारविवेक आदि निबन्धों ने आचारदर्शपङ्क्ति को भी साक्षी वताते हुए कहा है कि प्रथम अघमर्पणसूक्त-पाठ के पहले बहुत से निबन्धकारों के मतानुसार ऋष्यादिस्मरण नहीं होना चाहिए क्योंकि योगियाज्ञवल्क्य ने कर्मविशेप में ही इसका विधान किया है । यदि श्रुत इन विशेप स्थलों को मान कर कर्ममात्र में ही सम्बन्ध मान लें तो श्राद्ध आदि स्थलों में भी अब होने लगेगा । इसी तरह नित्यकृत्यरत्नमाला टिप्पणी का भी कहना है कि यहाँ के प्रथम अघमर्पणसूक्तपाठ स्थल में योगियाज्ञवल्क्य वचन द्वारा कथित विनियोग पाठ वाजसनेयियों के जैसे छन्दोगों के लिए भी भ्रम मूलक ही होगा । क्योंकि छन्दोगों के लिए गोमिल के द्वारा कहेगए स्नान के समय जल में डुबकी लगाकर पढे जानेवाले एवं सन्ध्यावन्दन के समय मार्जन के अन्त में होने वाले अघमर्पण पाठ इसी तरह प्राणायाम के समय, याजन, अध्यापन एवं होम के समय ही ऋष्यादि स्मरण होगा । अतः उचित है कि यह ऋष्यादि स्मरण जहाँ स्मृतिकार आदि के द्वारा कहे जाने से प्रमाणित नहीं वहाँ नहीं करना चाहिए । इसी हेतु वाजसनेयी लोग सन्ध्यावन्दन में योगियाज्ञवल्क्य के कथनानुसारन ऋष्यादि स्मरण करते हैं किन्तु विवाह आदि में नहीं ।

इसी के साथ अन्य सम्बद्ध विपय यह भी ज्ञातव्य है कि यहाँ सन्ध्या वन्दन के प्रारम्भ में अघमर्पण सूक्तपाठ न तो गोभिल ने और नाही कात्यायन ने ही कहा है फिर भी कामधेनु, सन्ध्यांद्योत एवं सकल शिष्ट जनों के आचारण के अनुसार वह (अघमर्पण) सूक्त पाठ आदि में भी युक्त है ।

[ टिप्पणी ]

ऋग्वेद की तैत्तिरीयशाखा तथा यजुर्वेद में पठित इस सूक्त का सायणभाष्यानुसारी अर्थ है -

(महाप्रलय के बाद इस महाकल्प के आरम्भ में) सभी तरफ से प्रकाशमान तपरूप मायाधिष्ठानस्वरूप परमात्मा से ऋत (मानस यथार्थसङ्कल्प=सत्सङ्कल्प) और सत्य (वाचिक यथार्थ भाषण) की उत्पत्ति हुई । उसी परमात्मा (ब्रह्मा) से रात्रि-दिन प्रकट हुए तथा उसी से जलमय समुद्र की उत्पत्ति हुई । इसके बाद दिन और रात्रि को धारण करने वाला काल रूप संवत्सर निमेष (आँख के पलक गिरने में जितना समय लगे), काष्ठा (अठारह निमेष के बराबर का समय), कला (तीस काष्ठा के बराबर का समय), मुहूर्त्त (दो दण्ड-घडी) आदि के धारण के साथ प्रकट हुआ जो कि पलक मारने वाले जङ्गम प्राणियों और स्थावरों से युक्त निखिल विश्व को वश में रखनेवाला है । अनन्तर सबको धारण करनेवाले परमात्मा ने समय के ध्वजरूप सूर्य और चन्द्रमा तथा सुखरूप स्वर्गलोक, पृथिवीलोक एवम् अन्तरिक्षलोक (त्रिलोक) की सृष्टि पूर्व कल्प के अनुसार की तथा आनेवाले कल्प में भी करेंगे ।। १ ।।

ब्राह्मणसर्वस्व नामक ग्रन्थ में हलायुध से की गई व्याख्या के अनुसार अर्थ निम्न प्रकार हैं :

महाप्रलय के समय केवल पर ब्रह्म (ऋत और सत्य) थे । उस समय अन्धकार मय रात्रि की उत्पत्ति हुई । महाप्रलय के अन्त-अर्थात् सृष्टि के आरम्भ समय में सभी ओर से देदीप्यमान तपरूप अदृष्ट पर ब्रह्म से अग्रिम प्रलय से विलुप्त इस त्रिलोकी के निर्माण में समर्थ तथा विश्व के प्रभु विधाता (स्रष्टा) की सृष्टि इस समुद्र से हुई । जिन्होंने यथाक्रम दिन और रात्रि को बनाने वाले सूर्य और चन्द्रमा का निर्माण किया । जिसके फलस्वरूप रात्रि और दिन के विभाग हो जाने पर संवत्सर (वर्ष) उत्पन्न हुआ अर्थात् व्यवस्थित हुआ । इसके बाद उस सृष्टिकर्ता विधाता ने पृथिवी (भू) लोक, अन्तरिक्ष (भुवः) लोक, स्वः (अन्तरिक्ष लोक से ऊपर का स्वर्ग) लोक तथा दिवः (महः जनः तपः एवं सत्य इन चारों) लोकों की सृष्टि की । अर्थात् चराचररूप सभी लोकों का निर्माण किया । इस मन्त्र से सृष्टि, स्थिति तथा प्रलय कहे गये हैं यह ज्ञातव्य है ।

[ मूलम् ]

ततो वारिणाऽऽत्मानं वेष्टयित्वा रक्षां कुर्यात् ।

[ संस्कृत टीका ]

तत इति । ततः=पुनराचमनानन्तरम् । दक्षिणहस्तगृहीतेन जलेन "ॐ आपो मामभिरक्षन्तु" इति मन्त्रं पठन्नात्मावच्छेदकं स्वशरीरं प्रदक्षिणक्रमेण वेष्टयित्वा रक्षां कुर्यादित्यर्थः ।

[ हिन्दी टीका ]

अपने दाहिने हाथ में लिये गए जल से "ॐ आपो मामभिरक्षन्तु" यह मन्त्र पढ़ते हुए वेष्टन कर शरीर की रक्षा कर लेनी चाहिए ।

[ मूलम् ]

ततः "ॐकारस्य ब्रह्म ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता शुक्लो वर्णः सर्वकर्मारम्भे विनियोगः । सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्ति-त्रिष्टुब्जगत्य श्छन्दांस्यग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवता अनादिष्टप्रायश्चित्ते प्राणायामे विनियोगः । गायत्र्या विश्वामित्र ऋषिर्गायत्रीच्छन्दः सविता देवताऽग्नि[1] र्मुखमुपनयने प्राणायामे विनियोगः । शिरसः प्रजापति र्ऋषि र्ब्रह्माग्निवायु-सूर्या देवता यजुः प्राणायामे विनियोगः ।" इति ऋष्यादिकं स्मृत्वा बद्धासनः सन्निमीलितनयनो मौनी प्राणायामत्रयं कुर्यात् । तत्र वायोरादानकाले 'पूरक' नामा प्राणायामः । तत्र श्यामं चतुर्भुजं विष्णुं नाभौ ध्यायेत् । धारणकाले 'कुम्भकः' । तत्र कमलासनं रक्तवर्णं चतुर्मुखं ब्रह्माणं हृदि ध्यायेत् । त्यागकाले 'रेचकः' । तत्र श्वेतं त्रिनेत्रं शिवं ललाटदेशे ध्यायेत् । त्रिष्वप्येतेषु प्रत्येकं त्रिर्मन्त्राभ्यासः । प्रत्येकमोङ्कारादि सप्त व्याहृतयः, ॐकारादि सावित्री, ॐकारद्वयमध्यस्थं शिरश्चेति मन्त्रः । तस्य स्वरूपम्-'ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ आपोज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ।। (तै० आ० प्र० १० आ० २७) ।

[ संस्कृत टीका ]

तत इति । ततः=रक्षाकरणानन्तरम् । ब्रह्म ऋषिरित्यत्र "ऋत्यक" (पा० सू०, ६।१।१२८) इति ह्रस्वसमुच्चित-प्रकृति-भावस्य प्रवृत्त्या ब्रह्मऋषिरित्यशुद्धं

---

पाठा० (१) क्वचित्पद्धतौ अग्निर्मुखमिति नास्ति । क्वचित्तु देवता प्राणायाम इत्येव पाठः ।

ज्ञातव्यम् । गायत्र्या विश्वामित्र इति । ''विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः'' इति प्राचीनवचनानुसारं विश्वामित्रशब्देन प्रजापतेरेव ग्रहणं भवति, यतः परमप्राचीन आदिम ऋषिरयमेव । अतः प्रजापतिरेव सप्तव्याहृतीनामृषिः मुनिभिर्निश्चितः । यथा च योगियाज्ञवल्क्यः-व्याहृतीनाञ्च सर्वासामार्षञ्चैव प्रजापतिः इति । यजुरिति ।''एतेन (यजुःशब्दोपादानेन) च्छन्दः संभवो नास्तीत्युक्तं भवति। यजुरिति यजुषश्छन्दस्त्वाभावो वीरेश्वरदशकर्मपद्धतौ टिप्पण्यां द्रष्टव्य इति नित्यकृत्यरत्नमालाटिप्पणी । यजुरिति यजुष्ट्वाच्छन्दो नास्तीत्यर्थ इति वीरमित्रोदयोऽपि ।

ॐ भूरिति । प्रकृत-प्राणायाममन्त्रान्तःपाति- गायत्रीमन्त्रव्याख्यामाह योगियाज्ञवल्क्यः-

**तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।**
**उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः ॥ १ ॥**

**सविता सर्वभूतानां सर्वभावान् प्रसूयते ।**
**सवनात्पावनाच्चैव सविता तेन चोच्यते ॥ २ ॥**

**दिव्यते क्रीडते यस्माद् द्योतते रोचते दिवि ।**
**तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥३॥**

**चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।**
**धर्मार्थकाममोक्षेषु बुद्धिवृत्तिः पुनःपुनः ॥४॥**

**भ्रस्ज पाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ ।**
**भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ ५ ॥**

**कालाग्निरूपमास्थाय सप्तर्चिः सप्तरश्मिभिः ।**
**भ्राजते यत्स्वरूपेण तस्माद् भर्गः स उच्यते ॥ ६ ॥**

**भेति भीषयते लोकान् रेति रञ्जयते प्रजाः ।**
**गेत्यागच्छत्यजस्रं यो भगवान् भर्ग उच्यते ॥ ७॥**

वरेण्यं वरणीयञ्च संसारभयभीरुभिः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभिः ॥ ८॥

जन्ममृत्युविनाशाय दुःखस्य विविधस्य च ।
ध्यानेन पुरुषो यस्तु द्रक्ष्यः स सूर्यमण्डले ॥ ९ ॥ इति

ब्राह्मणसर्वस्वे उक्ताधारेण विहितप्राणायाममन्त्रो व्याख्यातः । संक्षिप्त-व्याख्या यथा—

तं तस्य भर्गः तेजः । धीमहि=चिन्तयामः । अत्र यद्यपि तमिति पदं भर्ग-विशेषणं नास्ति तथापि य इति यच्छब्द-प्रयोगादेव तच्छब्द प्रयोगो लभ्यते, तथा च (योगियाज्ञवल्क्यः) तच्छब्देनेत्यादि । किन्तु तस्य सवितुः=सर्वभावानां प्रसवितुरित्यर्थः । तथा च (योगियाज्ञवल्क्यः) सविता सर्वभूतानामिति । पुनः किं भूतस्य देवस्य ? दीप्तिक्रीडादियुक्तस्य । तथा च (योगियाज्ञवल्क्यः) दीव्यते क्रीडते इति । पुनः किंविशिष्टं भर्गम् ? यो भर्गोऽस्माकं बुद्धिं योजयतीत्यर्थः । तथा च (योगियाज्ञवल्क्यः) चिन्तयामो वयमित्यादि । इह भर्गशब्देन बहुविधमाहात्म्ययुक्तः सवितुर्मण्डलगतादित्यदेवता स्वरूपः पुरुष उच्यते । तथा च (योगियाज्ञवल्क्यः) भ्रस्ज पाके भवेद्धातुरित्यादि, तथा भेति भासयते लोकानित्यादि । अतो यद्यपि सवितुर्भर्ग इति सवितृ-भर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते, तथापि परमार्थचिन्तादशायामादित्यभर्गयोर्भेदो न विद्यते, एवं य एव आदित्यः स एव भर्ग : स एव आदित्यः इति भर्गादित्ययोर-द्वैतमिति स्थितम् । पुनरपि किं भूतं भर्गम् ? वरेण्यम्-वरणीयम्=प्रार्थनीयम्-जन्ममृत्युदुःखादिनाशाय ध्यानेनोपासनीयमित्यर्थः । तथा च (योगियाज्ञवल्क्यः) वरेण्यं वरणीयञ्चेत्यादि । एवं गायत्र्या तस्य माहात्म्यमुपवर्ण्य पुनस्तस्यैव महाप्रभाववत्त्वं सप्तव्याहृतिभिः विशेषणभूताभिरभिधीयते । तद्यथा-किंभूतं भर्गम् भूरादिसप्तलोक-प्रकाशकम् । भूः=भूमिलोकः । भुवः=भुवर्लोकोऽन्तरिक्षम् । स्वः=स्वर्लोकः । महो=महर्लोकः । जनो = जनलोकः । तपः=तपोलोकः । सत्यम्=सत्यलोकः । एवमुपर्युपरि क्रमेणावस्थितान् सप्त लोकान्-

भिव्याप्यावतिष्ठमानोऽसौ भर्ग एतान् सप्त लोकानेव प्रदीपवत् प्रकाशयतीत्यर्थः । सप्त लोकाः पुनरेताः सप्तव्याहृतय एवेति याज्ञवल्क्य-वचनेन प्रतिपादिताः ।

अत्र 'क्षरत्यनोङ्कृतं ब्रह्म' इति प्रत्यवाय-परिहाराय प्रतिव्याहृति ओंकाराणां प्रयोगः । अथवा भूरादि सप्तलोकानां विशेषण[1] त्वेन ओंकाराः सप्तैते निर्दिष्टाः । ओंकारस्वरूपा एव ते सप्त लोका इत्यभिप्रायः ।

एवमुक्तप्रकारेण तस्यादिदेवतास्वरूपस्य भर्गस्य तथाविधं प्रभावमुपदर्श्य पुनरिदानीं तस्यैवोत्कर्ष-प्रतिपादनाय शिरोमन्त्रप्रयोजनमाह पुनरपि किं भूतो भर्गः ? ब्रह्मस्वरूपः । परमात्मस्वरूप इत्यर्थः । भर्ग एव परमात्मभूत इत्यभिप्रायः ।

किञ्च जल एवं निखिल त्रैलोक्यमिदमुत्पन्नम् । यदाह "अप एव ससर्जादौ तासु वीर्यमवासृजत्" इति । तत्र जगत्त्रय-जन्माधार भूतं जलमपि भर्ग एवेति दर्शयितुं भर्ग-विशेषणमाह-आप इति । जलस्वरूपोऽ पि स एव भर्ग इत्यर्थः।

पुनरपि किं विशिष्टोऽसौ ब्रह्मस्वरूपो भर्गः ? ज्योतिः=तेजः स्वरूपः । मर्णि-पाषाण-धातु-प्रभृतिषु स्थावरेषु च स एव भर्गस्तेजोरूपेण संस्थितः । तथाच (योगियाज्ञवल्क्यः) 'पाषाणमणिधातूनां तेजो रूपेण संस्थितः ।' पुनरपि कीदृशः ? स एव ब्रह्मस्वरूपोभर्गः तृणवृक्षौषधिषु च स एव रसरूपेण वसतीत्यर्थः । तथा च (योगियाज्ञवल्क्यः-) 'वृक्षौषधि-तृणानाञ्च रसरूपेण तिष्ठति' इति ।

अयमभिप्रायः-जङ्गमेषु देवताऽसुरनरोरगपशुपक्षिकीटादिषु तावदन्तरीश्वरः तथा ब्रह्मस्वरूपोऽसौ भर्गो विद्यत एव । य च स्थावराः पाषाणमणिधातु प्रभृतयस्तेषु मूर्त्या स एव भर्गः प्रतिवसति । येऽप्यपरे वृक्षौषधितृणाद्यः स्थावरास्तेष्वपि रसरूपतया स एव भर्गोऽवतिष्ठते । एवमखिलस्थावरजङ्गममेव तेन भर्गेणाऽभिव्याप्तमिति । न केवलमयं भर्गः परमार्थ-रूपतयैव जङ्गमेषु विद्यते, अपितु जङ्गमानाममृतनामा चित्तात्माऽपि स एव भर्गः इति दर्शयितुमाह । पुनः किं भूतोऽसौभर्गः ? अमृतनामा ज्योतिर्मयो यश्चित्तात्मा प्राणिनां

हृदये वसति सोऽपि भर्ग एवेत्यर्थः। तथाहि प्राणिनां हृदि सूर्यमण्डलमस्ति, सूर्यमण्डलमध्ये परमात्मा।

ब्रह्मविष्णु-रुद्रमूर्त्तितया सृष्टिस्थितिप्रलयानामेव कर्त्ता स भर्ग इति दर्शयितुं पुनर्भर्ग-विशेषणमाह-भूर्भुवः स्वरिति। एतद् व्याहृतित्रयं सत्त्वजस्तमोमय-ब्रह्म-विष्णुरुद्रात्मकम्। यदाह कौर्मे-

**पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः।**
**महाव्याहृतयस्तिस्रः सर्वासुरनिवर्हणाः॥१॥**
**प्रधानपुरुषः कालो ब्रह्मविष्णुमहेश्वराः।**
**सत्त्वं रजस्तमस्तिस्रः क्रमाद् व्याहृतयः स्मृताः॥२॥इति।**

(तदयमर्थः) सत्त्वरजस्तमोमयब्रह्मविष्णुरुद्ररूपश्च स एव भर्ग इति ब्रह्मविष्णु-महेश्वरमूर्त्तितया सृष्टिस्थितिप्रलयानेवासौ परब्रह्मात्मको भर्गः करोतीत्यभिप्रायः। इत्थं निखिलचराचरात्मकत्रैलोक्यमेव भर्गस्वरूप त्रैलोक्योत्पत्तिस्थानम्। त्रैलौक्य-पालयिता त्रैलोक्य-संहर्त्ता स एव भर्गः। ततो भर्गादन्यत्किमपि न सम्भवतीति परब्रह्मस्वरूपत्वं तस्य भर्गस्य प्रतिपादितमिति।

अत्र सर्वेषामोंकाराणां क्षरत्यनोंकृतं ब्रह्मेति प्रत्यवायपरिहाराय प्रयोगः।

अस्यास्तु सप्तव्याहृतियुक्तसशिरस्क गायत्र्या अयं वाक्यार्थः-तथाभूतो भर्गोऽस्मान् प्रेरयति। स एव जल-ज्योतीरसामृत-भूरादिलोकत्रयात्मक-सकलचराचर-स्वरूप-ब्रह्मविष्णु-महेश्वर-सूर्यादिनानादेवता। स एव परब्रह्म-स्वरूपो भूरादि सप्तलोकान् प्रदीपवत् प्रकाशयन् मदीयजीवात्मानं ज्योतीरूपं सप्तमं ब्रह्मलोकं ब्रह्मस्थानं नीत्वा स्वात्मन्यंव ब्रह्मणि ब्रह्मज्योतिषा सहैकीभावं करोत्विति चिन्तयन् प्राणायामजपं कुर्यादिति।

[हिन्दी टीका]

अनन्तर-'ओंकारस्य ब्रह्माऋषिः' से 'यजुःप्राणायामे विनियोगः' पर्यन्त चारों विनियोगान्त वाक्यों को पढ़ते हुए क्रमशः ऋष्यादि का स्मरण कर पद्मासन, स्वस्तिकासन या अर्धासनों में किसी भी आसन से (बैठे जाने वाले) आसन पर बैठकर आँख बन्द कर तथा मौनी हो निर्धारित 'ॐ भूः ॐ भुवः' इत्यादि मन्त्र से तीन बार प्राणायाम करे।

इसकी विधि इस प्रकार है–इस विधि-प्रसंग में याज्ञवल्क्य वचन है–

**अङ्गुष्ठेन पुरो धार्यं नासायाः दक्षिणं पुनः ।**
**कनिष्ठानामिकाभ्यान्तु वामं प्राणस्य संग्रहे ॥**
**पीडयेद् दक्षिणां नाडीमङ्गुष्ठेन तथोत्तराम् ॥**
**कनिष्ठानामिकाभ्याञ्च मध्यमां तर्जनीं त्यजेत् ॥ इति ।**

पहले दाहिने हाथ के अंगूठे से नासिका का दायां छिद्र बन्द कर के बाँये छिद्र से वायु को अन्दर खीचने के समय सम्पन्न प्राणायाम 'पूरक' नाम का होता है । उस समय नाभि देश में नीलकमल के समान श्यामवर्ण चतुर्भुज विष्णु का ध्यान करे ।

पूरक के पश्चात् अनामिका और कनीनिका अंगुलियों से नासिका के बाँये छिद्र को भी बन्द करके किया गया प्राणायाम 'कुम्भक' नाम का होता है । इस समय हृदय के बीच कमल के आसन पर विराजमान रक्तवर्णवाले चतुर्मुख ब्रह्म का ध्यान करे ।

इसके बाद अंगूठा हटाकर नासिका के दाहिने छिद्र से वायु को धीरे धीरे निकालते समय किया गया प्राणायाम 'रेचक' नाम का होता है । इस समय शुद्ध स्फटिक के समान श्वेतवर्णवाले त्रिनेत्रधारी भगवान् शङ्कर का ध्यान करे ।

उक्त तीनों प्राणायामों के समय प्र... तीन तीन बार मन्त्र का पाठ होना चाहिए । फलतः नौ बार मन्त्रपाठ होगा और मन्त्रपाठ तक प्राणवायु (श्वास) के आकर्षण, धारण और त्याग की क्रियाएँ क्रमशः मन्दगति से चलती रहें ।

ज्ञातव्य है कि सातों व्याहृतियों के प्रत्येक के आदि में ऊँकार लगाकर अनन्तर आदि में ओंकार सहित गायत्री मन्त्र तथा आदि एवम् अन्त में ऊँकार लगाकर शिरः 'आपो ज्योतिः' इत्यादि मन्त्र सहित का सम्मिलित (सङ्कलित) रूप में प्राणायाम का एक मन्त्र होगा । यथा–

ऊँ भूः ऊँ भुवः ऊँ स्वः ओम् महः ऊँ जनः ऊँ तपः ऊँ सत्यम् ऊँ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ऊँ आपोज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ (तै० आ० प्र० १० अ० २७) ।

इस मन्त्र का अर्थ योगियाज्ञवल्क्य के वचनो के आधार से ब्राह्मणसर्वस्व नाम के ग्रन्थ में हलायुध द्वारा की गई व्याख्या के अनुसार अति संक्षेप में यों है–

स्थावर जङ्गमरूप अखिल भुवन की सृष्टि करने वाले उन निरतिशय प्रकाशमय आदित्य (परमेश्वर) के भजने योग्य तेज (भर्ग) का हम ध्यान करते हैं जो कि हमारी

बुद्धियों को चतुर्वर्गदायक सत्कर्मों की ओर प्रेरित करता है और जो भूर्, भुवर्, (अन्तरिक्ष) स्वर्, (स्वर्ग) महर्, जन, तपः और सत्य नाम वाले क्रमशः ऊपर-ऊपर में विद्यमान सातो लोको में अभिव्याप्त तथा प्रदीप के जैसे प्रकाशन करनेवाला है, एवं जो आदित्य (सच्चिदानन्द) स्वरूप, जल रूप से जगत् का पालन करने वाला, अनन्ततेज का पुञ्जस्वरूप रसमय, अमृतमय और भूर्भुवःस्वःस्वरूप (त्रिभुवनात्मक) सत्त्वरजस्तमोरूप (त्रिगुणात्मक) या सृष्टिस्थिति-प्रलयकर्त्ता ब्रह्मविष्णुरुद्र-रूप (त्रिदेवात्मक) ब्रह्म है।

प्राणायाम के समय भावना ऐसी होनी चाहिए कि पूर्वोक्त विशिष्ट तेज मेरी जीवात्मा को ज्योति रूप तथा सत्य या ब्रह्मलोक में जो कि ब्रह्मस्थान है ले जाकर ब्रह्मस्वरूप अपनी आत्मा में ब्रह्म तेज के साथ एकीभाव कर दे।

यहाँ ज्ञातव्य हे कि वेदाध्ययन के आरम्भ तथा समाप्ति होने पर ओंकारों का उच्चारण इसलिए करना चाहिए कि मनु ( २।७८ ) वचनानुसार आरम्भ में ओंकार का उच्चारण न करने पर वेद धीरे नष्ट हो जाता है तो अन्त में उच्चारण न करने पर पढ़ा हुआ पाठ भूल जाता है। अतः उक्त मनु वचन के आधार से होने वाले प्रत्यवाय के परिहार के लिए प्रकृत मन्त्र में दशों ओंकारों का प्रयोग किया जाता है।

## [ मूलम् ]

ततः

**ऊँ सूर्य श्चमेति ब्रह्मऋषिः प्रकृतिश्छन्दः सूर्यो देवता अपामुपस्पर्शने विनियोगः। ऊँ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु। यत्किञ्चिद्दुरितं मयि इदमहं मापोऽमृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ( तै० आ० प्र० १० अ० २५ )**

इति प्रातराचामेत्।

## [ संस्कृत टीका ]

तत इति। ततः=प्राणायामानन्तरम्। सूर्यश्चेति। त्रैकालिकसन्ध्यायां प्राणायामानन्तरमाचरणीयाचमनस्य सूर्यश्चेत्यादित्रयोऽपि मन्त्रास्तैत्तिरीयारण्यक-

कृष्णयजुर्वेदयोः सन्ति । कृष्णयजुर्वेदीयसर्वानुक्रमसूत्रस्यानुपलब्ध्या कृष्णयजुर्वेदिनो द्विजा अपि शुक्लयजुर्वेदं ऋग्वेदं वा उपलब्धानां कृष्णयजुर्वेदीयमन्त्राणामृष्यादिनिर्णयं यजुः सूत्रानुक्रममृक्सर्वानुक्रमञ्चाधारीकृत्य विदधति । ये च मन्त्रा उक्तवेदयोरपि नोपलभ्यन्ते तेषामार्षवचनादाचाराद्वा कुर्वन्ति । फलतः प्रकृते वाजसनेयिगुरुणा योगिना मन्त्रान्वयस्थाप्यनभिहिततया आचारानुमेय-शास्त्रतः निबन्धकार-सम्मतत्वाच्च मूले निर्दिष्टा ऋष्यादयो ज्ञातव्याः । अतएवात्र श्रीदत्तनाम्ना प्रातःसायङ्कालिकाचमनसम्बद्धं विनियोगादिकं प्रदर्श्य अत्र पानव्यक्तिभेदेऽपि आचमनकर्मण ऐक्यान्न प्रतिजलपानं मन्त्रावृत्तिरिति, छन्दोगानान्तु आचमनमिदममन्त्रकमेवेति तु श्रीदत्त'' इति च वीरमित्रोदयोऽपि । मन्त्रार्थसङ्ग्रहेप्येवमेव ।

अत्र विनियोग-वाक्येषु 'अपामुपस्पर्शने' इति स्थाने सन्ध्याभेदेन क्रमशः प्रातराचमने मध्याह्नाचमने सायमाचमने अथवा आचमने इत्यादि पाठः आह्निक-कृत्यपुस्तकेषूपलभ्यते ।

अत्र ''यत्त्वत्र (रात्रिस्तदवलुम्पतु इत्यत्र) 'अहस्तदवलुम्पतु' इति गुण-विष्णुहलायुधयोः सम्मतः पाठः स तैत्तिरीयसंहितायामदृष्ट इत्युपेक्षितः सम्प्रदायिकैः'' इति, ''अत्र यत्किञ्चेति पाठः सोऽनादृतो मैथिलनिबन्धृभिर्मूल-पुस्तके तथा पाठादर्शनादि'' ति च नि० कृ० र. मा० । वस्तुतस्तु सायण-हलायुध-भाष्यादिभिरादृतत्वाद् 'यत्किञ्चिदि'त्येव समीचीनः पाठः ।

तैत्तिरीयारण्यके मध्याह्नसायं-प्रातःकालिकानामेषां मन्त्राणामध्यायक्रमेण विद्यमानतया व्याख्याऽपि तत्र तत्र तथैवास्ते । तथाप्यत्राह्निककृत्यानुसारं मूले उपात्तक्रमेणार्थाः प्रदर्श्यन्ते ।

सूर्यश्चमेति । मन्त्रस्यास्य हलायुधेन कृता व्याख्या यथा-

मा=माम् । रक्षन्ताम् । के ? सूर्यश्च । मन्युश्च=मन्युः-यज्ञः । मन्युपतयश्च=यज्ञपतयश्च-इन्द्रादयः । केभ्यो रक्षन्ताम् ? पापेभ्यः । किम्भूतेभ्यः? मन्युकृतेभ्यः=असाङ्गयज्ञकृतेभ्यः । मन्युः=क्रोधः । अत्र पक्षे क्रोध-पतयः=इन्द्रियाणि । क्रोधे कृतेभ्यः पापेभ्यः, क्रोधाद् रक्षन्तामिति किमुक्तं

भवति-ममैतादृशः क्रोधो मा भवतु, येनाहमकार्यं करोमीति । किञ्च यत्पापं रात्र्याऽकार्षम्=कृतवानस्मि । केन केन ? मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना । निगदव्याख्यातमेव । तत्पापम् (अहः दिवसः) प्रकृते रात्रिः । अवलुम्पतु - नाशयतु । यत्किञ्चिद् मयि-मदाश्रितं पापं तदिद मापः अहं सूर्ये जुहोमि किंभूते हृदयमध्यस्थिते प्रकाशरूप ज्योतिषि । ज्योतिषि पुनः किम्भूते ? अमृतयोनौ-मोक्षकारणे । स्वाहा-ततः सुहुतं भवतु । अत्र 'मन्यु यज्ञ' इत्यत्र-'मन्युःक्लेशे क्रतौ क्रुधी' त्यमरकोशः प्रमाणाम् । शिश्ना इति शिश्नेनेति प्राप्ते 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति इनादेशो न भवति । आप इति 'सर्वमापोमयं जगदि'ति दर्शनात् सकारान्तमापशब्दस्तथाऽयमिति ।

एवमेव छान्दोग्य-मन्त्रब्राह्मणभाग्ये गुणविष्णु भट्टैः, मन्त्रार्थदीपिकायां म. म. शत्रुघ्नशर्मभिश्च व्याख्यातम् । तथापि ''यत्किञ्चिन्मयि=मदाश्रितम्। दुरितम्=पापम् । तदिदमहम् । सूर्ये जुहोमि किंभूते ज्योतिषि=हृत्पद्म-मध्य-स्थित-प्रकाश-स्वरूपे परमात्मनि.........पानीयरूपेण तत्पापं जुहोमि । स्वाहा=सुहुतं भवत्वि''ति गुणविष्णुभाष्येण स्पष्टप्रतिपत्तिः ।

[ हिन्दी टीका ]

प्रणायाम के बाद प्रातःकाल हाथ में जल लेकर विनियोग तथा 'ऊँ सूर्यश्च मा मन्युश्च' इत्यादि मन्त्र पढ़कर तीन वार में सम्पन्न होने वाला एक आचमन (क्रिया) करें ।

[ऊपर से ज्ञातव्य है कि कितने ही आह्निक पुस्तकों में 'अपामुपस्पर्शने' के स्थान पर प्रातः कालिकसन्ध्या के लिए प्रातराचमने, मध्याह्नकालिक के लिए मध्याह्नाचमने एवं सायंकालिक के लिए सायमाचमने, अथवा सभी समय के लिए केवल 'आचमने' पाठ उपलब्ध होता है । साथ ही यह भी ज्ञातव्य है कि 'रात्रिस्तदवलुम्पतु' के स्थानपर 'अहस्तदवलुम्पतु' ऐसा पाठ देखा जाता है किन्तु तैत्तिरीय संहिता में ऐसा पाठ न देखे जाने के कारण लोगों ने इसे स्वीकारा नहीं । इसी तरह 'यत्किञ्चिद्' के स्थान पर यत्किञ्च' पाठ मानना भी मूल पुस्तक तथा भाष्यादि व्याख्या विरुद्ध है ।

ऊपर दिखाये गए मन्त्र भाष्य तथा आगे दिखाये जाने वाले सायं कालिक आचमन मन्त्र जो पूर्व मन्त्र के सूर्य, रात्र्या और रात्रि के स्थान पर 'अग्निः' 'अह्ना' और 'अहश्च' करने के अतिरिक्त एक समान हो जाता है के सायण एवं माधवाचार्य कृत भाष्य के अनुसार उक्त मन्त्र का अर्थ-

सूर्य, मन्यु (हलायुध व्याख्यानुसार यज्ञ या क्रोध किन्तु सायणभाष्यानुसार क्रोध के अभिमानी देवता), मन्युपति (हलायुध के अनुसार यज्ञपति=इन्द्र आदि, क्रोधपक्ष में क्रोधपति=इन्द्रिय, सायण के अनुसार क्रोधस्वामी=इनके नियामकदेव) ये सभी असाङ्ग सम्पन्न यज्ञ या क्रोधवश हुए पापों से मेरी रक्षा करें। अर्थात् उपार्जित पापों का विध्वंश कर होने वाले पापों से बचावें।]

रात में मैंने मन, वाणी, हाथ, पैर, उदर, और शिश्न (उपस्थ-लिङ्ग) इन्द्रिय से जो पाप किये हों उन्हें रात्रि या रात्रिकालाभिमानी देवता विनष्ट कर दें।

और जो कुछ भी पाप (पर हिंसा चिन्तन से होनेवाला मानस, अप्रिय तथा मिथ्या आदि भाषणजन्य वाचिक, अभिचार निमित्तक होम से उत्पन्न हस्तकृत, पैर से गाय ब्राह्मण आदि के स्पर्श आदि निमित्तक पादकृत, अभक्ष्य भक्षण जनित उदरकृत तथा अगम्या गमन जनित उपस्थकृत आदि सभी प्रकार का पाप) मुझ में वर्तमान है उसको और इसके कर्तृत्व का अभिमान रखने वाले अपने (लिङ्गशरीर) को मैं मोक्ष के कारण भूत स्वयं प्रकाश तथा बाधरहित - हृदय पद्ममध्यस्थित ज्योति स्वरूप सूर्य अथवा सायण के अनुसार एतादृश किसी सत्यात्मक वस्तु अथवा भट्टभास्कर तथा शत्रुघ्न मिश्र के अनुसार दिन के एतादृश अधिपति सूर्यदेव में हवन करता हूँ। अर्थात् हवन के द्वारा अपने समस्त पाप तथा अहंकार को भस्म करता हूँ। इसलिए अभिमन्त्रित इस जल को मेरे मुखाग्नि में भलीभाँति हवन हो जाय।

[मूलम्]

ॐ आपः पुनन्त्विति विष्णुर्ऋषिरनुष्टुप् छन्द आपो देवता अपामुपस्पर्शने विनियोगः।

ॐ आपः पुनन्तु पृथिवीं पृथ्वी[1] पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्।
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो सताञ्च प्रतिग्रह ँ स्वाहा।

[तै० आ० प्र० १० अ० २३] इति मध्याह्न आचामेत्।

[संस्कृत टीका]

ॐ आप इति। मध्याह्नकालिक-सन्ध्यावन्दन समये हस्ते जलं गृहीत्वा ॐ आपः पुनन्त्विति विष्णुर्ऋषिरित्यादिविनियोगवाक्येन ऋष्यादीन् स्मृत्वा ॐ आपः पुनन्तु पृथिवीमित्यादि मन्त्रं पठित्वा त्रिराचामेत्। मन्त्रार्थो यथा-

पाठ० (१) अत्र पृथ्वीतिस्थाने पृथिवीति पाठः प्रामादिक इति नि० कृ० र० मा०।

आपः । पृथिवीम् । पुनन्तु=पवित्रीकुर्वन्तु । पृथ्वी । पूता अद्भिःपूता सती। माम्=क्षेत्रज्ञम् । पुनातु । न केवलमापः पृथिवीम्पुनातु किन्तु, ब्रह्मणस्पतिम्= ज्ञानस्य पतिम् । पुनन्तु । यद्वा वेदस्याश्रयं परमात्मनमापि पुनन्तु । ब्रह्म । पूता-पूतं सन्, मां पुनातु । अत्र च पृथिवी शब्देन पार्थिवो देहो विवक्षितः । तत-श्च आपः पृथिवीं पुनन्तु, पृथिवीयं मदीयं पार्थिवं देहं पुनात्वित्यर्थः । तथाच देहपावनत्वद्वारा माम् आपः पुनन्तु इति फलितार्थः । कुत्र ? मम यदुच्छिष्टम्=अपावनम् । अभोज्यम् =निन्दितभोज्यम् । यद्वा यदपि दुश्चरितम् = अभद्राचरणम् । असताम् = अप्रतिग्राह्याणाम् । प्रतिग्रहश्च । तत्सर्वं तत्र सर्वत्र माम् आपः पुनन्त्वित्यर्थः । इत्थमाशास्य या आप आचाम्यन्ते, ताः स्वाहा=सुहुता भवन्तु । तथा च आपः आचमनेन मदीयदेहपावनपूर्वकमुच्छिष्टत्वादिरूपे पापे मां पावयन्तु इत्याशंसा वाक्यार्थः । अत्र पतिरिति सुपां सुपो भवन्तीति द्वितीयार्थे प्रथमा, ब्रह्मपूता इति पूतम्मिति प्राप्ते लिङ्गव्यत्ययेन स्त्रीलिङ्गता, सर्वमिति सप्तमी-स्थाने द्वितीया । इति मन्त्रार्थ दीपिका ।। १ टी० ।। एतद्भाष्य-लिखनेन हलायुधभाष्यमपि गतार्थम् ।।

अस्य पाठस्तु कृष्ण-यजुर्वेदीय-तैत्तिरीयारण्यके नारायणोपनिषदि १० प्रपाठके २३ अनुवाके ।

माध्याह्निक-सन्ध्याऽनुष्ठानेऽभिमन्त्रित-जलपानार्थं मन्त्रमाह आपः पुनन्त्विति । या आपः सन्ति ताः पृथिवीं, पुनन्तु=प्रक्षालनेन शोधयन्तु । साच पृथिवी पूता =शुद्धा सती । माम् । अनुष्ठातारम् । पुनातु=शोधयतु । तथा, ब्रह्मणो=वेदस्य । पतिः=पतिम्-प्रतिपालकमाचार्यम् । एता आपः पुनन्तु । तेनाचार्येणोपदिष्टं, ब्रह्म=वेद स्वरूपम् । पूता =स्वयं पूतं सन्, मां पुनातु । अन्यभुक्तावशिष्टरूपमुच्छिष्टं यदस्ति, यच्च, अभोज्यम् = भोक्तुमयोग्यम् । तादृशं कदाचिन्मया भुक्तम् । यद्वा दुश्चरितम् = अन्यदपि प्रतिषिद्धाचरणरूपम् मम, किञ्चित्सम्पन्नं तत्सर्वं परिहृत्येतिशेषः । ततो मामापः पुनन्तु । तथा असताम् = शूद्रादीनां प्रतिग्रहञ्च मया कृतं पुनन्तु । तदर्थमिदमभिमन्त्रितमुदकं, स्वाहा=मदीयवक्त्राग्नौ स्वाहुतमस्तु इति सायणाचार्यकृतभाष्यमिति च मन्त्रार्थसङ्ग्रह : ।

[ हिन्दी टीका ]

मध्याह्न-सन्ध्या-वन्दन के समय दाहिने हाथ में जल लेकर मूल में उल्लिखित विनियोगवाक्य तथा 'ॐ आपः पुनन्तु' से स्वाहा पर्यन्त का मन्त्र पढ़कर तीन बार आचमन करें।

मन्त्रार्थदीपिका, हलायुधभाष्य तथा सायणभाष्य के अनुसार मन्त्र का अर्थ निम्न प्रकार है :-

जल प्रक्षालन-प्रोक्षण आदि के द्वारा पृथिवी को पवित्र करें। पवित्र पृथिवी मुझे अनुष्ठाता क्षेत्रज्ञपुरुष को पवित्र करें। और ज्ञान वेद के पति (प्रतिपालक) आचार्य को पवित्र करें। अनन्तर उन आचार्य या परमात्मा से उपदिष्ट वेद स्वयं पूत हो मुझे पवित्र करें।

मैंने जो कभी किसी प्रकार उच्छिष्ट (अपवित्र या जूठन) या अभक्ष्य का भक्षण किया हो अथवा इनसे अन्य प्रतिषिद्ध आचरण किया हो तथा मेरे असाधुजनों से लिए गए दान रूप दोष आदि छुटकारा दिला कर मुझे यह जल पवित्र करे। अतः सभी दोषों के निवारण पूर्वक शुद्धि के लिए यह अभिमन्त्रित जल आचमन के द्वारा मेरे मुखाग्नि में भली भाँति आहुत हो जाय।

[ मूलम् ]

**ॐ अग्निश्चमेतिरुद्रऋषिः प्रकृतिश्छन्दोऽग्निर्देवता अपामुपस्पर्शने विनियोगः। ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु। यत्किञ्चिद्दुरितं मयि इदमहम्मामममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा॥ ( तै० आ० प्र० १० अ० २४ )**

इत्यनेन सायमाचामेत्।

[ संस्कृत टीका ]

ओमग्निश्चेति। सायङ्कालिकसन्ध्याऽनुष्ठानसमये दक्षिणहस्ते जलं नीत्वा मूलोक्तविनियोगवाक्यं मन्त्रञ्च पठित्वा त्रिराचामेदिति भावः। मन्त्रार्थो यथा—

सत्ये=ब्रह्मणि सूर्ये वा। अन्यत्सर्वं सूर्यश्चमेतिमन्त्रार्थवद्बोध्यमिति मन्त्रार्थदीपिका॥ टी०॥ १॥

अह्ना = दिवसेन यत्पापमकार्षं तद्रात्रिरवलुम्पतु। इदं जलं ज्योतिषि सत्ये = सत्यस्वरूपे जुहोमि। शेष उक्तार्थः। प्रातः सूर्यस्य दीप्यमानत्वात्

सायन्त्वग्नेर्भासमानत्वाद् यथायोग्यं सूर्याग्नी प्रार्थ्येते ।। इति छान्दोग्य-मन्त्रब्राह्मणभाष्ये गुणविष्णुना व्याख्यातम् ।। टी०।। २ ।।

योऽयमग्निरस्ति । यश्च मन्युः = क्रोधाभिमानी देवः । ये च मन्युपतयः = क्रोधस्वामिनः तन्नियामकाः देवाः सन्ति । ते सर्वेऽपि मन्युकृतेभ्यः = मदीय-कोपनिष्पादितेभ्यः पापेभ्यः । मा=माम् । रक्षन्ताम् = पापिनं मां तत्पापप्रक्षालनेन विनाशेन पालयन्तु । किञ्च अतीतेन अह्ना तस्मिन्नहनि यत्पापम् । अकार्षम् = कृतवानस्मि । केन साधनेन ? मन आदिभिः शिश्नान्तैरवयवैः । तत् = सर्वं पापम् । अहरवलुम्पतु = अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अप्रियाऽनृतादिभाषणं वाचिकम् । अभिचारहोमादिकं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन यत् किमपि दुरितं मयि निष्पन्नम् । इदं पापजातं सर्वं तत्कर्त्तारं माञ्च लिङ्गशरीररूपम् । अमृतयोनौ = मरणरहिते जगत्कारणे । सत्ये = बाधरहिते । ज्योतिषि=स्वयं प्रकाशे वस्तुनि । जुहोमि = प्रक्षिपामि । अहमनेन होमेन तत्सर्वं भस्मीकरोमीत्यर्थः । तदर्थमिदमभिमन्त्रितं जलम् । स्वाहा = मदीयवक्त्राग्नौ स्वाहुतमस्तु' इति सायणाचार्यकृतं भाष्यमि' ति मन्त्रार्थसंग्रहे ।

अस्मिन्नपि मन्त्रे 'अहस्तदवलुम्पत्वि'ति स्थाने 'रात्रिस्तदवलुम्पत्वि'ति गुणविष्णु-हलायुधयोः सम्मतः पाठः साम्प्रदायिकैरुपेक्षित एव मन्तव्यः ।

### [ हिन्दी टीका ]

अग्नि, मन्यु (हलायुध के अनुसार यज्ञ या क्रोध किन्तु सायण के अनुसार क्रोध के अभिमानी देवता), मन्युपति (हलायुध के अनुसार यज्ञपति-इन्द्र आदि, क्रोध पक्ष में क्रोधपति-इन्द्रिय, सायण के अनुसार क्रोधस्वामी- इन के नियामक देव) ये सभी सम्पादित असाङ्ग यज्ञ या क्रोधवश हुए पापों से मेरी रक्षा करें । अर्थात् उत्पन्न पापों को हटा कर होनेवाले पापों से बचावें ।

और जो कुछ भी पाप (परहिंसादिचिन्तन से होने वाला मानस, अप्रिय तथा मिथ्या आदि भाषण जन्य वाचिक, अभिचारनिमित्तक होम आदि से उत्पन्न हस्तकृत, अभक्ष्यभक्षणनिमित्तक उदरकृत तथा अगम्यागमन निमित्तक उपस्थकृत आदि सभी प्रकार का पाप) मुझ में वर्तमान है, इसे और इसके कर्त्तृत्व का अभिमान रखनेवाले अपने (लिङ्गशरीर) को मैं मोक्ष के कारण भूत स्वयंप्रकाश तथा बाधा

रहित-हृदयपद्ममध्यस्थित ज्योति स्वरूप सूर्य अथवा सायण के अनुसार एतादृश किसी सत्यात्मक वस्तु अथवा शत्रुघ्नमिश्र तथा भट्ट भास्कर के अनुसार दिन के एतादृश अधिपति सूर्यदेव में हवन करता हूँ। अर्थात् हवन के द्वारा अपने समस्तपाप और अहंकार को भस्म करता हूँ। इसलिए अभिमन्त्रित इस जल का मेरे मुखाग्नि में भलीभाँति हवन हो जाय। इति।

[ मूलम् ]

ततः ॐ आपो हिष्ठेत्यादित्र्यृचस्य सप्तभिः पदैः शिरसि, अष्टमेन भूमौ, नवमेनापि शिरसि कुशत्रयेण जलं क्षिपेत्। इदमेव मार्जनम्।

आपोहिष्ठेत्यादि-त्र्यृचस्य सिन्धुद्वीप ऋषिर्गायत्रीछन्द आपो देवता मार्जने विनियोगः।

**ॐ आपो हिष्ठा मयोभुवः। ॐ ता न ऊर्जे दधातन।**
**ॐ महेरणाय चक्षसे ॥ १ ॥**
**ॐ यो वः शिवतमो रसः। ॐ तस्य भाजयतेह नः।**
**ॐ उशतीरिव मातरः ॥ २ ॥**
**ॐ तस्मा अरङ्गमामवः। ॐ यस्य क्षयाय जिन्वथ।**
**ॐ आपो जनयथा च नः ॥ ३ ॥**[1]

[ संस्कृत टीका ]

ॐ आप इति। ॐ 'आपोहिष्ठे' त्यादि मन्त्रे तिस्रः ऋचो विद्यन्ते। तत्र प्रत्येकमृक् चरणत्रयात्मिकाऽस्ति। फलतः नव चरणानि सम्पद्यन्ते। एवञ्चादितः सप्तभिः पदैः (चरणैः) शिरसि, अष्टमेन चरणेन पृथिव्यां, नवमेनापि शिरसि कुशत्रयेण जलं क्षिपेत्। दक्षिणकरेण वामकरे जलं कृत्वा ऋष्यादिस्मरणपर्यन्तं दक्षिणहस्तेनाच्छाद्य मूलप्रदर्शिततत्तन्मन्त्रेण जलं प्रक्षिपेदिति भावः। इदमेव = शिरसि कुशत्रयेण जलक्षेपणमेव। मार्जनम्। 'कथ्यते' इति शेषः।

ऋष्यादिबोधकवचनं पूर्वमेव प्रदर्शितम्। एतन्मन्त्रार्थे महीधरकृतं भाष्यं यथा-

---

(१) यजुः अ० ११ मन्त्राः ५०, ५१, ५२।

हि शब्दः एवार्थः प्रसिद्ध्यर्थो यस्मादर्थो वा । हे आपः ! यूयमेव मयोभुवः = सुखस्य भावयित्र्यः । स्थ=भवथ । मयः = सुखं भावयन्ति = प्रापयन्ति, ताः मयोभुवः । तस्मात्करणान्मयोभुवः स्थेति वा । स्नानपानादिहेतुत्वेन सुखोत्पादकत्वमपां प्रसिद्धम् । तास्तादृश्यो यूयं नः = अस्मान् । ऊर्जे = रसाय-भवदीय-रसानुभवार्थं दधातन = स्थापयत । तप्तनप्तनथनाश्च इति पा० सूत्रेण लोटः मध्यम-पुरुष-बहुवचनस्य तनबादेशं दधातनेति रूपम् । यथा वयं सर्वस्य भोग्यस्य रसस्य भोक्तारो भवेम तथाऽस्मान् कुरुतेति भावः । किञ्च महे=महते । रणाय = रमणीयाय । चक्षसे = दर्शनाय च । अस्मान् दधातनेत्यनुवर्त्तते । महद् रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत—अस्मान् ब्रह्मसाक्षात्कारयोग्यान् कुरुतेति भावः । ऐहिक पारलौकिकसुखं ददतेत्यृचो भावः । मह पूजायाम् । मह्यते = पूज्यते इति मह् क्विप् प्रत्ययः । तस्मै महे । रण् शब्दे, रण्यते =स्तूयते सर्वैरिति रणम् । तस्मै = रणय । चष्टे = पश्यति सर्वं येन इति चक्षः । चक्षतेरसुन् प्रत्ययः । तस्मै-चक्षसे । यस्मिन् ज्ञाते विज्ञातं स्यादिति छान्दोग्यश्रुति : ।। १ ।।

हे आपः । वः = युष्माकम् । यः शिवतमः शान्ततमः सुखैकहेतू रसोऽस्ति । इहास्मिन् कर्मणि इहलोके वा स्थितान् नः = अस्मान् । तस्य = रसस्य । भाजयत =भागिनः कुरुत । तं रसं प्रापयतेति भावः । कर्मणि षष्ठी । तत्र दृष्टान्तः । उशती मातर इव । उशन्ति ता उशत्यः । वा छन्दसीति दीर्घः । वश कान्तौ इत्यस्माच्छतृ प्रत्ययान्तात् उगितश्चेति ङीप् । उशत्यः= कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयं स्तन्यरसं बालं पाययन्ति तद्वत् । ।। २ ।।

अलमिति प्राप्ते लकारस्य रेफश्छान्दसः । हे आपः । वः = युष्मत्सम्बन्धिनः शृतस्य पर्याप्तिम् । वयम् । गमाम = गच्छेम । पर्याप्तिर्नाम रसविषये वैतृष्ण्यं सदातृप्ति र्वा, तस्मै इति चतुर्थी षष्ठ्यर्थे । यस्य क्षयाय जिन्वथ । क्षयो निवासे इत्याद्युदात्तत्वात्क्षयशब्देन निवासस्य । क्षयायेति चतुर्थी षष्ठ्यर्थे । यस्येत्यनेन सामानाधिकरण्यात् । क्षयस्य-निवासस्य-जगतामाधारभूतस्य यस्याहुतिपरिणामभूतरसस्यैकदेशेन यूयं ब्रह्मादिस्तम्बपर्यन्तं जगत्, जिन्वथ=तर्पयथ । जिन्वतिः प्रीतिकर्मा । पञ्चाहुति-परिणामक्रमेणेति

भावः। किञ्च, हे आपः ? नः =अस्मान्, तत्र भोक्तृत्वेन, जनयथ = उत्पादयत। आशिषि लोट्। तद्रस भोक्तृनस्मान् कुरुतेत्याजानदेवत्वमाशास्यतं इति भावः। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः।

यद्वा अस्या ऋचोऽयमर्थः। यस्य क्षयाय = क्षयेण निवासेन। यूयम्। जिन्वथ= प्रीता भवथ। तस्मै = रसाय तद्रसाप्तये। वः = युष्मान्। रत्यर्थम्। वयं, गमाम = प्राप्नुमः। किञ्च, हे आपः। यूयं, नः = अस्मान्। जनयथ= प्रजोत्पादन समर्थान् कुरुथ। गच्छतेर्लुङि उत्तमबहुवचनेऽगमामेतिरूपम्। अडभाव आर्षः। बहुलं छन्दसीति शपो लुकि लोटि वा रूपम्॥ ३॥ इति

अत्र हलायुधेन कृता व्याख्या यथा–

"आपो हिष्ठेति। हे आपः! हि = यस्मात्। यूयम्। मयः = सुखम्। तस्य भवः = भावयित्र्यः। स्थ = भवथ। सुखदायित्र्यो भवथेत्यर्थ :। ताः = तस्मात्। नः = अस्मान्। ऊर्जे = अन्नाय। दधातन = स्थापयत। किञ्च महे = महते। रणाय = रमणीयाय। चक्षसे = दर्शनीयाय। दधातनेति पूर्वेणैव सम्बन्धः। अयं वाक्यार्थः–हे आपः, यस्माद् यूयं सुखं प्रापयथ, तस्मात्कारणा-दस्माच्चैहिकेनार्थेनामुष्मिकेन महारमणीयदर्शनेन परमब्रह्मणा संयोजयतेति अप्सु प्रार्थना। अत्र 'ष्ठा' इति कृतमूर्धन्यस्यास्तेर्लोडादेशः मध्यमपुरुष-बहुवचनान्तस्य प्रयोगः। दधातनेति दधातेर्लोटि मध्यमपुरुष–बहुवचनस्थाने 'तप्तनप्ते'ति तनबादेशः। 'ता' इति तच्छब्दान् ङसः "सुपां सुलुगि"ति सूत्रेण आतादेशः। महते इत्यस्य पदस्य छान्दसत्वात् अकारतकारयोर्लोपे सति 'महे' इति भवति। रमणीयायेत्यस्य मकारेकारयकाराणां लोपाद् रणायेति भवति। 'आपोहिष्ठा' इत्याकारः संहितायां पठ्यमानपदे इति पठ्यमानत्वान्न व्याकृतः।

यो वः शिवेति। हे आपः। वः = युष्माकम्। यो रसः = निर्यासः। किम्भूतः ? शिवतमः = अत्यन्तकल्याणरूपः। तस्य = रसस्य। इह। नः = अस्मान् भाजयत = भागिनः कुरुत। तेन रसेन अस्मान् सम्बद्धान् कुरुतेत्यर्थः। किम्भूताः यूयम् आपः ? उशतीः = इच्छन्त्यः। मातरइव। इच्छायुक्ता मातृसमा इत्यर्थः। अयं वाक्यार्थः – हे आपः, यथा सस्नेहाः मातरः पुत्रान्

कल्याणयुक्तान् कुर्वन्ति तथा यूयमपि कल्याणात्मकेन युष्मदीयरसेन अस्मान् सम्बद्धान् कुरुतेत्यप्सु प्रार्थना ।

उशतीरिति वश कान्तावित्यस्य प्रथमाबहुवचने रूपम् । 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् । ङीप् । 'वा छन्दसी' ति विकल्पेन पूर्वसवर्णादेश निषेधात् पक्षे पूर्वसवर्णदीर्घत्वम् ।। २ ।।

तस्मा अरमिति । हे आपः । वः = युष्माकम् । तस्मै = तस्मिन् रसे । अरम् = अलं -पर्याप्तिम् । गमाम = गच्छाम । तत्र रसविषये तृप्तिं गच्छाम इत्यर्थः । किञ्च तद् रसविषये, नः= अस्मान् यूयं जनयथ च = तद्रसभोक्तृत्वेन अस्मान् यूयं परिकल्पयथेत्यर्थः । तस्य कस्य ? यस्य रसस्य, क्षयाय = क्षयस्य स्थानस्य – ब्रह्मादिस्तम्बपर्यन्तजगतः । जिन्वथ = प्रीणयथ । यस्य रसस्य ब्रह्मादि-स्तम्बपर्यन्तं स्थानं यूयं प्रीणयथेत्यर्थः ।

अयं वाक्यार्थः–हे आपः । वः = युष्माकं ब्रह्मादिस्तम्बपर्यन्तं स्थानं यूयं प्रीणयथ, तस्य रसस्य विषये वयं तृप्तिं गच्छामः, यूयं तद्रसभोक्तृत्वमस्माकं परिकल्पयथ इत्यप्सु प्रार्थना । तस्मै क्षयाय इत्युभयत्रापि 'सुपां सुपो भवन्ती'ति सप्तमी-स्थाने चतुर्थी । जिन्वथेति । जिवि प्रीणनार्थः । तस्य लोट् मध्यमपुरुष- बहुवचनान्तस्य रूपम् ।

अथवा, हे आपः, वः = युष्माकम् । यस्य = रसस्य । किम्भूतस्य ? क्षयस्य–स्थानस्य - ब्रह्मादिस्तम्बपर्यन्तस्य जगदाधारभूतस्य । जिन्वथ = प्रीणयथ । तस्मै = रसाय । वयम् । अरम् = शीघ्रम् । गच्छामः । ततश्च नः =अस्मान् । ततो, नः = अस्माकम् । गूयं जनयथ= अस्माकं तं रसं यूयञ्च परिकल्पयथेत्यर्थः । इति

अत्रैव "किञ्च हे आपः, नः = अस्मान् जनयथ च = पुत्रपौत्रादिजनेन प्रयोजयतेत्यर्थ" इति तु सायणाचार्यकृतभाष्यञ्च ।

[ हिन्दी टीका ]

हे जल, तुम निश्चय ही जिस कारण स्नानपान आदिके द्वारा सुख देनेवाले हो, अतः जिस प्रकार हम सभी भोग्यरस के भोक्ता बनें, वैसा, हमें कर दो । अर्थात् ऐहिक सुख-साधन अन्न आदि से सम्पन्न बदो । परलोक के साधन (म० भा० अनुसार)

ब्रह्मसाक्षात्कार के योग्य हमें कर दो या (सा० भा० अ०) अत्यन्त रमणीय सम्यक् ज्ञान के योग्य या (ह० मा० आ०) पर ब्रह्म के साथ संयोजित कर दो। सारांश में ऐहिक तथा पारलौकिक सुख दो । यह प्रथम ऋचा का अर्थ हुआ।

हे जल ! जिस प्रकार पुत्र का कल्याण (पुष्टि) चाहने वाली माताएँ स्तनों का दुग्ध पान कराती हैं, उसी प्रकार तुम्हारा जो परम कल्याणमय रस है उसके भागी–उससे सम्बद्ध हमें बनाओ ॥ २ ॥

हे जल ! जगत् के जीवनाधारभूत जिस रस के अंश से तुम ब्रह्मादिस्तम्बपर्यन्त समस्त विश्व को तृप्त करते हो उस रस के भोक्ता हमें बनाओं तथा हम उस रस से पूर्णतया तृप्ति पावें। हे जल ! (म० मा० अ०) हमें सन्ततिउत्पादन में समर्थ या (सा० भा० अ०) पुत्र पौत्रादिजन से संयुक्त बनाओ ॥ ३ ॥

[ मूलम् ]

ततः करेण जलमादाय वारत्रयं द्रुपदां पठित्वा तज्जलं शिरसि प्रक्षिपेत् ।

द्रुपदादिवेति कोकिलो राजपुत्र ऋषिरनुष्टुप् छन्द आपो देवता सौत्रामण्यवभृथे विनियोगः ।

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।

पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः[१] ॥ १ ॥ इति

[ संस्कृत टीका ]

ततः करेणेति । ततः = आपोहिष्ठेत्यादि तिसृभिर्ऋग्भिर्मार्जनानन्तरम् । करेण जलमादाय = दक्षिणकरेण वामकरे पूर्ववज्जलं संस्थाप्य आच्छाद्येत्यर्थः । वरत्रयम् = त्रिः । द्रुपदाम् = अनुपदमेव प्रदर्श्यमानां द्रुपदाऋचं पठित्वा । तज्जलम् =अभिमन्त्रितं वामकरस्थितं जलम् । शिरसि प्रक्षिपेत् = कुशत्रयेण, कुशाभावे दक्षिणकरदेवतीर्थेन वा मार्जयेदिति भावः । अथ मन्त्रार्थः–

आपो जलानि । एनसः = पापात् । मा= माम् । शुन्धन्तु = पापात् पृथक्कुर्वन्तु । तत्र दृष्टान्तत्रयमाह –द्रुपदादिवेति । "पलाशी द्रुद्रुमागमाः" इत्यभिधानोक्तेः द्रुस्तरुः, तन्मयं पदं पादुका (द्रुममयः पदः द्रुपदः पादुका

(१) यजुः अ० २, मं० २०।

उच्यते इति तु उवटभाष्म्) तस्मान् मुमुचानः = पृथक्भवन् -यथा पादुकादोषैरसम्बद्धो भवति। मुचं विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद्द्वित्वे मुमुचान इति रूपम्। तथा च स्विन्नः = स्वेदयुक्तः स्नातस्सन्, मलात्पृथक् भवति। आज्यमिव। यथा पवित्रेण-कम्बलमयेन घृतम् = गलितम्। आज्यम् = घृतं, कीटेभ्यः पृथग्भवति तथाऽऽपः शुन्धन्तु-इति महीधरभाष्यम्।

अस्यैव ब्राह्मणसर्वस्वे हलायुधेन कृता व्याख्या यथा-"आपो = जलानि माम्। एनसः = पापात्। शुन्धन्तु = शोधयन्तु-पवित्रीकुर्वन्तु। अत्र दृष्टान्तमाह-यथा, स्विन्नः = घर्मोपहतः पुरुषः। द्रुपदात् = वृक्षमूलात्-वृक्षमूलं प्राप्य। मुमुचानः = त्यक्तवान्। किं त्यक्तवान्? अर्थवशात् स्वेदमेव त्यक्तवान्, तथा माम् आपः एनसः शुद्धन्तु। द्वितीयं दृष्टान्तमाह। यथा स्नातः पुरुषः मलात् = कायमलाच्छुद्धो भवति तथा आपः, एनसः पापात्, मां शोधयन्तु। तृतीयं दृष्टान्तमाह। यथा आज्यम् = घृतम्। पवित्रेण = प्रादेशपरिमित-साग्रकुशपत्रद्वयेन उत्पवनेन पूतं भवति, तथा माम् आपः पवित्रीकुर्वन्तु। द्रुपदं वृक्षमूलम्। ल्यब्लोपे पञ्चमी वक्तव्येति पञ्चमी। मुमुचान इति मुच्लृ मोक्षणे इत्यस्य लिटः कानज् वेति कानचो रूपम्। शुन्धन्त्विति। शुन्ध शुद्धावित्यस्य धातोः रूपम्। तदयमस्य मन्त्रस्य वाक्यार्थः-यथा घर्मोपहतस्य वृक्षच्छायाऽऽश्रयणाद्घर्मापगमो भवति, यथा वा स्नानाद्देहमलापगमः स्यात् यथा वा पवित्रेणाज्यं पवित्रीक्रियते, तथा आपः मां पवित्रीकुर्वन्तु इति।"

## [हिन्दी टीका]

आपोहिष्ठा इत्यादि मन्त्र से मार्जन के बाद पूर्ववत् दहिने हाथ से वायें हाथ में जल रखकर और उसे दाहिने हाथ से ढक कर विनियोग वाक्य के साथ तीन बार द्रुपदा ऋचा पढ़कर अभिमन्त्रित उस जल से कुश या कुश के अभाव में दाहिने हाथ के देवतीर्थ के द्वारा तीन बार शिर पर जल का प्रक्षेप (मार्जन) करे। मन्त्र का अर्थ -

जैसे (म० भा० अं०) पादुका से अलग होता हुआ मनुष्य पादुका के दोषों से मुक्त हो जाता है, या (ह० भा० अ०) पसीने से भीगा हुआ मनुष्य वृक्ष की छाया पाकर पसीने से मुक्त हो जाता है, (मूलमन्त्र के द्वितीय दृष्टान्त के अनुसार) अथवा जिस प्रकार वह पसीने से भीगा हुआ प्राणी स्नान करने के बाद शरीर के मैल से रहित हो जाता है (तृतीय दृष्टान्त के अनुसार) अथवा जैसे कम्बल या पवित्रक आदि से घी

शुद्ध हो जाता है उसी प्रकार जल मुझे पापों से शुद्ध करे अर्थात् मुझे सर्वथा पाप रहित बना दे ।

[ मूलम् ]

ततः करस्थं जलं नासायां संयोज्य आयतासुरनायतासुर्वा त्रिः सकृद्वाऽघमर्षणं जपेत्—

**अघमर्षणसूक्तस्याघमर्षण ऋषिरनुष्टुप्छन्दो भाववृत्तो देवता अश्वमेधावभृथे विनियोगः । ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत । ततः समुद्रो अर्णवः । समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥**[1]

[ संस्कृत टीका ]

तत इति । तदनन्तरम् । करस्थं जलम् = दक्षिणकरेण जलमादाय । नासायाम् = नासिकायाम् । संयोज्य = संयुक्तं कृत्वा । आयतासुः = निरुद्धप्राणवायुः । सकृत् = एकवारम् । अघमर्षणम्=विनियोगवाक्यसहितमघमर्षणमन्त्रम् । जपेत् = पठेत् । मन्त्रपाठसमये भावनैवं विधेया यत् जलमिदं नासिकाया दक्षिणच्छिद्रेणान्तः प्रविश्य आन्तरिकपापान् वामेन छिद्रेण बहिर्निष्काषयति । मन्त्रपाठ-समाप्त्यनन्तरं तज्जलमपश्यन्नेव स्ववामभागे प्रक्षिपेत् । अर्थाद् वामभागे शिलायाः भावनां कृत्वा तदुपरि पाप्मानं निपात्य विनाशकरणबुद्धिरास्थेया) । मन्त्रार्थः सन्ध्याप्रयोगस्यादावेव प्रदर्शितः ।

[ हिन्दी टीका ]

फिर दाहिने हाथ में लेकर नासिका में लगावे और श्वास रोके रहने पर एक बार अन्यथा (श्वास न रुके रहने पर) एक बार के विनियोगवाक्य सहित अघमर्षणमन्त्र तीन बार पढ़े ।

---

१. ऋ० अ० ८ अ० ८ व० ४८ ।

(पढ़ते समय यह भावना रखे कि यह जल नासिका के दायें छिद्र से भीतर घुसकर आन्तरिक पापों को बाँये छिद्रसे बाहर निकाल रहा है। फिर उस जल को न देखता हुआ अपनी बायीं ओर फेंक दे। अर्थात् वाम भाग में शिला की भावना करके उस पर पाप को पटक कर नष्ट कर देने की भावना करे।)

इस अघमर्षण मन्त्र का अर्थ सन्धाप्रयोग प्रकरण के आदि में ही आ गया है।

[ मूलम् ]

ततः

**अन्तश्चरसीति तिरश्चीन ऋषिरनुष्टुपूछन्द आपो देवता आचमने विनियोगः।**

**ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।**
**त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम्[१] ॥ १ ॥**

[ संस्कृत टीका ]

ततः अन्तेति। ततः = अघमर्षणमन्त्रपाठानन्तरम्। "अन्तश्चरसी"– त्यादिमन्त्रः तैत्तिरीयारण्यके पठितःकात्यायन-परिशिष्टसूत्ररूपेण वा पठितोऽस्ति। अस्य ऋष्यादिविषये नेदानीमुपलभ्यते वचनम्; तथापि प्रायः सर्वत्राह्निकपुस्तकेषु मन्त्रस्यास्य तिरश्चीन ऋषिरनुष्टुप्छन्द आपो देवता आचमने विनियोगश्चोपलभ्यते। लक्षणानुसारमनुष्टुप् छन्दः सम्यगेव। मन्त्रार्थदृष्ट्या देवता परमात्मा आपो वा सन्तीति स्फुटीजायते। ऋष्यन्तरविषयक-प्रमाणानुपलब्धौ प्राचीनमान्यतानुसारं तिरश्चीन ऋषिरेव निर्णेतव्यो मन्तव्यश्च।

आचमने विनियोग इति। कतिपयाह्निकपुस्तकेषु आचमने विनियोग इत्यत्र अपामुपस्पर्शने विनियोग इत्यपि पाठ उपलभ्यते। परमार्थे भेदाभावादेकार्थक एव उभयविधः पाठः।

आचामेदिति। दक्षिणहस्तेन जलमादाय विनियोगसहितमन्तश्चरसीति मन्त्रं पठित्वा अभिमन्त्रित-जलेन त्रिराचामेदिति भावः। मन्त्रार्थो यथा–

भूतेषु देवमनुष्यगन्धर्वादिशरीरयुक्तेषु प्राणिषु। गुहायाम् = बुद्धौ। अन्तः = मध्ये। ओम् = प्रणवप्रतिपाद्यपरमात्मा वा। चरसि। हे परमात्मन्। यः =

(१) इति तैत्तिरीयारण्यकं कात्यायन-परिशिष्ट-सूत्रं वा।

यज्ञः ज्योतिष्टोमादिः, स त्वमेव । योऽपि वषट्कारः = हविःप्रदानमन्त्रः, याश्च विश्वतो मुखाः = विश्वस्मिन् मुखम् = संसरणम् यासाम् ताः आपः । छान्दसत्वात् ह्रस्वः । विश्वतोमुखा इत्यर्थः । यश्च[1] ज्योतिः, यश्चः रसः, यदमृतं, तत्सर्वं त्वमेवेत्यर्थः । इति तैत्तिरीयारण्यके सायणाचार्यकृतं भाष्यम् ।

अत्रैव शत्रुघ्नमिश्रकृता मन्त्रार्थ-दीपिका-''हे आपः । त्वं भूतेषु, अन्तश्चरसि = चरथ । विश्वतोमुखः = विश्वस्मिन् मुखं = संसरणम् यासाम् ताः विश्वतोमुखा इत्यर्थः । त्वं यज्ञस्त्वमेव यज्ञ एव, त्वं वषट्कारः, त्वं ज्योतिः, रसः, अमृतञ्च त्वमेवेत्यर्थ'' इति ।

## [ हिन्दी टीका ]

अघमर्षण मन्त्रपाठ के बाद दाहिने हाथ में जल लेकर विनियोग सहित ''ओं अन्तश्चरसि'' इत्यादि मन्त्र पढ़कर अभिमन्त्रित उस जल से तीन बार आचमन करे ।

कितनों ही आह्निक पुस्तकों में ''अपामुपस्पर्शने विनियोग'' ऐसा भी पाठ उपलब्ध होता है जो एकार्थक होने से ठीक ही है । मन्त्र का अर्थ-

हे जल रूप परमात्मन्, तुम सकल प्राणियों की बुद्धियों के भीतर संचरण करते हो, तुम्हारा सब ओर मुख है । तुम्हीं ज्योतिष्टोम आदि यज्ञ हो, तुम्हीं वषट्कार (हविष्य प्रदान करनेवाले मन्त्र) हो और तुम्हीं जल, ज्योति, अग्नि या सूर्य या जल प्रकाश रस तथा अमृत रूप हो ।

## [ मूलम् ]

तत उत्थाय ऊँ भूर्भूवः स्वरिति गायत्र्या च पुष्पमिश्रं जलं सूर्याभिमुखः प्रक्षिपेत् ।

## [ संस्कृत टीका ]

तत उत्थायेति । ततः = ओमन्तश्चचरसीतिमन्त्रपाठपूर्वकमाचमनोत्तरम् । जलम् = मध्याह्नसन्ध्यासमये पुष्पमिश्रितं जलं, प्रातः सायं सन्ध्यासमये तु केवलं जलमेव सूर्याभिमुखो भूत्वा सूर्यायार्घ्यं दद्यादिति भावः । परमत्र

**मध्याह्ने तु सकृच्चैव क्षेपणीयं द्विजातिभिः ।**
**प्रातः प्रह्वः क्षिपेदप्सु मध्याह्ने ऋजुसंस्थितः ॥**
**अर्घ्यप्रक्षेपणं कुर्यात् सायं तूपविशन् भुवि ॥**

**जले त्वर्घ्यं प्रदातव्यं जलाभावे तु तत्स्थले ।**
**सम्प्रपेक्ष्य वारिणा सम्यक् पश्चादर्घ्यं यथाविधि ॥**

इति तैत्तिरीय-सन्ध्याभाष्य-(पूना) वचनानुसारं विशेषो बोध्यः।

**[हिन्दी टीका]**

'ओं अन्तश्चरसि' इत्यादि मन्त्र से आचमन के बाद उठ कर प्रणव व्याहृति (ओं भूर्भुवः स्वः) के साथ गायत्री मन्त्र पढ़ कर सूर्याभिमुख हो मध्याह्न सन्ध्या के समय पुष्पमिश्रित जल से किन्तु प्रातः एवं सायं सन्ध्या के समय केवल जलसे अर्घ्यदान करे।

पूना से प्रकाशित तैत्तरीय सन्ध्याभाष्योद्धृत वचनों के अनुसार विशेषता ज्ञातव्य है कि मध्याह्न कालमें खड़ा होकर केवल एक बार, प्रातः काल में नम्र (मस्तक झुकाकर) और सायंकाल में बैठकर ही तीन-तीन बार अर्घ्यदान करे। संभव हो तो जल में अन्यथा स्थल को भली भाँति धोकर वहाँ जल गिरावे। सायं काल में जल में अर्घ्यजल गिराने से रौरव नरक की प्राप्ति बतलाई जाने के कारण स्थल पर ही गिरावें। अर्घ्यदान के समय सटे हुए दोनों हाथ खुले रखें। तर्जनी से अंगूठे को सटने न दें।

**[मूलम्]**

ततो भूम्यलग्नगुल्फतलभागो वा भूमिलग्नैकचरणो वा भूमिलग्नार्ध-चरणो वा प्रातः सायञ्च कृताञ्जलिः मध्याह्ने ऊर्ध्ववाहुः सूर्यं ध्यायन्नुपतिष्ठेदेभिर्मन्त्रैः-

(अ) उद्वयमित्यस्य हिरण्यस्तूप ऋषिरनुष्टुप् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥

**ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरूत्तमम् ॥ १ ॥**[१]

(आ) उदुत्यमित्यस्य प्रस्कण्व ऋषि गायत्रीछन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः।

**ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः ।**
**दृशे विश्वाय सूर्यम् ॥ २ ॥**[२]

---

(१) यजुः अ० २० । मं २१; ऋ० सं० अष्ट० १ अ० ४ व० ८ ;
(२) ऋ० स० अष्ट १ अ० ४ वा० ७; यजु० अ० ७ मं ४१ ;

(इ) चित्रमित्यस्य कौत्स ऋषिस्त्रिष्टुप् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥

**ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आप्रा द्यावापृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्थुषश्च ॥ ३ ॥**[1]

(ई) तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिरक्षरातीतपुरउष्णिक् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं, जीवेम शरदः शत ँ शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं, भूयश्च शरदः शतात् ॥ ४ ॥**[2]

**[ संस्कृत टीका ]**

ततो भूम्येति । ततः=उत्थाय सूर्यायार्घ्यदानान्तरम्, उत्थितो भूत्वेत्यर्थः । भूम्यलग्न-गुल्फ-तलभागः=पृथिव्यसम्पृक्त-घुटिका-तल-भागः । भूमिलग्नैकचरणः=पृथिवीस्थितैकमात्रचरणः । भूमिलग्नार्धचरणो वा=भूमिष्ठैक-चरणार्धमात्रो वा । प्रातः सायञ्च=प्रातः सन्ध्यावन्दन-समये, सायं सन्ध्यावन्दन-समये च । ऊर्ध्वबाहुः=उपरिकृतबाहुद्वयः । सूर्यं ध्यायन्=सूर्यदेवं चिन्तयन् उपतिष्ठेत् = सूर्यस्योपस्थानं कुर्यात् ।

एतेषाम् सूर्योपस्थानमन्त्राणाम् ऋष्यादिकमाहकात्यायनः-

**उदुत्यं जातवेदेति ऋषिः प्रस्कण्व उच्यते ।**
**छन्दो गायत्रमेवास्य सूर्यो दैवतमेव च ॥**
**अग्निष्टोम उपस्थाने विनियोगः प्रकीर्त्तितः ।**
**चित्रन्देवेति मन्त्रस्य ऋषिः कौत्स उदाहृतः ॥**
**त्रिष्टुप् छन्दो दैवतञ्च सूर्यस्तु परिकीर्त्तितः ।**
**अग्निष्टोम उपस्थाने विनियोगस्तथैव च ॥**

(१) ऋ० सं० अष्ट १ अ० ८ व० ७ अनु० १६ सू० ११५ ; यजुः अ० ७ मं० ४२ ।

(२) ऋ० सं० अष्ट० ५ अ० ११ मं० ७ अ० ४) (यजुः अ० ३६ मं० २४)

उद्वयमित्यस्य हिरण्यस्तूप ऋषिः, अनुष्टुप्छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः। तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिरक्षरातीतपुर उष्णिक् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोग'' इति,

कात्यायनानामुद्वयमुदुत्यं चित्रं तच्चक्षुरिति मन्त्रचतुष्टयेन सन्ध्यात्रयेऽप्युपस्थानं, पूर्वोदाहृतं (सूर्यमुदीक्षेतोद्वयमुदुत्यं चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्त्या, इति) कात्यायनवचनादिति च वीरमित्रोदयः। अनुष्टुप् छन्द इति। ननु द्वात्रिंशदक्षरच्छन्दोऽनुष्टुप्। तथा च पिङ्गलसूत्रम्-''अनुष्टुब्गायत्रैरि''-ति। गायत्रैरष्टाक्षरैः पदैश्चतुष्पाच्छन्दोऽनुष्टुबिति तदर्थः। न ह्यत्र मन्त्रे तथा, अक्षरद्वयस्य न्यूनत्वादिति चेत्सत्यम्-''इयादिःपूरणे'' इति पिङ्गलसूत्रानुसारेण ''सुवः पश्यन्त'' इति ''सूरियमि'' ति पाठस्य कल्पनेनच्छन्दःपूर्तेः। सूत्रार्थस्तु-यत्रच्छन्दसि पादस्याक्षरसंख्या न पूर्यते तत्र इय उव इत्येवमादिभिः पूरयितव्येति। यथा ''तत्सवितुर्वरेणियम्'', ''दिवङ्गच्छ सुवःपते'' इत्यादिः। निरङ्कुशा महाकवयऽस्तु लोकेप्येवं प्रयुञ्जते। यथा कुमारसम्भवे ''त्रियम्बकं संयमिनं ददर्शे'' ति। तथाचेयङादिप्रकरणे पा० सूत्रे 'वार्त्तिकम्- 'तन्वादीनां च्छन्दसि बहुलम्' इति। एवमग्रिममन्त्रेऽपि 'सूरियम्' इति पाठ्यम्'' इति। दध्यङ्ङार्थवण इति। ऋचंव्वाचमिति पञ्चाध्यायी अथर्वपुत्रेण दधीचा दृष्टा-''दध्यङ् ह वा आथर्वण एत ॐ शुक्रमेतय्यँज्ञं व्विदञ्चकार-'' इतिश्रुतेः। तेनास्य मन्त्रस्य दध्याङ्ङाथर्वण ऋषिः। दध्यञ्चतीति दध्यङ्। अत्र तच्चक्षुःपुरउष्णिक् सौरी'ति सर्वानुक्रमणी। तत्र ''पुर उष्णिक् पुरत'' इति पिङ्गलोक्तं 'द्वादशकआद्यश्चेत्पुरउष्णिगि'ति कात्यायनोक्तञ्च लक्षणं न घटतेऽत एवाक्षरातीतत्वं विशेषयन्ति साम्प्रदायिका'' इति च नि० कृ० र० मा०।

## [ हिन्दी टीका ]

आसन से उठकर सूर्य नारायण को अर्घ देने के वाद उठा ही रहकर सूर्य के सामने दोनों पैरों की एँड़ी (पिछला भाग) उठा हुआ अर्थात् केवल दोनों पञ्जो के बल पर खड़ा हो या एक पैर उठा कर दूसरे पैर से भूमिस्थित हो या एक पैर उठाकर दूसरे पैर के भी पञ्जे के बल ही खड़ा हो (यहाँ शक्त्यनुसार आचरणीय अधम, मध्यम तथा

उत्तम कल्प क्रमशः दिखाये गए हैं (सायंकाल तथा प्रातः काल सन्ध्यावन्दन के समय ऊर्ध्वबाहु (दोनो बाहें ऊपर उठाकर) हो सूर्य देव का ध्यान करता हुआ मूल में दिखाये गए विनियोगवाक्य सहित (१) उद्वयम्, (२) उदुत्यम्, (३) चित्रम्, तथा (४) तच्चक्षुः इन चारों ऋचाओं से उपस्थान (स्तुति, प्रार्थना) करे।

उक्त चारों मन्त्रों के संस्कृत भाष्य सहित हिन्दी भावार्थ आगे दिए जा रहे हैं।

मन्त्रस्यास्य ऋक्संहितायां सायणभाष्यम् यथा–वयमनुष्ठातारः। तमसस्परि= तमस उपरि रात्रेरूर्ध्वं वर्तमानम्, तमसः-पापात्, परि-उपरि वर्तमानं वा। पाप-रहितमित्यर्थः। तथाम्नायते-"उद्वयन्तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्ती" ति। ज्योतिः=तेजस्विनम्। उत्तरम् = उद्गततरम् उत्कृष्टतरं वा। देवत्रा=देवेषु मध्ये। देवम् = दानादिगुणयुक्तं सूर्यम्। पश्यन्तः= स्तुतिभिर्हविर्भिश्च उपासीनाः सन्तः उत्तमम्= उत्कृष्टतमम्। ज्योतिः= सूर्यरूपम्। अगन्म=प्राप्नुवाम। तथा च श्रूयते-"अगन्म ज्योतिरुत्तममित्याह असौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छती" ति। युक्तश्चैतत्-"तं यथायथोपासते तदेव भवन्ती" ति श्रुत्यन्तरात्॥

तमसस्परि 'पञ्चम्याः परावध्यर्थे' इति विसर्गस्य सत्वम्। ज्योतिष्पश्यन्तः 'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वं, व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते। देवत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीया सप्तम्योर्बहुलमि' ति त्रा प्रत्ययः, प्रत्ययस्वरः। अगन्म। छन्दसि लुङ्लङ्लिटः इति प्रार्थमायां लङि 'बहुलं छन्दसी' ति शपो लुक्। म्बोश्चे ति धातोर्मकारस्य नकारः, अडागमः उदात्तः, पाददित्वान्निघाताभावः। उत्तमं तमपः पित्त्वादनुदात्तत्वे प्राप्ते उत्तमशश्वत्तमौ सर्वत्रेत्युञ्छादिषु पाठादन्तोदात्तत्वम्" इति। (ऋग्वेदे तु ज्योतिष्पश्यन्त उत्तरमित्येव पाठः।) "उदित्युपसर्गः 'अगन्म' इत्यनेन क्रियापदेन सह सम्बध्यते। वयं सूर्यं देवम् 'उदगन्म=उद्गच्छामः। किं भूताः वयम्? परिपश्यन्तः= सर्वतोभावेन पश्यन्तः। किं पश्यन्तः? स्वः=स्वर्लोकम्। किं भूतम्? तमसः अप्रकाशस्वरूपाद्- भूर्लोकाद्। उत्तरम्=उद्गततरम्-ऊर्ध्वस्थितमित्यर्थः। अपि किंभूताः वयं? देवत्राः=देवेन सूर्येण त्राणं येषां ते देवत्राः। सूर्यं किं भूतम्? ज्योतिः स्वरूपम्। उत्तमम् =

सर्वज्योतिषामग्न्यादीनामुत्कृष्टम् । इति सूर्यप्रार्थना । 'व्यत्ययो बहुलमि' ति बहुलवचनान्मकारस्य नकारः । गम्लृ धातोर्वर्त्तमाने लङ् उत्तमपुरुष बहुवचनम् । बहुलं छन्दसीति शतोर्लुक् अगन्म इति सिद्धमि''ति हलायुध-व्याख्या ।

एवमेव मन्त्रार्थदीपिकायां शत्रुघ्नमिश्रैर्व्याख्यातमिति मन्त्रार्थसंग्रहः । महीधरभाष्ये तु किञ्च, देवत्रा=देवलोके सूर्ये । देवं पश्यन्तः सन्तः उत्तमं ज्योतिः=ब्रह्मरूपम् । उदगन्म=प्राप्ताः'' इति विशेषः ।

[ हिन्दी टीका ]

सूर्य से ऋण पाने वाले हम (अनुष्ठाता) अप्रकाशस्वरूप भूलोक से ऊपर में स्थित स्वर्गलोक को तथा देवताओं में अत्यन्त उत्कृष्ट दानादि गुण युक्त सूर्य देव को भली-भाँति देखते हुए ज्योतिःस्वरूप-अग्नि आदि में उत्कृष्टतम ज्योतिर्मय देव-सूर्य (म० मा० अ० सूर्य में स्थित देवता को देखते हुए ब्रह्मरूप ज्योति) को प्राप्त हो । (जिससे उस ज्योति सूर्य देव के साथ सायुज्य हो जाय) ॥ १ ॥

[ संस्कृत भाष्यम् ]

ॐ उदुत्यमिति । ''उ निपातः पादपूरणः । त्यमिति 'त्य' शब्दश्छान्दसस्तच्छब्दार्थे। केतवो=रश्मयः । त्यम् तं प्रसिद्धं सूर्यं देवम् उद्वहन्ति । देवो दानाद्द्योतनाद्वा नि० ७। २ । (इति यास्कः) किम्भूतं सूर्यम् ? जातवेदसम् = जातं वेदो ज्ञानं धनं वा यस्मात् तम् । किमर्थमुद्वहन्ति ? विश्वाय दृशे-षष्ठ्यर्थे चतुर्थी । विश्वस्य दर्शनाय - जगद्द्रष्टुमित्यर्थः । 'दृशे विख्ये च' इति तुमर्थे निपातः । इति महीधरभाष्यम् ।

''केतवः = प्रज्ञापकाः सूर्याश्वाः, यद्वा सूर्यस्य रश्मयः सूर्यम्=सर्वस्य प्रेरकमादित्यम् उद्वहन्ति = ऊर्ध्वं वहन्ति ......यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् ? त्यम् = प्रसिद्धम् । जातवेदसम्=जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा । देवम् = द्योतमानम् । अत्र निरुक्तम्-उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां सन्दर्शनाय सूर्यमिति । जातवेदसम् = जातानि वेत्तीति जातवेदाः—इति सायणभाष्ये विशेषः ।

एवमेव हलायुध-भाष्येऽपि-"......इति आदित्यस्वरूपोत्कीर्त्तनमिदम् ।.. ....कीदृशोऽसावादित्य इत्याकांक्षायामाह चित्रन्देवेती" ति विशेषः ।। २ ।।

## [ हिन्दी टीका ]

समस्त प्राणियों को ज्ञान तथा धन देने वाले सर्वज्ञाता उन सूर्य देव को उनके घोड़े या तेज सम्पूर्ण विश्व को उनका दर्शन कराने एवं दृष्टि प्रदान के निमित्त ऊपर से ही ऊपर तीव गति से वहन कर रहें हैं-लिए जा रहे हैं । ।। २ ।।

## [ संस्कृत भाष्यम् ]

ॐ चित्रन्देवानामिति । देवानाम्=दिव्यन्तीति देवा रश्मयः तेषां, देवजनानामेव वा । अनीकम् = तेजःसमूहरूपम् । चित्रम् =आश्चर्यकरं, सूर्यमण्डलम् । उदगात् = उदयाचलं प्राप्तमासीत् । कीदृशम् ? मित्रस्य वरुणस्याग्नेश्च। उपलक्षणमेतत् । एतदुपलक्षितानां जगताम्, चक्षुः=प्रकाशकम्, चक्षुरिन्द्रियस्थानीयञ्च उदयं प्राप्य च । द्यावापृथिवी =दिवं पृथिवीम् । अन्तरिक्षञ्च । आ प्राः=स्वकीयेन तेजसा आ समन्तादपूरयत् । ईदृग्भूतमण्डलान्तर्वर्त्ती सूर्यः-अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा । जगतो जङ्गमस्य । तस्थुषः = स्थावरस्य च । आत्मा = स्वरूपभूतः । स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम् । कारणाच्च कार्यान्नातिरिच्यते । तथा च पारमर्षं सूत्रम्- तदनन्यत्वमारम्भण शब्दादिभ्यः इति । यद्वा स्थावर-जङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा, उदिते सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते । तथा च श्रूयते-योऽसौ तपन्नुदेति सर्वेषां भूतानां प्राणानादायोदेतीति ।

आ प्राः । प्रा पूरणे लङि पुरुषव्यत्ययः, अदादित्वाच्छपो लुक् । जगतः गमेर्द्वे चेति क्विप्, द्विर्वचनं, गमः क्वावित्यनुनासिकलोपः । तस्थुषः-तिष्ठतेर्लिटः क्वसुःद्विर्वचने शर्पूर्वाः खयः षष्ठ्येकवचने वसोः सम्प्रसारणम्, इति सम्प्रसारणम् 'आतोलोप इटि चे'त्याकारलोपः 'शासिवसिघसीनाञ्चे'ति षत्वमि''ति सायणभाष्यम् ।

"असौ सूर्य उदगाद्=उदितो भवति । किम्भूतः ? मित्रस्य वरुणस्य अग्नेः त्रयाणां देवानां चक्षुः । पुनः किम्भूतः ? देवानामनीकम्=मित्रादिव्यतिरिक्तानां

मध्येऽन्येषाम् अनीकं समूहम् कथमुद्गता-चित्रमाश्चर्यं यथा स्यात् । उदित्य च द्यावापृथिवीमन्तरिक्षम् = स्वर्गमर्त्याकाशम् । आ प्राः=आपूरितवान् स्वरश्मिजालेनेति भावः । पुनः किम्भूतः ? जगतो=जङ्गमस्य तस्थुषः = स्थावरस्यात्मा स्थावरजगङ्गमात्मकः सकलसंसारमयोऽयमेव सूर्य इत्यर्थः ।

आ प्रा इति आङ्पूर्वस्य 'प्रा पूरणे' इत्यस्य लङ् प्रथमैकवचनस्थाने तिङां तिङो भवन्तीति मध्यमपुरुषैकवचनमि'' ति ब्रा० स० हलायुधभाष्यम् ।

''असौ सूर्यः चित्रमाश्चर्यरूपं यथा एवमुदगाद् उदितो बभूव इत्यादि । अन्यत्सर्वं हलायुधवद् व्याख्यातं मन्त्रार्थदीपिकायां शत्रुघ्नमिश्रैरिति'' मन्त्रार्थसंग्रहः ।। ३ ।।

[ हिन्दी टीका ]

जो देदीप्यमान किरणों तथा देव तेजों का पुञ्ज हैं, मित्र वरुण अग्नि आदि देवों एवं समस्त विश्व के प्रकाशक और नेत्र हैं, उदित होते ही स्वर्ग मर्त्य तथा अन्तरिक्ष लोकों को अपने आलोकों से पूर्ण रूपेण आलोकित कर देते हैं, जङ्गम तथा स्थावर (सभी) के प्रेरक अन्तर्यामी परमात्मा मृतप्राय सारा जगत सूर्य के उदित होते ही पुनः चेतनयुक्त होते हुए देखे जाने के कारण स्थावर जङ्गमरूप सभी प्राणियों को जीवात्मा स्वरूप है । वे पूजनीय मण्डलान्तर्वर्त्ती भगवान सूर्य आश्चर्य रूप से उदयाचल को प्राप्त हो गए हैं ।

[ भाष्यम् ]

ॐ तच्चक्षुरिति । ''एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः, तत्, चक्षुः=जगतां नेत्रभूतमादित्यरूपम्। पुरस्तात्=पूर्वस्यां दिशि । उच्चरति = उदेति । 'इतश्च लोपः परस्मैपदेष्वि' तीकारलोपः । कीदृशं तत् ? देवहितम् =देवैर्हितम्-स्थापितम्, यद्वा देवानां हितम् = प्रियम् । शुक्रम् = शुक्लम् पापासंसृष्टम् शोचिष्मद्वा । तस्य प्रसादात् । शतम् । शरदः = वर्षाणि । वयम् पश्येम=शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम । प्रार्थनायां लिङ् । अत्यन्तसंयोगे द्वितीया । शतं शरदः जीवेम=अपराधीनजीवना भवेम । शतं शरदः शृणुयाम = स्पष्टश्रोत्रेन्द्रिया भवेम । शतं शरदः प्रब्रवाम=अस्खलितवागिन्द्रिया भवेम । शतं शरदः अदीनाः स्याम= न कस्याप्यग्रे दैन्यं कुर्याम । शतात् शरदः = शरदः शतवर्षोपर्यपि । भूयश्च=बहु कालं, पश्येमेत्यादि योज्यमि''ति महीधरभाष्यम् ।

''तदित्यनेनादित्यं परामृश्यते । तत् आदित्यबिम्बम् । चक्षुः=त्रैलोक्यस्य चक्षुर्भूतम्, यथा चक्षुषा विना चाक्षषं किञ्चिन्न प्रकाशते तथा अनेनापि विना न प्रकाशते । पुनः किम्भूतम् ? देवहितम् =अनुदिते अस्मिन् दैवं कर्म न क्रियते । पुनः किम्भूतम् ? पुरस्तादुच्चरत् = प्राच्यां दशि ऊर्ध्वं गच्छति । अपि किम्भूतम् ? शुक्रम् = शुक्लम्- निष्पापम् । एवमादित्यं स्तुत्वा, वयं पश्येम शरदः शतं, जीवेम शरदःशतं, शृणुयाम शरदःशतम् इति व्यक्तार्थमेव । आदित्यं स्तुत्वा वयमविकलेन्द्रियाः शतं वर्षाणि जीवेम इत्याशंसा वाक्यार्थ'' इति ब्रा० स० हलायुधेन व्याख्यातम् ।। ४ ।।

[ हिन्दी टीका ]

त्रिलोकी का नेत्रस्वरूप तथा देवों से स्थापित या देवप्रिय निष्पाप ज्योतिर्मय भगवान सूर्य पूर्वदिशा में उदित हो रहे हैं । उनके प्रसाद से हम सौ वर्षों तक देखते रहें (दृष्टिशक्ति में कभी भी कोई वैकल्य न हो) ; सौ वर्षों तक जीते रहें । (मेरा जीवन कभी भी पराधीन न हरे ); सौ वर्षों तक सुनते रहें (स्पष्ट सुनने में कोई निकलता न रहे); सौ वर्षों तक बोलने की शक्ति रहे (वाक्शक्ति कभी भी दुर्बल न हो) ; सौ वर्षों तक हम कभी दीनदशा को प्राप्त न हों (किसी के समक्ष दीनता न दिखावें) । इतना ही नहीं, सौ वर्षों से अधिक काल तक भी हम देखें, जीवें, सुनें, बोलें एवं कभी दीन न हों ।

[ मूलम् ]

ततः

**ॐहृदयाय नमः, ॐ भूः शिरसे स्वाहा, ॐभुवः शिखायै वषट्, ॐ स्वः कवचाय हुँ, ॐ भू र्भुवःस्वः नेत्राभ्यां वौषट्, ॐ भूर्भुवः स्वरस्त्राय फट् फट् ।**

इत्यङ्गानि त्रिरावर्त्य पूर्वोक्तमृष्यादिकं स्मृत्वा पूर्वोक्तरूपां गायत्रीं ध्यात्वा तेजोऽसीति देवा ऋषयः, शुक्रं दैवतं, गायत्री छन्दो, गायत्र्यावाहने विनियोगः।

**ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि ।**

इति गायत्रीमावाह्य,

**ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोम्।**

इत्युपस्थाप्य प्रातः प्राङ्मुखो मध्याह्ने सूर्याभिमुखस्तिष्ठन् सायं पश्चिमाभिमुख उपविष्ट उक्तविधिना गायत्रीं जपेत्।

**[ संस्कृत टीका ]**

ततः ॐ हृदयेति। ततः=सूर्योपस्थानानन्तरम्। इत्यङ्गानीति। 'ॐ भूर्भुवःस्वरि'ति मन्त्रस्य त्रिरावर्त्तनं भवतीति श्रीदत्तादिसम्मतः पक्ष इति वीरमित्रोदयरीत्या मन्त्राङ्गानि त्रिरावृत्य, 'प्रणवो भूर्भुवः स्वश्च स्वाङ्गानि हृदयादितः' इति योगियाज्ञवल्क्यवचनस्वारस्येन स्वीयहृदयशिरःशिखानेत्रबाहूनां स्पर्शनं तत्तन्मन्त्रपाठपूर्वकं त्रिर्विन्यस्येति भावः। विशेषविधिस्तु तत्तन्मूलवाक्यैनैव स्पष्टः। अधिकं सन्ध्याविधिप्रकरणीयैत्प्रसङ्गे द्रष्टव्यम्।

पूर्वोक्तमृष्यादिकमिति। प्राणायाममन्त्रकथनात्पूर्वकथितमृष्यादिकमित्यर्थः। तद् यथा प्रकृते

**ॐ कारस्य ब्रह्म ऋषिर्गायत्रीछन्दोऽग्निर्देवता सर्वकर्मारम्भे विनियोगः।**

**व्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्नि-र्वाय्वादित्या देवता जपे विनियोगः। गायत्र्या विश्वामित्रऋषि-र्गायत्रीच्छन्दः सविता देवता जपे विनियोगः।**

इत्येवं क्रमेण ऋष्यादिकं स्मृत्वेत्यर्थः। पूर्वोक्तरूपां गायत्रीमिति।

**श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा।**
**श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च शोभिता ॥ १ ॥**
**आदित्यमण्डलान्तःस्था ब्रह्मलोकगताऽथवा।**
**अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ २ ॥**

इति योगियाज्ञवल्क्योक्तदिशा गायत्रीं ध्यात्वेत्यर्थः।

(१) यजु अ० १।३१। (२) बृहदारण्यक ५।१४।७।

इत्युपस्थाप्येति । अत्रान्यान्याह्निकपुस्तकेषु मन्त्रार्थसंग्रहे च प्रकृत-'ॐ गायत्र्यस्येकपदी' ति मन्त्रस्य ऋष्यादिकं यथा-"अस्य विमलऋषिरनुष्टुप् छन्दः परमात्मा देवता गायत्र्युपस्थाने विनियोगः" इति । अत्रैव क्वचिन्निबन्धे इदमृष्यादिकं नास्तीति नि० कृ० र० मा० । कतिपयाह्निकपुस्तकेषु एतन्मन्त्रपाठानन्तरम् ।

**ॐ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।**

**गायत्रि छन्दसां मातर्जपे मे सन्निधा भव ॥**

इत्यावाहनार्थं मन्त्रोऽप्युपलभ्यते ।

प्रातरिति । प्रातः = प्रातःकालिकसन्ध्यावन्दनसमये । प्राङ्मुखः= पूर्वदिगभिमुखः । मध्याह्ने = मध्याह्नकालिकसन्ध्यावन्दने । सूर्याभिमुखः = सूर्यमभिमुखीकृत्य । तिष्ठन् उत्तिष्ठन् । सायम् = सायमाचरणीयसन्ध्यावन्दने । पश्चिमाभिमुखः=पश्चिमदिगभिमुखः । उपविष्टः=आसनमासीनः । उक्त-विधिना=पूर्वोक्तजपविधिप्रकरणे प्रतिपादितविधिना । गायत्रीं जपेत् = सप्रणव-सव्याहृति-प्रणवान्त-गायत्रीमन्त्रमभ्यसेदिति ।

ॐतेजोऽसीति मन्त्रार्थो मन्त्रार्थदीपिकायां यथा "गायत्रीं स्तौति । (त्वम्) तेजः असि । शुक्रमसि । अमृतमसि । धाम=गृहमसि । नाम= अभिधानमसि । यद् देवानाम् । अनाधृष्टम् = उत्कृष्टम्, प्रियम् (अनाधृष्टम् = अनाधर्षितम् अप्रतिहतमिति तु उवटभाष्यम् ) । तत्त्वमेवासि । देवयजनम्=देवा इज्यन्ते अनेनेति देवयजनं मन्त्रादि, तत्त्वमेवासि ।" इति

ॐ गायत्र्यस्येकपदीति । "हे गायत्रि त्वम् । असि=भवसि । त्रैलोक्यपादेनैकपदी । त्रयीविद्यारूपेण द्वितीयेन द्विपदी । प्राणादिना तृतीयेन त्रिपद्यसि । चतुर्थेन = तुरीयेण । चतुष्पद्यसि । एवं चतुर्भिः पादैरुपासकैः, पद्यसे=ज्ञायसे । अतःपरं परेण निरुपाधिकेन स्वेनात्मना, अपदसि । अविद्यमानं पदं यस्यास्तव येन न पद्यसे सा त्वमपादसि । यस्मान्नहि पद्यसे 'नेति' 'ने-त्यात्मत्वात्, अतो व्यवहाराविषयाय नमः तुरीयाय दर्शताय पदाय, परो रजसे । असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः । अदस्तदात्मनः कार्यं यत्प्राप्ति-

विघ्नकर्तृत्वं मा प्रापत्-मैव प्राप्नोतु । ''इतिशब्दो मन्त्रसमाप्त्यर्थ'' इति बृहदारण्यकोपनिषदि सप्तमाध्याये शङ्कराचार्यैर्व्याख्यातमिति मन्त्रार्थसंग्रहः । अत्र ''पदाय । किम्भूताय ? दर्शताय=दर्शनीयाय । ध्यानेनेति शेषः । परो रजसे=रजसः परभूताय शुद्धसत्त्व-स्वरूपायेत्यर्थ'' इति तु मन्त्रार्थदीपिका ।

[ हिन्दी टीका ]

सूर्योपस्थान के वाद और गायत्री जप के पहलं ( १ ) 'ओं हृदयाय नमः, ( २ ) ओं भूः शिरसे स्वाहा, ( ३ ) ओं भुवः शिखायै वपट्, ( ४ ) ओं स्वः कवचाय हुँ, ( ५ ) ओं भूर्भुवः स्वः नेत्राभ्यां वौषट्, ( ६ ) ओं भूर्भुवःस्वः अस्त्राय फट्' इन छहों मन्त्रों से हृदय, शिर, शिखा, दोनों नेत्रों तथा दोनों बाहों पर तीन बार षडङ्गन्यास करे ।

यथा प्रथम मन्त्रवाक्य (ओं हृदयाय नमः) पढ़कर दाहिने हाथ की पाँचों अङ्गुलियों से हृदय का स्पर्श करे । दूसरे मन्त्र वाक्य (ओं भूः शिरसे स्वाहा) से मस्तक का; तीसरे वाक्य (ओं भुवः शिखायै वषट्) से शिखा या शिखास्थान, चतुर्थ वाक्य (ओं स्वःकवचाय हुँ) से दाहिने हाथ की अंगुलियों से बायें कंधे तथा बायें हाथ की अंगुलियों से दायें कंधे का स्पर्श करे । पाँचवें वाक्य (ओं भूर्भुवः स्वः नेत्राभ्यां वौषट्) से क्रमशः दायें बायें नेत्रों का तथा छठे मन्त्र वाक्य (ओं भूर्भुवः स्वः अस्त्राय फट्) से दाहिने हाथ को बायीं ओर से पीछे की ओर ले जाकर दाहिनी ओर से आगे की ओर ले आवे और तर्जनी तथा मध्यमा अंगुलियों से बायें हाथ की हथेली पर ताली बजावे । इस तरह तीन बार षडङ्गन्यास कर लेने के बाद-

**ॐ कारस्य ब्रह्म ऋषिर्गायत्रीछन्दोऽग्निर्देवता सर्वकर्मारम्भे विनियोगः । व्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्निवाय्वादित्या देवता जपे विनियोगः । गायत्र्या विश्वामित्रऋषिर्गायत्रीच्छन्दः सविता देवता जपे विनियोगः ।**

इस तरह विनियोग वाक्यों को पढ़कर ऋष्यादिस्मरण कर लेने के बाद-

**श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।**
**श्वैतैर्विलेपनैः पुष्पैरलङ्कारैश्च शोभिता ॥ १ ॥**
**आदित्यमण्डलान्तःस्था ब्रह्मलोकगताऽथवा ।**
**अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ २ ॥**

इन श्लोकों से गायत्री का ध्यान करे । अनन्तर

**तेजोऽसीति देवा ऋषयःशुक्रं दैवतं गायत्री छन्दो गायत्र्यावाहने विनियोगः ॥ 'ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टन्देव यजनमसि ॥**

इस विनियोग वाक्य सहित मन्त्रवाक्य से गायत्री का आवाहन कर-

**परोरजस इति विमलऋषिरनुष्टुप् छन्दः परमात्मा देवता गायत्र्युपस्थाने विनियोगः । ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोम् ( मा प्रापत् )[१]॥**

**ॐ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ॥**
**गायत्रि छन्दसां मातर्जपे मे सन्निधा भव ॥[२]**

विनियोग सहित इन मन्त्र वाक्यों से गायत्री का उपस्थान (स्तुतिं, प्रार्थना) कर प्रातः कालिक सन्ध्यावन्दन के समय पूर्वमुख, मध्याह्न समय में सूर्याभिमुख तथा खड़ा हो, एवं सायंकालिक सन्ध्यावन्दन के समय पश्चिम दिशा की ओर मुंह कर और बैठकर पूर्वोक्त जपविधि से गायत्री का जप करे ।

ॐ तेजोऽसि मन्त्र का अर्थ-

हे सूर्यस्वरूपा गायत्री देवि, तुम तेजोमयी हो, शुद्ध (निष्पाप) हो और अमृत (नित्यब्रह्मरूपा) हो । तुम्हीं परम धाम तथा नामरूपा हो । देवताओं को जो उत्कृष्ट प्रिय है वह तुम्ही हो और उनके यजन का साधनभूत मन्त्र आदि भी तुम्ही हो । (मैं तुम्हारा आवाहन करता हूँ) ।

ॐ गायत्र्यस्येकपदी आदि मन्त्र का हिन्दी अर्थ सन्ध्याविधिप्रकरणीय इस मन्त्र के कथन प्रसंग पर देखें ।

'ॐ आगच्छ वरदे देवि' आदि मन्त्र का अर्थ-हे देदीप्यमान ज्योतिर्मयी देवि । हे मेरे अभीष्ट वर को प्रदान करनेवाली ! गा-य-त्री इन तीन अक्षरों से अभिधेये । हे

---

पा० ( १ ) आचारादर्श के अनुसार सावदोम् तक ही पठनीय मन्त्र है किन्तु कतिपय अन्य आह्निक पुस्तकों में 'सावदोमाप्रापत्' पर्यन्त मन्त्रवाक्य देखा जाता है । अतः दोनों ही पाठ दे दिये गएं हैं । ( २ ) कतिपय आह्निक पुस्तकों में पाठ रहने के कारण 'अधिकस्याधिकं फलम्' सोच कर '' ॐ आगच्छ वरदे देवि '' आदि मन्त्रवाक्य भी सन्निविष्ट कर दिया गया है ।

परमतत्त्व का बोध करा देने वाली। हे त्रिष्टुप् आदि छन्द तथा वेदों की जननी देवते। हे सेवकों को उद्धार कर देने वाली गायत्रि। मुझ से होने वाले जप के समय मेरे मन में सन्निहित हो जाओ। (मैं तुम्हारा उपस्थान-स्तुति-प्रार्थना कर रहा हूँ।)

## [ मूलम् ]

जप्यस्वरूपं यथा–

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॐ॥**

ततः प्रणिपत्य विसर्जयेत्।

## [ संस्कृत टीका ]

जप्येति। जप्यस्वरूपम्= जपकर्मीभूतगायत्रीमन्त्राकारम्। जप्यमित्यत्र "पोरदुपधात्" (पा० सू० ३।१।९८) इति कर्मणि यत्।

ऋग्वेदक्रमेण पदविभागो यथा-तत्, सवितुः, वरेण्यम्, भर्गः, देवस्य, धीमहि, धियः, यः, नः, प्रऽचोदयात्, इति। (३अष्ट के १० वर्ग ३ मण्डले ५ अनु० १२ सूक्ते) संहिता पाठस्तु पूर्ववत्। अस्य सायणभाष्यं यथा

यः=सविता देवः। नः=अस्माकम्। धियः=कर्माणि धर्मादिविषया वा बुद्धीः। प्रचोदयात्=प्रेरयेत्। तत्=तस्य सर्वासु श्रुतिषु प्रसिद्धस्य देवस्य= द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य आत्मभूतं वरेण्यम्=सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयम्। भर्गः=अविद्या तत्कार्ययोर्भर्जनाद् भर्गः–स्वयंज्योतिः परब्रह्मात्मकं तेजः। धीमहि=तत्-योऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायेम। यद्वा तदिति भर्गे विशेषणम्। सवितुर्देवस्य तत्तादृशं भर्गः धीमहि। किन्तदपेक्षायामाह - य इति लिङ्गव्यत्ययः, यद्भर्गो धियः प्रचोदयादिति तद् ध्यायेमेति समन्वयः। यद्वा यः सविता=सूर्यः। धियः = कर्माणि। प्रचोदयात्=प्रेरयति। तस्य सवितुः=सर्वस्य प्रसवितुः। देवस्य द्योतमानस्य सूर्यस्य। तत्=सर्वैर्दृश्यमानतया प्रसिद्धम्। वरेण्यम्= सर्वैःसम्भजनीयम्। भर्गः = पापानां तापकं तेजोमण्डलम्। धीमहि =

(१) यजु अ० ३६, मं० ३।

ध्येयतया मनसा ध्यायेम । यद्वा भर्गःशब्देनान्नमभिधीयते । यः सविता देवो धियः प्रचोदयति, तस्य प्रसादाद् भर्गोन्नादिलक्षणं फलं धीमहि धारयामः-तस्याधारभूता भवेमेत्यर्थः । भर्गशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे च (आथर्वणम्)-''वेदाँश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः कर्माणि धियस्तदु मे प्रब्रवीमि प्रचोदयन् सविता याभिरेती'' ति ।

भर्गः (भ्रस्ज पाके) असुन् । (भ्रस्जो रोपधयो रमन्यतरस्यामि) ति रोपधयोर्लोपः रमागमः न्यङ्क्वादित्वात् कुत्वम् । धीमहि-ध्यायते र्लिङि (बहुलं छन्दसी) ति सम्प्रसारणम् व्यत्ययेनात्मनेपदम् । यद्वा (धीङ् आधारे) लिङि (बहुलं छन्दसीति विकरणस्य लुक्) । प्रचोदयात् । चोदयते र्लेटि आडागमः यद्वृत्तयोगादनिघातः, आगमस्यानुदात्तत्वे णिचः स्वरः'' इति ।

''गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिरः समेतां वेदसारमिति वदन्ति । एवं विशिष्टा गायत्री प्राणायामैरुपास्या । सप्रणवव्याहृतित्रयोपेता प्रणवान्तगायत्री जपादिभिरुपास्या'' इत्यादि तु स्वकृतभाष्ये शङ्कराचार्याः ।

तस्य सर्वस्य प्रसवदातुः आदित्यान्तरपुरुषस्य देवस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा विज्ञानानन्दस्वभावस्य वा ब्रह्मणः वरेण्यम्-वरणीयं भर्ग इत्यादि तु य० सं० ३। अ० ३५ क० उवट-कृत-मन्त्रभाष्यम् ।

तत इति । ततः = उक्त गायत्रीमन्त्रं प्रजप्य। अन्याह्निकपद्धत्यनुसारम्-

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मेदेवि त्वत्प्रसादान्महेश्वरि ॥

इति मन्त्रेंण भगवत्यै कृतजपं समर्प्य - ( ध्यात्वा दक्षिणकरस्थं जलं कायतीर्थेन देव्या वामकरे समर्प्य-परं पुन्देवताया दक्षिणकरे समर्पणविधिर्भवति ।) प्रणिपत्य=प्रणम्य,

उत्तरे इति वामदेव ऋषिरनुष्टुप् छन्दः लक्ष्मीर्गायत्री देवता विसर्जने विनियोगः ।

ॐ उत्तरे[1] (मे) शिखरे जाते भूम्यां पर्वतवा[2] सिनि (मूर्धनि)।

ब्रह्मणा[3] समनुज्ञाते गच्छ देवि यथासुखम् ॥

(तैं० आ० १ प्रपाठकं ३० अनुवाकः)

इति विनियोगसहितमन्त्रपाठेन विसर्जयेत् = गायत्रीदेव्या विसर्जनं कुर्यात्।

अत्र "जपादूर्ध्वं गायत्रीदेवताया विसर्जनमाह तैत्तिरीयारण्यके ॐ उत्तरे इत्यादि। पर्वतमूर्धनि इति तै० आ० पाठ०ः, आह्निकपद्धतौ तु पर्वतवासिनीत्येव पाठ" इति मन्त्रार्थसंग्रहः।

अस्य सायणाचार्यकृतभाष्यं यथा-

"भूम्यामवस्थितो यः पर्वतः मेरुनामकः तस्य मूर्धनि=उपरिभागे यत् उत्तमं शिखरम् अस्ति। तस्मिन् इयं गायत्री तिष्ठति तस्मात्कारणात् हे देवि, ब्राह्मणेभ्यः=त्वदुपासकेभ्यः त्वदनुग्रहेण परितुष्टेभ्यः अनुज्ञानमभिव्याप्य यथा सुखम् = स्वकीयसुखमनतिक्रम्य स्वस्थाने तस्मिन् उत्तरशिखरे गच्छ" इति।

अस्यैव सुदर्शनाचार्यकृतं भाष्यं यथा–

"हे देवि, गायत्रि, विष्णुपत्नीत्यर्थः। अस्यामन्त्रणार्थं देवि-लक्ष्मि। जपितृणामस्माकमनुग्रहार्थमस्मत्प्रार्थनया अस्यां भूम्यामायाता त्वम्। यदि देवीति पदच्छेदः तदा देवी दानादि-गुणयुक्ता आवाहन-मन्त्राभिहिता सैवेत्यर्थः। ब्राह्मणेभ्य अस्मभ्यम्। ब्रह्म धीयते इति ब्राह्मणाः। ब्रह्मशब्दो मन्त्रवचनः अध्ययनश्च जपाध्ययनं-गायत्रीमन्त्रजपकृद्भ्य इत्यर्थः। (हि) यस्मात् अनुज्ञानम्=अनुमतिः-अनुग्रहात्मकं ज्ञानं ददामीति पदमध्याहार्यम्, तस्मात्, उत्तमे = उत्तुङ्गतमे। शिखरे=शृङ्गे। पुनः कीदृशे ? पर्वतमूर्धनि मरुवेंकट-चित्रकूट-रैवतक-गोवर्धनादि-क्रीडापर्वतमस्तकभूते। यथासुखम् - क्रीडा-विहारमनतिक्रम्येत्यर्थः। गच्छ=याहि। हे देवि =गायत्रि त्वम् (ई)लक्ष्मीं यथासुखमनुज्ञाप्य गच्छ=याहि।

---

पाठा० (१) मे (२) मूर्धनि। (३) ब्राह्मणेभ्योऽभ्यनुज्ञाता।

मन्त्र-स्वाध्याय-यज्ञाग्नि-मुनि-मोक्ष-पितामहाः ।
तपो विष्ण्वर्क-रुद्राश्च चन्द्रश्च ब्रह्मसंज्ञिताः ॥

इति नैघण्टुकाः । अयमुद्वासन मन्त्रः'' ।। इति

[ हिन्दी टीका ]

मूल में उल्लिखित गायत्री मन्त्र का जप कर संस्कृत टीका में लिखित ॐ गुह्याति मन्त्र से दाहिने हाथ में स्थित जल दान के द्वारा गायत्री देवी के बायें कर में जप का समर्पण कर प्रणाम कर पुनः संस्कृत टीका में लिखित, 'ऊँ उत्तरे शिखरे जाते' इस मन्त्र से देवी का विसर्जन कर देना चाहिए ।

गायत्री मन्त्र का अर्थ-

स्थावरजङ्गमरूप निखिल भुवन की सृष्टि करनेवाले उन निरतिशय प्रकाशमय सूर्य रूप या हिरण्यगर्भ रूप या विज्ञानानन्दस्वभाव ब्रह्मरूप परमेश्वर के भजने योग्य चतुर्वर्गदायक तेज का हम ध्यान करते हैं तथा जो हमारी बुद्धियों को सत्कर्मों की ओर प्रेरित करता है तथा जो भूलोक, अन्तरिक्षलोक एवं स्वर्गलोक स्वरूप त्रिभुवनात्मक, सत्त्वरजःतमोरूप त्रिगुणात्मक और सृष्टिस्थितिप्रलयकर्त्ता ब्रह्मविष्णुरुद्ररूप त्रिदेवात्मक ब्रह्म है ।

अथवा, उक्त परमेश्वर के उस भजने योग्य तेज का हम ध्यान करते हैं जिसकी कृपा से हम लोगों को अन्न आदि फल की प्राप्ति होती है वह हमारी बुद्धियों को अपने स्वरूप में लगावे ।

ॐ गुह्यातिगुह्य आदि मन्त्र का अर्थ-

हे गायत्री देवि, आप गोपनीय से भी गोपनीय वस्तु की संरक्षिका है । अतः मेरे द्वारा किये गए (मातृजारवत्) गोपनीय जप को स्वीकार करें । हे महेश्वरि, आप के प्रसाद से मुझे सिद्धि (ऐहलौकिक अभ्युदय तथा पारलौकिक मुक्ति) प्राप्त हो जाय ।

ॐ उत्तरे शिखरे आदि मन्त्र का अर्थ-

गायत्री मन्त्र जप से प्रेरित होकर अनुग्रहात्मक ज्ञान अनुग्रह करने का ज्ञान प्रदान करने वाली हे गायत्री देवि, भूमि पर स्थित जो मेरुनामक पर्वत है, उसकी चोटी पर विद्यमान उत्तरी सुरम्य शिखर है, वहीं आपका वासस्थान है । अतः अब आप अपने उपासकों या उपासना के द्वारा परितुष्ट ब्राह्मणों के अनुग्रह हितसम्पादन तथा अहित निवारण की इच्छा-सम्बन्धी ज्ञान की दात्री होने के कारण वहाँ वास एवं क्रीडा विहार के निमित्त सुखपूर्वक पधारें ।

॥ इति वाजसनेयिनां सन्ध्याप्रयोगः ॥

[ टिप्पणी ]

## अथ प्रसङ्गाच्छन्दोगानां सन्ध्याप्रयोगः ॥

[ छन्दोगाह्निकानुसारि-नित्यकृत्यरत्नमालाऽनुसारं पण्डित प्रवर सुरेश झासम्पादित -सदाचारसारानुसारंच ]

[ मूलम् ]

ऐशान्यभिमुखो भूत्वा सप्रणवगायत्र्या शिखां बध्वा वामे पाणौ बहून् कुशान् दक्षिणेऽनामिकाप्रथमपर्वणि सपवित्रं कुशत्रयञ्च धृत्वा पुनराचम्य ॐ ऋतञ्चे ति करस्थं जलमभिमन्त्र्याचामेत् । ततो हृदयं नाभिं स्कन्धौ च स्पृशेत्। ततः "ॐ आपो मामभिरक्षन्तु" इति वारिणाऽऽत्मानं वेष्टयित्वा रक्षां कुर्यात् ।

[ हिन्दी अर्थ ]

ईशान कोण के अभिमुख हो आचमन कर तथा प्रणव सहित गायत्री मन्त्र से यदि खुली हो तो शिखा बाँध कर बायें हाथ में बहुत से कुश तथा दाहिने हाथ की अनामिका अंगुलियों की पहली पोर (पर्व) पर पवित्री एवं कुशत्रय धारण कर पुनराचमन कर 'ॐ ऋतञ्च' आदि से 'मथो स्वः' पर्यन्त अघमर्षण सूक्त (जो वाजसनेयिप्रयोग-प्रकरण में दिखाया गया है) (मन्त्र) से दाहिने हाथ में स्थित जल को अभिमन्त्रित कर तथा उससे आचमन कर हृदय, नाभिं और दोनों कंधों का स्पर्श करे । इसके बाद जंल लेकर "ॐ आपो मामभिरक्षन्तु" इस मन्त्र से शरीर का वेष्टन कर रक्षा कर लेनी चाहिए ।

[ मूलम् ]

ततः, ॐकारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता (शुक्लो वर्णः) सर्वकर्मारम्भे विनियोगः । सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवता प्राणायामे विनियोगः । गायत्र्या विश्वामित्रऋषिर्गायत्री छन्दः सविता देवता प्राणायामे विनियोगः । शिरसः प्रजापति ऋर्षिब्रह्माग्निवायुसूर्या देवताः प्राणायामे विनियोगः इति पठित्वा प्रणवं सार्धमात्रिकं दीर्घघण्टा-निनादवदुच्चार्याभ्यसेत् । ततोऽङ्गुष्ठेन नासादक्षिणपुटं निरुध्य वामनासापुटेन शनैर्वायुमाकृष्य सर्वनाडीः पूरयन् नाभौ चतुर्भुजं नीलोत्पलदलश्यामं विष्णुं

ध्यायन् मौनी मीलिताक्षः प्रत्येकमोङ्कारादिसप्तव्याहृतीः ॐकारादि सावित्रीम्, ॐ आपो ज्योतीरसांऽमृतं ब्रह्मभूर्भुवः स्वरोम् इति शिरश्च त्रिर्जपेत । इति पूरकाख्यः प्राणायामः ।

ततोऽङ्गुष्ठाऽनामिकाभ्यां नासापुटद्वयं दृढं निरुध्य हृदि ब्राह्मणं कमलासनस्थं रक्तवर्णं चतुर्मुखं ध्यायन्निश्चलश्वासः पूर्ववन्मन्त्रं त्रिर्जपेदिति कुम्भकाख्यः प्राणायामः ।

ततो दक्षिणनासापुटेन शनैर्वायुं त्यजन् शिवं शुद्धस्फटिकसङ्काशं त्रिनेत्रं ध्यायन् पूर्वन्मन्त्रं त्रिर्जपेदिति रेचकाख्यः प्राणायामः । एताँस्त्रीन् प्राणायामान् कुर्यात् ।

## [ हिन्दी अर्थ ]

उक्त चारों विनियोग वाक्य पढ़ते हुए ऋष्यादि का स्मरण कर घंटा से निस्सृत दीर्घनिनाद (स्वरशब्द) के जैसे त्रिमात्रिक प्रणव का उच्चारण कर आँख मूँद कर तथा मौन होकर नीचे लिखे मन्त्र से प्राणायाम करे । उसकी विधि इस प्रकार है- पहले दाहिने हाथ के अंगूठे से नासिका के दायाँ छिद्र बन्द कर बायें छिद्र से वायु को अन्दर खींचते हुए तथा सभी नाडियों को वायु से पूर्ण करते हुए नाभिदेश में नील कमल दल के समान श्यामवर्ण चतुर्भुज विष्णु भगवान् का ध्यान करते हुए प्राणायाम मन्त्र का पाठ करे । इसे पूरक कहते हैं । पूरक के बाद अनामिका अंगुलियों से बायें छिद्र को बन्द कर तीन बार मन्त्र पढ़ते हुए तथा श्वास को रोक कर वायु का धारण करते हुए हृदय में कमलके आसन पर स्थित रक्तवर्णवाले चतुर्मुख ब्रह्माजी का ध्यान करे ।

इसके बाद अंगूठा हटाकर मन्त्र पढ़ते हुए नासिका के दाहिने छिद्र से क्रमशः वायु निकालें । इस समय ललाट में शुद्ध स्फटिक के समान श्वेत वर्णवाले त्रिनेत्रधारी भगवान शंकर का ध्यान करे । इसे रेचक नाम की क्रिया कहते है । यह सब मिलाकर एक प्राणायाम कहलाता है । किन्तु उक्त पूरक कुम्भक एवं रेचक संज्ञक प्राणायामों के समय निर्दिष्ट विधि के साथ प्राणायाम मन्त्र का तीन-तीन बार पाठ होगा ।

प्राणायाम मन्त्र का स्वरूप है: ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ।[१]

---

(१) तै० आ० प्र० १० अ० २७ ।

## [ मूलम् ]

तत आचम्य कुशत्रयं गृहीत्वा 'ॐ' इत्येकम् । भूर्भुवः स्वरिति द्वितीयम् । गायत्र्या सप्रणवया तृतीयम् । ॐ आपोहिष्ठा मयोभुवः ता न ऊर्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमोरस्तस्य भाजयते ह नः । उशतीरिव मातरः ।। तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।। इति ऋक्त्रयेण चतुर्थं मार्जनं कुर्यात् ।।

## [ हिन्दी अर्थ ]

इसके बाद आचमन कर 'ॐ' का उच्चारण कर पहली बार, 'भूर्भुवः स्वः' यह पढ़कर, दूसरी बार प्रणव सहित गायत्री मन्त्र पढकर, तीसरी बार तथा मूल में लिखित 'ॐ आपो हिष्ठा' आदि तीनों ऋचाएँ पढकर, चौथी बार मार्जन (कुशत्रय से शिर पर जल फेंकना) करे ।

## [ मूलम् ]

ततः करेण जलं नासिकायां संयोज्य त्रिःसकृद्वा आयतासुरनायतासुर्वा ऋतमित्याद्युक्तपूर्वं जपेत् । अत्र विनियोग- पाठोऽप्युक्तपूर्वः कार्यः ।

## [ हिन्दी अर्थ ]

इसके बाद दाहिने हाथ में जल लेकर नासिका (नाक) के अग्रभाग में लगाकर श्वासत्याग करते या न करते हुए तीन बार या एक बार (वस्तुतः श्वासत्याग पक्ष में तीन बार, निरोध पक्ष में एक बार) अघमर्पण सूक्तस्याघमर्षणऋषिरनुष्टुप् छन्दो भाववृत्तो देवता अश्वमेधावभृथे विनियोगः' यह विनियोगवाक्य पढ़कर "ॐ ऋतञ्च" इत्यादि "मथोस्वः" पर्यन्त का पठन करे । इसके वाद उस जल को न देखते हुए अपने बायें भाग में फेंक दें ।

## [ मूलम् ]

ततः—

"ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योतीरसोऽमृतम्" इति पठित्वाऽऽचम्योत्थाय सप्रणवव्याहृति-सावित्र्या प्रत्येकमेकमञ्जलिमञ्जलित्रयं वा निःक्षिप्योर्ध्वबाहुरादित्याभिमुखो, भूम्यलग्न-गुल्फ, तलभागो, भूलग्नैकचरणो, भूलग्नार्धचरणो वा सूर्यमुपतिष्ठेत ।

[ हिन्दी अर्थ ]

इसके बाद "ॐअन्तश्चरसि" इत्यादि मन्त्र पढ़कर आचमन करे। अनन्तर उठकर प्रणव एवं व्याहृति सहित गायत्री मन्त्र से एक या तीन अञ्जलि जल सूर्य भगवान् की ओर देकर मध्याह्न के समय दोनों भुजाएं ऊपर उठाकर सूर्य के सामने एक चरण की एँडी (पिछला भाग उठाये हुए अथवा एक पैर से खड़ा होकर अथवा एक पैर के आगे के आधे भाग से खड़ा हो सूर्य का उपस्थान (स्तुति प्रार्थना) निम्न छह मन्त्रों से करें–

[ मूलम् ]

तत्र मन्त्रो यथा–

(१) ॐ उदुत्यञ्जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्यम्।

(२) ॐ चित्रन्देवानामुदगादनीकं
चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावा पृथिवी अन्तरिक्षं
सूर्य आत्मा जगतस्तस्थुषश्च॥

(३) ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः।
पितरञ्च प्रयन्त्स्वः॥

(४) ॐ अपत्ये तायवो यथा नक्षात्रायन्त्यक्तुभिः।
सूराय विश्वचक्षसे॥

(५) ॐ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।
विश्वमाभासि रोचतम्॥

(६) ॐ उद्यामेषिरजः पृथ्वहा भिमानोऽक्तुभिः।
पश्यञ्जन्मानि सूर्य॥

इति षड्भिर्मध्याह्ने।

[ हिन्दी टीका ]

ये छह मन्त्र हैं।

[ मूलम् ]

प्रातःसायंसन्ध्ययोस्तु (1) ॐ उदुत्यम्, (2) ॐ चित्रन्देवानाम्, (3) ॐ उद्वयन्तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । श्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।। इति ऋक्त्रयेण । सायम्पश्चिमाभिमुखमुपस्थानमिति विशेषः ।।

[ हिन्दी अर्थ ]

प्रातः एवं सायंकालिक सन्ध्याओं में तो अभी ऊपर कहे गए ( १ ) ''ॐ उदृत्यम्'' इत्यादि, ( २ ) ''ॐ चित्रन्देवानाम्'' इत्यादि, तथा ( ३ ) मूल में लिखे गए ''ॐ उद्वयन्तमसः'' इत्यादि मन्त्रों से सूर्योपस्थान करे। सायंकाल का उपस्थान पश्चिमं मुंह होकर होगा यह विशेप रूप से ज्ञातव्य है ।

[ मूलम् ]

ॐ श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च शोभिता ॥ १ ॥
आदित्यमण्डलान्तस्था ब्रह्मलोकगताऽथवा ।
अक्षसूत्रधरा देवी पद्मासनंगता शुभा ॥ २ ॥

इति देवतां ध्यायन् समाहितमनाः (स्वस्थचित्तः सन्)

ॐ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।
गायत्रि छन्दसां मातर्जपे मे सन्निधा भव ॥
गायन्तं त्रायसे यस्माद् गायत्री त्वं ततः स्मृता ॥

इत्यावाह्य

ॐ कारस्य ब्रह्मऋषिर्गायत्रीच्छदोऽग्निर्देवता सर्वकर्मारम्भे विनियोगः ।

भूर्भुवः स्वरित्यस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्नि-वाय्वादित्या देवता जपे विनियोगः ।

गायत्र्या विश्वामित्र ऋषिर्गायत्रीच्छन्दः सविता देवता जपे विनियोगः ।

इति ऋष्यादिकं स्मृत्वा-

**ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**

**धियो यो नः प्रचोदयात् ॐ ।**

इति गायत्रीं जपित्वा,

**ॐ उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि ।**

**ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम् ॥**

इति पठित्वा गायत्रीं विसर्जयेत् । सायं सन्ध्यायां पश्चिमाभिमुखः आसीनो जपेदिति विशेषः । ततस्तिल-पुष्पजल-पूर्णमञ्जलिं मूर्धपर्यन्तमुत्थाप्य

**ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।**

**जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥**

इति मन्त्रेण सूर्यायार्घं दद्यात् ।

अत्र तर्पणाधिकारी जनः सूर्योपस्थानानन्तरं तर्पणं ब्रह्मयज्ञञ्च विधाय आवाहनादिसहितं गायत्र्याः जपं सूर्यार्घदानञ्च कुर्यादित्यपि विशेषतो बोध्यम् ॥

**[ हिन्दी अर्थ ]**

इसके काद "ॐ श्वेतवर्णा" आदि दोनों श्लोकों से गायत्री देवी का ध्यान करते हुए स्वस्थचित्त हो "ॐ आगच्छ वरदे" आदि मन्त्र से आवाहन कर "ॐकारस्य ब्रह्म ऋषिः" आदि तीनों विनियोग वाक्यों द्वारा ऋष्यादि का स्मरण कर "ॐ भूर्भुवः स्वः" इत्यादि गायत्री मन्त्र का जप करे । इसके बाद "ॐ उत्तरे शिखरे" आदि मन्त्र से गायत्री देवी का विसर्जन कर दे ।

हाँ सायंकालिक सन्ध्योपासन के समय पश्चिम की ओर अभिमुख तथा बैठ कर गायत्री का जप होगा ।

इसके बाद अपनी अञ्जलि में तिल तथा पुष्प सहित जल लेकर और उसे अपने मस्तक तक ऊपर उठा कर "ॐ नमो विवस्वते" इत्यादि मन्त्र से सूर्य भगवान को अर्घदान कर दे ।

यहाँ ऊपर से विशेषतः ज्ञातव्य है कि तर्पणाधिकारी जन सूर्योपस्थान के बाद तर्पण तथा ब्रह्मयज्ञ सम्पन्न कर गायत्री का आवाहन आदि सहित जप तथा सूर्यार्घदान करे ।

**इति सामवेदि ( छन्दोगा ) नां सन्ध्याप्रयोगः ।**

## परिशिष्टम्–(क)

## मूलग्रन्थोद्धृत-श्लोकसूची

## परिशिष्टम्–( ख )

# मूलग्रन्थोद्धृत-सूत्रसूची

## परिशिष्टम्–( ग )

# मूलग्रन्थोद्धृत-ग्रन्थर्षिसूची



नाम-प्रो. वाचस्पतिशर्मा त्रिपाठी
पितृनाम-स्व. पण्डित गङ्गाधरशर्मा त्रिपाठी
(पूर्व-धर्मशास्त्रविभागाध्यक्ष)
पितामह-स्व. पण्डित यमुनाप्रसाद त्रिपाठी
(पूर्व-धर्मशास्त्रविभागाध्यक्ष)
जन्मस्थान-ग्राम+पत्रालय-तक्कीपुर,
जिला-सीवान (बिहार)
शैक्षणिक योग्यता - साहित्य - पुराण - धर्मशास्त्राचार्य
(तीनों में स्वर्णपदक प्राप्त)
एम.ए. (संस्कृत), एम. ए. (राजनीति विज्ञान)
बी. एड्., विद्या-वारिधि।
अध्यापन (1) केन्द्रीय विद्यालय (स्नातकोत्तराध्यापक)
(2) सदाशिव केन्द्रीय सं. विद्यापीठ, पुरी, उड़ीसा (व्याख्याता, रीडर एवं विभागाध्यक्ष)
(3) स्नातकोत्तर धर्मशास्त्र-विभाग,
का. सिं. द. संस्कृत विश्वविद्यालय, दरभंगा (रीडर, आचार्य, विभागाध्यक्ष एवं सङ्कायाध्यक्ष)
=३६ वर्षों तक
शोधमार्गनिर्देशन-मार्गदर्शन में १४ शोधप्रज्ञों ने विद्यावाचस्पति (डी. लिट्.) तथा २५ ने विद्यावारिधि (पी-एच.डी.) शोधोपाधि प्राप्त की है।
कृतियाँ- (i) प्राचीन भारत की दण्ड-व्यवस्था, (ii) पुराणों में युद्ध एवं सैन्यविज्ञान, (iii) वसिष्ठस्मृति (विद्वन्मोदिनी टीका सहित), (iv) आचारादर्श (दो भागों में)।

